ॐ

# अद्वैततत्त्वसुधा

## द्वितीयभागः

विशिष्टाद्वैताद्वैतसिद्धान्तपरीक्षात्मकः
प्रथम संपुटः

महामहोपाध्याय-शास्त्ररत्नाकर-शतभूषणी-
वाराणसेयसंस्कृतविश्वविद्यालयसंमानितप्राध्यापक-
श्रीमदनन्तकृष्णशास्त्रिकृतिः

महामहोपाध्याय-शास्त्ररत्नाकर-शतभूषणी श्रीमदनन्तकृष्णशास्त्रिणा
काशीहिन्दूविश्वविद्यालयमीमांसाऽध्यापकप्रवर-
मीमांसारत्नादिविरुदाङ्कितमीमांसा–
वेदान्ताचार्यसुब्रह्मण्यशास्त्रिणा च
सम्पादिता

NAG PUBLISHERS

नाग पब्लिशर्स
११ ए/यू. ए. जवाहरनगर :: दिल्ली-७



मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

# ADVAITA TATTVA SUDHA

## (SECOND PART)

## VOL. I

BY

**MAHĀMAHOPĀDHYĀYA ŚASTRARATNAKARA ŚATABHŪṢAṆĪ**

**N. S. ANANTAKṚISṆA SĀSTRI**

*Honorary Professor*

**Sanskrit University, Varanasi**

*Edited By*

**Mahāmahopādhyāya Śastraratnākara Śatabhūṣaṇī,**
**N. S. Anantakṛisṇa Śāstri**
**and**
**Meemānsā Ratna Pt. A. Subrahmanyam Śāstri**
***Lecturer*, Banaras Hindu University,**
**Varanasi**

**NAG PUBLISHERS**
**Oriental Publishers & Book-sellers**
11A/U.A., (Post-Office Bldg.),
Jawahar Nagar, DELHI-110007



परमहंसपरिव्राजकाचार्यवर्य-जगद्गुरु-तपस्विप्रवर-शान्ति-दान्तिभूम-
सनातनधर्मजीवातु-सरल-सुलभप्रकृति-वेदधर्मशास्त्रपरिपालनैक-
दीक्ष-श्रीज्योतिर्मठाध्यक्ष-भगवत्पादशङ्कराचार्यवर्याः
श्री १००८ कृष्णबोधाश्रमस्वामिपादाः ।

# भूमिका

मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

अद्वैततत्त्वसुधाप्रथमभागे पूर्वं प्रकाशिते द्वैताद्वैततत्त्वपरीक्षात्मके शतदूषणीसमीक्षात्मकशतभूषणीविमर्शनपर—परमार्थभूषणविमर्शात्मको ऽ चिरेण प्रकाशयिष्यत इति प्रतिज्ञातम्, परन्तु शरीरास्वास्थ्यादिबहुतरकारणै-र्नेयं प्रतिज्ञा पूरयितुमपारि । सम्प्रति तु स्वाराध्यदेवताप्रसादेन कथञ्चन स द्वितीयो भागः सादरं प्रियपाठकानामुपह्रियते ॥

इदमत्र सविनयं सूच्यते परमार्थभूषणप्रकाशनानन्तरं पूज्यश्रीपरकाल-मठीयकृतिरप्येका तत्त्वसुधाऽऽख्या मध्ये बहिरवातारि——याऽपि शतभूष-णीमेव परमार्थभूषणमिव परीक्षते । अद्वैततत्त्वसुधाद्वितीयभागोऽयं निबन्ध-द्वयमपि ससंतोषं विमृशति ॥

इदमपरमानन्दकारणम्——मध्ये न्यायसुधामण्डनात्मकोऽद्वैततत्त्वसुधा-प्रथमभागस्य खण्डनात्मकः पूज्यपाद-स्वनामधन्य-प्रातःस्मरणीय-श्रीमदानन्दतीर्थ-सिद्धान्तसमर्थनैकदीक्ष-साम्प्रतिक-श्रीमदुत्तरादिमठाधिष्ठानाधिष्ठित-श्रीसत्यप्रमोद-स्वामिचरणानां निबन्धोऽपि साशीर्वादमनुगृहीतो बहुतरगभीरार्थबहुलो हस्तं गतः, यस्यापि समालोचनं साम्प्रतमवसरप्राप्तम् ॥

अस्मिन्नेव प्रसङ्गे पूज्यश्रीपण्डितप्रवर-द्वैताद्वैततत्त्वविमर्शनैकदीक्ष-श्रीभण्डारकेरिस्वामिपादानामपरोऽपि निबन्धोऽद्वैततत्त्वसुधाप्रथमभागसमीक्षात्मको बहिरवततार। अस्यापि निबन्धस्य समालोचनमवसरप्राप्तम्।

अस्मिन् निबन्धद्वये न्यायसुधामण्डनाऽऽख्यायां श्रीमदुत्तरादिमठाधीशकृतौ प्रधानाः पूज्यपादाः केचन द्वैतसिद्धान्तधर्माचार्याः स्वीयान्तरङ्गगोष्ठ्यां स्वाभिप्रायमेवमाविरकुर्वन्—न्यायसुधामण्डनमिदं सत्यं बहुतरगभीरार्थबहुलम्; तथापि बहून्यनुक्तोपालम्भनानि, अद्वैतसिद्धान्तस्यान्यथानुवादाश्च तत्र वर्तन्त इति विश्वस्तसूत्रतो ज्ञायते। अतः प्रकृतो निबन्धः निबन्धद्वयेऽप्यस्मिन्ननुक्तोपालम्भनस्थानानि, अन्यथानुवादप्रकारांश्च केवलं प्रथमतः संगृह्णाति, यथासम्भवं न्यायसुधाऽनुपबद्धानामद्वैततत्त्वसुधाप्रथमभागापरामृष्टानामप्रासङ्गिकानां विचाराणां सूचनमात्रं चोपस्थापयति॥

तत्र न्यायसुधामण्डनं प्रास्ताविके प्रकरणे तत्त्वपदमद्वैततत्त्वसुधानामन्यद्वैतस्यातत्त्वत्वाद् नोचितमिति वदति, परन्तु तत्तत्सम्प्रदायेषु सर्वेषु दर्शनेषु स्वीय एव सिद्धान्तः परमं तत्त्वमिति मन्यते। तत्त्वपदघटिताः परःशतं निबन्धा न्याय-व्याकरण-मीमांसा-साहित्याद्वैत-विशिष्टाद्वैत-द्वैताद्वैतनिबन्धेषु दरीदृश्यन्ते। सत्यं दर्शनान्तरदृष्ट्या दर्शनान्तरसिद्धान्तोऽतत्त्वमिति तत्तद्दर्शनस्याऽऽन्तरो विश्वासः। द्वैताद्वैतसिद्धान्तयोर्द्वैतसिद्धान्तोऽतत्त्वमित्यद्वैतसिद्धौ श्रीमधुसूदनसरस्वत्यः :—

"इह कुमतिरतत्त्वे तत्त्ववादी वराकः"

इति वदन्ति। विश्वस्यते—तस्यैव प्रतिवचनं छिद्रं लब्ध्वा मनसि कृत्य छिद्रान्वेषि सुधामण्डनं तत्त्वपदं नामन्यपि न युक्तमिति लिखति। मण्डनं हि सुप्रथिमगरिमसुपमादिगुणोपेतस्य ग्रन्थकुलललामस्य सुधाग्रन्थस्य खण्डने न केनापि स्वव्यूहकेन, परव्यूहकेन वा प्राच्येन पण्डितप्रकाण्डेन विद्वच्चक्रवर्तिना यत्नोऽकारि। न्यायचन्द्रिकायां विद्वच्चक्रवर्ति—विद्यासागरमुनि-

कृतौ शब्दतोऽर्थतो वा कुत्रापि न्यायसुधाविमर्शो न कृत इति च लिखति, परन्तु मिथ्यात्वादिप्रकरणेषु तेषु तेषु न्यायसुधाविमर्शान् न्यायचन्द्रिकागतान् स्वयं मण्डनमपि विस्मृत्यात्मानमपि बहुशः परीक्षते। आस्तामियं कथा ॥

सुधामण्डनं हि स्वीयग्रन्थरचनाक्रमं प्रास्ताविकान्त एवं संगृह्णाति—

"प्रथमभागे सम्प्रतिपन्नत्वेन पराभिमतद्वैतप्रक्रियाः विप्रतिपन्नत्वेनाऽन्यथानूदितप्रक्रियाश्च विहाय यथावदनूदितद्वैतप्रक्रियाणां समर्थनम्, विप्रतिपन्नतया परप्रदर्शिताद्वैतप्रक्रियाणां पराकरणं च कृतम्। न्यायचन्द्रिकादिप्राचीनग्रन्थानां च यथावत् परीक्षा तत्र तत्र विहिता ॥

द्वितीयभागे—अद्वैतपरत्वेन, जगन्मिथ्यात्वपरत्वेन वा पराभिमतसूत्राणां परमतखण्डनपूर्वकं द्वैतपरत्व-जगत्सत्यत्वपरत्वादिसमर्थनं प्राचीनप्रबन्धान् विशेषतो बह्वंशेषु च प्रातःस्मरणीय-मायिमत्तेभकण्ठीरव-पण्डितकुलसार्वभौम-श्रीमत्सत्यध्यानतीर्थमुनीन्द्रपूज्यचरणकृतग्रन्थानवलम्ब्यैव कृतम् ॥

तृतीयभागे—अद्वैतसिद्धान्तप्रधानप्रमेयाणां विस्तरतो निराकरणं व्यधायि"—इति

तत्र निबन्धोऽयं प्रातःस्मरणीयपूज्यश्रीसत्यध्यानतीर्थचरणकृत-निबन्धान् बह्वंशेष्ववलम्ब्यैव निबद्ध इति तदाधमर्ण्यप्रकाशनमेतन्निबन्धकारस्य श्रीपूज्यपादसत्यध्यानतीर्थस्मरणावकाशप्रदानं महत एव श्रेयसे द्वयोरपि ॥

तत्र प्रथमे भागे ब्रह्मसूत्राणां 'ओम्' 'अथ' शब्दपूर्वकत्वसमर्थनं द्वैतसिद्धान्ते, अद्वैतसिद्धान्ते तु तदभावः। तत्र ब्रह्मसूत्रेषु प्रतिसूत्रं न 'ओम्' 'अथ' शब्दपूर्वकत्वं द्वैतसिद्धान्तेऽपि, यतो "जन्माद्यस्य यतः" इत्यारभ्य प्रतिसूत्रं "ओम्" शब्दपूर्वकत्वमात्रम्, न तु "ओमथ" शब्दपूर्वकत्वम् ॥

"ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥"
"अथातः शब्दपूर्वाणि सूत्राणि निखिलान्यपि ।"

इत्यादिवचनानि सूत्राणामारम्भक्रममात्रमुपदिशन्ति । सोऽपि एकत्राथशब्दपूर्वकत्वेन, अपरत्र "अथातः" शब्दपूर्वकत्वेन, न तु "ओम्"पूर्वकत्वेनापि । सति चैवं सत्यमोंकारस्य मङ्गलार्थत्वं सर्वेष्वपि कार्येषु, परन्तु तस्य सूत्रावयवत्वमपि, विना वाक्यार्थान्वयमप्रामाणिकम् । ओंकारमाहात्म्यं तद्द्वारा भगवत्स्वरूपानुसन्धानं च सत्यम्, महत एव श्रेयसे, न तावता सूत्रावयवत्वमपि । मण्डनमपि—ओंकारस्यासंहिततया सूत्रानवयवत्व-शङ्कापरिहारे "स्वरिते नाधिकारः" इति न्यायेन ब्रह्ममीमांसाशास्त्र उत्तर-त्रानुवृत्त्यर्थं पृथक् निर्देश इति लिखदोंकारस्य सूत्रानवयवत्वमेव मन्यते ॥

"अथातः" शब्दपूर्वाणि सूत्राणि निखिलान्यपि" ।

इति गरुडपुराणवचनम्, 'अथातःशब्द'पूर्वकत्वमेव सूत्राणामाम्नाति, न त्वोमथातःशब्दपूर्वकत्वम्; अन्यथा कुतो वा द्वितीयादिसूत्रेष्वपि "ओमथातः" इत्येव न सूत्रपाठः ? श्रवणमात्रेणासत्यपि वाक्यार्थान्वये मङ्गलार्थ-त्वनिर्वाहे, केवलाथशब्देनापि मङ्गलार्थत्वेऽपि सिद्धे, किमिति वा सूत्रे पृथगोंकारपाठः ? जन्मादिसूत्रेष्वपि सूत्रावयवत्वाभावेऽपि ग्रन्थारम्भ एव मङ्गलाचरणस्य साम्प्रदायिकत्वात् किमर्थं वा मङ्गलार्थमप्योंकाराद्यनु-संधानम् ? अतो मङ्गलस्य सूत्रावयवेन 'अथ'शब्देनैव निर्वाहे प्रथमसूत्रेऽपि किमर्थमोंकारपाठः ?

इदमेवाभिप्रेत्य भगवत्पादानां भाष्यम्—"मङ्गलस्य च वाक्यार्थे समन्वयाभावात्, अर्थान्तरे प्रयुक्तोऽप्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवती"ति । अतो मङ्गलार्थत्वं न सूत्रावयवत्वेऽप्यथशब्दस्य । पृथक्कृत्य पाठस्तु न संहितस्य 'अथ' शब्दस्य, न वौंकारस्य । असंहितौंकारार्थानु-

सन्धानं तु न दण्डेन वार्यते । तस्य सूत्रानवयवत्वमात्रे निर्भरः, किं बहुना ? मण्डनमपि सप्तमे पृष्ठे "स्वरिते नाधिकारः" इति न्यायेन ओंकारानवयवत्वमेव स्वीकरोति, इति न तु तस्यापि निर्भर ओंकारावयवत्वे। तत्र केवलमोंकारानुसंधानं सूत्रानवयवत्वेऽपि श्रेयसे,कार्यकारि शङ्खध्वन्यादिवत्, इति तदर्थानुसंधानं नात्रोपयुज्यते, इति तदर्थपरीक्षणं तस्य वाक्यार्थेऽनन्वयाद-नुपयुक्तम् ॥

तत्र ओंकारो ब्रह्मणोऽभिधानमिति संप्रतिपन्नम् । ब्रह्म त्ववस्थात्रयातीतं निर्विशेषं वा, सविशेषं वा भवतु । तत्र सविशेषं ब्रह्म—

"आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥"

इति सहस्रनामशाङ्करभाष्योदाहृतवचनेन नारायण एवेति मण्डनं वदति । स तु सर्वनियामकः सर्वान्तर्यामी वेति तु न विप्रतिपन्नम् । तत्र नारायणपदार्थोऽवस्थाभेदेन विष्णुपुराणादिना ब्रह्म-रुद्रादिरपि प्रतीयते ॥

तत्र नृसिंहतापनीये ओंकारं चतुष्पादमनुक्रम्य 'ओ'कारस्य प्रथमेनाकारेण ब्रह्मणः, द्वितीयेन पदेन 'उ'काराख्येन विष्णु-रुद्रयोः, तृतीयेन पदेन रुद्रादित्यानाम्, तुरीयेणार्द्धमात्रात्मकेन तुरीयस्य परब्रह्मणो नरसिंहस्य स्वरूपञ्च प्रत्येकं प्रतिपाद्य तदेव नारसिंहस्वरूपम्—"तस्मात् परमेश्वर एवैकमेव तद्भवत्येतदमृतमभयम् एतद् ब्रह्म भवति य एवं वेद, इत्युपक्रम्य "अयमात्माऽद्वितीयत्वाद् अविकल्पो ह्ययं 'ओंकारो' ऽद्वितीयत्वादेव चिन्मयो ह्ययं 'ओंकार'स्तस्मात्परमेश्वर एव एकमेव तद्भवति अविकल्पोऽपि नात्र काचन भिदाऽस्ति नैव काचन भिदाऽस्ति, अत्र हि भिदामेव मन्यमानः शतधा सहस्रधा भवति मृत्योः स मृत्युमाप्नोति तदेतद्रहस्यं स्वप्रकाशं महानन्दमात्मैवैतदमृतं ब्रह्म अभयं हि वै ब्रह्म

भवति च य एवं वेदे''ति समुदितस्य चतुर्मात्रस्य 'ओंकारस्य' मुख्योऽर्थो निर्विशेषमात्मतत्त्वमेवाऽऽम्नायते ॥

सति चैवं नृसिंहमन्त्रगतानामुग्रादिपदानां तन्मन्त्रध्येयस्वरूपादिपदार्थानां विवरणप्रसङ्गेन 'अथैष उ अकारः आप्ततमार्थः आत्मन्येव नृसिंहे देवे ब्रह्मणि वर्तते। एष ह्येवात्मा एष ह्येव साक्षी ईश्वरः सर्वगतो न हीदं सर्वं एष हि व्याप्ततमः'' इत्यादिनाप्यद्वितीयमात्मतत्त्वमेव नृसिंहस्वरूपमिति नृसिंहतापन्युपनिषत् प्रकटयति। अतो व्यस्तरूपेण, समस्तरूपेण वाऽद्वैततत्त्वमेव नृसिंहतापनीप्रतिपाद्यं तत्त्वम्। रामतापन्युपनिषत्तु श्रीरामचन्द्रस्वरूपं व्यस्त-समस्तौंकारार्थं मन्यते। सर्वथा त्वनपेक्ष्यत्वेऽप्योङ्कारार्थविचारस्यात्र 'ओं'मर्थस्य नारायणपरत्वमेव नान्यपरत्वमिति व्यवस्था मण्डनस्य निरालम्बा, अप्रयोजिका च ॥

सति चैवं ईश्वरस्यैवौंकारार्थत्वे नात्र विप्रतिपत्तिः। ईश्वरस्वरूपं तु पारमार्थिकं किमित्यत्रैव विप्रतिपत्तिः? तत्र यदि ईश्वर एव 'अथातो ब्रह्मजिज्ञासा' इत्यत्र ब्रह्मपदार्थः, तर्हि तत्तद्वैदिकागमसिद्धान्तानुसारेण तत्तत्स्वरूपं सविशेषम्, निर्विशेषं वाऽनुसन्धानमर्हति, न तु ब्रह्म-रुद्रादीनां जीवत्वमेव, विष्णोरेव परमात्मत्वमित्यत्र निर्भरोऽद्वैतसिद्धान्ते, इत्यभिप्रेत्यैव 'अद्वैततत्त्वसुधाप्रथमभागः 'ओं'कारसूत्रावयवत्वे, तदर्थनिर्णये च स्वीयमाशयं प्राचकाशत् ॥

परविद्यात्वं ब्रह्मसूत्राणामेव, न तु 'अथ परा यया तदक्षरमधिगम्यते' इत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनपूर्वकमुपदिष्टा विद्येति वादस्तु न विकल्पसहः। श्रुतिरियं परापरविद्ये प्रस्तुत्य विद्यास्वरूपमेव प्रतिपादयति, न तु सर्वेषां पदानां विष्णुपरत्वं प्रधानमिति। तत्र स्वसम्प्रदायं प्रधानमवष्टभ्य सर्वेषां प्रधानपरत्व एव निर्भरत्वं यदि मन्यते, तर्हि नात्र सम्प्रदायपरिपालनं वार्यते। कर्मकाण्डगतानां सर्वेषां पदानामप्यात्मतत्त्वविचारप्रसङ्गे

परमात्मपरत्वव्युत्पादनं त्वप्रयोजनम् । तत्र कर्मकाण्डार्थविचारावसरे कर्मपरत्वम्, परमात्मतत्त्वविचारावसरे तेषामेव वाक्यानाम्, किं बहुना ? तद्घटकानां पदानामपि परमात्मपरतया योजनं न साम्प्रतम् । तत्र 'सर्वे वेदाः यत्पदमामनन्ति" इति वचनानुसारेण सत्यं परविद्योपकारकत्वेन परमतात्पर्यस्य तत्रैव पर्यवसानमिति ज्ञाप्यते—कर्मणामपि साक्षात्, परम्परया वा उद्गीथाद्युपासनानां च कथञ्चिदुपयोगो भवतीति च । न चैतावता परमात्मस्वरूपनिर्णये तथा व्याख्यानमुपकरिष्यति ॥

द्वैताद्वैतसिद्धान्तयोः जीवेश्वरादिस्वरूपनिर्णये तद्भेदाभेदविचारः सर्वत्र प्रस्तूयते । तत्र प्रायेण जीवेश्वरयोर्भेदप्रत्यक्षादिकमवष्टभ्य जीवेश्वरयोर्भेद एव शास्त्रस्य तात्पर्यमिति सविस्तरं तत्र तत्र द्वैतिभिः प्रस्तूयते, तदभेदश्च निरस्यते ॥

तत्रेदमविप्रतिपन्नं तत्त्वम्, यद्भेदप्रतियोगिनौ जीवेश्वरौ विशिष्टाद्वैतदृष्ट्याऽपि भिन्नावेव । अभेदस्तु जीवेश्वरयोर्जीवत्वेश्वरत्वोपलक्षित एवेत्यद्वैततत्त्वसिद्धान्तः । अतो जीवेश्वरभेदाभेदविचारस्य भिन्नविषयत्वाद् द्वैतिनां स विचारोऽकिञ्चित्करः ॥

तत्र मोक्षसाधनत्वं त्वखण्डसंवित्स्वरूपज्ञानमात्रस्येति त्वद्वैतमतम् । भगवतो भक्तिरेव तत्प्रसादद्वारा मोक्षसाधनमिति तु द्वैतसिद्धान्तः । अत्रापि विषयभेदाद् भगवत्प्रसादद्वारा मोक्षसाधनत्वविचारोऽप्यप्रयोजनः । एतद्विषये विस्तृतो विचारः सगुण-निर्गुणवादादौ मोक्षसाधनविचारप्रसङ्गे च निबन्धेऽत्र तत्तत्प्रकरणेषु, पीठिकायाञ्च विशिष्य प्रस्तुतः । एवं सत्योंकारार्थविचार-प्रसङ्गेनानादीनामपीश्वराधीनत्वविचारोऽपि यदीश्वरशब्देनान्तर्यामी उपादानत्वात्, अधिष्ठानत्वमात्रत्वाद्वा विवक्ष्यते, तर्हि नाद्वैतमतेऽपि तत्र विप्रतिपत्तिः । अद्वैताभिमतमन्तर्यामिस्वरूपमेव नास्तीति वादोऽपि द्वितीये भागेऽत्र सम्यग् निराकृतः ॥

तत्र ब्रह्मणोऽधिष्ठानत्वमविद्यावरणप्रयुक्तमित्यद्वैतिनां सिद्धान्तः। तत्रापि प्रसङ्गे पीठिकाऽस्य निबन्धस्य, निबन्धश्च तत्तत्प्रकरणेऽविद्यायाः सप्तानुपपत्तिनिरासप्रसङ्गेन विविनक्ति। प्रकृतिनित्यत्वानित्यत्वाविद्यातत्प्रयुक्तानिर्वचनीयत्वाविद्याज्ञानमात्रनिवर्त्यत्वानिर्वचनीयख्यात्यादिसमर्थनम्, ब्रह्मजगदुपादानत्व–प्रत्यक्षागमबलाबलविचार–संविन्मात्राधिष्ठानत्व–मिथ्याभूतार्थक्रियाकारित्व-'नेहनानाऽस्ती'त्यादिश्रुत्यर्थादयः मण्डनप्रथमभागविमृष्टाः प्रकृतनिबन्धपीठिका-निबन्धाभ्यां सम्यगेव समालोचिताः। समालोचनीया द्वैतसिद्धान्तमात्रसम्बन्धिनो विषयास्तु—

(१) ब्रह्मणो जगदनुपादानत्वम्, (२) सत्त्वासत्त्वयोः परस्परविरहरूपत्वम्, (३) द्वैतमते प्रत्यक्षस्यागमबाधकत्वस्वीकारः, (४) 'परेऽव्यये सर्व एकीभवन्ति' इत्यत्र एकीभावसमर्थनम्, (५) उपास्यब्रह्मणस्त्रिकालाबाध्यत्वम्, (६) ब्रह्मतर्कस्य वेदाङ्गत्वम्, (७) शब्दावाच्यास्यालक्ष्यत्वम्, (८) प्रमाणत्रैविध्यमात्रम्, (९) स्वाप्नपदार्थानां वासनोपादानकत्वम्, (१०) जीवाणुत्वम्, (११) 'आत्मा' 'तत्' 'त्वम्' इति पदच्छेदेऽपि श्रुतेर्भेदपरत्वम्, (१२) स्वाप्नानामीश्वरसृष्टत्वेन सत्यत्वं च॥

## (1) ब्रह्मणो जगदनुपादानत्वम्

तत्र ब्रह्म जगदुपादानकारणं निमित्तकारणञ्चेत्यद्वैतसिद्धान्तः। तत्र निमित्तकारणत्वं द्वैतमत इव मायोपहितस्यैवेत्यत्र न विप्रतिपत्तिः। उपादानत्वमपि मायोपहितस्यैव, विशेषस्तु तत्र मायापरिणामिकारणम्, उपादानत्वं तु विवर्ताख्यं चैतन्यमात्रस्येत्यद्वैतम्, द्वैतं तु ब्रह्मणो निमित्तकारणत्वमात्रमिति॥

"न निरोधो न चोत्पत्तिः" इत्यादिवचनानि जगतोऽनिर्वचनीयस्य ब्रह्मण्यध्यासमात्रम्, इति जगतोऽविद्यापरिणामत्वम्, ब्रह्मविवर्तत्वञ्चाभिप्रयन्ति। असत्ख्यातिमनङ्गीकुर्वाणा अपि जगत्प्रकारकभ्रमविशेष्यस्वरूपविवर्तमानत्वं निर्विकारस्य ब्रह्मणः स्वीकुर्वन्ति। अतस्तस्य परिणामित्वाभावेऽप्युपादानत्वं रूपान्तरेणाविरुद्धम्। ब्रह्मणोऽविद्योपहितत्वं तु तदाश्रय-विषयत्वप्रयुक्तमित्यज्ञाने सप्ताऽनुपपत्तिसमीक्षाप्रसङ्गेऽत्रैव निबन्धे, पीठिकायामन्यत्र च विस्तृतम्॥

यथा चानिर्वचनीयत्वं सदसद्विलक्षणरूपत्वम् 'नासदासीन्नो सदासीत्' इति श्रुतिसिद्धं दुरपह्नवम्, तदपि व्यक्तीकृतम्। तद्धि वाक्यम्—प्रलये सदसतोरभावम्, तमसश्च भावं प्रतिपादयति। तदेवं सदसतोरभावे वाक्यशेषे प्रस्तुतं तम एव सदसद्विलक्षणं पर्यवस्यति॥

तच्च तमः ब्रह्मविषयिण्यविद्यैव। तच्च वाक्यशेषोपस्थापितं मूर्तामूर्तयोरन्यतरदेव वक्तव्यम्। अतोऽत्र न तमःपदार्थो ब्रह्म, किन्तु प्रकृतिरेवेति वक्तव्यम्। सदसद्रूपदाभ्यां वाय्वन्तरिक्षग्रहणेऽपि प्रलये वाय्वन्तरिक्षादिनिषेधमात्रे न तात्पर्यम्; "तमसा गूढमग्रे प्रकेतम्" इति ब्रह्मणस्तमसाऽऽवरणप्रतिपादनात्। तमःशब्दोऽत्राज्ञानपर एव। अतो जीव-ब्रह्मणोरुभयोरप्यविद्योपाधिकयोर्भेदेऽपि तदुपहितयोरभेदाद् एकजीववादस्य, बहुजीववादस्य च तत्तत्प्रकरणेषु सिद्धान्तलेशसंग्रहादौ विवेचनादौपाधिकभेदनिरूपणस्यापि तत्र तत्र क्रियमाणत्वेऽपि मुख्यं तात्पर्यं निर्विशेषत्वोपलक्षितब्रह्मण्येव। अतो ब्रह्मविवर्तवाद एव श्रुतीनां तात्पर्यम्; अविद्याया ब्रह्माश्रयकत्व-तद्विषयकत्व-तदनिर्वचनीयत्वैकानेकजीववाद-प्रपञ्चमिथ्यात्वानिर्वचनीयख्याति-भेददुर्निरूपत्व-ज्ञानमात्रमोक्षसाधनत्वादीनामेव श्रुति-स्मृतिसिद्धत्वात्। भामतीकारैस्तु परमार्थतो न भ्रमो नाम कश्चिदिति वर्णनेन भ्रमस्यानुपपन्नत्वस्यानिर्वचनीयत्वसाधकत्वं

निरूपितम्, मण्डनं त्वत्र सूत्रभाष्य-भामत्यादीनामन्यथाऽनुवादेन स्वमतमुपस्थापयति। अन्यथाऽनुवादस्येदमेकं प्रकरणं निदर्शनम् ॥

अत आगमानां प्रत्यक्षविरुद्धबन्धमिथ्यात्वबोधकत्वमेव युक्तम्। विस्तृतश्चेदमागमप्राबल्ये प्रत्यक्षागमयोर्विषयभेदेन प्रपञ्चमिथ्यात्वपरीक्षणादिना शतभूषण्यादौ, प्रकृते च प्रबन्धे तत्तत्प्रकरणेषु ॥

'आदित्यो यूप' इति विधिशेषोऽर्थवादस्तस्य विधेयस्तुतिमात्रे तात्पर्यात्, "न विधौ परः शब्दार्थः" इति न्यायेन तत्रातात्पर्येण च प्रत्यक्षाविरोधार्थं गौणार्थपरः स्वीकृतः। न च वेदान्तवाक्यानि तद्वद् विधिशेषोऽर्थवादः, न वाऽन्यपरः, किन्त्वज्ञातार्थबोधकत्वात् विधिकल्पानि स्वार्थपरणि च, इति न तन्न्यायेनात्र प्रत्यक्षस्यागमबाधकत्वम्। उक्तं च ब्रह्मसिद्धौ--

"आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः।
नैकत्व आगमस्तेन प्रत्यक्षेण विरुद्धयते ॥"

इति। सर्वथा तु प्रत्यक्षस्य नागमबाधकत्वम्। अधिकं ब्रह्मसिद्धितर्ककाण्डतोऽवगन्तव्यम्। न चान्यशेषत्वमन्यस्य बाधकम्; च तच्छेषत्वस्यैव तदबाधकत्वे तन्त्रत्वात्। न च शेषत्वस्य शेष्यनुसारेण नयनेऽप्रयोजकत्वम्। तथाचोक्तम्—"अङ्गगुणविरोधे च तादर्थ्यात्। "सोमेन यजेत" इत्यत्र न शेष-शेषिभावः, येन तत्र सोमपदे न लक्षणा स्यात्। सोमविशिष्टयागे तात्पर्यानुपपत्त्या खलु तत्र लक्षणा, नान्यशेषत्वेन। तात्पर्यानुपपत्तिर्हि तद्ग्राहकोपक्रमादिविरोधे, न तु प्रमाणान्तरविरोधे। न चात्र प्रमाणान्तरविरोधोऽपि। प्रत्यक्षं तु न श्रुतिविरोधि; तस्य सन्मात्रे प्रामाण्येन विकल्पांशेऽप्रामाण्येन च प्रपञ्चमिथ्यात्वश्रुत्युपष्टम्भकत्वात्। व्यक्तं चैतद् ब्रह्मसिद्ध्यादौ, प्रकृतेऽपि निबन्धे पीठिकायां च। "यजमानः प्रस्तरः" इत्यत्र प्रधानविधिशेषत्वानुपपत्तिरेव लक्षणाबीजम्, न तु बाधितत्वार्थमात्रम्; न ह्यन्यथा "विधिनैकवाक्यत्वनिर्वाहः" इति शेष्यानु-

सारेण शेषस्यान्यथानयनम् । "तत्त्वमसी"त्यादावपि तात्पर्यानुपपत्त्यैव लक्षणा, नान्यथानुपपत्त्या प्रत्यक्षविरोधमात्रम्; अन्यथा देहात्मप्रत्यक्षबाधितत्वेन तद्भेदपरश्रुतिरप्यप्रमाणं स्यात् । 'मम देह' इति प्रत्यक्षमपि देहात्मप्रत्यक्षमेव । 'मम'शब्देन सूक्ष्मशरीराकतताया अपि ग्रहणेन, 'मम'शब्दस्याभेदेऽपि प्रयोगेण च तस्य देहभेदप्रत्यक्षत्वयोगात्, इति नेदमपि प्रत्यक्षं परीक्षितप्रत्यक्षम् । वस्तुतस्तु प्रत्यक्षेग प्रत्यक्षबाधाऽत्र, न तु प्रत्यक्षेणागमबाधः । अतो नात्र प्रत्यक्षेणागमबाधः । उक्तं च ब्रह्मतर्के —

"प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम् ॥"

इति । तत्र मिथ्यात्वं प्रथमं सदसद्विलक्षणत्वम् । तद्धि सत्त्वासत्त्वोभयाभाववत्त्वम्, यत् "नासदासीन्नो सदासीदि" ति श्रुतिमूलं न्यायचन्द्रिकाऽद्वैतसिद्धि लघुचन्द्रिकाद्यनुसारेणाद्वैततत्त्वसुधायाः प्रथमेन भागेन विवेचितम् । तत्रासत्त्वं क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वम्, तदभावः सत्त्वमिति, असद्विलक्षणत्वाभावः, क्वचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्वे पर्यवस्यति । सत्त्वं तु सदसद्विलक्षणत्वघटकसत्पदविवक्षितमिहाऽबाध्यत्वम्, तदभावः सत्त्वाभावः, इति सिद्ध्यादितात्पर्यान्नात्र सत्त्वासत्त्वयोः परस्परविरहरूपत्वम्, सत्त्वासत्त्वयोर्मिथ्यात्वलक्षणघटकयोरबाध्यत्वाभावविशिष्टसत्त्वप्रतीत्यर्हत्वरूपत्वान्नात्र परस्परविरहरूपता सिद्ध्यादौ, अद्वैततत्त्वसुधायां वा स्वीकृता ॥

अनेन—सदसद्विलक्षणत्वं सत्प्रतीतिविषयत्वं च व्याहतमिति—परास्तम्; सदसद्विलक्षणत्वलक्षणेऽसत्त्वाभावपदेन सत्त्वेन प्रतीत्यर्हत्वस्यैव विवक्षणात्, सत्त्वेन प्रतीत्यर्हत्वं हि ब्रह्मण्यध्यस्तस्य जगतः शुक्त्यामध्यस्तस्य रजतस्येव सत्तादात्म्येन प्रत्यक्षसिद्धम्; 'सन् घटः', 'इदं रजतं सत्' इत्यादिप्रत्यक्षात् ॥

यद्यप्येवंलक्षणेऽसद्वैलक्षण्यकथनं व्यर्थम्; सद्भिन्नत्वमात्रस्यापि लक्षणत्वोपपत्तेः; तथापि 'नासदासीन्नो सदासीदि'ति श्रुतिमूलस्यास्य

लक्षणस्य तच्छ्रुत्यर्थस्यापि निरूपणं कर्तव्यमित्युभयवैलक्षण्यनिर्देशः, तेन चानिर्वचनीयत्वं सुसाधितं भवति ॥

इदं तु लक्षणं प्राथमिकमिथ्यात्वस्याद्वैतसिद्धयादौ विवक्षितम् । ब्रह्मसिद्धयादिमते तु सद्विविक्तत्वमात्रमपि मिथ्यात्वलक्षणम् । सिद्धयादावपि पञ्चममिथ्यात्वमेवंरूपेणाविष्कृतमेव । अतः सदसद्विलक्षणत्वे प्रकृते 'नासदासीदिति' श्रुतिमूलके नानुपपत्तिः । सद्विविक्तत्वमिथ्यात्वं तु पञ्चमम् "अतोऽन्यदार्तमि"ति श्रुतिमूलम् । इदन्तु पूर्वोक्तश्रुतिमूलम् । अतो नैकतरेणान्यतरस्य चारितार्थ्यम् ॥

न्यायचन्द्रिका तु—यत्र सत्त्वाभावः सत्त्वे, तत्र नासत्त्वम् ; यत्रासत्त्वाभावोऽसत्त्वे, तत्र सत्त्वमिति व्याप्तेरभावेन सत्त्वासत्त्वयोः परस्परविरहरूपत्वं निरस्यति, न तु मण्डनोक्तरीत्या तत् समर्थयति, इत्यपरोऽयमसदनुवादो मण्डनस्य ॥

१. द्वितीयभागस्तु—अद्वैतपरत्वेन, जगन्मिथ्यात्वपरत्वेन वा पराभिमतसूत्राणां परमतखण्डनपूर्वकं द्वैतपरत्व-जगत्सत्यत्वपरत्वसमर्थनपरः, त्रिसूत्रीभिन्नब्रह्मसूत्राणामद्वैतमतरीत्यापि सामान्यतो भेदपरत्वसमर्थनम्,

२. (तत्र त्रिसूत्री तु "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" "अविभागेन दृष्टत्वात् ।" इति )

३. 'तदनन्यत्वाधिकरणस्य' विश्वमिथ्यात्वपरत्वनिरासेन विश्वसत्यत्वपरत्वसमर्थनम्,

४. 'इतरव्यपदेशाधिकरणस्य' जीवस्य जगत्कर्तृत्वनिरासपूर्वकं सर्वज्ञस्येश्वरस्य जीवभिन्नत्वसर्वोत्तमत्वपरत्वसमर्थनम्,

५. वाक्यान्वयाधिकरणस्य जीवत्वोपलक्षितब्रह्मपरत्वनिरासपूर्वकं जीव-परमात्मभेदसमर्थनम्,

६. 'प्रकृत्यधिकरण'स्य ब्रह्मणो विवर्तोपादानकारणतापरत्वनिरास-पूर्वकं विश्वकर्तृत्वसमर्थनम्,

७. 'उत्पत्त्यसंभवाधिकरणस्य पाञ्चरात्रप्रामाण्यपरत्वाभावसमर्थन-मिति सप्त विषयान्—विचारयति ॥

१. तत्र भगवत्पादादिभिरद्वैतिभिरेव पञ्चपञ्चाशदधिकपञ्चशतसूत्रेषु "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" "आत्मेति तूपगच्छन्ति" "अविभागेन दृष्टत्वात्" इति त्रिष्वेव सूत्रेष्वद्वैतसमर्थनं कृतं नान्यत्र कुत्रापीति लेखनं तु मण्डनेनैव तदनन्यत्वाधिकरणेतरव्यपदेशाधिकरण-वाक्यान्वयाधिकरण-प्रकृत्य-धिकरणानां विश्वमिथ्यात्वजीवेश्वराभेद-ब्रह्मोपादानत्वनिरासपरतया केषाञ्च-नाऽन्येषामप्यधिकरणानामद्वैतपरतया भगवत्पादीयसिद्धान्तस्य सूत्रारूढत्वस्य स्वयं निरासात् स्ववचनव्याघातेन मण्डनमत्राऽऽत्मानमेव व्याहन्ति ; परस्पर-विरुद्धत्वात्तदीयवचनस्य । अत इदमपरमुदाहरणमनुक्तोपालम्भनस्य । सर्वथा तु भगवत्पादानामपि भेदपरत्वेऽद्वैतरीत्याऽपि भेदपरत्वसमर्थन एव तात्पर्यमिति वादो हठवाद एव ॥

अथ साम्प्रतं "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इत्यादिसूत्राणामपि कथं नाद्वैतपरत्वं मण्डनाभिमतमिति संग्रहेण विचार्यते ॥

किं बहुना ? जिज्ञासाधिकरणमारभ्य बहुष्वधिकरणेषु भगवत्पादैरद्वैत-परत्वं ब्रह्ममीमांसायाः प्राधान्येन व्यवस्थापितमिति सिद्धवत्कृत्यैव अणुभाष्या-नुव्याख्यान-न्यायसुधादयो द्वैतपरत्वं ब्रह्मसूत्राणां मन्यन्ते । तत्र यदि "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इत्यादिसूत्रेष्वेवाद्वैतपरतया भगवत्पादानां योजनम्, तर्हि तानि त्रीण्येव सूत्राण्यधिकृत्य द्वैताचार्याणाम्, तदनुयायिनां च किमपि वक्तव्यं स्यात् ॥

तत्रानुव्याख्यान-न्यायसुधादयः "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इत्यत्र शास्त्रपदमन्तर्यामिपरमिति अन्तर्याम्यभिप्रायमहंपदं स्वमतेन मन्यन्ते ।

न्यायसुधा तु तत्र 'केचित्तु' इत्यारभ्य भगवत्पादभाष्यं निरस्यति । अद्वैत-तत्त्वसुधायाः लक्ष्यं त्वद्वैतसिद्धान्तनिरसनस्य समाहितिमात्रं प्राधान्येन । तत्र मुख्यं समाधानम् "अहं मनुरभवमि"ति वामदेवानुभवो जीवब्रह्मैक्य एवोपपद्यते, नान्यथेति । तत्र मण्डनं वदति—जीव-ब्रह्मैक्यपरत्वे "तत्त्वमसी"त्यादाविव लक्षणा स्यात्, सा चानुपपन्ना—इति, लिखति च—पुनः 'अहं मनुरि'-त्यादिपदानां स्वान्तर्यामिपरतया व्याख्यानमेव युक्तम्—इति ॥

तत्रेदमेव पृच्छ्यते—अहं-मनु-वामदेवपदानां द्वैतमते तत्तदन्तर्यामि-परत्वं किं शक्त्या, उत लक्षणया वेति । सर्वेषां शब्दानां तत्तदन्तर्यामिपर-त्वमिति वादो न द्वैतसिद्धान्तसिद्धः; अभिन्ननिमित्तोपादानताऽनङ्गीकारात् । श्रीभाष्यसिद्धान्त इव तत्रानुव्याख्यानेऽहं-पदस्यान्तर्यामिपरत्वं नत्युक्तम्, दृष्टान्ततया चा"हं मनुरभवमि"त्यादि च, तेनापि अहंपदस्यनान्तर्यामिपरत्व-मुच्यते, किन्तु मनु-वामदेवादिपदानाम् ॥

विषयवाक्यं त्वस्याधिकरणस्य नेन्द्रविरोचनोपाख्यानम् । न च तत्राहं-पदमतिरिच्येन्द्रपदं वर्तते, येन मदन्तर्यामीन्द्र इति वाक्यार्थः स्याद"हं मनुरभवमि"त्यत्र । सर्वथा तु मदन्तर्यामी, मन्वन्तर्यामी चैक इति वर्णनमत्रान्तर्याम्येकत्ववादेऽनुपपन्नम्, वितथञ्च; तदनेकत्वशंकाया अभावात् ॥

"गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा ।
शतं मा पुर आयसीररक्षन्नधश्येनो जवसानिरदीयम् ॥"

ऋ ४-३-६

"न घासमामपजोषं जमारामीमा सत्वक्षसा वीर्येण ।
ईर्मा पुरंधिरजहादरातीरुत वाताँ अतरच्छूशुवानः ॥"

इति मन्त्रौ वामदेवेन स्वस्य देवानां च भेदो ज्ञात इति यदि प्रतिपादयतः, तर्हि कथम"हं मनुरभवं सूर्यश्चे"ति देवैः साकमभेदः ? अत इमौ मन्त्रावेव कथं मनुशब्दस्य वामदेवेन मन्वाद्यभेदानुसन्धानेऽप्युपपद्येते ॥

तदनन्यत्वाधिकरणादौ ब्रह्मोपादानतानिरासोपन्यासोऽपि केवलब्रह्मनिमित्तकारणताया बहुष्वंशेष्वद्वैतनिबन्ध इव विशिष्टाद्वैतनिबन्धेष्वपि निरासात्, केवलनिमित्तमात्रकारणत्वे "ईक्षतेर्नाशब्दम्" "न विलक्षणत्वादस्य" "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इत्यादिबहुतरसूत्राणामनपेक्षिताप्रसक्तभाष्यान्तरविषयान्तरपरतया व्याख्यानस्यानौचित्याच्च न क्षोदक्षमः ॥

वस्तुतस्तु——पाञ्चरात्रप्रामाण्यवादिनां द्वैतिनां निमित्तकारणतावाद एव न युक्तः, यतः पाञ्चरात्रप्रामाण्यवादिनः श्रीभाष्यानुयायिनो विशिष्य मतान्तरनिरसनप्रकरणे पाञ्चरात्रप्रामाण्यवादं समर्थयन्ति, यत्रानुव्याख्यानादयः पाञ्चरात्रप्रमाणसमर्थनस्यासङ्गतिमुपस्थाप्य शाक्तमतनिराकरणपरत्वं मन्यन्ते । तत्राभिन्ननिमित्तोपादानत्वं ब्रह्मणः श्रीभाष्यानुयायिनो मन्यन्ते, इति तत्सिद्धान्तविरोधोऽपि द्वैतिनां मते । न च पाञ्चरात्रसिद्धान्तः श्रीभाष्याभिमतो न सङ्गत इति कुत्रापि द्वैतनिबन्धेषु पाञ्चरात्रप्रामाण्यविचारप्रसङ्गे दृश्यते ॥

एतेन—उत्पत्त्यसंभवाधिकरणस्य पाञ्चरात्राप्रामाण्याभावसमर्थनपरत्वमिति—व्याख्यातम् । तत्र पाञ्चरात्रेऽभिगमनोपादान-योगेषु, इज्यायाम्, पञ्चव्यूहे, अन्यत्र च विषयसाम्येऽपि भारतादिप्रमाणान्तरसिद्धे तत्र प्रामाण्याविरोधेन सति विरोधेंऽशविशेषे प्रामाण्यमिति भगवत्पादानामपि सम्मतम् । ब्रह्मनिमित्तकारणत्वमात्रे, जीवोत्पत्त्यादौ मुख्ये वेदान्तार्थे न प्रामाण्यमिति कृत्वैव पाञ्चरात्रप्रामाण्यमद्वैतिभिर्निरस्यते, तन्निमित्तकारणत्वं तु पाशुपताधिकरणादिषु स्वतन्त्रं निरस्यते । यदि तु निमित्तकारणमात्रपरत्वं पाञ्चरात्रस्य, तर्हि अभिन्ननिमित्तोपादानत्वपरत्वांशेऽन्यत्र वा पाञ्चरात्रस्य प्रामाण्यनिरासपरत्वमेव युक्तमिति कृत्वैव पाञ्चरात्राप्रामाण्यपरत्वं तदधिकरणस्याद्वैतिभिः स्वीकृतम् ॥

तत्र यदि निमित्तकारणत्वमात्रे वेदान्तानां तात्पर्यम्, तर्हि तत्राभिन्नानिमित्तोपादानत्वपरताया एव श्रीभाष्यादिभिः स्वीकारात् कथं पाञ्चरात्रप्रामाण्यं द्वैतिभिरपि न निरसनीयम्? इति कथं पाञ्चरात्रप्रामाण्यपर-

त्वाभावसमर्थनं मण्डनाभिमतं न युक्तम् ? परमतनिरासप्रसङ्गे च को वाऽकस्मात् प्रसङ्गः पृथक् शाक्तमतनिराकरणस्य ? शास्त्रयोनित्वाधिकरणस्य वेद-तत्समान-योगक्षेमागमातिरिक्ताप्रामाण्यसमर्थनमेव यदि लक्ष्यम्, तर्हि निरस्यकोटौ शाक्तमतस्य साङ्ख्ययो-शैवागमानामिव द्वैतदृष्ट्यात्यप्रसक्तत्वात् तन्मतनिरसनम-युक्तमेव । साङ्ख्य-योग-पाशुपतादेरिव शाक्तमतस्य भारतेऽनिर्देशान्न तस्य निरस्यकोटौ प्रवेशयोग्यताऽपि । अतः सूत्रेषु द्वित्रेष्वेवाद्वैतसिद्धान्त-विचारोऽद्वैतिनामपीति सुस्थमनुक्तोपालम्भनम् ॥

तत्रेतरव्यपदेशाधिकरणे, वाक्यान्वयाधिकरणेऽन्यत्र च जीवेश्वरपरत्व-व्यवस्थापनं द्वैतिनां दृष्ट्या, अद्वैतिनां दृष्ट्या जीव-ब्रह्मैक्यपरत्वमिति मण्डनाभिप्रायस्तु मण्डनाभिमतस्य जीवेश्वरस्वरूपस्य, अद्वैताभिमतजीवेश्वर-स्वरूपस्य च भिन्नत्वादप्रयोजकम् । गीताया अद्वैतपरत्व एव प्रामाण्यम्, न द्वैतपरत्वे इत्यादि बहुशोऽद्वैततत्त्वशुद्ध्यादौ निरूपितम् । प्रकृतेऽपि निबन्धे द्वितीये भागे तत्र तत्र विशदीकृतम् ॥

तृतीयभागस्तु प्रमाणविचारमुपक्रम्य त्रीण्येव प्रमाणानि, न षडिति न्याय-मीमांसादिनिरसनपूर्वकं बहून्येव तत्त्वानि सविस्तरं तत्र परीक्षते । प्रमाणानां त्रित्वे, चतुष्टयत्वे वा प्रमाणान्तरसाध्यस्यापि त्रिभिरेव प्रमाणैः साधनात् व्यर्थं प्रमाणान्तरस्वीकरणं फलभेदाभावादिति मण्डनं वदति । तत्राद्वैतिनोऽपि व्यतिरेकानुमानेन निर्वाहेऽर्थापत्तेः पृथक् प्रमाणत्वायोगम्, प्रत्यक्षत एव निर्वाहेऽनुपलब्धेरप्रमाणत्वं च स्वीकुर्वन्ति । व्यतिरेक-व्याप्तेरनुमानत्वमनुमिनोमीत्यनुव्यवसायं च मत्वाऽर्थापत्तेर्न प्रामाण्यं स्वीकुर्वन्ति । यदि तत्र तथा नानुव्यवसायः, तर्हि अर्थापत्तेः पृथक् प्रामाण्यम्; अन्यथा तु न तत्र निर्भर इति वेदान्तपरिभाषायां विशदयन्ति ॥

तत्राद्वैतमते प्रत्यक्षस्य भ्रम-प्रमाभेदभिन्नस्यानिर्वचनीयख्यातिसमर्थन उपयोगः । अतः प्रत्यक्षप्रमाणमद्वैतमते परमुपजीव्यम् ॥

अनुमानप्रमाणमपि प्रत्यक्षप्रमाणसिद्धशुक्तिरूप्यमिथ्यात्वमुपजीव्य-प्रपञ्चमिथ्यात्वनिर्णय उपकरोति । तदिदमद्वैतसिद्धान्तसर्वस्वं निर्वोढुमेव प्रत्यक्षानुमानप्रमाणयोरपेक्षा ॥

उपमानप्रमाणस्य साधर्म्य-वैधर्म्य-विषयकत्वाद् ब्रह्मविलक्षणत्वेन प्रपञ्च-मिथ्यात्वसिद्धिः प्रयोजनम्, येन सदसद्विलक्षणत्वरूपस्य मिथ्यात्वस्य सिद्धिः । अर्थापत्तिरपि प्रपञ्चमिथ्यात्वेऽत्यन्तमुपकरोतीति तस्या मिथ्यात्वनिर्णय उपजीवनम् । वेदान्तप्रामाण्यनिर्णयार्थं शब्दप्रामाण्यमपि । अनुपलब्धि-प्रामाण्यमपि परोक्षतयाऽपरोक्षतया वाऽभावविषयज्ञानात्मकबाधस्वरूपनिर्णय उपयुज्यते । तत्र सर्वेषामेषां प्रामाण्यस्वीकरणं न केवलं लौकिकव्यवहार-निर्वाहार्थम्, किन्तु वेदान्ततत्त्वनिर्णयार्थमपि ॥

तत्रोपमानप्रामाण्यविषये न्यायचन्द्रिका—मदीया गौः, एतत्सादृश्य-वती, खुर-पुच्छादिमत्त्वादित्यनुमानेनोपमानकार्यं निर्वोढुं न पार्यते; दृष्टान्तस्य साध्यविकलत्वादिति पृथगुपमानप्रामाण्यं स्वीकर्तव्यमिति—लिखति ॥

अत्र मण्डनं वदति—न्यायचन्द्रिकोत्प्रेक्षितानुमानस्य दुष्टत्वेऽपि विमता गौः, गवयसदृशी, गवयगतसादृश्यप्रतियोगित्वात्, यो हि यत्सादृश्यप्रतियोगी, स तत्सदृशः; यथा यमो यमान्तरेण, इति स्वोप-दर्शितानुमानस्यादुष्टत्वमिति ॥

इदमेवात्र पृच्छ्यते—यदि खुर-पुच्छादिमत्त्वहेतुर्दुष्टः, न च तत्रानु-मानेनोपमानप्रमाणफलं सिद्ध्यति, तर्हि कथं तत्रोपमानस्याधिकस्य नापेक्षा, किं नाम सादृश्यं खुरपुच्छादिमत्त्वातिरिक्तम्? कथं च गो-गवयोरेकं सादृश्यम्? अतो नोपमानप्रमाणनिरासो युक्तः ॥

इदमत्रालोचनीयम्—उपमानप्रमाणं हि मीमांसकैः, यैः सादृश्यं स्वतन्त्रपदार्थ इति मन्यते, तैर्हि 'प्रकृतिवद् विकृतिः कर्तव्ये'त्यतिदेशशास्त्रो-

पयोगितया स्वीक्रियते । तत्र प्राथमिकसादृश्यज्ञानं प्रमाणम्, द्वितीयं फलरूपं सादृश्यज्ञानं प्रमा । तेन च सौर्ययागसदृश आग्नेययाग इति प्रथमज्ञानेनाग्नेयसदृशः सौर्य इति द्वितीयं ज्ञानं भवतीति द्वितीयसादृश्यज्ञानमहिम्ना तदङ्गैरेव सौर्यस्यापि तत्तदङ्गकार्यनिर्वाह इति फलं सिद्ध्यति ॥

गोसदृशो गवय इति प्रथमज्ञानेन गवयसदृशी गौरिति ज्ञानमात्रात् केवलं परस्परं सादृश्यमात्रं प्रतीयते, न तु द्वितीयेन सादृश्यज्ञानेन प्रथमसादृश्यज्ञानविषयस्य सापेक्षस्य कोऽप्युपकारः; यथा सौर्ययागस्याङ्गापेक्षस्य द्वितीयसादृश्यज्ञानेन तदपेक्षिताङ्गसमर्पणं क्रियते । गोसदृशो गवय इत्यत्र प्राथमिकज्ञाने गोगतसादृश्यप्रयोजकधर्म एव न गवयसदृशी गौरिति द्वितीयज्ञानेऽपि धर्मः । गोगतं सादृश्यमन्यत्, गवयगतं सादृश्यमन्यत् । तत्र गोगतसादृश्यप्रयोजको धर्मः खुरपुच्छादिमत्त्वम्, तदेव गवयगतसादृश्यप्रयोजकोऽपि । एवं तत्र परस्परसादृश्यज्ञानेन प्रथमसादृश्यज्ञानविषये गवि कोऽप्यपेक्षितो धर्मो न विज्ञायते । सत्यमनेन सदृशी मदीया गौः, यत एकस्यैव धर्मस्य भानमिति सत्यं युज्यते, इति नान्यतरनिष्ठसादृश्यप्रतियोगित्वमनुयोगित्वं चोभयोरपि । वैदिकेषूदाहरणेषु प्राथमिकसादृश्यप्रयोजकसादृश्यमन्यत्, द्वितीयसादृश्यप्रयोजकोऽपि धर्मः सादृश्यं चान्यत्; तत्फलमपि प्रथमसादृश्यज्ञानविषय एव धर्मो न द्वितीयसादृश्यविषयोऽपि ।

अतो वैदिकोदाहरणे नैकस्यैव धर्मस्य, सादृश्यस्य वा प्रतियोग्यनुयोगिभावत्वमुभयस्यापि । अतो नैकसादृश्यप्रतियोग्यनुयोगिनिर्णयमात्रं फलम् । अतः पृथक् तत्प्रमाणस्वीकारः । उपमानफलं तु साधर्म्यमिव वैधर्म्यमपि । अत एवातिदेशे कुत्रचनाङ्गानामतिदेशः, कुत्रचन नातिदेशोऽपि । अतः प्रपञ्चस्य ब्रह्मविलक्षणत्वेन मिथ्यात्वमुपमानस्य फलम्, सर्वथा तु नाद्वैतिनां प्रमाणसंख्यायां निर्भरः । प्रमेयमद्वैततत्त्वमुपमानं प्रमाणं विनापि, किं बहुना ? प्रत्यक्षप्रमाणं विनाऽपि वेदान्तमात्रप्रामाण्यस्वीकरणेनापि यदि निर्वहति, तर्हि तावदेव

पर्याप्तम् । अतस्तृतीयभागेन किं प्रमेयं तत्त्वमद्वैताभिमतं मण्डनेन कथं कथं व्यवस्थाप्यत इत्येतावदेवात्र लक्ष्यम् । अतस्तदेवावलम्ब्य किञ्चित् परीक्ष्यते ॥

निष्कर्षस्तु—गोसदृशो गवय इति सादृश्यज्ञाने गोनिष्ठं सादृश्यमुपमानविषयः, उपमितिविषयस्तु गवि गवयनिष्ठसादृश्यम्, तथोपमान ओषधिद्रव्यकत्वरूपसादृश्यं विषयः, सौर्ययागगताऽऽग्नेयाङ्गकत्वमुपमितिफलम् । सति चैवं गौः, गवयसदृशी, गवयनिष्ठसादृश्यप्रतियोगित्वात्, सौर्ययागः, आग्नेययागसदृशः, अग्नेयगतसादृश्यप्रतियोगित्वादित्यनुमानद्वयेऽपि हेत्वसिद्धिः; प्रमाण-प्रमित्योर्विषयस्य सादृश्यस्य भिन्नप्रतियोगिकत्वात्, इति नानुमानेनोपमाननिर्वाहः ॥

अनेन प्रसङ्गेन मण्डनस्य न्यायसुधाऽनुवादप्रसङ्गेन निरस्ताऽद्वैतसिद्धान्तप्रक्रियास्वद्वैतिनां जगन्मिथ्यात्ववादभङ्गः प्रथमः । तत्र मण्डनं प्रथमं सत्तात्रैविध्यवादस्य दुर्वचत्वमुपपादयति ॥

तत्र व्यावहारिकत्वं ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हत्वमद्वैतसिद्ध्यादौ, प्रातिभासिकत्वं तु ब्रह्मप्रमातिरिक्तबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हत्वम्, कालत्रयाबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हत्वं पारमार्थिकत्वम्, न तु व्यवहारविषयत्वादिमात्रम्, किमपि मण्डनकल्पितम् ॥

तत्र शुक्तिरूप्यादि बाध्यं ब्रह्मप्रमातिरिक्तबाधानन्तरं व्यवहारायोग्यम्, अकार्यकारि, व्यवहाराविषयो वा । बाधपर्यन्तं व्यवहारयोग्यता त्वर्थक्रियाकारित्वं तत्तद्योग्यार्थक्रियाकारित्वं त्वकिञ्चित्करम्; त्रिकालाबाध्यत्वनिराकरणमात्रे नैर्भर्यात् । स्वाधिष्ठाननिष्ठात्यन्ताभावप्रतियोगित्वम्, ज्ञाननिवर्त्यत्वम्, सदसद्विलक्षणत्वमन्यच्च मिथ्यात्वं सिद्धि-लघुचन्द्रिका-गुरुचन्द्रिका-न्यायामृतसौगन्ध्यविमर्शादौ विस्तृतं विमृष्टम् ॥

मण्डनोपक्षिप्तो नूतनो ज्ञाननिवर्त्यत्वमिथ्यात्वनिरासप्रकारस्त्वधिष्ठानज्ञानत्वेन निवर्त्ये शुक्तिरूप्यादौ ज्ञानत्वेन ज्ञानानिवर्त्यत्वात् साध्यवैकल्यमिति । अद्वैतसिद्धिस्तु ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं ज्ञाननिवर्त्यत्वमिति

निर्वचनेनाधिष्ठानसाक्षात्कारत्वेन ज्ञाननिवर्त्यत्वस्यैव मिथ्यात्वरूपस्य वर्णनात् तेनैव ज्ञानत्वेन, ज्ञानत्वव्याप्यधर्मेणाऽन्येन वा निवर्त्येषु व्यभिचारवारणं सिध्यति। शुक्तिरूप्ये चाधिष्ठानसाक्षात्कारत्वेनैव, न तु ज्ञानत्वेन, ज्ञानत्वव्याप्यधर्मेण, अनुभवत्वव्याप्यधर्मेण, भ्रमोत्तरप्रमानिवर्त्यत्वेन वा ज्ञाननिवर्त्यत्वं मिथ्यात्वमित्यद्वैतिनां सिद्धान्तः। सत्यप्येवं तथा तथा विकल्प्य निरसनं तु न्यायामृतकारादीनां स्वमतिविजृम्भितमात्रम्। अन्यत्तु सर्वं ग्रन्थविस्तरमात्रम् ॥

सर्वोऽप्ययं विस्तरो ज्ञानपदेनाधिष्ठानसाक्षात्कारं परित्यज्य केवलं ज्ञानमात्रस्य विवक्षाधीनः। इदं त्वनुक्तोपालम्भनम्। अनित्यत्वमेव मिथ्यात्वमिति निवृत्ति-बाधयोः स्वरूपस्य तत्र तत्र निरूपितस्य गोपनेन, नेदमद्वैतिनां किञ्चित्करम्। कणादाक्षपादादिहैतुकाः, अन्ये च सत्यस्यापि प्रपञ्चस्य, सत्यम्, विनाशमङ्गीकुर्वन्ति, परन्तु विनाशस्तस्य कारणात्मनाऽवस्थानरूपत्वादद्वैतिभिरविद्यायाः प्रपञ्चकारणभूतायाः नाशेन बाध्यत्वस्यैव स्वीकारात् तैः सहाद्वैतस्य वैलक्षण्यान्नाद्वैतिनामपसिद्धान्तः। दर्शनान्तराचार्यैरद्वैतसिद्धान्तस्य परस्परं वैमत्यं स्वसिद्धान्तेन दर्शनान्तरसिद्धान्ते सर्वेषु दर्शनेषु समानम् ॥

मण्डनमपि स्वीयेनैव सिद्धान्तेनाद्वैतमतं खण्डयति। तत्र स्वीयः सिद्धान्तः को वा प्रामाणिक इति श्रद्धामात्रेण सिद्धान्तान्तरविमर्शनं न केवलमद्वैतिनः, किन्त्वन्येऽपि कुर्वन्ति। तावता केवलमद्वैतस्यैवाश्रद्धेयत्वस्थापनम्, विना विचारं न साम्प्रतम् ॥

प्रस्थानभेदा जीवस्वरूपविषये, ईश्वरस्वरूपविषये संक्षेपशारीरक-पदार्थतत्त्वनिर्णय-तत्त्वविवेकादयः, दृष्टिसृष्टिवादादयः, अन्ये च मण्डन-सुरेश्वर-परिमलादिप्रस्थापिता अद्वैतमात्रपर्यवसायित्वाद् मार्गभेदमात्रम्, अतो नाप्रमाणम्। अयमेव न्यायो महाभारतादिवचनानां स्वस्वमतानुसारेण योजनप्रकारेऽप्यनुसन्धेयः। माण्डूक्यागमप्रकरणस्यान्यस्य च स्वमतानु-

सारेण योजनं सर्वेषां समानं पौर्वापर्यपर्यालोचनेन स्वस्वसिद्धान्ते। अस्तु नामाऽयमप्रासङ्गिको विचारः। अद्वैततत्त्वसुधाया "मायामात्रमि"ति सूत्र-विवरणप्रसङ्गेन स्वामिकानां मायामात्रत्वसिद्धान्तस्य निरसनप्रसङ्गेन मण्डनमिदं वदति—

सृष्टित्वावच्छेदेनाऽद्वैतमतेऽपारमार्थिकत्वात् स्वाप्न-जागरभेदेन सृष्टिभेदोऽनुपपन्नः। शुक्तिरूप्यस्यापि मायाकार्यत्वान्न मायामात्रत्वम्। उपादानत्वं हि परिणामित्वं मायाया एवेति तन्मतम्। अतः कृत्स्नस्यैव प्रपञ्चस्य मायामयत्वमव्याहतम्। निर्विकारमपि ब्रह्म नोपादानं भवितुमर्हति। घटादिषु मृद्दारु-तन्तुभावानापन्नमायोपादानकत्वेन स्वाप्नेष्वपि तदापत्तिः, स्वाप्नमायामात्रत्वे प्रत्यक्षादिप्रमाणविरोधोऽपि। अतः मायाशब्दस्य वासनापरत्वाद् वासनामयत्वमेव—इति॥

अत्राद्वैतसिद्धान्ते यद्यपि सर्वापि सृष्टिरपारमार्थिकी; तत्तदधिष्ठान-साक्षात्कारपर्यन्तमेव सर्वव्यवहारनिर्वाहकत्वात्, तदनन्तरं स्वरूपेण सर्वेषाम-भावाच्च। सृष्टौ च मायाऽप्युपादानम्। स्वाप्न-शुक्तिरूप्यादावुपादानं तु तत्तदन्तःकरणावच्छिन्नचैतन्यस्य, शुक्त्याद्यवच्छिन्नचैतन्यस्य चावरणेन। अन्येषां घटादीनां तु निर्विशेषाश्रित-तद्विषयकमूलाविद्यापरिणामित्वम्। अतः स्वाप्न-शुक्तिरूप्यादीनां घटादिप्रपञ्चानां च वैषम्यम्॥

तत्र प्रथमे स्रष्टा जीवः, द्वितीय ईश्वर इति विभागः। तत्र 'मायामात्रमि'ति मात्रपदेन स्वरूपतो मायातिरिक्तोपादानानपेक्षत्वं स्वाप्नादौ; यथा स्वाप्निकसृष्टौ न तदुपादानदार्वादिकमपेक्ष्यते, एवमेव शुक्त्यादौ। अन्येषु च जागरिकेषु तत्तदवान्तरोपादानभावापन्नतयैव मायोपादानम्, इति केवलमायोपादानत्वं स्वाप्निकेषु, न जागरादिषु; यत्र तत्तदवान्तरोपादानभावा-पन्नमायोपादानकत्वम्। अत एव तत्तन्मात्रोपभोग्यत्वं तत्तद्देशमात्रे तत्तत्काले

च स्वाप्निकानाम् । जागरिकाणां त्वीश्वरसृष्टानां सर्वानुभाव्यत्वं सर्वदा सर्वत्र चोपलभ्यमानत्वम्, इतीदृशं वैषम्यमभिप्रेत्यैव "वैधर्म्याच्च न स्वप्नादिवदि"ति वैयासिकं सूत्रम् ॥

सौगता हि स्वाप्निकानामिव जागरिकाणामपि वासनाकार्यत्वेन ज्ञानव्यतिरेकेणार्थाभावं स्वीकुर्वन्ति, वासनामेव च मायां मन्यन्ते, अद्वैतिनस्तु स्वाप्निकानां मायामयत्वेन प्रातिभासिकत्वम्, एवमेव शुक्तिरूप्यादीनामपि, इत्यद्वैततत्त्वं संगोप्य मण्डनस्याद्वैतमतनिरसनमिदम् । तत्राद्वैतमतस्य प्रस्थानभेदेषु सत्स्वप्यन्ततोऽद्वैतसिद्धान्ते सर्वेषां प्रस्थानानां पर्यवसानं दृश्यते । अतः स्वाप्निकानामपि सृष्टित्वात् पारमार्थिकी स्यादित्यद्वैतमतानुसारेण वर्णनं केवलमनुक्तोपालम्भनम् । स्वाप्निकानां वासनामयत्वसिद्धान्तस्तु सौगतानां सिद्धान्तः । गौडपादकारिकाणामन्यथाऽन्यथा स्वमतानुसारं योजनमप्रमाणिकमिति व्यक्तमन्यत्र ॥

तत्र स्वमतानुसारेणाद्वैतसिद्धान्तस्याद्वैतसिद्धान्तानुसारेण द्वैतसिद्धान्तस्य च परस्परं निरसनं तत्तत्स्वतन्त्रसिद्धान्तमात्रमवलम्ब्य न किञ्चित्करम् । मण्डनस्य द्वैतसिद्धान्तानुसारेणाद्वैततत्त्वसुधानिरसनप्रयत्नस्तु न साम्प्रतमित्येतावन्मात्रमत्र वक्तव्यम् । अन्ये च खण्डन-मण्डनप्रकाराः स्वस्वसिद्धान्तमवलम्ब्य स्वस्वसम्प्रदायरक्षणार्थं प्रवर्तन्तां नाम ॥

## सगुण-निर्गुणवादो द्वितीयः

सगुण-निर्गुणवादे त्वद्वैतिनां सिद्धान्ते सर्वेषामपि कारणवाक्यानां निर्विशेषे तात्पर्यमित्यद्वैततत्त्वसुधा । एतदाशयस्तु सगुणवाक्यानि वेदान्तेषु द्विविधानि दृश्यन्ते—कारणवाक्यानि, उपासनावाक्यानि च । अन्यानि तु कानिचन निर्गुणवाक्यानि । तत्रोपासनावाक्यानां प्रामाण्यं तत्तदुपासनायां तत्तत्प्रयोजनायां तत्तद्गुणविशिष्टत्वेन तेषां तावतैव चारितार्थ्यम्, न तु

सर्वेषामुपासनावाक्यानामेकीकृत्य सर्वोपासनाविषयाणामेकस्मिन् सगुणे तात्पर्यमिति वक्तुं शक्यते; सर्वगुणविशेषविशिष्टैकब्रह्मविषयोपासनाया अप्रामाणिकत्वात्, असंभवाच्च ॥

कारणवाक्यानि तु नोपासनापराणि, न वा तान्यप्युपासनावाक्यैक-वाक्यतया तत्तद्गुणविशिष्टतयैकोपासनपराणि, न वा कारणत्वमुपास्यम्; अन्यथा तत्क्रतुन्यायेनोपासकस्य स्वोपास्यसर्वगुणविशिष्टजगत्कारणस्वरूपा-भेदोऽपि फलमिति स्यात्। न च कारणवाक्यानीवोपासनावाक्यान्य-प्येकरूपेण प्रवर्तन्ते; अन्यथा नोपासनाभेदः स्यात्, न वोपास्यस्वरूपभेदः। अत एवोपासनाभेदाभेदादिचिन्ता, न वा एकस्यामेवोपासनायां सर्वासामुपासनानां तात्पर्यमिति व्यवस्था ब्रह्ममीमांसायाः। व्यक्तश्च ब्रह्ममीमांसातृतीयाध्याये तृतीये पादे न सर्वासामुपासनानामेकत्र पर्यवसानम्, किन्तु बहवो भिन्नभिन्ना भिन्नभिन्नफलका निर्धार्यन्ते, नैवं कारणवाक्यानि ॥

कारणवाक्यानि तु सर्वासूपनिषत्स्वेकरूपाणि दृश्यन्ते। एकमेव ब्रह्म, एकरूपमेव च निर्दिश्यते, परन्तु न तानि कारणं ब्रह्म कारणत्वेनोपास्यतया प्रतिपादयन्ति, किन्तु केवलं कारणस्वरूपमात्रं निर्दिशन्ति। तत्रोपासना-प्रकरणेऽपि कारणब्रह्मणोऽप्युपास्यतायामेव यदि तात्पर्यम्, तर्हि कुत्रापि कारणप्रकरणे उपासनाया अनिर्देशेऽपि कारणस्वरूपानुसंधानस्य प्रयोजनं निर्दिश्येत। सर्वत्र कारणवाक्येषु 'ब्रह्मविदाप्नोति पर' मित्यादिष्विव ज्ञेयत्वेन 'ब्रह्मस्वरूपं प्रस्तुत्यैव कारणवाक्यान्याम्नायन्ते। ततो ज्ञायते कारणस्वरूपज्ञानमात्रं निःश्रेयसायोपदिश्यते—इति। तेन च कारणस्वरूप-ज्ञानमात्रं मोक्षसाधनमिति ज्ञायते, एकरूपमेव तद् ब्रह्म ज्ञेयमिति च। अत एव "गतिसामान्यादि"त्यादिना सर्वेषां वेदान्तानामेकस्मिन्नेकरूपे कारणस्वरूपे पर्यवसानमिति। तत्र कारणवाक्यानि सर्वाण्येकरूपाणि नाम्नायन्ते; तथापि सर्वेषां कारणवाक्यानामेकस्वरूपमात्रपर्यवसायित्वेन निर्णयः, इति सर्वाणि कारणवाक्यान्येकत्रोपसंहृत्य तत्स्वरूपनिर्धारणं कर्तव्यम् ॥

कारणवाक्यानि तु कानिचन "सोऽकामयत बहु स्यां प्रजायेयेति" इति कारणत्वमात्रमुपक्षिप्य "ब्रह्मविदाप्नोति" इत्यादिना प्रस्तुतं ज्ञेयं ब्रह्मस्वरूपमात्रं प्रतिपादयन्ति, कानिचन 'अधीहि भगवो ब्रह्मे'ति ज्ञेयं ब्रह्म प्रस्तुत्य "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति तद् ब्रह्मे"ति प्रस्तुत्य' "आनन्दो ब्रह्मेति व्यजानात् आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्युपक्षिप्य .... "सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिते"ति प्रवर्तन्ते । कानिचन 'सदेव सोम्येदमग्र आसीत्' 'एकमेवाद्वितीयम्" "तदैक्षत बहु स्यां प्रजायेयेति' इति श्रूयन्ते । अपराणि तु 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमचक्षुःश्रोत्रमपाणिपादं तद्भूतयोनिं परिपश्यन्ति धीराः' इति प्रस्तुत्य "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः । तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते' इति क्रमेणाधीयन्ते । सर्वेषामेतेषां जगत्कारणत्वांश ऐकरूप्यं दृश्यते ॥

तत्र केषुचन कारणत्वमात्रं प्रस्तुत्य ब्रह्मस्वरूपोपन्यासमात्रेणोपसंहारः । केषुचन तदेव सद्वितीयं प्रस्तुत्याद्वितीयत्वेन, निगुर्णत्वेन निर्विशेषत्वेन चाम्नानम् । तत्रैकवाक्यतया कारणवाक्यानि सर्वाण्यपि कारणरूपेण ब्रह्म गृहीत्वा तत्तत्कारणप्रकरणेषु तत्र तत्र श्रूयमाणाद्वितीयत्वनिर्गुणत्वादिकं योजयित्वा वाक्यार्थवर्णनं कर्तव्यम् ॥

एवं कारणत्वं ब्रह्मणः कारणतावस्थायां सद्वितीयत्वेन, पर्यवसानं त्वद्वितीयत्वेनेति निर्णयः । अयञ्च निर्णयः "सदेव सोम्येदमग्र आसीदि"त्यत्र "सदेवेदमि"तीदन्तादात्म्यापन्नतया ब्रह्मोपक्षिप्यानन्तरेणैव वाक्येन "एकमेवाद्वितीयमि"त्युपसंह्रियते । तदनन्तरवाक्यैः सृष्टिपरैः "सदेवेमि"ति प्रस्तुतस्य सद्वितीयस्य 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्, स आत्मा तत्त्वमसि श्वेतकेतो' इत्यद्वितीयांशः सविस्तरमुपन्यस्यते ॥

तत्र कारणत्वं ब्रह्मणः "ब्रह्मविदाप्नोति परमि"ति प्रस्तुत्य "सत्यं

मुपपद्यते ? तत्र सविशेषवाक्यानि सविशेषमेव बोधयन्तु; तेनैव नयेन कारणवाक्यान्यपि कारणमेव बोधयन्तु; कर्मकाण्डवाक्यान्युपास्यब्रह्मभेदं कथयन्तु, कारणवाक्यानाम्, सविशेषवाक्यानां च परस्परविरोध उपासना-भेदाऽभेदादिचिन्तादिकमपि स्यादेव नाम; एवं जीवस्यावस्थाभेदमङ्गीकृत्यैव ते ते कर्मकाण्डगता विधि-निषेधादयो भवन्तु, तत्त्वविचारावसर उपासना-कर्माधिकारिणां भेदस्त्वकिञ्चित्करः। उभयोरप्येकीकृत्य ज्ञेयतावस्थायां प्राक्तनौपाधिकस्वरूपे निर्गलिते ऽखण्डे ब्रह्मणि ज्ञाते यदा नोपास्यम्, नोपासना, न कर्ता, न कर्म, तदा को नाम विरोधः ? केन कथं वेति पर्यवसिते स्वरूपे भेदाभेदचिन्तामाश्रित्य निर्गुणवादनिरसनमकाण्डताण्डवम् ॥

तत्र कर्मकाण्डवाक्यानां देहातिरिक्तात्मवादं सिद्धवत्कृत्य प्रवृत्तानां व्यवहारदशायां प्रत्यक्षविरोधेऽपि प्रत्यक्षबाधेनैव प्रवृत्तिः। उपासना-प्रकरणेषु सविशेषवाक्येषु केष्वपि प्रत्यक्षाविषयार्थबोधकेषु प्रत्यक्षमप्रमाणं ममत्वैव प्रामाण्यम्। तत्रापि कुत्रचन कुत्रचनोपासनेषु परस्परविरुद्धगुण-बोधनेऽप्युभयोरपि प्रामाण्यं स्वीकर्तव्यम्। निर्विशेषवाक्यानां तु पूर्वोक्तरीत्या 'त्वं'पदार्थगतधर्माणां तत्पदार्थगतसविशेषत्वानां च बाधेन प्रवृत्तानां तत्परेषु वाक्येषु न परस्परं विरोधः; सविशेषस्येव तस्यापि प्रत्यक्षादिप्रमाणागोचरत्वात् प्रत्यक्षानुमानादिभिः साकं न विरोधः। सविशेषवाक्यं प्रबाध्य प्रवृत्तेषु तेषु तद्विरोधो नोत्तिष्ठति। प्रत्यक्षा-विषयत्वमात्रेण विरोधे सविशेषवाक्यमपि न प्रमाणं स्यात्। कर्मोपासनाधि-कारावस्थायाम्, निर्विशेषसाक्षात्कारानुदयदशायां तु सविशेषवाक्यैर्निर्विशेष-वाक्यविरोधचर्चाऽकिञ्चित्करी। निर्विशेषसाक्षात्कारावस्थायां तत्साक्षात्कारेण सर्वेषां विशेषाणामुपमर्दितत्वाद् विरोधसम्भावनाऽपि नावसरति ॥

साम्प्रतं तु सविशेषमेव मानमनुसन्धाय निर्विशेषवाक्यार्थो भावी वेदान्तवाक्यानां न्यायानुसन्धानेन परीक्ष्यते। परीक्षावस्थायां च न्यायतः सगुणवादमतिरिच्य निगुर्णवादोऽपि भवति वा, न वेति विचारावसरे

सगुणविचारेणान्यत्र च लौकिकेषु व्यवहारेषु स्थित्वा विचारावसरेऽन्न-मयादिवाक्यानन्तरं प्रवृत्तेषु तत्तत्पर्यायान्तरेषु पूर्व-पूर्वपर्यायोपमर्दनानन्तरं प्रवृत्तेषु पूर्व-पूर्वोपमर्दितपर्यायावस्थामास्थाय क्रियमाणे विचारे विरोधो यथाऽकिञ्चित्करः, एवमेवात्रापि, इति स्थितेऽप्यनिर्णीतावस्थायामुत्तरावस्थायां न्यायतः साऽवस्था भवति वा, न वेति परीक्षाऽवश्यं कर्तव्येत्युपलक्ष्य तत्तन्निबन्धकाराणां बलाबलादिविचारः ॥

अतः प्रत्यक्षागमविरोधाविरोधप्राबल्य-दौर्बल्यविचारावसरे द्वैतदृष्ट्या वेदाङ्गतयाऽभिमतब्रह्मतर्कस्य व्यासप्रणीतस्य मुख्योऽर्थः—

"प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम् ॥"

इति । आगमप्राबल्ये च सति प्रत्यक्षादीनामागमबाधकत्वचर्चायां कथं न स्वोपजीव्यविघातः ? न्यायसुधाऽनुसंधानेन प्रत्यक्षागमयोर्बलाबलमधिकृत्य न्यायामृतसौगन्ध्यविमर्शान्तग्रन्थेषु मण्डनोद्धृतन्यायामृत-तरङ्गिण्यादावुपक्षिप्त-युक्तिजातानां खण्डन-मण्डनादिकमत्रापि निबन्धे संगृहीतम्, इति नात्र किमप्यधिकं वक्तव्यम् ॥

निर्गुणवादं प्रत्यक्षादिबलाबलविचारं चाधिकृत्यास्मिन्नेव निबन्धे मध्ये तत्तत्प्रकरणेषु शास्त्रप्राबल्योपपत्ति-सविशेषनिर्विशेषत्वानुमानभङ्गादिषु गीताया अद्वैत एव स्वारस्यमित्यादिशीर्षकेषु च प्रकरणेषु सम्यगेव विवेचितम् ॥

निर्गुणब्रह्मापेक्षयाऽपि सविशेषं ब्रह्मैव श्रेष्ठम् ; अद्वैतरीत्या शून्यस्य परत्वापत्तिरिति शङ्का तु शून्यस्वरूपस्य चतुष्कोटिविनिर्मुक्तस्य ब्रह्मणः सम्बन्धलेशोऽपि नास्ति, इति नोत्तिष्ठत्यपि ॥

'सत्यं ज्ञानमनन्तं ब्रह्मे'ति लक्षणलक्षितस्य "आनन्दो ब्रह्मेति व्यजानाद्" इत्युपसंहारः, इति परमार्थतः सच्चिदनन्तानन्दात्मतया निर्णीतस्य "सदेवेदमि"ति प्रक्रमानुसारेण सद्रूपेण प्रायिकम्, क्वचित्सच्चिद्रूपेणापि तत्, न तु सच्चिदानन्दरूपेण । अतः सच्चिदात्मना ज्ञातमानन्दात्मनाऽज्ञातं

सखण्डं ब्रह्म कारणम्, आनन्दात्मनाऽपि ज्ञातेऽखण्डस्वरूपसाक्षात्कारे परिशेषितानाद्यविद्याकल्पितसच्चिदादिभेदशून्यं तत एव निवृत्तावरणम्, अविद्याप्रयुक्तसर्वप्रपञ्चरहितम्, अद्वितीयं च ब्रह्मैव कारणवाक्यप्रमेयं प्रतिष्ठितं तत्त्वम्, इति कारणवाक्यानां प्रतिष्ठाऽखण्डे ब्रह्मण्यद्वितीये विशदीभवति। अत एव भृगुवल्ल्यां 'यतो वे'त्यादिना कारणवाक्यै-रानन्दात्मना ज्ञानपर्यन्तं सृष्टिप्रकरणमुपक्षिप्य 'सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिते'ति कारणवाक्यानामखण्डे ब्रह्मणि तात्पर्यमुपसंहृतम्॥

यद्यपि सर्वेषु कारणवाक्यप्रकरणेषु वस्तुत आनन्दरूपत्वेनाऽपि ब्रह्म न निर्दिश्यते; तथापि गुणोपसंहारन्यायेनैव सर्वेष्वपि कारणवाक्येषु "आनन्दो ब्रह्मेति व्यजानाद्" इत्यस्याप्येकीकरणेन सच्चिदानन्दं ब्रह्मैव विवक्षित-मिति वक्तव्यम्। इदमेवाभिप्रेत्य "आनन्दादयः प्रधानस्ये"ति ब्रह्ममीमांसायास्तृतीयाध्यायतृतीयपादेऽधिकरणम्। अत्र चोपासनावाक्यानि पृथगुपासनां प्रतिपादयन्ति तत्तत्फलार्थम्। कारणवाक्यानि तु कारणस्वरूप-मात्रं प्रतिपाद्य तदेवाखण्डब्रह्मरूपेणोपसंहृत्य ब्रह्मतत्त्वं प्रतिपादयन्ति। तत्र कारणवाक्यानि "तत्त्वमसी"त्यादौ सर्वकारणवाक्यार्थमेकीकृत्य तत्पदार्थं सद्वितीयं संगृह्णन्ति, 'त्वं' पदं तु कर्मकाण्डार्थानि सर्वाण्येकीकृत्य तत्र कर्तृतया निर्दिष्टं त्वंपदार्थमनुवदति। उभयोरभेदोऽसिपदघटितेन वाक्येन निर्दिश्यते। अतः सविशेषपराणां तत्पदार्थशेषतया, कर्मपराणां च 'त्वं' पदार्थशेषतयाऽन्वये तत्पदार्थमुद्दिश्य त्वम्पदार्थाऽभेदे बोध्यमाने, सर्वाणि सविशेषपराणि वाक्यानि, तत्पदार्थपराणि 'त्वं' पदार्थपराणि च तत्तत्स्वरूपमात्रे पर्यवसन्नानि तत्त्वंपदवाक्यशेषत्वाद्वाच्यार्थेन मुख्येन तेषामसम्बन्धाद् लक्षणया 'तत्त्वमसी' त्यादिवाक्यप्रतिपादितं जीव-ब्रह्मैक्यं कथं विहन्तुं शक्नुवन्ति॥

एवं स्थिते निर्विशेषवादं प्रस्तुत्य प्रत्यक्षादिप्रमाणविरोधेन, सविशेषवाक्यविरोधेन च निर्विशेषवादोऽप्रामाणिक इत्यादिवर्णनं कथमुत्तिष्ठति?

"असन्नेव स भवति असद् ब्रह्मेति वेद चेदि''ति वाक्ये तु ब्रह्मणोऽसत्त्व-ज्ञानमपुरुषार्थ इति, 'अस्ति ब्रह्मेति चेत्' इत्युत्तरवाक्ये सद्रूपतया ब्रह्मज्ञानं पुरुषार्थ इति प्रतिपादनात् "असद्वा इदमग्र आसी'दित्यादीनामपि स्वयं श्रीमदणुभाष्येण, श्रीमदनुव्याख्यान-न्यायसुधादिभिरन्यार्थत्वं व्यक्तीकृतम् । मिथ्यात्वविषये वक्तव्यं सर्वं पूर्वमुक्तमत्रापि ग्रन्थमध्ये तत्र तत्र मिथ्यात्ववि-चारावसरे, अनिर्वचनीयख्यात्यवसरे च स्पष्टीकृतम् ॥

ज्ञाननिवर्त्यत्वादिमिथ्यात्वमन्यथा गृहीत्वैव ज्ञानपदस्याधिष्ठानसाक्षात्कार-परत्वं परित्यज्य मिथ्यात्वस्य निरसनादनुक्तोपालम्भनम् ॥

तत्राहमर्थात्मत्वम्, आगमादीनां मिथ्यात्वेऽप्रामाण्यम्, मिथ्याभूत-स्यार्थक्रियाकारित्वायोगः, असतः साधकत्वानुपपत्तिः, प्रपञ्चमिथ्यात्वानुमाने दृश्यत्वहेतोराभासत्वमित्यादयो मण्डनाभिमताः सर्वेऽपि विषया अत्रैव निबन्धे बहुशः तत्तत्प्रकरणेषु परीक्षिताः । सर्वाणीमानि निर्मूलानि, अप्रामाणिकानि चेति स्मृति-प्रामाण्यादिविषयेऽन्यत्र च तत्तद्विषयेष्वेतन्निबन्धेऽसमालोचिताः केऽपि न परिशिष्टाः । तेषां सर्वेषामप्यत्रैव निबद्धानां पर्यालोचनमात्रं मण्डनेन कर्तव्यमिति सादरं सविनयञ्च प्रार्थ्यते ॥

श्रुत्यर्थविचारस्तु स्वस्वसिद्धान्तं सिद्धवत्कृत्य तत्तत्सम्प्रदायैः क्रियमाणः सम्प्रदायान्तरैराक्रम्यमाणश्च तत्तद्भाष्य-तद्व्याख्यानेषु पर्यालोचने सम्यगेव विशदीभविष्यति । निष्कर्षणीयं तत्त्वं तु स्व-स्व-स्वतन्त्रसिद्धान्तरूपं वेदान्तस्य लक्ष्यं भवितुमर्हति वा, न वेत्येव साम्प्रतम् ॥

तत्राद्वैततत्त्वमेकमेवाद्वीतीयमित्यादिवाक्यसिद्धम् । तच्चाद्वैतदृष्ट्या स्वतन्त्रम्, परतन्त्रं वा, अथवा द्वैतदृष्ट्या सविशेषशेषम्, अप्रधानं वेति चर्चावसरः । तत्राद्वैतसिद्धान्तेऽद्वितीयशेषं सद्वितीयवाक्यम्, द्वैतसिद्धान्ते तु सद्वितीयशेषमद्वितीयवाक्यम् । तत्राद्वैतसिद्धान्तेऽद्वितीयशेषत्वेन सद्वितीयत्वस्य, किमप्यपूर्वमेकरूपं सर्ववेदान्ततात्पर्यविषयः सेत्स्यति ॥

तत्र जीवात्मनः स्वतन्त्रमवस्थान्तरं सविशेषस्य च तत्त्वमिति फलति। इदं तु शास्त्रप्रामाण्यमात्रमवष्टभ्य। द्वैतमतेऽपि जीवस्य केवलं परमात्मपारतन्त्र्यमेव न्यायबलाबलानुसारेण वाक्यार्थव्यवस्थया स्वीकर्तव्यम्। तत्र च सर्वेषां वेदान्तवाक्यानामद्वैतमतानुसारं नयनमित्यद्वैतप्रक्रिया, द्वैतिनां तु निर्विशेषवाक्यानां द्वैतपर्यवसानेन नयनमिति ॥

तत्र श्रुत्यर्थानां द्वैतानुगुणं विवरणं द्वैतिनां कृत्यम्, अद्वैतिनां तु स्वसिद्धान्तानुसारं श्रुत्यर्थयोजनाप्रकारविषये बलाबलनिर्णयार्थं प्रयत्यते ॥

परविद्याऽपरविद्याविचारे तु ब्रह्ममीमांसा यद्यपि स्वतन्त्रं शास्त्रम्; तथापि परविद्यात्वं सर्वेषां वेदानामद्वितीयसंविन्मात्रतात्पर्यवशादेव, न तु सर्वेषां पदानां मुख्यवृत्त्या ब्रह्मबोधकत्वेन। अतः कर्मकाण्डानामपि विष्णुपरत्वेन ब्रह्मपरत्वं न विकल्पसहमित्यद्वैततत्त्वसुधा ॥

तदाशयस्तु कर्मकाण्डानां ब्रह्मविद्योपकारककर्मपरत्वमात्रेण निर्वाहे ततः पृथक् महायोगेन ब्रह्मपरत्वस्वीकरणमपि न युक्तमिति। सति चैवं विष्णुसहस्रनामादौ केषाञ्चन पदानां योगेन परमात्मपरत्वव्यवस्थापनं तत्र तत्र "ब्रह्मैव सर्वनामानि बिभर्ति" "वेदाक्षराणि यावन्ति कथितानि द्विजातिभिः। तावन्ति हरिनामानि कीर्तितानि न संशयः ॥" इत्यादिना पदविशेषाणां ब्रह्मपरत्वव्यवस्थापनं न वार्यते ॥ "सर्वे वेदा यत्पदमामनन्ति" "वेदैश्च सर्वैरहमेव वेद्यः" "वेदे रामायणे चैवं पुराणे भारते तथा ॥ आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥" इत्यादौ सर्ववेदप्रतिपाद्यत्वोक्तिः कर्मकाण्डादिलक्षितकर्मोपासनादीनामुपयोग इत्येतावन्मात्रपरा, न त्वर्थान्तरवाचिनां सर्वेषामपि पदानां लौकिकानाम्, वैदिकानां च परमात्मपरत्वमेव मुख्यमिति ॥

परविद्यात्वं हि वेदस्य मुख्यतात्पर्यविषयपरत्वेनेति मण्डनमपि मन्यते। तच्चाद्वितीयवाक्यानामेव, नान्येषाम्। तच्चाद्वितीयं तत्त्वं निर्विशेषं चैतन्यमेव,

न तु विष्णुः। अद्वितीयं हि ब्रह्मतत्त्वम्। निर्विशेषं तु तत्त्वं न कस्यापि शब्दस्य वाच्यम्, किन्तु लक्ष्यमेवेति प्रसिद्धमिदम्। लक्षणयाऽपि तस्य न शास्त्रगम्यत्वमिति व्यवस्थापयन्तो द्वैतिनोऽवाच्यस्य तस्य सर्वशब्द-वाच्यत्वं न वक्तुं शक्नुवन्ति। अद्वितीयं ब्रह्मेति वादस्तु विचारान्तरम्॥

अवाच्यस्याप्रमेयस्य च न लक्ष्यत्वमिति द्वैतिनामाशङ्का तु ब्रह्मसिद्धि-न्यायचन्द्रिका-शतभूषण्यादौ सम्यग् परीक्ष्य न क्षोदक्षमेति व्यवस्थापितम्। न्यायसुधाऽप्यन्विताभिधानसमर्थनावसरे सामान्यतोऽन्वयस्य वाच्यत्वमुर-रीकृत्य तात्पर्यविषयस्याऽन्वयविशेषस्य विनैव वाच्यतां शाब्दबोधे भानमिति व्यवस्थापयतीत्यद्वैततत्त्वसुधायामेव व्यक्तम्। अतो "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यत्र 'वसन्ते' इत्यादिपदानामपि भगवत्सम्बोधनपरतया व्याख्यानं तद्वाक्यार्थान्वये बाधाद् न युक्तमित्येवाद्वैततत्त्वसुधाशयः॥

सर्वथा तु पूज्यश्रीसत्यध्यानतीर्थपादानेव सर्वेषु व्यवहारेष्वनुकुर्वाणः सरलाः, सुलभाः, सर्वदोत्साहमूर्तयः, द्वैताद्वैतविद्याचर्चयैव कालं यापयन्तः, पूज्यपादाः क्षुद्रस्याप्यस्य विधेयस्य निबन्धस्य स्वीयपवित्रदृष्ट्याऽनुगृह्य परीक्षणेन धन्यधन्यमिममन्वग्रहीषुरिति सत्यमयमधमर्णः स्वामिपादानामुदार-हृदयानाम्। साम्प्रतं न्यायसुधामण्डनसमालोचनमिदमत्रैवोपरमयामः॥

इतः परन्तु पूज्यस्वनामधन्य-प्रातःस्मरणीय-श्रीमदद्मारमठाधिपति-गुरुचरणावाप्तसंन्यासदीक्षाः, वेदान्तिकुलोत्तमर्ण-नित्यस्फुरदुत्साहमूर्ति-त्रि-सन्ध्यस्मरणार्ह-श्रीद्वैतसिद्धान्तसंरक्षणैकदीक्ष-श्रीसत्यध्यानतीर्थपूज्यचरणपूज्य-पादसेवासमवाप्तनिखिलतन्त्राः श्रीभण्डारकेर्युपनामधेयानां विद्यामान्यतीर्थानां कृतिमद्वैततत्त्वसुधासमीक्षां किञ्चिदिव परीक्षितुम्, मध्ये च तत्र सिंहावलोकन-दृष्ट्या मण्डनायापि यत्यते॥

तत्र प्रथमं मदीयं कृत्यं श्रीस्वामिपादानां सहृदयं धन्यवादप्रदानम्, यतोऽद्वैततत्त्वसुधाप्रथमभाग एतेषामेव पूज्यपादानामाज्ञाम्, उपदेशम्, सूचनम्,

वचनमात्रमनुग्रहात्मकं वा शिरसि कृत्य यथाशक्ति, यथाबुद्धि च तदनुगृहीत-न्यायसुधापुस्तकमेव शरणी कृत्य प्रकाशितः, येन क्षुद्रस्यास्य बुद्धिविकास उत्तरोत्तरं विचारविनिमयपरम्परावकाशप्राप्त्या स्वयमात्मानं लभते। एते हि पूज्यपादा स्फुरदुत्साहमूर्तय एव द्वैताद्वैतविचारचर्चया कालं यापयन्ति ॥

तत्र प्रायेणाद्वैततत्त्वसुधासमीक्षा-मण्डनयोर्बहुषु विषयेषु सारूप्यमेव दृश्यते। न्यायसुधापरीक्षासमीक्षा हि प्रथमं प्रायेणार्धांशेन तत्राद्वैततत्त्व सुधाभूमिकां परीक्षते, अर्द्धांशेन त्वद्वैततत्त्वसुधाम् ॥

तत्र सा 'सर्वे वेदा यत्पदमामनन्ति' इति वाक्यमवलम्ब्य सर्वेषां पदानामपि कर्मकाण्डान्तर्गतानां ब्रह्मपरत्वमित्यंशं समर्थयति। अयमाशयो मण्डनेनाप्युट्टङ्कितः, इति तत्समालोचनेन गतप्रायम् ॥

अनन्तरं तु शिवरहस्यादीनाम्, किं बहुना ? भगवत्पादानामप्यद्वैते "शास्त्रदृष्ट्या तूपदेशो वामदेववदि"त्यादिसूत्रद्वयं विहाय न तात्पर्यमिति स्वोपजीव्याचार्यसिद्धान्तद्वैततत्त्वपरत्वव्यवस्थापनमेव भगवत्पादानामपीति। उभयमपीदं मण्डनस्यैव प्रकारान्तरेणानुवादः। विशेषस्तु मण्डनेन त्रिसूत्रीं वर्जयित्वेत्युक्तम्, समीक्षया तु सूत्रद्वयमिति। इदं तु मण्डनेन स्वीये एव निबन्धे 'तदनन्यत्वाधिकरणे' 'तरव्यपदेशाधिकरण'-'वाक्यान्वयाधिकरण'-'प्रकृत्यधिकरणा'दिषु, स्वाग्रचिन्तासु, अन्यत्र बहुषु, गीतादीनामप्यद्वैतपर-त्वस्य निरासात् व्याहतमिति तत एव व्याख्यातम् ॥

ओंकारस्य सूत्रावयवत्वं समीक्षा साधयति। मण्डनं तु "स्वरिते नाधिकारः" इति न्यायमवलम्ब्या'थ'पदस्योत्तरत्रानुवृत्तिज्ञापनार्थं पृथग् निर्देशं मनुते ॥

तत्र मङ्गलार्थतया मङ्गलार्थत्वं केवलेनाथशब्देनापि निर्वहति, इति न 'ओ'कारस्यापि वाक्यार्थानन्वयिनस्तत्र निर्देशोऽपेक्ष्यते ॥

"अथातःशब्दपूर्वाणि सूत्राणि निखिलान्यपि।"

इति गरुडपुराणवचनं तु जन्मादिसूत्रेषु, ओमथशब्दपूर्वकत्वस्यानङ्गीकारात्, निखिलानां सूत्राणां तत्पूर्वकत्वस्य बाधाच्च नोपपद्यते—योगसूत्रादिषु तत्पूर्वकत्वं बाधितमिति ॥

सूत्रपदस्य निर्विशेषितसूत्रपरत्वेन जैमिनिसूत्रं पाणिनिसूत्रं पतञ्जलिसूत्रमित्यादीनां न गरुडपुराणविषयत्वमिति वादस्तु ब्रह्मसूत्रपदेन ब्रह्मजिज्ञासासूत्राणामपि ब्रह्मविशेषितानां ग्रहणात्, व्याससूत्रमिति तेषामपि कर्तृपदेन साकमपि व्यवहारस्य सत्त्वाच्चाकिञ्चित्करम्। अतः 'ओम्' पूर्वकत्वनियमो न युक्तः ॥

ओमर्थोऽपि न सविशेषो नारायणः, किन्तु मुख्यं नृसिंहतापन्याद्युपनिषत्प्रतिपाद्यमद्वितीयं ब्रह्मेति व्यवस्थापनात् मण्डनसमालोचनेनैव समालोचितप्रायम्। शास्त्रमुख्यतात्पर्यविषयमद्वितीयं ब्रह्मैव तत्तदुपाध्युपहितावस्थाभेदेन ब्रह्म-रुद्र-विष्ण्वादिशब्दैर्बोध्यतामर्हति। तत्र तत्र नारायणपदमप्यद्वितीयब्रह्माभिप्रायमेव। योगार्थान्वयस्य बाधस्तु विष्णुमात्रपरत्व एव। अत एव णकारोऽपि सांकेतिकं नाममात्रमादाय, अन्यथा तु विष्ण्वादिषु महायोगार्थमादायैव यदि नारायणपदस्य प्रवृत्तिः, तर्हि णत्वबाधो महानेव बाधः। अतः "अथातो ब्रह्मजिज्ञासा" इत्यत्र-'ओ'म्पदस्य सूत्रावयवत्वम्, तस्य विष्णुमात्रवाचकत्वम्, गायत्र्यादीनामपि विष्णुमात्रपरत्वमिति च केवलमाशामोदकम्। अतः 'ओं'कारस्य सूत्रावयवत्वे, तस्य विष्णुमात्रपरत्वे च मण्डनपरीक्षणमेव पर्याप्तम् ॥

ज्ञाननिवर्त्यत्वं मिथ्यात्वमित्यत्रापि मण्डनस्यैवानुकरणमद्वैततत्त्वसुधासमीक्षायाः ॥

अविद्यानिवृत्तिविषये परिणामित्वेऽप्यविद्याया नित्यत्वमिति प्रतिज्ञामात्रं मण्डने, समीक्षा त्वनादिमायायाः परिणामित्वेनानित्यत्वेऽपि, इत्यनित्यत्वं स्वीकृत्य 'येन रूपेण यदनादि, तद्रूपेण तन्नित्यम्', प्रकृते त्वनादे-

र्मायायाः कारणरूपेण निवृत्त्यभावात् नास्माकं नियमभङ्गः। तस्मादनादित्वं निवृत्तिभञ्जकमिति लिखति ॥

तत्र परिणामित्वं नाविद्यायाः कारणरूपं विना रूपान्तरेण। परिणामित्वं हि घटाद्यात्मना रूपान्तरभावेन परिणामिन एवावस्थाविशेषः। अतः परिणामित्वेनानित्यत्वं दुरपह्नवम्; अन्यथा भास्करमते, आर्हतमते च ब्रह्मणः, संकोच-विकासात्मपरिणामशालिनो जीवात्मनश्च नानित्यत्वमापद्येत। अतो नानादित्वं परिणामिनोऽप्यनित्यत्वे प्रतिबन्धकम्। अतोऽविद्या, न निवर्तते, इत्यनुमाने सद्रूपत्वमुपाधिः; तस्यात्मनि साध्यव्यापकत्वात् पक्षे च साधनाव्यापकत्वादित्यद्वैततत्त्वसुधादूषणं दुष्परिहरम् ॥

शुक्तिरूप्यादौ न साध्यमनिवर्तमानत्वम्, किन्तु ब्रह्मण्येव। तत्र च सद्रूपत्वं वर्तते, इति साध्यव्यापकम्। अनादित्वं यत्र यत्र, जीवेशभेदादौ, पक्षे चाऽविद्यायाम्, तत्र सद्रूपत्वाभावेन साधनाव्यापकम्, इत्युपाधिलक्षण-समन्वयः ॥

समीक्षा तु लिखति—प्रदर्शितायामस्यामनुमायां सद्रूपत्वं नोपाधिः; असति शशविषाणादौ, उभयमतरीत्या शुक्तिरजतादौ अद्वैतरीत्याऽज्ञाननिवृत्तौ च सद्रूत्वाभावेन व्यभिचार इति ॥

इदन्त्वनिवर्तमानत्वस्यैव साध्यत्वात् शुक्तिरजतादावसति शश-विषाणादौ वाऽविद्यानिवृत्तौ च व्यभिचारस्योपाधित्वाप्रतिबन्धकत्वात् तत्रानादित्वभावेन साधनाव्यापकत्वस्यानुकूलत्वान्नोपपद्यते। अनेन प्रागभावे, तूलाज्ञाने च तत्त्वज्ञानादिना निवृत्ते व्यभिचारोऽपि। तूलाज्ञानमप्यविद्याया अनाद्यवस्थारूपमनादि प्रागभाववदिति साधनाव्यापकत्वादुपाधित्वमेव गमयति।

समीक्षा तु वदति—तूलाविद्यायां प्रमाणाभावः—इति। इदन्त्वनिर्वचनीय-ख्यातिसमर्थनेनैव निरस्तप्रायम्। अनिर्वचनीयख्यातिरपि न संभवति, असत्ख्यातिरेव युक्तेति वादस्तु स्वीयमेव सिद्धान्तं सिद्धवत्कृत्य, तत्तु

विचारान्तरम् । प्रागभावे व्यभिचारस्तु दुष्परिहरः । अज्ञाननिवृत्तिस्तु मिथ्यात्वसत्यत्वपक्षे यद्यपि न निवर्तत एव' इति तत्र साध्यसत्त्वेऽपि तस्या ब्रह्मरूपत्वेन सद्रूपत्वमपीति साध्यव्यापकत्वम् । तन्मियात्वपक्षे तु न साध्यम्, न वा सद्रूपत्वमिति नोपाधित्वविघातः ॥

ब्रह्मविद्ययाऽविद्याया निवृत्तिरप्रामाण्यज्ञानानास्कन्दित-पटुतमसंस्कार-भ्रम-व्याप्यभुज्यमानादृष्टाभावसहितयेत्यद्वैतसिद्धान्तः । अत्र समीक्षा वदति युष्मदभिमतानामुपदेशकानां——शङ्कराचार्यप्रभृतीनां स्वीयसाक्षात्कारोऽप्रामाण्य-शङ्कास्कन्दित एवेति । इदन्तु स्वोत्प्रेक्षामात्रम् । ब्रह्मसाक्षात्कारित्वेनास्मद-भिमता हि नारायण-पद्मभू-वसिष्ठ-शक्ति-पराशर-व्यास-शुक-गौडपाद-गोवि-न्दभगवत्पादादयः । तत्र नारायणादीनां ब्रह्मसाक्षात्कारित्वं न समीक्षाऽपि वारयितुं शक्नोति । भगवत्पादादीनामप्यवतारपुरुषाणां ब्रह्मसाक्षात्कारित्वे विवादोऽसंभावित एव । सर्वथा तु तत्तत्सिद्धान्त-व्यवस्थामुलंघ्य केवलं सिद्धान्तान्तरनिरसनं शिवद्रोह एव तात्पर्यम् । अतो नात्राधिकं किञ्चिल्लिख्यते । आनन्दतारतम्यविषयेऽद्वैतिनां दृष्ट्या मुक्तौ न तारतम्यम्, द्वैतिनां दृष्ट्या तु सत्यमस्ति तारतम्यम् ॥

मुक्तिस्तु जगद्व्यापारवर्जं सविशेषब्रह्मभावो द्वैतिनां दृष्ट्या, अन्येषां च दृष्ट्या, यत्रानन्दमीमांसा मुख्यं मूलम्, तत्र मानुषा-नन्दादयोऽपि मुक्तानामेव यद्यानन्दः, तर्हि न श्रीभाष्यसंप्रादायानुयायिनः केचनात्र विप्रतिपद्यन्ते, तत्राद्वैतिन इमां तु गौणीमेव मन्यन्ते । न चाद्वैतिनामत्र निर्भरः ॥

अद्वैत्यभिमता तु मुक्तिः परमा निर्विशेषब्रह्मभावाख्या, यत्र न तारतम्यस्य संभावनाऽपि । सा तु मुक्तिः परेषां शशशृङ्गायमाणेति परे मन्यन्ते, इति तारतम्यकथा कथामात्रमेव । सैव तु मुख्या मुक्तिरिति बहुशस्तत्र तत्र निवेदितम् । सुधाया लक्ष्यमानन्दतीर्थीयं किमपि भवतु,

भगवत्पादानां भाष्यं तु तत्र तत्सिद्धान्तानुगुणं न मुक्तौ तारतम्यम्—इति। आनन्दतीर्थभाष्यानुसारेण भगवत्पादीयमतनिरसनमकिञ्चित्करम्। सर्वथा तु सर्वेषु विषयेषु मण्डनपृष्ठसेविनी समीक्षा मण्डनादधिकं न किमपि विशिष्टं लिखति। मण्डनसमालोचितास्तु सर्वेऽपि विषया एव समीक्षासमीक्षिता अस्मिन्नेव निबन्धे ग्रन्थशरीर उपदेशानुपपत्त्यादिप्रकरणेषु, अखण्डार्थवादे, शास्त्रबाधकत्वोपपत्तौ, अन्यत्र च सर्वेषु प्रकरणेषु सविस्तरं परीक्षिताः॥

समीक्षाया विशेषतो निर्भरस्तु--

"असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
अपरस्परसम्भूतं किमन्यत् कामहेतुकम्॥"

इति गीताया अद्वैतसिद्धान्तस्यासुरत्वे। अयं तु भावो गीताया न श्रीमदानन्दतीर्थभाष्यमवलम्ब्य; तत्र तथाऽविवरणात्॥

तत्त्वोद्योतस्तु यद्यपि--इमां गीतां तत्र मतान्तरनिरासप्रसङ्गे निर्दिशति। तत्र टीका यद्यप्यद्वैतमतनिरासपरतया तां योजयति---ते =आसुराः, असत्यत्वादप्रतिष्ठम्=ज्ञाननिवर्त्यम्। तत एवाऽनीश्वरम्। न च--यतो यतो जातम्, असावसावीश्वर इति--वाच्यम्, यतोऽपरस्परसम्भूतम्=एकस्मादेवैकस्य नोत्पत्तिरिति यावत्! सत्यं न चेत्, किमसदेव? अपरस्परसम्भूतम्। न चेत्, किं नित्यम्? स्वतो वा जातम्? आद्यस्योत्तरमन्यत्; सदसद्भ्यामिति शेषः। द्वितीयस्य "कामहेतुकम्; काम इति तत्कारणमविद्योपलक्ष्यते"—इति॥

नेयं टीकाऽद्वैतमताऽऽसुरत्वनिरूपणपरा भवितुमर्हति। न ह्यद्वैतिनो जगदप्रतिष्ठमसत्यं च मन्यन्ते; ब्रह्माऽधिष्ठानकत्वाज्जगतस्तन्मते। अतोऽसत्यमित्यसत्परम्, न मिथ्यापरम्; अन्यथा किमन्यदिति पुनरुक्तं स्यात्, मिथ्यात्वाप्रतिष्ठितत्वयोर्व्याघातश्च। अत एवाऽप्रतिष्ठितत्वं न ज्ञानबाध्यत्वम्; ब्रह्माधिष्ठानकत्वस्य ज्ञाननिवर्त्यत्व-

प्रयोजकत्वेन निरधिष्ठानस्य शशशृङ्गादेरिव ज्ञानबाध्यत्वासम्भवात्, असत्य-पदस्य मिथ्यार्थत्वे "असत्यम्" किं ? "अन्यत्" अप्रतिष्ठम्, "काम-हेतुकम्" इति च पुनरुक्तम्। अनीश्वरमिति त्वद्वैतमते मायोपहि-तस्यैवेश्वरत्वादनीश्वरत्वस्य बाधान्नोपपन्नम्। तर्हि कुत इति ? कामहेतु-कमिति निरीश्वरसौगतमताभिप्रायमेव। कामपदस्याविद्यापरत्वं तु न युक्तम्। अन्यत्वञ्चात्र सद्विलक्षणमात्रपरमित्येवमाशयस्तु सौगतमतेऽपि युज्यते, न तु मिथ्यात्वपरत्व एव। अत एव श्रीभाष्यतात्पर्यचन्द्रिका सौगतानामेवाऽऽसुरत्वनिरूपणपरोऽयं सन्दर्भ इति—व्याचष्टे ॥

किं बहुना ? पूज्यश्रीवेदेशतीर्थोऽपि "ननु--अत्र जगदसत्यत्ववादिनां बौद्धादीनामेवाऽऽसुरत्वाद्युच्यते, नाऽस्माकम्; अस्माभिर्जगत्सत्यत्वाङ्गीकारा-दिति–चेत्, न; बौद्धानां सांवृतसत्यत्वाङ्गीकारस्य त्वन्मतेऽपि साम्यादिति व्याचक्षाणो बौद्धाद्वैतसिद्धान्तयोः साम्यं सिद्धवत्कृत्य बौद्धासुरत्वमद्वैताऽऽसु-रत्वञ्चैकमिति कृत्वैवाद्वैतासुरत्वमत्र विवेचयति ॥

परं तु सांवृतसत्यत्वमद्वैताभिमतसत्यत्वं च नैकम्; प्रथमस्य अप्रतिष्ठितत्वात्, द्वितीयस्य प्रतिष्ठितत्वाच्च। न च बौद्धाद्वैतसिद्धान्तयोः प्रमाणतः, विषयतः, सम्प्रदायतो वा साम्यलेशोऽपीति भामत्या व्यवस्थापितं बौद्धमतनिरासप्रसङ्गे। समीक्षा तु तत्प्रकरणस्थां भामतीमपि बौद्धमतसमर्थन-परां मत्वा विपरीतं वदति। आस्तामियं स्वोत्प्रेक्षिता कथा, या कथामात्रम् ॥

न च बौद्धा अद्वैतमतं स्वीयमिति मन्यन्ते, न वाऽद्वैतिनो बौद्धमतं स्वीयमिति। रथ्यापुरुषस्तु कश्चन कलहप्रियो रथ्यायां किमपि वदतु, यत्तु श्रवणायापि न योग्यम् ॥

"असदिति चेन्न प्रतिषेधमात्रत्वात्" इति सूत्रे नाऽत्र शून्यवादनिराक्रिया; तस्य चतुष्कोटिविनिर्मुक्तत्वात्, असतश्च तद्वैपरीत्यात्। प्रमाणं तु शून्य-

वादिनां तदीया आगमाः, वैदिकत्वात्तु द्वैतसिद्धान्तस्य नात्र तस्य विचारस्य प्रसक्तिरपि; स्वस्य वैदिकत्वादेव बौद्धवैलक्षण्यं टीका स्वयमुपपादयति। स एव न्यायो प्रमाणवैलक्षण्येनैकेनाऽद्वैतसिद्धान्तस्यापि, इति बौद्धसिद्धान्तस्येवाऽऽसुरत्वं न विकल्पसहम् ॥

प्रधानतमो विचारो मण्डनस्य त्ववाच्यस्य, निर्विशेषस्य न लक्ष्यत्वमिति। इयन्तु शङ्का "ईक्षतेर्नाशब्द"मिति सूत्रीयभाष्यादिमूलेति द्वैतिनां मनोरथमात्रम्। सा हि ब्रह्मसिद्धि-पदार्थतत्त्वनिर्णय-न्यायरत्नदीपावलीभिः श्रीमदानन्दतीर्थात् प्राग् बहोः कालादुट्टङ्किता, निरस्ता च। श्रीमदानन्दतीर्थादयस्तु तदीयामशङ्कामात्रमत्रानुवदन्ति, न तु तदीयमुत्तरमंशतोऽपि स्पृशन्ति। व्यक्तश्चैतत् सर्वं न्यायचन्द्रिकायाम्, शतभूषण्यादौ च। अयमपि प्रबन्धोऽखण्डार्थवादे बहुतरमत्र निश्चिनोति, इति तत एवाधिकमवगन्तव्यम् ॥

'परेऽव्यये सर्व एकीभवन्ति' इत्यत्र च्विप्रत्ययार्थोऽप्यद्वैतिनां स्वरसः; अद्वैताभिमतस्य जीवब्रह्मैक्यस्यौपाधिकभेदनिवृत्तिरूपत्वात्, भेदनिवृत्तेश्चाखण्डाकारनिवृत्तिप्रयुक्ताया अखण्डाकारवृत्तेः पूर्वमभूतत्वात् तदनन्तरमेव भावाद् न तत्रानुपपन्नं किमपि। मण्डनं हि बहुतरं पूज्यश्रीसत्यध्यानतीर्थस्वामिपादानुगृहीतं सविस्तरमुपपाद्य सत्यं सर्वाननुगृह्णाति ॥

"परेऽव्यये सर्व एकीभवन्ति" इत्यत्र च्विप्रत्ययोपपत्तिविषये मण्डनन्तु स्वरूपैक्यमित्यस्य जीवेश्वरस्वरूपयोरैक्यमित्येवाक्षरलभ्योऽर्थः; प्रतियोग्यनुयोगिसापेक्षत्वनियमादैक्यस्य। तथा च संविन्मात्रत्वमित्यादेरयमेवार्थो वाच्यः, इति कथमत्र द्वयोरैक्यमिति वक्तुं युक्तमिति—लिखति ॥

इदन्त्वनुक्तोपालम्भनम्; घटाकाश-मठाकाशस्थल इवोपाधिनिवृत्तिप्रयुक्तभेदनिवृत्तिमात्रस्यैवाऽत्रौपाधिभेदनिवृत्तेरैक्यपदार्थत्वेनोपहितस्वरूपैक्यस्य प्रतियोग्यनुयोगिसापेक्षत्वाभावाद्व्यक्तिद्वयैक्यस्याविवक्षणस्य तत्त्वसुधायामेव

प्रपञ्चितत्वात् । अत एव भेदनिवृत्तित्वोपलक्षितस्वरूपत्वेन भेदनिवृत्तिज्ञाप्यभेदवत्वम् ; घटाकाश-मठाकाशस्थलेऽभावात् ॥

भेदनिवृत्तिरपि भेदध्वंसरूपोऽप्यविद्याप्रयुक्तत्वाद्भेद इव मिथ्यैव । न चाऽत्र भेदसत्यत्वापातः ; निषेध्यतावच्छेदकैक्ये प्रतियोगिसत्यत्वाभावात् । अधिकं तु मिथ्यात्वमिथ्यात्वप्रकरणेऽद्वैतसिद्ध्यादौ, शतभूषण्यादौ, सिद्धान्तलेशसंग्रहे च ॥

एतेन—भेदात्यन्ताभावपक्षोऽपि—व्याख्यातः । न चात्यन्ताभावोऽपि त्रैकालिकात्यन्ताभावो बाधात्पूर्वम् ; तदा तत्र प्रतियोग्युपहितस्य तस्य प्रतियोगिन इव त्रैकालिकत्वाभावात् ; इति भेदनिवृत्तिरिव भेदात्यन्ताभावोऽप्यभूत एव पश्चाद्भावो, इति न च्विप्रत्ययानुपपत्तिः ॥

वस्तुतस्तु —"कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ती"ति वाक्यं तदनन्यत्वाधिकरणन्यायेन ब्रह्मव्यतिरिक्तसर्वाभावरूपमद्वितीयत्वमेव प्रतिपादयति । अतः पूर्वं सद्वितीयम्, पश्चाददद्वितीयमित्यध्यारोपापवादनयेन, इति सर्वमुपपन्नम् । सविस्तरं सर्वस्य समालोचनं बहुदिनसाध्यम्, तत्प्रकाशनञ्च बहुव्ययसाध्यमिति साम्प्रतमेतावन्मात्रेण भूमिकामात्रदृष्ट्या किञ्चिदिव निवेदनम् ॥

मा किं वत्सरमारभ्य दुस्सहव्याधिपीडितेन साम्प्रतमप्यस्वस्थेनापि प्रथमप्रतिज्ञातपरमार्थभूषणसमालोचनस्यैव प्रथमकर्तव्यतामुपलक्ष्य निबन्धोऽयं निबध्य प्रकाश्यते । तथापि मध्ये मण्डनादयोऽपि निबन्धा अवश्यं समालोचनमर्हन्तः प्रादुरभूवन्निति केवलं स्थालीपुलाकन्यायेन तेषामपि परीक्षणमत्रोपक्षिप्यते । सत्यवसरान्तरे सविस्तरं समालोचनमन्येषामपि तेषामवतारयिष्यते ॥

तत्र "अथातो ब्रह्मजिज्ञासेत्य"त्र कर्मकाण्डानामपि ब्रह्मपरत्वाश्रयणं संकर्षकाण्डान्त इव "स विष्णुराह हि" इति ब्रह्मपरत्वव्यवस्थापनविरुद्धम् ,

पुनरपि "अथातो ब्रह्मजिज्ञासे"ति प्रतिज्ञावैयर्थ्यं च । तत्र संकर्षकाण्डानन्तरं प्रवृत्तायां ब्रह्मजिज्ञासायां संकर्षकाण्डव्याख्येयत्वं तु बाधितम् ॥

## शारीरकमीमांसेति समाख्या ।

"शारीरौ तावुभौ ज्ञेयौ जीवश्चेश्वर एव च ॥"

इति शारीरपदमात्रस्य जीवेश्वरपरमात्रस्य जीवेश्वरपरत्वेऽपि शारीरकपदस्याज्ञाते 'कन्' प्रत्ययान्तस्य सन्दिग्धजीवेश्वरपरत्वाज्जीवत्वेश्वरत्वोपलक्षितसंविन्मात्रपरत्वं युक्तम् ॥

तत्र ब्रह्मपदस्य "द्विरूपं हि ब्रह्मावगम्यते" इति भाष्यात् सविशेषपरत्वम्, निर्विशेषपरत्वञ्च । तत्र निर्विशेषमौपनिषदं न शशविषाणकल्पमिति व्यवस्थापितम् । अतः सकलगुणपूर्णमपि ब्रह्म सकलगुणहीनमपि । विष्णुपुराणं न विष्णुमात्रपरम्, किन्तु प्राधान्येन निर्विशेषपरमपि । व्यक्तञ्चैतदेतन्निबन्धशरीरे, पीठिकायाञ्च । अत एव नात्र शैव-वैष्णवादिप्राधान्यवादः ॥

निर्विशेषस्यापि वृत्तिव्याप्यत्वेनैवोपनिषदत्वं ब्रह्मसिद्ध्यादौ--ब्रह्म संवेद्यम्, असंवेद्यं चेति व्यवस्थापितम्, इति न जिज्ञासाऽनुपपत्तिः । अतोऽद्वैतमते विशिष्टरूपेण जीवस्येश्वरस्य च न जिज्ञास्यत्वम्, इति न संविन्मात्रत्वेन तद् न विरुद्धम् । अत एव जीव-ब्रह्मणोरैक्यं मनसि निधाय, जीवस्य विशिष्टस्य ज्ञातत्वेनाजिज्ञास्यत्वपूर्वपक्षः । संविन्मात्रस्य मुख्यस्यैव जीवस्याऽज्ञातस्य वेदान्तप्रमाणं विनाऽज्ञातत्वात्, जिज्ञासासंभव इति सिद्धान्तः ॥

अत एव ब्रह्मपदमात्रं जिज्ञासा सौत्रे, यदुपहितानुपहितजीवेश्वरपरं पूर्वोत्तरयोः पक्षयोः । तत्र सर्वदोषहीनत्वोक्तिर्हि ब्रह्मणः, विशेषाणां सर्वेषामाविद्यकत्वेन दोषत्वाद् निर्विशेषत्व एव पर्यवस्यति । न च सर्वगुणपूर्णत्वं सर्वदोषहीनत्वञ्चैकम् । अन्यथा—

सर्वदोषविहीनत्वं गुणैः सर्वैर्विहीनता"

इत्युक्तिवैयर्थ्यात् । न चात्र व्याख्यान-व्याख्येयभावः ; वैयर्थ्यात् । तत्र दोषहीनत्वम् , निर्विशेषत्वं वाऽध्यारोपापवादनयेन ; अन्यथाऽप्रसक्तप्रतिषेधापत्तिः । अत एव 'सदेवेदमिति' 'एकमेवाद्वितीयमिति च' सप्रपञ्चत्वाप्रपञ्चत्वोभयबोधः । न च जीवे प्रसक्तस्य ब्रह्मणि निषेधोऽपि प्रसक्तप्रतिषेधः ; अन्यथाऽप्रसक्तप्रतिषेधः कथामात्रं स्यात् , "नान्तरिक्षेऽग्निश्चेतव्यः" इत्यत्रापि नाप्रसक्तप्रतिषेधापत्तिः स्यात् ; अन्यथा बन्धप्रयोजकत्वं तु जीवेषु गुणानामपीति सगुणत्वं ब्रह्मणोऽपि बन्धाय स्यात् वस्तुतः सगुणत्वे । आरोपे तु गुणा न बन्धकाः ब्रह्मणि । तदुक्तम्—"तत्रैवं सति तत्कृतेन गुणेन, दोषेण वाऽणुमात्रेणापि न स सम्बध्यते" इति ॥

तत्र ज्ञानानन्दादयो ब्रह्मणः स्वरूपमात्रम् , न तु गुणाः, इति न तैरपि ब्रह्मणोऽधिष्ठानस्य बन्धापत्तिः । तत्रोपाधेः प्रतिबिम्बपक्षपातित्वादाविद्यकानां गुणानां दोषाणां जीव एव प्रतिबिम्बे बन्धकत्वम् , नेश्वरे, इत्याध्यारोपापवादन्यायेनाऽप्यविरुद्धम् । अत एव प्रत्यक्षानवगत एव वेदान्तवेद्यः ॥

"प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम् ।"

इति न्यायेन मुक्तावस्थामादायैवान्तःकरणादिसम्बन्धो बाध्यते, न तु व्यवहारदशामाश्रित्य । तदप्युपाधिमात्रनिवृत्त्या तत्प्रयुक्तोपहितभेदनिवृत्तिमात्रेण बाधस्य दुरपह्नवः ॥

एतेन—तदनुप्रविश्येति प्रवेशपदार्थः, ओतत्वञ्च—व्याख्यातम् ; अधिष्ठानाधिष्ठेयभावप्रयुक्तस्यानुवर्तमानत्वस्यैवानुप्रवेशपदार्थत्वात् । अत एव 'स खल्विदं ब्रह्मेति' बाधायां सामानाधिकरण्यम् । न च ब्रह्मणो निमित्तकारणत्वमात्रेऽनुवर्तमानत्वम् , सद्रूपेणानुवेधो वा संभवति । कालादीनां निमित्तकारणानां तत्कार्येषु कार्येष्विव सम्बन्धमात्रम् । अत एव ब्रह्मण आप्यत्वमप्राप्तत्वभ्रमनिवृत्तिमात्रम् । अतोऽत्र जिज्ञासासूत्रे ब्रह्मपदं

संवित्स्वरूपपरम्, यदेव ज्ञायमानमात्रं पुरुषार्थः, न तु पुरुषतन्त्रमपि साक्षात्, परम्परया वा ॥

एतेन—अतःशब्दोऽपि—व्याख्यातः ; स्पष्टे प्रयोजने तत्कल्पनायाः बाधितत्वात् । तत्र ब्रह्मजिज्ञासाविषयो ब्रह्म, नारायणो वा भवतु, अन्यो वा यदि सविशेषः, तर्हि तज्ज्ञानफलं तु जगद्व्यापारवर्जं तत्क्रतुन्यायेन तत्तज्ज्ञेयभाव एव । यदि तु ज्ञानविषयो निर्विशेषमेव, तर्ह्यखण्डाकारवृत्तिरेव फलमपि ॥

अत एव 'अथातो ब्रह्मजिज्ञासे'ति सूत्रे न विष्णुपदेन ब्रह्मणो निर्देशः, न वा नारायणपदेन । अत एव संकर्षकाण्डान्ते हरिपदेनैव ब्रह्मणो निर्देशः, न तु नारायणपदेन । अत एव—

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥"

इति ब्रह्मशब्दवेद्यत्वमद्वितीयसंविन्मात्रस्यैव, न तु विष्णोः, नारायणस्य वा सविशेषस्य ॥

"स एव ब्रह्मशब्दार्थो नारायणपदोदितः ॥"

इति तत्रोङ्कारव्याख्यामिषेण सत्यं नारायणस्य सविशेषस्यापि ब्रह्मपद-बोध्यत्वमद्वैतिनोऽपि "द्विरूपं हि ब्रह्मावगम्यते" इति भाष्यात् स्वीकुर्वन्ति ॥

अत एव "अयमात्मा ब्रह्म" "आत्मा वा इदमग्र आसीत्" "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य" "स आत्मा तत्त्वमसि" इत्यादौ "ब्रह्मविदाप्नोती"ति प्रस्तुतस्य ब्रह्मण आत्मपदेन परामर्शः । यथा चाद्वैतमतेऽपि ब्रह्मणो लक्ष्यत्वम्, तत एवानुभाव्यत्वं श्रौतवाक्याधीनम्, तथा पूर्वं निरूपितम् । ब्रह्मपदेन जिज्ञास्यं प्रस्तुत्य तस्यैवाऽऽत्मपदेन परामृश्य जगत्कारणत्वाद्युपन्यासोऽपि जीव-ब्रह्मैक्य एव

ब्रह्मवल्ल्याः, भृगुवल्याश्च तात्पर्यं गमयति । अतो ब्रह्मपदेन यत्र कुत्रापि नारायणपरिग्रहेऽपि सद्विद्यादौ जीव-ब्रह्माभेदस्यैव प्रस्तावान्निर्विशेषं ब्रह्मैव ब्रह्मजिज्ञासाविषयः, सविशेषं तु ब्रह्म काश्चन उपनिषदो नारायणं प्रतिपाद्-यन्ति, काश्चन तु सदाशिवमन्यद्वा स्वरूपं परमात्मनः सविशेषस्य, यत्तूपास्यम्, न तु ज्ञेयम् ॥

अत एव पुरुषसूक्तप्रतिपाद्योऽपि सदाशिव एव, अथवाऽद्वितीयं ब्रह्मेति शिवार्कमणिदीपिकादौ व्यक्तम् । अतः सर्ववेदप्रतिपाद्यत्वमपि न नारायण-पदप्रतिपाद्यस्य, किन्तु "स ब्रह्म स शिवः स हरिरि"त्यादिना शिव-विष्ण्वादि-रूपस्य मायोपहितस्य तुरीयस्यैव सविशेषस्य ब्रह्मणः । किं बहुना ? "वृष्णीनां वासुदेवोऽस्मि" "रामः शस्त्रभृतामहम्" इति वासुदेवस्यापि ब्रह्मविभूतित्वप्रतिपादनम् । अधिकं शिवार्कमणिदीपिकायाम् ॥

ब्रह्ममीमांसायां साङ्ख्यमतनिराकरणम्, न केवलमद्वैतिनः, किन्तु द्वैतिव्यतिरिक्ताः सर्वेऽपि कुर्वते । तत्तु प्रधानस्य ब्रह्माधिष्ठितस्य, ब्रह्मणो निमित्तकारणत्वमात्रं वाऽभिप्रेत्य । तद्धि पाशुपताधिकरणस्य कृत्यम् । "रचना-नुपपत्तेश्च नानुमानमि"त्यादौ स्वातन्त्र्येण प्रधानस्योपादानत्वं निराकृत्य ब्रह्मणो निमित्तकारणत्वमात्रेण, अस्वातन्त्र्येण प्रधानोपादानत्वसमर्थनं पाशुपताधिकरणेनैव गतार्थत्वाद्वितथम् ॥

अतश्शब्दनिर्दिष्टं प्रयोजनं तु ज्ञानेनाज्ञाननिवृत्त्या ब्रह्मणोऽप्राप्तत्वभ्रम-निवृत्तिमात्रम्, न तु भक्त्या तत्प्राप्तिः । अपूर्वविधौ, नियमविधौ वा "दृष्टे संभवति नादृष्टकल्पने"ति न्यायेन ज्ञानस्य दृष्टाज्ञाननिवृत्तिरेव फलमिति स्वी-कर्तव्यम्, न तु भक्त्या मोक्षप्राप्तिः । तत्र ज्ञानमखण्डाकारवृत्तित्वेन साधनम्, अज्ञाननिवृत्तित्वरूपेण तु फलमिति न व्याहतिः । "यस्य प्रसादात् परमात्मरूपात् अस्मात् संसारान्मुच्यते नापरेणे"ति श्रुत्यन्तरं तु सगुणाप्तेः सगुणभक्त्यधीनत्वं

ज्ञापयति, न तु निर्विशेषज्ञानस्य भक्तेरिव प्रसादद्वारा मोक्षसाधनत्वम्, यदि तन्निबन्धनसाक्षात्कारद्वारा, तर्हि न विप्रतिपत्तिः ॥

'भक्त्या मामभिजानाति' यावान् यश्चास्मि तत्त्वतः ।"
"मयि चानन्ययोगेन भक्तिरव्यभिचारिणी।"
"भक्त्या त्वनन्यया लभ्यः अहमेवंविधोऽर्जुन ॥
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुञ्च परन्तप' ॥"

इति गीता स्पष्टं भक्तेरात्मतत्त्वसाक्षात्कारद्वारेण मोक्षसाधनत्वं प्रतिपादयति । अतोऽथशब्दोक्तार्थहेतुत्वसमर्थनार्थं खल्वतः शब्दः ॥

तच्च साधनचतुष्टयसम्पत्त्यधीनं तत्त्वसाक्षात्कारादीनामद्वैतमते युज्यते, न द्वैतसिद्धान्ते, यत्र हठादप्रस्तुतभक्तेर्मोक्षसाधनत्वं मन्यते ॥

अविद्याविषये वक्तव्यं सर्वं पीठिकायां प्रकृतनिबन्धशरीरे, अत्रापि तत्र तत्र सर्वं परीक्षितम् । अविद्या तु श्रुतौ तस्या ज्ञाननिवर्त्यत्वाम्नानात् परिणामित्वाच्चानादित्वेऽपि निवर्तते । अनादित्वहेतुकाविद्यानिवृत्तिसाधनं तु पूर्वमेव निरस्तम् । अन्यत्तु सर्वं पूर्वमेव परीक्षितमित्यलमतिविस्तरेण ॥

तत्राज्ञाननिवृत्तिः साक्षात् तत्त्वसाक्षात्कारेण, न ज्ञानमात्रेणान्येन वा गङ्गास्नानादिना वा । भस्मसाद्भावोऽप्यग्निना कर्मणा संस्कारात्मता। तस्यास्तु तत्त्वज्ञानेन भस्मसाद्भावस्तु कर्मणां पुनरपि सजातीयकर्मान्तरानुदयेना-ज्ञानात्मना ब्रह्मात्मतायामिव प्रवाहतोऽनादीनां प्रवाहान्तराहेतुत्वमात्रम्, प्रारब्धकर्मणामिव निरभिनिवेशप्रवृत्तिप्रयोजकत्वं वा जीवन्मुक्तादिष्विव ॥

साधनतारतम्यात् फलतारतम्यं तु साध्येषु फलेषु । मुक्तिस्तु बन्धनिवृत्त्युपलक्षितस्वरूपत्वात् फलमिव, न तु फलम्, इति न तारतम्यमर्हति । भोजनादिसाधनतारतम्येऽपि फले तृप्तौ न तारतम्यं लेशतोऽपि ॥

प्रारब्धकर्मणः प्रतिबन्धकत्वं स्वत एव ; निवृत्ताविद्येषु जीवन्मुक्तेष्वपि चाविद्याया बाधेनाविद्यान्तरद्वारा न बन्धकत्वम् । शुक्तिरूप्यादिस्थले तूपादानेन

साकं शुक्ति-रजतादीनां बाधात् व्यावहारिकाणामिव कारणताया अप्यभावाद् भस्मसाद्भावः ॥

"ज्ञानाग्निरि"त्यग्निपदस्य, भस्मसात्पदस्य च प्रयोगो दग्धपटन्यायेन कर्मणामविद्यासंस्कारात्मनाऽनुवर्तमानानामपि बन्धकत्वाभावाभिप्रायः । न तु सर्वेषां ब्रह्मण्यध्यस्तानामपि, सदात्मनैकरूप्येऽपि तत्तत्कार्यात्मनाऽप्यैक्यम् , इति नाज्ञानवाद इव सद्रूपेणेव तत्तद्रूपेणाप्यैक्यमिति विकल्पाप्रामाण्यवादचर्चायामत्रैव निबन्धे विशदीकृतम् ॥

आनन्दपुमर्थतावादो नाम स्वरूपतोऽज्ञाननिवृत्तिमात्रम्, न तु तस्य पुरुषेणेष्यमाणत्वम् । नैयायिकमताद्वैलक्षण्यं तु तस्य संविन्मात्रतया, न तु निवृत्तित्वमात्रेण ॥

तत्राध्यासभाष्ये ब्रह्मशब्दसूचितस्यार्थिकस्य तत्त्वस्य संग्रहमात्रम्, येन वस्तुनिर्देशात्मकं मङ्गलमप्याचरितं भवति, मङ्गलमिदमिति व्याख्यानं विना न स्वरूपतो मङ्गलममङ्गलम् ; वस्तुनिर्देशमात्रस्य मङ्गलत्वात् ॥

व्याससूत्राणि क्वचिद् व्यावहारिकभेदपराण्यपि, अभेदपराण्यपि । तात्पर्यं तु तत्राभेद एव, न भेद इति व्यवस्था । तथा च सूत्रम्—"अंशो नानाव्यपदेशादन्यथाऽपि दाशकितवादित्वमधीयत एके" इति । उक्तञ्च—

"अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् ।"

इति । तत्र तात्पर्यं तु भेदस्य प्रमाणान्तरसिद्धत्वात्, अभेदस्यैवाप्राप्तत्वादभेद एव ॥

तत्र 'तरति शोकमात्मवित्' इत्यविद्या-तत्प्रयुक्तभेदादीनामपि बाधापरपर्यायं निवृत्तिं गमयति । यदि कारणात्मनाऽपि नाशः तदा शुक्तिरूप्यादौ, स्वोपादानाज्ञानेन सह निवृत्तौ । तत्र बाधप्रत्यक्षं तु 'नेदं रजतमि'त्यादिप्रत्यक्षेणानूद्यते । एवञ्चाज्ञानमिथ्यात्वम् , तत एव तत्प्रयुक्तमिथ्यात्वं चोप-

पादितं तत्र तत्र । बन्धमिथ्यात्वानङ्गीकारवादस्तु श्रुतिविरुद्धार्थवादः । अत एव श्रौतार्थे विप्रतिपन्नं प्रत्येव बन्धो मिथ्या, इत्यनुमानप्रयोगः श्रुत्यर्थवर्णनमात्रम् । तत्र मिथ्यात्वं बहुविधं सिद्ध्यादौ विवेचितम् । तत्रैकतरस्य हेतुत्वम्, अन्यतरस्य साधनत्वमिति न हेतु-साध्ययोरैक्यम् । फलतस्तु सर्वमेकरूपमेव ॥

ज्ञाननिवर्त्यत्वं तु विरोधिज्ञाननिवर्त्यत्वरूपमेव मिथ्यात्वप्रयोजकम्, न तु संविन्मात्रज्ञानमज्ञाननिवर्तकम् । अतस्तद्वारणमेकं विरोधिपदस्य कृत्यम् । विरोधित्वं स्वविरोध्यज्ञानविषयविषयकत्वम् ॥

अधिष्ठानज्ञानमज्ञाननिवर्तकम्, न तु ज्ञानमात्रम् । अतो नाखण्डाकारवृत्तिसाम्यं गरुडज्ञानादेः ॥

अनेन—सेतुदर्शनमपि—व्याख्यातम्; सेतोः पापानधिष्ठानत्वात्, इति न तेन निवृत्त्या मिथ्यात्वाभावेऽपि क्षतिः ॥

तत्र सेतुदर्शनेन वस्तुतो न साक्षात्कारमात्रविवक्षा, किन्तु सेतुदर्शनयोग्यस्थलपर्यन्तसंनिधिरेवेति विषयान्तरम् ॥

तत्र मुक्तिरज्ञाननिवृत्तित्वोपलक्षितब्रह्मभाव इत्यद्वैतवादः । सुधा तु वदति नैवं श्रुति-सूत्रे वदत इति । तत्र "ब्रह्मविद् ब्रह्मैव भवति" "तरति शोकमात्मवित्" "भिद्यते हृदयग्रन्थिः" इत्यादिवाक्यानामेकवाक्यतया बन्धनिवृत्तिं ब्रह्मभावं ज्ञानिनो बोधयन्ति, नान्यथा तदुपपद्यत इत्यद्वैताशयः । न च सुधानभ्युपगममात्रं तद्विरोद्धुमीष्टे ॥

बन्धनिवृत्तिरेव मोक्ष इति सर्वबन्धमूलाविद्यानिवृत्तिमपेक्ष्य । तस्यास्तु स्वरूपतो निवृत्तिमात्रं बाधः; तस्याः कारणाभावेन कारणात्मताया अभावात् । न च तावता निवृत्तिशब्देन कारणात्मता विवक्ष्यते, इति स्वज्ञानप्रयुक्ताभिप्रायमिति न विरोधः; प्रत्यक्षस्य वर्तमानार्थमात्रा-

वगाहित्वात् 'सन् घटः' इत्यादिप्रत्यक्षं सत्त्वमात्रं गृह्णाति, न तु सत्त्वाभावम्। "नेह नानाऽस्ती"ति शाब्दज्ञानं तु घटादीनां ब्रह्मणि सत्त्वाभावं गृह्णाति, इत्युभयोरपि विरोधपरिहारार्थं "सत्यं ज्ञानमि"ति ब्रह्मणः सत्यत्वमिति विरोधपरिहारार्थं सत्तादात्म्यं घटादीनाम्, न तु सत्त्वम्, ब्रह्ममात्रस्य तु सत्त्वमिति चावगम्यत इति व्यवस्था। तत्र तादात्म्यप्रतियोगिनोऽबाध्यत्वरूपं सत्त्वम्, अनुयोगिनस्तु सत्तासम्बन्धमात्रम्, न तु सत्त्वम्।

अत्र परस्पराध्यासे धर्मिणः प्रकारे संसर्गमात्राध्यासः; तस्य सत्त्वप्रतिपादनात्, तदितरस्य सत्त्वाभावप्रतिपादनात्। "अतोऽन्यदार्तमि"ति विरोधपरिहारः। 'सन् घटः' 'सदेवेदम्' 'सर्वं खल्विदं ब्रह्मे'त्यादौ बाधायां सामानाधिकरण्यम्, न तु नीलो घट इतिवत् विशेषण-विशेष्यभावे; तत्राधिष्ठानाधिष्ठेयभावाभावात्, इति सत्प्रतीतिविषयत्वम्, सत्त्वाभावश्च न व्याहतम्। सत्तादात्म्यन्तु भेदसामानाधिकरण्योपलक्षिताभेद एव, न भेदात्यन्ताभावः; सदात्मनाऽभेदस्य, घटात्मना भेदस्य च प्रतीतेः॥

"सन् घटः" इति प्रतीतिदशायामविद्यायाः सत्प्रतीतिमात्रेणासत्त्वापादकाज्ञाननाशेऽप्यानन्दात्माऽधिष्ठानस्याभानादनाद्यविद्याकल्पितसदादिभेदस्य प्रतीत्यविरोधः, इति "सन् घटः" इत्यत्र न भेदाभेदघटिततादात्म्यभानं विरुद्धम्, इति 'घटोऽस्ती'त्यादौ 'सन् घटोऽस्ती'त्येव प्रतीत्याऽस्तीत्यनेन "आसीदि" त्यादावपि कालसम्बन्धस्यापि भानं न दुष्यति; अन्यथा सत्त्वस्याबाध्यत्वरूपत्वे "घट आसीत्" "भविष्यती"त्यादिप्रतीत्ययोगः, न वा "सन् घटोऽस्ति" "नास्ती"ति प्रतीतिव्याघातश्चापद्यत। शुक्तिरूप्ये 'सत्' इति प्रतीतिस्त्वसत्ख्यातिपक्षे व्याहतैव, इति घटादाविव शुक्तिरूप्यादावप्यसत्ख्यातिपक्षे सत्प्रतीतिविरोधो वज्रलेपायते॥

अतो मिथ्यार्थानां प्रतीतिविषये वस्तुगत्या बाध्यस्यैव सत्तादात्म्यमात्रेण "नासदासीदि"ति श्रुत्या सदसद्विलक्षणत्वेऽपि पूर्वोक्तरीत्या सत्प्रती-

तिर्न विरुद्धा; मिथ्यात्वस्थलेऽपि कालसम्बन्धस्याप्यविरोधात् न "सन् घटः" इति प्रत्यक्षो नोपपद्यते ॥

अत्र कालसम्बन्धो देशसम्बन्धस्याप्युपलक्षणम् । अत एव मिथ्यात्वं न तुच्छत्वमिति प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वस्य न तुच्छत्वे-नार्थान्तरमिति लघुचन्द्रिका । सति चैवं परमते भ्रमविषयस्यास्ति-नास्तित्त्वयोः प्रतीतिरपि विरुद्धेति फलति ॥

तत्रास्तित्वमसतः कालसम्बन्धरूपमपि न भवितुमर्हति, न वा बाध्यत्वम्, इत्यसदस्तीति च व्याहतम् ॥

अतः मिथ्यार्थस्यासद्विलक्षणस्य यावद्बाधं कालसम्बन्धः, अनन्तरं तु कालस्यापि बाधात् नास्तित्वमपि, इति बन्धस्य भाविबाधदृष्ट्या वस्तुगतया मिथ्यात्वेऽपि यावत्तत्प्रतीति —अस्तित्वप्रतीतिमभिप्रेत्यैव मिथ्यात्वसाधनमद्वैतिनाम्—इति ॥

"इदानीमस्ती"तिवत् "इदानीं नास्ती"त्यप्यतीततादशायां कालसम्बन्धा-भावमपेक्ष्य "नास्ती"ति प्रतीतिरिति । 'नास्ती'ति प्रतीतिस्तु भूतभाविकाल-सम्बन्धाभावपरा, तद्देशसम्बन्धाभावपरा वा मन्तव्या ॥

सर्वथा त्वखण्डाकारसाक्षात्कारस्यैवाऽविद्या-तत्प्रयुक्तनिवृत्तिरूपत्वात् तदानीं देश-कालसम्बन्धाभावोऽविशिष्टः ॥

असत्यात् सत्योत्पत्तिवादस्तु असत्त्वस्यैवार्थक्रियाकारित्वपरिपन्थित्वात् मिथ्यार्थानां चासत्त्वाभावाद् न विरुध्यते । सौगताः, किं बहुना ? द्वैतिनोऽप्यसतः शुक्तिरूप्यस्य प्रवृत्तिप्रयोजकत्वं स्वीकुर्वन्ति, इति स्थिते मिथ्यात्वेऽप्यर्थक्रियाकारित्वे का वाऽनुपपत्तिः ?

अयमेव न्यायः—सत्यार्थप्रतीतेः सदसद्विलक्षणत्वे । साऽपि हि स्वरूपतः सदसद्विलक्षणैव, पञ्चममिथ्यात्वदृष्ट्या सद्विलक्षणैव, न तु तुच्छा ॥

यथा च सत्यत्वं न कारणतावच्छेदकम्, कार्यतावच्छेदकं वा तथा पूर्वमेवोक्तम् ॥

अतः संविन्मात्रमपि यदेव सत्यम्, तदपि नाऽर्थक्रियाकारि, न वा मिथ्यार्थोऽप्यकार्यकारी। इदमेवाभिप्रेत्य—

"असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते।"

इति। एष एव न्यायोऽपौरुषेयस्य वेदस्यापि मिथ्यात्वे स्वरूपतः, न तु विषयतो मिथ्यात्वेऽपि साधकत्वम्, न तु 'वन्ध्यासुतसमानोऽपौरुषेयो वेदो नाम ॥

भूमिकायामविप्रतिपन्नतया निर्दिष्टा विषयाः केचन विप्रतिपन्ना एवेति मण्डन-समीक्षे आश्रित्यात्र समीक्ष्यते। तत्र प्रथमो विषयो वेदनित्यात्वम्, यत्र न विप्रतिपत्तिरिति। यतो नित्यत्वं वेदस्य न ज्ञाननिवर्त्यस्याद्वैतमते, द्वैतमते तु न ज्ञाननिवर्त्यत्वमिति विशेष इति समीक्षा ॥

नित्यत्वं ह्यत्रापौरुषेयत्वम्, न तु विनाशराहित्यम्, अतो नात्र विशेषः। द्वितीयो विषयस्तु ब्रह्मणो वेदान्तवेद्यत्वम्। यत्रापि ब्रह्मणो वेद्यत्वमेव, नावेद्यत्वमपि द्वैते, अद्वैते त्ववेद्यत्वमपीति विप्रतिपत्तिरिति ॥

अत्रावेद्यत्वे विप्रतिपत्तावपि वेद्यत्वे न विप्रतिपत्तिरित्यत्र न विरोधः, तत्रावेद्यत्वं फलव्याप्यत्वाभावः, वेद्यत्वं तु वृत्तिव्याप्यत्वेनेति वेद्यत्वावेद्यत्वयोः स्वरूपभेदमात्रम्, इति त्वन्यदेतत्, इति न विरोधः। अयमेव न्यायः निर्विशेषस्य वेदमुख्यतात्पर्यविषयत्वेऽपि; सगुणवाक्यानामपि प्रामाण्यपरत्वमात्रे विशेषात्। अत्राविशेषस्तु सगुणोपासनस्यापि प्रामाण्यमात्रे। मुख्यतात्पर्यविषयत्वमात्रे तु विप्रतिपत्तिरेवेति तु विषयान्तरम् ॥

तृतीयो विषयो ब्रह्मणो निर्दोषत्वमद्वैतमते निर्विशेषत्वमपि। द्वैतमते तु निर्दोषत्वमात्रमिति। तत्रापि विप्रतिपत्तिरेवेति समीक्षा। तत्राप्यविद्या-

त्वप्रयुक्तादेरेव दोषपदार्थत्वे गुणानां सर्वेषामपि दोषपदार्थत्वमात्रे विप्रतिपत्ति-परत्वे विशेषेऽपि, निर्दोषत्वेऽविशेषः ॥

यावद्बाधं प्रामाण्यमद्वैतमते, सौगतमते तु न बाधकथा; अधिष्ठान-ज्ञाननिवर्त्यत्वस्य बाधत्वात्। सौगते मतेऽधिष्ठानकथाया एवाभावात् ॥

वेदोत्पत्तिर्हि शास्त्रयोनित्वसूत्राभिमताऽपौरुषेयत्वमेवोभयत्रेति न विशेषः ॥

'संविन्मात्रं परमार्थम्' इत्यत्र परमार्थत्वं बाध्यत्वाभावत्वोपलक्षित-स्वरूपमित्यर्थः, इति नात्र कोऽपि विशेषः ॥

जीवेश्वरभेदे जीवस्य, ईश्वरस्य च श्रुतिपदेन वेदान्तमहावाक्य-स्यैव विवक्षणात् तेन च सधर्मकत्वस्याप्राप्त्या न तद्भेदप्रत्यक्षानुमानयोः श्रुतिमूलकत्वम् ॥

प्रत्यक्षागमयोर्बाध्य-बाधकभावो भिन्नविषयत्वेन, प्रत्यक्षस्य विकल्पांशेऽ-प्रामाण्यात्, श्रुतेरपि विकल्पांश एवाप्रामाण्यपरत्वान्न व्याहतिः ॥

तत्र भेदवाक्यानां बहुत्वं भेदाबाध्यत्वे न तन्त्रम्; "त्यजेदेकं कुलस्यार्थे" 'शतमप्यन्धा न पश्यन्ती'ति न्यायात् ॥

तत्त्वमसिवाक्ये तद्गुणसारत्वन्यायेन गौणार्थत्वं भाष्यारूढं लक्षणयैव; द्वितीयादिविभक्त्यन्तपरतयाऽपि विवरणमप्ययत एव। अतो भाष्यविरोधः प्रधानं दूषणम्। अतत्त्वमसीत्येकत्र, परत्र तत्त्वमसीति सूत्राशयवर्णनमप्ययत एव न युक्तम्। उपक्रमोपसंहारविरोधश्च 'अतत्त्वमसी'ति विभागस्य। तत एव बहुप्रमाणविरोधोऽपि। अद्वैते तूपक्रमाद्यानुगुण्यादि, आगम-बाध्यत्वेऽपच्छेदन्यायेनाभेदवाक्यानामेव बाधकत्वम्, न तु भेदवाक्यानाम् ॥

तत्र वेदवाक्यानां ब्रह्मणोऽविद्यापरिणामत्वाभावाद् निरधिष्ठानकत्वाच्च नाप्रामाण्यम्, शशविषाणमस्तीति स्वयं बाधिते शशविषाणेऽस्तित्वस्य कालत्र-

म्बन्धस्याभावादयोग्यत्वादेव न प्रामाण्यम्, अन्यत्तु सर्वमत्र तत्तत्प्रकरणेषु व्यक्तम् ॥

बाध्यत्वं ह्यधिष्ठानगताज्ञातांशसाक्षात्कारेण, न तु भ्रमप्रयोजकाज्ञातसामान्यसाक्षात्कारेण, इति न 'इदं' ज्ञानेऽपि भ्रमानुदयापत्तिः, अन्यत्तु सर्वं भूमिकासम्बन्धिपरीक्षणं तत्र तत्र ग्रन्थमध्ये, अन्यत्र च सम्यगेव परीक्षितम् ॥

पुरुषोत्तमविषये तु समस्तपदबोध्यः, पुरुषोत्तमोऽत्राऽन्यः, 'उत्तमपुरुषस्त्वन्यः' इत्यत्राऽन्यस्त्वीश्वर एव मायोपहितस्तृतीयः, क्षराक्षरौ तु द्वौ तदुपाधी अपि पुरुषावेव ॥

तत्र तृतीयस्य प्रथम-द्वितीयाभ्यां भेदबोधः । तुरीयस्यैव त्रिभ्योऽपि पुरुषेभ्यो व्यतिरिक्तस्य मुक्तात्मस्वरूपस्याऽऽवृतानावृतभेदशून्यस्याखण्डस्य । इममेवाधिकृत्य भगवान् गायति—

"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥"

इति । अन्यथाऽयं श्लोको वितथः । अयमर्थस्तु "अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः" इति श्रुत्याऽप्यवगम्यते ॥

अयमेवार्थः—

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ॥"

इति गीताऽप्यवगमयति । अत्र 'मां ईश्वरं विद्धि' इति स्वस्य विश्वरूपाध्यायानन्तरमपीश्वरत्वोपदेशो वितथः, अनुपपन्नश्च ॥

कुम्भकोणेतिवृत्तं तु पूज्यश्रीसत्यध्यानतीर्थपादानां गीतामतिरिच्य, कोशमतिरिच्य वा गीतार्थविचारविनिमये न किमपि प्रमाणमुपनिषदादिक-मपि नोपन्यसितव्यमिति समयबन्धस्य स्वयं परित्यागेन विचारक्रमो मध्य एव निग्रहस्थानेन स्वामिपादानां निग्रहेण स्वयमुपरतः ॥

ते हि महात्मानः पञ्चषदिनेष्वनुवर्तमानेषु विचारेष्वन्तिमे दिने शरीरपदार्थो नेदं शरीरम्, किन्त्वन्यदेव भगवन्मात्रशरीरं विवक्षित-मित्युपन्यास्थन् ॥

ततस्तु तत्र किं प्रमाणमिति पर्यनुयोगे हठादात्मानमपि विस्मृत्य "यस्य पृथिवी शरीरमि"त्युपनिषद्वाक्यं प्रमाणयन्ति स्म । ततस्तु समय-बन्धपरित्यागेन निग्रहस्थानेन निग्रहेण विचारस्यान्तरैव समाप्तिरिति तत्र तत्र पत्रिकासु मध्यस्थनाम्नाऽपि प्रकाशितं साम्प्रतमपीतिवृत्तमिदं जागर्ति । अतोऽत्र समीक्षाया अन्यथा लेखनं न समादरमर्हति । अधिकन्तु तत्र तत्र प्रकरणेषु व्यक्तम् ॥

अद्वैततत्त्वसुधाकारमधिकृत्य मण्डनमेवमनुगृह्णाति —

"महागजाः पलायन्ते मशकानां तु का कथा ॥"

इति न्यायविषयभूतैरनन्तकृष्णशास्त्रिभिरि"ति । सुधासमीक्षा तु सप्रेमे-तोऽप्यधिकं विशिष्याऽनुगृह्णाति—

"तामिमां न्यायसुधां परीक्षितुं प्रवृत्तानद्वैततत्त्वसुधाकारान् अद्धा निध्याय प्रसभमियं भणितिः —

"घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः" ।

इति स्मृतिपथमध्यास्ते । परग्रन्थदूषणाय बद्धकच्छ-पुच्छं स्वच्छन्दं धावतां शास्त्रिणामद्वैततत्त्वसुधायामितस्ततो लुठतः स्वव्याघातान्, अकाण्ड उन्मीलनुक्तोपालम्भम्, अर्थविधुरं वागाडम्बरम्, पदे पदे कृतास्पदं

पुनरुक्तिस्तोमञ्च समीक्षमाणानां गुणगृह्याणां मनीषिणामक्षिसमक्षं परीक्षार्थ-मुपक्षिप्ते ग्रन्थयुगलेऽ(?)स्मदुक्तं कृत्स्नमिदं विशेषणं स्वरसतो भासेतैवेति विरमामोऽनल्पकथनात्" इति ॥

निग्रहानुग्रहसमर्थानामुभयेषां निग्रहमप्यनुग्रहमेव मन्वानोऽयं निबन्धा निग्रहानुग्रहसमर्थानां तेषां न प्रतिकर्तुम्, अनुकर्तुं वा शक्नोति; यतो 'वृद्धास्ते न विचारणीयचरिताः', तेजोयांसश्च ते येन केनापि कर्मणा न दुष्यन्ति, स्वतन्त्रेच्छाश्चेमे न नियोगम्, पर्यनुयोगं वाऽर्हन्ति ॥

अयं हि निबन्धा मण्डनस्य पुरतो न मशकप्रायमप्यात्मानं पश्यति, न वा त्रिभुवनविधात्र्याः समीक्षायाः पुरतः कुलालकल्पोऽपि, किं बहुना ? नायमात्मानं कर्तारमपि मन्यते, किन्तु यस्य कस्यापि हृदि स्थितस्यान्तर्यामिणो निमित्त-मात्रमेव, य एव हि निबन्धारमिमं साधु वाऽसाधु वा कर्म कारयति, उन्निनीषति, अधो निनीषति वा, इत्यत्रैव प्रकृतं लेखमुपसंहरति, उपहरति च उदारहृदयाः पण्डितप्रकाण्डाः स्वीयया करुणापूर्णया, स्वत एव पवित्रया दृष्ट्याऽनुग्रही-ष्यन्तीति ॥

परमार्थभूषणपरीक्षा तु परमार्थभूषणस्य प्रतिप्रकरणं प्रासङ्गिकानाम्, अप्रासङ्गिकानां च बहूनां पुनः पुनराम्रेडनेनातिविस्तरेण प्रवृत्तत्वात्, यक्षानुरूपबलिन्यायेन प्रतिपृष्ठं तत्तत्परीक्षणक्रमेणैव कर्तव्याऽऽसीत्, इति पुनः पुनस्तेषां तेषां विषयाणां तद्वदेवानुसंधानेन बहुतरं विस्तरं प्रापिताऽगत्या । अत्रैकैकमपि प्रकरणमेकैकनिबन्धरूपं मत्वा भूषणमिवाऽयमपि निबन्धः पुनरुक्तिचर्चां दूरतोऽवस्थाप्य प्रियपाठकैः समालोचनमर्हतीति सादरं सविनयञ्च सूच्यते ॥

शतभूषणीवाऽयमपि निबन्धः केवलं विचारविनिमयदृष्ट्या स्वबुद्धि-विकासार्थमेवोपनिबद्ध उदारहृदयानां प्रियपाठकानां सादरमुपह्रियते । सर्वथा तु निबन्धोऽयम्, विश्वस्यते, विषयमात्रपरीक्षणदृष्ट्या प्रियपाठका अपि सुहृद्भावेन

समालोच्य स्वीयं वक्तव्यम्, यदि किमपि, तदुद्बोध्याऽनुग्रहीष्यन्ति निबन्धारमिममिति विश्वस्यते ॥

एतत्पुस्तकसंस्करणे संशोधनकार्येण, विचारविनिमयेन, तत्तदर्थसूचनेन च निबन्धुरस्यात्यन्तमुत्तमर्णा मीमांसारत्नं काशीहिन्दूविश्वविद्यालयमीमांसा-प्राध्यापकप्रवरा अ-श्रीसुब्रह्मण्यशास्त्रिणः, इति तेषामाजीवमाधमर्ण्यं सादरं सूच्यते । निबन्धेषु निबन्धुरस्य प्राचीनेष्विव सादरं सानुग्रहञ्च समुचितसाहाय्यप्रदानेन, तत्प्रदानव्यवस्थापनेनं चाऽऽजीवं स्मरणमर्हन्तः परमहंसपरिव्राजकाचार्यजगद्गुरवः, तपस्विप्रवराः श्रीज्योतिर्मठशङ्कराचार्यभगवत्पादाः श्री १००८ कृष्णबोधाश्रमस्वामिपादाः शान्ति दान्ति-स्वभावा अस्यापि निबन्धस्य प्रकाशने स्वीयममूल्यं साहाय्यं प्रदायान्वग्रहीषुः ॥

स्वनामधन्य-तपस्विप्रवर-जगद्गुरु-पूज्य-श्रीकामकोटिपीठाधीशाः, जगद्गुरवोऽस्मत्कुलगुरवश्च श्रीशृङ्गगिरिपीठाध्यक्षाः साम्प्रतिकाः तपस्विप्रवराश्चास्यापि निबन्धस्य प्रकाशने स्वीयेनामूल्येनानुग्रहेणाश्वासयन्ति निबन्धारमिमम्, इति तेषां स्मरणमात्रं महत एव श्रेयसे भविष्यतीति परमोऽयं निबन्धुरस्य विश्वासः ॥

निबन्धेष्वन्येष्विव यथासम्भवं विशिष्टसाहाय्येन निबन्धारमिममाश्वासयन्त उदारहृदयाः संस्कृतरत्नबिरुदाङ्किताः श्रीवाचस्पतिकुलभूषणश्रीहरगोविन्दमिश्रमहोदयाः, Gunnen Dunkerley पी० एस० सुब्रह्मण्यार्यवर्याः, अन्तरङ्गमित्रवर्या श्री के० एम्० सुब्रह्मण्यार्यवर्यमहोदयाः, अन्ये च श्रीकामकोटिपीठाधीशादिप्रोत्साहिता निबन्धुरस्याऽऽजीवमुत्तमर्णाः ॥

विशिष्यैतद्ग्रन्थप्रकाशने केन्द्रीय Scientific Researches & cultural affairs शासकप्रवरा माकिमर्द्धांशव्ययभारग्रहणेनैतद्ग्रन्थप्रकाशने मां प्रोत्साहयन्, एवमुत्तरप्रदेशराजकीया अपि विशिष्टसाहाय्यप्रदानेन, येषां निबन्धाऽयं नितरामेवाधमर्णः ॥

वाराणसेयतारामुद्रणालयेन मासपञ्चकेन महान्तमिमं निबन्धं मुद्राप्य, प्रबध्य च स्वकुटुम्बकार्यदृष्ट्या सादरं स्वीयममूल्यं समयमत्र विनियुज्याचिरेण तत्प्रकाशनार्थं महान् भारो गृहीतः, इति सत्यं सात्मजास्तदध्यक्षा निबन्धुरस्याऽऽजीवमुत्तमर्णाः । तारामुद्रणालयपण्डित-प्रवराः पण्डितप्रवर-श्रीरामेश्वरपाठकमहोदया वार्द्धकेऽपि बहुतरपरिश्रम-स्वीकरणेनाऽत्र संशोधनकार्ये महदुपाकुर्वन्, इति नितरामयं तेषामप्यधमर्णः ॥

इति सुधीजनविधेयतमः

वाराणसी
२३।३।६२

**अनन्तकृष्ण शास्त्री**

# पोठिका-विषयानुक्रमणिका

# अद्वैततत्त्वसुधाद्वितीयभागस्य

## विषयानुक्रमणिका

### ब्रह्मसूत्राणामद्वैते स्वारस्यनिरूपणम्

## ब्रह्मशब्दवृत्त्युपपत्तिः

## ब्रह्मजिज्ञासोपपत्तिः

## शास्त्रभेदसमर्थनम्

अविधेयज्ञानोपपत्तिः

बाधितानुवृत्त्युपपत्तिः

विविदिषासाधनत्वोपपत्तिः

शाब्दापरोक्षवादः

साधनचतुष्टयपूर्ववृत्तत्वोपपत्तिः

कथाऽधिकारोपपत्तिः

## निर्विशेषस्वयंप्रकाशत्वोपपत्तिः

## निर्विशेषनिर्विकल्पोपपत्तिः

अथ सन्मात्रप्रत्यक्षप्रामाण्योपपत्तिः

## भेददूषणोपपत्तिः

दृश्यत्वानुमानोपपत्तिः

व्यावर्तमानत्वोपपत्तिः

अथ संविदनुत्पत्तिः

संविन्नानात्वोपपत्तिः

## निर्विशेषत्वानुमानोपपत्तिः

अनुभूतिस्वप्रकाशत्वोपपत्तिः

साक्षित्वोपपत्तिः



शास्त्रप्राबल्योपपत्तिः

असत्यात् सत्योत्पत्त्युपपत्तिः

जीवन्मुक्त्युपपत्तिः

बाधायां सामानाधिकरण्योपपत्तिः

संविदद्वैतोपपत्तिः

उपदेशानुपपत्तिः

तिरोधानोपपत्तिः

अथात्माद्वैतोपपत्तिः

जीवेश्वरैक्यानुपपत्तिः

अखण्डार्थत्वोपपत्तिः

# अद्वैततत्त्वसुधा

## ( द्वितीयभागः )

### पीठिका

मातामहमनाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

#### श्रीभाष्यलघु-महासिद्धान्तपरीक्षा

##### धर्मजिज्ञासायाः प्रागपि ब्रह्मजिज्ञासासंभवः

"अथातो धर्मजिज्ञासे"त्यत्राथशब्देन, धर्मजिज्ञासापदेन च स्वस्वसामर्थ्येन वेदाध्ययनान्तरमेव, न तु ततः प्राक्, वेदार्थरूपधर्मजिज्ञासैव, न सौगतादिमतधर्मजिज्ञासा, इति न वेदाध्ययनात् पूर्वम्, न वाऽवैदिकधर्मजिज्ञासेति शाबरं भाष्यम् । अत एव पूर्वमीमांसायां "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" इत्यत्र शाक्यादिस्मृतीनामप्रामाण्यं तत्र वार्तिके व्यवस्थापितम्, इति तेनैव न्यायेन "अथातो ब्रह्मजिज्ञासे"त्यत्राप्यथशब्दार्थानन्तरमेव, न तु ततः प्राक्, ब्रह्मैव, न त्वन्यद् विचारणीयमिति विवक्षणीयम्, इति कर्मविचारानन्तर्यं यद्यथशब्दार्थः, तर्हि धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य न ब्रह्मजिज्ञासोपपद्यते । तथाच धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य देवतादेरिव ब्रह्मजिज्ञासोपपत्तिर्बादरायणाभिमता नोपपद्यते । साधनचतुष्टयसम्पत्त्यानन्तर्यस्याथशब्दार्थत्वे त्वधीतवेदान्तस्य साधनचतुष्टयसम्पत्त्यनन्तरमेव ब्रह्मजिज्ञासोपपत्तिः, इति प्रथमकल्पानपोहः ।

कर्मविचारानन्तर्यं हि कर्मणामल्पास्थिरफलत्वेन, नियतपौर्वापर्यैकवेद-व्याख्यानत्वेन चैकशास्त्र्यमादाय समर्थनीयम्। इदं च कर्मविचारस्येहामुत्रार्थफलभोगविरागाख्यसाधनचतुष्टयैकदेशसाधनत्वेनैव, न तु प्रकारान्तरेणेति सम्प्रतिपन्नम्॥

श्रीभाष्यमतेऽपि श्रुतप्रकाशिकोक्तरीत्या शास्त्रान्तरश्रवणानन्तरमपि ब्रह्मजिज्ञासा स्यात्, इति वेदैकदेशावगतकर्मविचारानन्तर्यमथशब्दार्थः, इति ब्रह्मजिज्ञासाथशब्दोभयसामर्थ्येन मन्यते। इदन्त्वद्वैतमतेऽपि समानम्। इयान् विशेषः—यत् श्रवणविधिप्रकरणावगतं साधनत्वं साधनचतुष्टयस्य, कर्मविचारस्य तु "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्तीति" विधिमहिम्ना॥

तत्र स्वप्रकरणावगतसाधनत्वपरित्यागेन प्रकरणान्तरावगतसाधनत्वविवक्षाया गौरवाऽऽवहत्वात् साधनचतुष्टयसम्पत्त्यानन्तर्यार्थत्वपक्षो युक्तः, इति न साधनचतुष्टयपूर्ववृत्तत्ववादनिरासः सम्भवति, प्रत्युत कर्मविचारपूर्ववृत्तत्ववादनिरास एव॥

तत्र कर्मविचारपूर्ववृत्तत्वम्, साधनचतुष्टयपूर्ववृत्तत्वं वा ब्रह्मजिज्ञासापदघटकज्ञाधात्वर्थनिर्णयमपेक्षते—स किं मतद्वयाभिमत एकः, उत भिन्नः, एवं "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती"त्यत्र विविदिषापदार्थः "अथातो ब्रह्मजिज्ञासे"त्यत्र जिज्ञासापदार्थश्च किमेकः, उत भिन्नः, तथा विविदिषापदविवक्षितं साध्यं किमिच्छामात्रम्, उतेष्यमाणं ज्ञानम्—इति॥

तत्राद्वैतिनां दृष्ट्या जिज्ञासा-विविदिषापदघटकज्ञा-विदिधात्वर्थो ज्ञानम् 'अवगतिपर्यन्तं च ज्ञानं सन्वाच्याया इच्छायाः कर्मे'ति शाङ्करभाष्याद-विद्यानिवृत्त्यर्थाखण्डसाक्षात्कारः, श्रीभाष्यमते तु दर्शनसमानाकारं ध्रुवानुस्मृत्यादिपदवाच्यमुपासनम्। तत्राद्ये कर्मणां ज्ञानप्रतिबन्धकनिवृत्तिद्वारा 'औषधेन बुभुक्षति,' इत्यादौ बुभुक्षादेरिवेष्यमाणज्ञानसाधनत्वम्, न तु सन्प्रत्ययार्थेच्छासाधनत्वम्, द्वितीये तूपासनेन मोक्षे जननीये कर्मणामुपयोगित्वम्, इति कर्मज्ञानयोरुभयोरप्यङ्गाङ्गिभावः, तेन चैकस्मिन्नेव जन्मन्युभयोरपि सहानुष्ठानेन फलोपयोगित्वम्। ज्ञानं चेदं श्रीभाष्यमते सगुणस्यैव ब्रह्मण उपासनात्मकम्, नाद्वैतमतवदखण्डब्रह्मसाक्षात्कारः, इति नाद्वैतसिद्धान्तवद् जन्मान्तरीयेणापि कर्मणा, तद्विचारेण वा ज्ञानस्य, ब्रह्मजिज्ञासाया वा श्रीभाष्यमते निर्वाहः॥

अपरोऽयं विशेषः–यद् नाद्वैतमतवद् ब्रह्मलोकान्तवैराग्यं श्रीभाष्यमत इहामुत्रार्थफलभोगविरागो ब्रह्मजिज्ञासाहेतुः; तन्मते ब्रह्मलोकस्यैव मुख्य-फलत्वात्, इति तत्र कर्मणामुपासनेन न विरोधः, अद्वैतसिद्धान्ते त्वखण्ड-साक्षात्कारेण कर्मणां विरोधात् , तत्फले मोक्षे कर्मणां ज्ञानेन सहानुपयो-गात्, प्रत्युत विरोधाच्च जन्मान्तरीयकर्मणा, तद्विचारेण वा कर्मणां विवि-दिषार्थत्वस्य, ज्ञानार्थत्वस्य वा सम्भवात्, ज्ञेयस्य ब्रह्मणोऽपि श्रीभाष्यमत-वत् सगुणैकस्वरूपत्वाभावात्, निर्विशेषस्यैव ब्रह्मणो ब्रह्मजिज्ञासापदघटक-ब्रह्मपदमुख्यार्थत्वात् , फल-जिज्ञास्यभेदात् कर्म-ब्रह्मज्ञानफलयोः, तद्विचार-योर्वा शेष-शेषिभावाद्यभावाच्च नियतपौर्वापर्यैकव्याख्येयवेदैकदेशव्या-ख्यानत्वेऽपि न पौर्वापर्यं सम्भवति ॥

न हि पूर्वमीमांसायामपि प्रत्यध्यायम् , प्रतिपादम् , प्रत्यधिकरणं वा नियतेऽपि पौर्वापर्ये तत्तदधिकरणविषयवाक्यानां पौर्वापर्यनियमः, न वा नियतपौर्वापर्यतत्तद्वाक्यविहितकर्मणां भिन्न-भिन्नफलविशेषाणां स्वतन्त्रा-णामनुष्ठाने, विचारे वा क्रमनियमः। एकोपेयोपायत्वे तु सम्भवति क्रमनियमः। अतः कर्मणाम् , सगुणोपासनस्य च पौर्वापर्यनियमेऽपि न तेषाम् , निर्गुणब्रह्मविचारस्य च क्रमनियमः। ततश्च निर्गुणवादानङ्गीकारे भवतु नाम कर्म-ब्रह्मविचारयोः पौर्वापर्यनियमः, परन्तु "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यादिनिर्गुणसाक्षा-त्कारविधिप्रकरणगतसाधनचतुष्टयसम्पत्त्यानन्तर्यमेवाथशब्दस्यार्थ इत्य-द्वैतवादस्य, तद्विरुद्धस्य श्रीभाष्यसिद्धान्तस्य च भिन्नविषयत्वात्तयो-रेकतरेणान्यतरस्य न विरोधः ॥

सति चैवं सगुणब्रह्मवाद एव यदि ब्रह्मजिज्ञासाया विषयः, तर्हि तत्र कर्म-ब्रह्मविचारयोरैकशास्त्र्यं फल-जिज्ञास्यभेदाभावात्; न केवलमेकप्रब-न्धत्वमात्रेण, किन्तु जिज्ञास्य-फलैक्येनापि सुष्ठु लगति, इति कर्म-ब्रह्म-जिज्ञासयोरेकप्रबन्धत्वमात्रेणैकशास्त्र्यं नाद्वैतिनामपि विप्रतिपन्नम्, किन्तु नात्र जिज्ञास्य-फलैक्यप्रयुक्तमैकशास्त्र्यम्। अत एव कल्पतरुपरिमले महता प्रयत्नेन, पूर्वोत्तरकाण्डयोरिव पूर्वोत्तरमीमांसयोरप्येकप्रबन्धत्वसमर्थने-ऽपि न कर्मविचारानन्तर्यमथशब्दार्थ इति सिद्धान्तितम् ॥

एतेन कर्म-ब्रह्मविचारयोरैक्यं परिमलस्याप्यभिमतमिति शतभूषणी-विमर्शकानां सर्वेषां तत्र तत्रोद्घोषणं नाद्वैतवादविरुद्धमिति व्याख्यातम् ॥

तथाहि—त्रिविधमैकशास्त्र्यम्—वेदार्थविचारत्वोपाधिकम्, चोदनालक्षणकर्ममात्रवेदार्थविचारत्वेन, यथा जैमिनीयस्य द्वादशलक्षणस्य, यदा देवतामीमांसा, ब्रह्ममीमांसा वा न शास्त्रम्, वेदान्तवाक्यानाम्, उपनिषदां वा "तन्मते—"एतेनोपनिषदो व्याख्याताः" इत्युक्तरीत्या कर्माङ्गकर्तृस्तावकतया, उपासनापरत्वेऽप्युपासनामात्रेणाभीप्सितफललाभादुपास्यदेवतास्वरूपस्याभावात्, शब्दानामेव देवतात्वाच्च। इदमेवाभिप्रेत्य "शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिरि"त्यादिसूत्राणि, कर्माङ्गकर्तृस्तावकतया वेदान्तानां प्रामाण्यमिति समन्वयाधिकरणप्रथमवर्णकपूर्वपक्षश्च। अत्र कल्पे "अथातो धर्मजिज्ञासे"ति सूत्रप्रतिज्ञातो जिज्ञास्यो धर्मः श्रेयस्साधनमात्रम्। स च वेदार्थः कार्यम्, अपूर्वरूपं वा, इष्टसाधनं वेति त्वन्यदेतत्।

द्वितीयं त्वैकशास्त्र्यम्—फल-तत्साधनान्यतरवेदार्थविचारत्वोपाधिकम्, यत्र कर्मोपासनादिकं फलसाधनमिव न फलमपि ब्रह्म वेदार्थः, यमेव विषयमधिकृत्य देवतामीमांसया साकं षोडशलक्षणं मीमांसाशास्त्रम्, प्रतिपत्तिविधिशेषतयैव शास्त्रेण ब्रह्मसमर्पणमिति वृत्तिकारसिद्धान्तश्च। अयं प्राभाकरसिद्धान्त इति तु ब्रह्मसिद्धिः॥

तत्र पूर्वत्र संकर्षकाण्डं जैमिनीयमन्यत्, यत्र 'स विष्णुराह हि स विष्णुराह हि तद् ब्रह्मेत्याचक्षते" इति नोपसंहारः। अत्र देवतामीमांसा चतुर्लक्षण्यपरैव, यस्याः "स विष्णुराह हि स विष्णुराह हि तद् ब्रह्मेत्याचक्षते" इत्युपसंहारः। इमामेव मीमांसामभिप्रेत्य शतदूषणीकारः—

"कर्म-देवता-ब्रह्मगोचरा सोद्भवौ त्रिधा सूत्रकारतः।
जैमिनेर्मुनेः काशकृत्स्नतो बादरायणादित्यतः क्रमात्॥"

इति तत्त्वटीकायां काशकृत्स्नीयमीमांसेति मन्यते॥

अत्र काशकृत्स्नाभिमता देवता सगुणं ब्रह्मैव विष्णवाख्यम्, यत् श्रेयस्तत्साधनोभयरूपम्, यः "चोदनालक्षणोऽर्थो धर्मः" इति सूत्रितश्रेयस्करधर्मपदार्थतामर्हति; उपासनाद्वारा फलसाधनत्वात्, "पुरुषार्थोऽतः शब्दादिति बादरायणः" इति सूत्रात् कर्मणां फलसाधनत्वं नापूर्वद्वारा, किन्तु भगवत्प्रसादद्वारेति सिद्धान्तः, इति "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति प्रापकत्वम्, प्राप्यत्वञ्च ब्रह्मण एव प्रतिपाद्यमानं स्वरससमुपपद्यते, इति सगुणब्रह्मवादिनां सर्वेषामाशयः॥

तत्र कर्म-देवतामीमांसयोर्वेदार्थविचारत्वेनैकशास्त्र्येऽपि फल
जिज्ञास्यभेदात् काशकृत्स्नीयचतुर्लक्षणीमात्रं कर्ममीमांसातः पृथगेवे
कर्म-देवतामीमांसयोर्दृष्टिभेदेनैकशास्त्र्यम्, भिन्नशास्त्रत्वं वोपपद्यते ॥

श्रीभाष्यकारास्तु "संहतमिदं शारीरकं जैमिनीयेन षोडशलक्षणेने"
देवतामीमांसाया अस्याः काशकृत्स्नीयाया जैमिनीयत्वं छत्रिन्यायेना
प्रयन्तीति तत्त्वटीकादयः ॥

आधुनिकास्तु—काशकृत्स्नीया "स विष्णुराह हि स विष्णुराह ह
इत्यादिनोपसंह्रियमाणा मीमांसेयं न श्रीभाष्याभिमता काचना
एतादृश्याः कस्याश्चन शतदूषण्यां तत्त्वटीकायामुल्लेखस्तु तत्त्ववादि
द्वैतिनामेवाभिप्रायेण; तत्र 'तत्त्वविदामि'ति प्रक्रमात्, द्वैतिनामेव तत्त्व
वादित्वेन प्रसिद्धेश्चेति—वदन्ति। परन्तु श्रीभाष्यकारा अपि द्वैतिन इ
अद्वैतिन इव वा स्वस्वसिद्धान्तदृष्ट्या तत्त्ववादिन एव। तत्र तत्त्वमेक
अनेकम्, विशिष्टं वेति त्वन्यदेतत्, इति न द्वैतिन एव तत्त्ववादिनः ॥

एतेन—अद्वैततत्त्वसुधेति तत्त्वपदघटितं नामैव नोचितम्; अ
तस्यातत्त्ववत्त्वादिति वादोऽपि—परास्तः; तत्त्वपदं हि न्याय-व्याकर
मीमांसा-धर्मशास्त्र-साहित्यादिसर्वशास्त्रनिबन्धेषु तत्त्वचिन्तामणि-तत्त्व
कौस्तुभादिनामसु सर्वैरेव प्रयुज्यते। द्वैतिन एव तत्त्ववादिन इति
तन्मनोरथमात्रम्। अद्वैतसिद्धौ—'इह कुमतिरतत्त्वे तत्त्ववादी वराकः' इ
द्वैतिन एवातत्त्ववादिन इत्युक्तमिति त्वन्यदेतत्। केचन द्वैतिन एव-
'अद्वैतत्त्वसुधासमीक्षा' इति स्वनिबन्धनामकरणादद्वैतमपि तत्त्वपदव्य
देशार्हमिति—लिखन्ति, इति सोदरयोः; गुरु-शिष्ययोर्वा सुन्दोपसुन्दयो
कलहो नैकतरस्यापि श्रेयस इति तु कथान्तरम् ॥

सत्यं न्यायसुधायामपि टीकाकाराः "स विष्णुराह हि" इत्युपसंह्रि
माणां काञ्चन देवतामीमांसामनुवदन्ति, परन्तु न सा तन्मते का
कृत्स्नीया कृतिः, किन्तु शेष-पैल्वयोः। सर्वथा तु काशकृत्स्नीया देव
मीमांसा न द्वैतिनां तत्त्वविदामभिमता, इति काशकृत्स्नीया मीमां
तत्त्वटीकानुसन्धीयमाना न द्वैतिनां तत्त्वविदाम्। अतो मीमांसाद्वयस
प्यस्य वेदार्थविचारोपाधिनैकप्रबन्धत्वेऽपि फल-जिज्ञास्यभेदाद् भि
प्रबन्धताऽपि ॥

अयमेव न्यायस्तृतीयेऽप्येकप्रबन्धत्वे—यत्र जिज्ञास्यत्वं यद
वेदार्थस्यैव; ब्रह्मणोऽप्यौपनिषदस्य वेदार्थत्वात्, तथापि वेदार्थत्वं ब्रह

देवतामीमांसामीमांस्यस्य सगुणस्यैव, न निर्विशेषस्य फलमात्रस्य। इममेव विषयमवलम्ब्य "अथातो ब्रह्मजिज्ञासे"ति तृतीया मीमांसा ॥

तत्र प्रथममीमांसाया लक्ष्यं कार्यम्, फलसाधनं वा, यत्र धर्ममात्रं तत्त्वम्, यत्र तदतिरिक्तं फल-तत्साधनोभयरूपं सगुणं ब्रह्म, फलस्वरूपमात्रं निर्विशेषं ब्रह्म वा न तत्त्वम् ॥

द्वितीयस्या मीमांसाया लक्ष्यं तु कार्यं साधनम्, प्रापकमिव वा प्राप्यमपि ब्रह्म पुरुषार्थत्वात् तत्त्वम्। तृतीयस्या मीमांसाया लक्ष्यं तु निर्विशेषं फलस्वरूपमात्रं ब्रह्म तत्त्वम् ॥

तत्र प्रथममीमांसानुषङ्गेणैव द्वितीया मीमांसा प्रवृत्ता, इति कर्म-ब्रह्मोपासनयोः सहानुष्ठानम्, शेष-शेषिभावो वा न विरुध्यते। तृतीयस्यां मीमांसायां कर्मणः फले, तत्साधने वा नोपयोगः, प्रत्युत विरोधोऽपि, इति न तत्र कर्मणः कथमप्युपयोगः। अतो ब्रह्ममीमांसाया अस्या अपि वेदार्थविचारोपाधिनैकप्रबन्धत्वेऽपि मीमांसाभ्यामपराभ्यां न संहतिः, इति 'नन्विह कर्मावबोधानन्तर्यं विशेषः, न; धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः' इत्युपक्रम्य फल-जिज्ञास्यभेदादेकप्रबन्धत्वं वार्यते ॥

तत्र सत्यम्, वेदार्थविचारत्वोपाधिकमेकप्रबन्धत्वमादाय कर्मविचारेणेव ब्रह्मविचारेणाप्यपेक्षितत्वात्, वेदाध्ययनं विना ब्रह्मविचारासम्भवात्, अधीतवेदान्तस्यैव ब्रह्मजिज्ञासाधिकाराच्च वेदाध्ययनानन्तर्यं ब्रह्मविचारस्य सम्भवति; तथाप्यपेक्षामात्रेण वेदाध्ययनानन्तर्यमपि ब्रह्मविचारे यथा न विवक्ष्यते, एवं कर्मविचारस्याप्यपेक्षामात्रेण न तदानन्तर्यं ब्रह्मविचारस्य; अन्यथा "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने"ति वेदानुवचन-दानाऽनाशकानन्तर्यमपि यज्ञादेः, तद्विचारस्येव वाऽऽनन्तर्यं ब्रह्मविचार आपद्येत, इति तदानन्तर्यमिव कर्मविचारानन्तर्यमपि "अथातो ब्रह्मजिज्ञासे"त्यत्राथशब्दार्थो न स्यात्; 'तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेने'ति न्यायात् ॥

तत्र यदि कर्मविचारो वेदानुवचनस्य ब्रह्मविचारे द्वारम्, व्यापारो वा, तर्हि कर्मविचारोऽपि कर्मणामल्पास्थिरफलताज्ञानद्वारा पूर्वोक्तरीत्येहामुत्रफलभोगद्वारैव ब्रह्मविचारोपयोगित्वात्, साधनचतुष्टयैकदेशनिर्वाहकतयैव ब्रह्मविचारसाधनत्वाच्च न स्वयं ब्रह्मविचारपूर्ववृत्ततामर्हति। "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति"इति यद्यपि यज्ञादेर्विविदिषायां "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि"त्यपेक्षामुपपादयति ॥

अस्ति चोत्तरमीमांसायाः प्रामाण्यप्रतिपादनद्वारा प्रथमाध्यायप्रतिपादितस्य वेदप्रामाण्यस्य, विद्याभेदाभेदचिन्तायां द्वितीयाध्यायप्रतिपादितस्य शब्दान्तरादिभेदस्य, तत्तदधिकरणविषयवाक्यनिर्णये तृतीयाध्यायनिरूपितश्रुति-लिङ्गादेः, वियदादिचतुष्टयसृष्ट्यर्चिरादिचिन्तायां पञ्चमाध्यायनिरूपितश्रुत्यर्थादिक्रमप्रमाणस्य, "तस्यैतस्य तदेव रूपं यदमुष्य रूपम्" इत्यादिश्रुत्यर्थनिर्णये सप्तमाष्टमनिरूपितातिदेशप्रमाणस्य, किं बहुना ? "प्रदानवदेव तदुक्तम्" इत्यादिसूत्रेषु प्रदानवदित्यादिपदार्थनिर्णये तत्तत्पूर्वतन्त्रसिद्धान्तन्यायस्य चोपयोगः; तथाप्यपेक्षामात्रेण कर्मविचारस्य पूर्ववृत्तता, तदनन्तरमेव ब्रह्मजिज्ञासेति च न साम्प्रतम्; अन्यथा न्यायादिशास्त्राणामपि ब्रह्ममीमांसयाऽपेक्षणात् तदनान्तर्यमप्यथशब्दार्थः स्यात्। न हि ब्रह्मजिज्ञासा न्यायादिविचारानन्तराऽपीति कोऽपि मन्यते ॥

वस्तुतस्तु–पूर्वमीमांसायामिवोत्तरमीमांसायामपि "अत एव च नित्यत्वम्" "नानाशब्दादिभेदात्" "आकाशस्तल्लिङ्गात्" "तथा चैकवाक्यतोपबन्धात्" "श्रुत्यादिबलीयस्त्वाच्च" "विपर्ययेण तु क्रमः" "अतिदेशाच्चे"ति वेदप्रामाण्यादिकं स्वयं बादरायणेनैव सूत्रितम्, इति न पूर्वमीमांसापेक्षोत्तरमीमांसायाः। अत्र "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति सूत्रे कर्मापेक्षामात्रं प्रतिपादितम्, न तु कर्मणामङ्गत्वम्। अपेक्षामात्रं तु केवलमुपकारकत्वेनानङ्गस्यापि भवितुमर्हति। तच्च जन्मान्तरीयेण कर्मानुष्ठानेनापि निर्वहति। न चाङ्गस्येव प्रधानसहयोगित्वमपेक्ष्यते। "अग्नीन्धनाद्यनपेक्षा" इति सूत्रमन्यथा नोपपद्यते ॥

कर्मापेक्षापि ब्रह्मजिज्ञासाया यद्यन्तःकरणवृत्तौ ब्रह्मसाक्षात्कारे जनयितव्येऽस्ति तदुपासनायाः कर्मापेक्षेत्यभिप्रायेण, तर्हीदं विविच्यताम्— किं तदुपासनायाः कर्मानुष्ठानेन सहभावेन साक्षात्कारजनकत्वमिति ॥

व्यक्तं चैतद् भामत्याम्–'धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरि'ति भाष्यविवरणावसरे। सर्वथा तु वेदार्थविचारत्वोपाधिकैकप्रबन्धत्वेऽपि ब्रह्मजिज्ञासापेक्षामात्रेण न कर्मविचारपूर्ववृत्तता ब्रह्मजिज्ञासायाम् ॥

तथाच परिमलः—"न चैवम्—कर्म-ब्रह्मविचारशास्त्रयोरैकशास्त्र्याभ्युपगमे ब्रह्मजिज्ञासासूत्रगताथशब्दस्य कर्मविचारानन्तर्यमर्थः स्यादिति— वाच्यम्; उक्तभामत्योक्तरीत्या ब्रह्मविचारे धर्मानुष्ठानस्यापेक्षानियमाभावेन

तदप्रसक्तेः। न हि ज्वरादिवाजीकरणान्तचिकित्साप्रतिपादकानां वैद्यकसंहिताग्रन्थानामेकप्रबन्धत्वमात्रेण, तत्तच्चिकित्साग्रन्थविचार्यज्वरादिचिकित्सामारभ्यैव विचारणीयम्। तत्तद्विचाराधिकारिवैलक्षण्यमिहापि तुल्यम्। तस्माद् वेदार्थविचारत्वोपाधिकल्प्यमैकशास्त्र्यं नातिविरुद्धमिति प्रौढ्या तदभ्युपगमेऽपि न कश्चिद् दोषः"—इति। अतः फल-जिज्ञास्यभेदप्रयुक्तं मुख्यं भिन्नशास्त्रत्वम्, न तु शेष-शेषिभावप्रयुक्तम्, पूर्वापरभावप्रयुक्तं वा। एकशास्त्रत्वं ह्येकानुबन्धचतुष्टयप्रयुक्तम्, फल-जिज्ञास्यादिभेदे तु नैकमप्यनुबन्धचतुष्टये॥

"अथातः शेषलक्षणम्" "अथातः क्रत्वर्थ-पुरुषार्थयोर्जिज्ञासा" इत्यादौ "अथातो धर्मजिज्ञासे"ति प्रतिज्ञातधर्मस्वरूपमेव जिज्ञास्यते। तच्च प्रथमसूत्रप्रतिज्ञातं धर्मं प्रत्येव, तत्फलं प्रत्येव च। अत एवाध्यायपादादिसङ्गतय इव शास्त्रसङ्गतिरपि तत्तच्छास्त्रेषु मुख्यतया मन्यते। अतो मीमांसात्वेन शास्त्रद्वयस्यैक्ये नाद्वैतिनोऽपि विवदन्ते। अत एव "पुराणन्याय-मीमांसा" इत्यत्र मीमांसाशब्देन धर्मस्थानस्येव विद्यास्थानस्यापि स्मरणमुपपद्यते॥

न च कर्मविचारफलं स्वर्गादिकं ब्रह्मविचारस्यापि फलम्, येन साक्षात्, परम्परया वा "अथातः' शेषलक्षणमि"त्यङ्गविचार इव ब्रह्मविचारेऽपि धर्मविचारत्वम्, धर्मजिज्ञासाप्रतिपाद्यं प्रधानं ब्रह्मविचारस्याङ्गमिति शास्त्रसङ्गतिर्वा स्यात्। स्वतन्त्रौ हि तावुभावपि विचारौ॥

अत्रेदं विवेचनीयम्– यद् ब्रह्मजिज्ञासायां कर्मणाम्, तद्विचारस्य वोपयोगो यदि ब्रह्मज्ञानसाधनत्वेन, तर्हि तत्र ज्ञाधात्वर्थो ज्ञानम् 'अवगतिपर्यन्तं च ज्ञानं सन्वाच्याया: इच्छायाः कर्मेति' भाष्याद् यद्यविद्यानिवर्तकसाक्षात्कारः–"आत्मा वा अरे द्रष्टव्यः" इत्यनेन विवक्ष्यमाणो ब्रह्मसाक्षात्कारः, तर्हि तत्र कर्मणां साक्षात्कारे न साक्षादुपयोगः; वाक्यजन्ये तत्र कर्मणामसाधनत्वात्। न हि वाक्यस्य प्रामाण्यं कर्मसहकारापेक्षम्; अक्रियमाणकर्मणामपि साधनचतुष्टयसम्पन्नानां वाक्यादेव प्रमोत्पत्तेः। वाक्येन प्रमायां जननीयायां पद-तदर्थसङ्गतिज्ञानम्, शाब्दन्यायतत्त्वज्ञानम्, आकाङ्क्षा-योग्यताद्यनुसन्धानान्येवापेक्ष्यन्ते, न कर्माणि॥

"तमेतमि"ति वाक्यं हि विविदिषापदेन ज्ञानप्रतिबन्धकनिवृत्त्यर्थतामेव कर्मादीनां गमयति, न तु ज्ञानार्थताम्; अन्यथा कर्मकाण्डवाक्यार्थज्ञानमपि कर्माधीनं स्यादित्यापत्त्या स्पष्टमितरेतराश्रयत्वम्। न च योग्य-

तावधारणादि कर्माधीनम्। अतोऽत्र यदि जिज्ञासाघटकज्ञाधात्वर्थो ज्ञानमुपासनैव, तर्हि तत्रापि स एव न्यायः; उपासनाया अपि पुरुषतन्त्रक्रियाया न यज्ञादीनामिव पुरुषव्यापारमात्रापेक्षिण्याः स्वोत्पत्त्यादौ कर्मापेक्षा। उपासना हीयं सगुणब्रह्मानुबन्धिनी न तदनाश्रयाविषयाविद्योच्छेदहेतुतामर्हति॥

न च सगुणं ब्रह्मैवात्र जिज्ञास्यम्; देवतामीमांसायामेव तस्य विचारितत्वेन पृथक् तत्प्रतिज्ञानवैयर्थ्यात्। देवतामीमांसया संग्रहेण विचारितस्यैव विस्तरेणात्र जिज्ञासेति वादस्तु "अथातो ब्रह्मजिज्ञासा" "जन्माद्यस्य यतः" "शास्त्रयोनित्वात्" "तत्तु समन्वयादि"त्यादिसंग्रहात्मकजिज्ञासाया आनर्थक्योपपत्त्या न साम्प्रतम्; तत्र "स विष्णुराह हि स विष्णुराह हि तद् ब्रह्मेत्याचक्षते" इति सिद्धान्तितत्वात् सर्वेषां वेदवाक्यानां समन्वयाधिकरणेनापि संग्रहे तदधिकरणं वितथम्॥

एवं तत्र "शास्त्रयोनित्वादि"ति सूत्रघटकं शास्त्रपदं यदि स्वाध्यायमात्रपरम्, तर्हि "चोदनालक्षणोऽर्थो धर्मः" इति सूत्रादधिकं किमस्य लक्ष्यम्? अद्वैतमते तु शास्त्रपदं कर्मोपासनाकाण्डतात्पर्यविषयस्य त्वम्पदार्थस्य, तत्पदार्थस्य चैकवाक्यतया सर्ववेदार्थनिष्कर्षकं तत्त्वमस्यादिमहावाक्यमात्रपरं तदवगम्यात्मैकत्वमात्रपरतां वेदान्तानां निरूपयितुम्, इति निर्विशेषसंविन्मात्रपरं महावाक्यमेवोपस्थापयति, इति सगुणोपासनस्यैव ब्रह्मजिज्ञासाघटकज्ञाधात्वर्थत्वे वितथानीमान्यधिकरणानि॥

सति चैवं निर्विशेषात्मस्वरूपसाक्षात्कारस्यैव ब्रह्मजिज्ञासाघटकज्ञाधातुना विवक्षायां तत्र कर्मणां साक्षात्, परम्परया वा नोपयोगः, किन्तु श्रेयःसाधनज्ञानप्रतिबन्धकनिबर्हणद्वारा, पुरुषसंस्कारद्वारा वा॥

तत्र कर्मणां सगुणब्रह्मोपासनासहकारिभावे नाद्वैतिनामपि विप्रतिपत्तिः। श्रीभाष्यमते हि साक्षात्, उपासनाद्वारा वा कर्मणामविद्यानिवर्तकनिर्विशेषब्रह्मसाक्षात्कारे नोपयोगः। न च निर्विशेषसाक्षात्कारेण मोक्षेऽविद्यानिवृत्तिरूपे जननीये श्रीभाष्यानभिमते कर्मणां सहभावोऽपि; विरोधात्। तथा च भाष्यम्—"यद्यपि बुद्धिपूर्वकारी नाविदित्वाऽऽत्मनः परलोकसम्बन्धमधिक्रियते; तथापि वेदान्तवेद्यम्, अशनायाद्यतीतम्, अपेतब्रह्म-क्षत्रादिभेदं चासंसार्यात्मतत्त्वमधिकारे नापेक्ष्यते; अनुपयोगात्, प्रत्युताधिकारविरोधाच्चे"ति॥

सर्वमिदमभिप्रेत्यैवाद्वैतिनो वदन्ति—संविन्मात्रसाक्षात्कार एव ब्रह्मजिज्ञासाघटकज्ञाधात्वर्थः—इति, इति न तत्र पूर्वोक्तविधया कर्मणोऽपेक्षा, किन्तु साधनचतुष्टयस्यैव। तथा हि—

श्रीभाष्यकाराणामद्वैतसिद्धान्तानुवादः

ब्रह्मजिज्ञासा यदेव नियमेनापेक्षते, तदेव पूर्ववृत्तं वक्तव्यम्। न च धर्मविचारापेक्षा ब्रह्मजिज्ञासायाः; अधीतवेदान्तस्यानधिगतकर्मणोऽपि वेदान्तवाक्यार्थविचारोपपत्तेः। कर्माङ्गाश्रयाण्युद्गीथाद्युपासनान्यत्रैव चिन्त्यन्ते, तदनधिगतकर्मणो न शक्यं कर्तुम्—इति चेत्; अनभिज्ञो भवान् शारीरकशास्त्रविज्ञानस्य। अस्मिन् शास्त्रेऽनाद्यविद्याकृतविविधभेददर्शननिमित्तजन्म-जरा-मरणादिसांसारिकदुःखसागरनिमग्नस्य निखिलदुःखमूलमिथ्याऽज्ञाननिबर्हणायाऽऽत्मैकत्वविज्ञानं प्रतिपिपादयिषितम्। अस्य हि भेदावलम्बि कर्मज्ञानं क्वोपयुज्यते? प्रत्युत विरुद्धमेव। उद्गीथादिविचारस्तु कर्मशेषभूत एव ज्ञानरूपत्वाविशेषादिहैव क्रियते, स तु न साक्षात् सङ्गतः। अतो यत्प्रधानं शास्त्रम्, तदपेक्षितमेव पूर्ववृत्तं किमपि वक्तव्यम्॥

बाढम्; तदपेक्षितं च कर्मविज्ञानमेव; कर्मसमुच्चितात् ज्ञानादपवर्गश्रुतेः। वक्ष्यति च—"सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति। अपेक्षिते च कर्मण्यज्ञाते केन समुच्चयः, केन नेति विभागो न शक्यते ज्ञातुम्। अतस्तदेव पूर्ववृत्तम्, नैतद् युक्तम्; सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेवाविद्यानिवृत्तेः॥

अविद्यानिवृत्तिरेव हि मोक्षः। वर्णाश्रमविशेषसाध्यसाधनेतिकर्तव्यताद्यनन्तविकल्पास्पदं कर्म सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्तेः कथमिव साधनं भवेत्? श्रुतयश्च कर्मणामनित्यफलत्वेन मोक्षविरोधित्वम्, ज्ञानस्यैव मोक्षसाधनत्वं च दर्शयन्ति—"अन्तवदेवास्य तद्भवति" "तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते" "ब्रह्मविदाप्नोति परम्"

"ब्रह्म वेद ब्रह्मैव भवति" "तमेव विदित्वाऽतिमृत्युमेति"—इत्याद्याः ॥

यदपि चेदमुक्तम्—यज्ञादिकर्मापेक्षा विद्या—इति, तद्वस्तुविरोधात्, श्रुत्यक्षरपर्यालोचनया चान्तःकरणनैर्मल्य-द्वारेण विविदिषोत्पत्तावुपयुज्यते; न फलोत्पत्तौ; "विवि-दिषन्ति" इति श्रवणात्। विविदिषायां जातायां ज्ञानोत्पत्तौ शमादीनामेवान्तरङ्गोपायतां श्रुतिरेवाह— "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इति ॥

तदेवं जन्मान्तरशतानुष्ठितानभिसंहितफलविशेष-कर्ममृदितकषायस्य विविदिषोत्पत्तौ सत्याम्,—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "सत्यं ज्ञान-मनन्तं ब्रह्म" "निष्कलं निष्क्रियं शान्तम्" "अयमात्मा ब्रह्म" "तत्त्वमसि" इत्यादिवाक्यजन्यज्ञानादविद्या निवर्तते। वाक्यार्थज्ञानोपयोगीनि च श्रवण-मनन-निदि-ध्यासनानि ॥

श्रवणं नाम वेदान्तवाक्यान्यात्मैकत्वविद्याप्रतिपाद-कानीति तत्त्वदर्शिन आचार्याद् न्याययुक्तार्थग्रहणम्। एवमाचार्योपदिष्टस्यार्थस्य स्वात्मन्येवमेव युक्तमिति हेतुतः प्रतिष्ठापनं मननम्। एतद्विरोध्यनादिभेदवासनानिरस-नायास्यैवार्थस्यानवरतभावना निदिध्यासनम्। श्रवणादि-भिर्निरस्तसमस्तभेदवासनस्य वाक्यार्थज्ञानमविद्यां निव-र्तयति ॥

एवंरूपस्य श्रवणस्यावश्यापेक्षितमेव पूर्ववृत्तं वक्त-व्यम्। तच्च नित्यानित्यवस्तुविवेकः, शम-दमादिसाधन-सम्पत्, इहामुत्रफलभोगविरागः, मुमुक्षुत्वं चेत्येतत् साधनचतुष्टयम्; अनेन विना जिज्ञासानुपपत्तेः, अर्थस्वभावादेवेदमेव पूर्ववृत्तमिति ज्ञायते ॥

एतदुक्तं भवति--ब्रह्मस्वरूपाच्छादिकाऽविद्यामूलम-पारमार्थिकं भेददर्शनमेव बन्धमूलम्। बन्धश्चापारमा-

र्थिकः। स च समूलोऽपारमार्थिकत्वादेव ज्ञानेनैव निवर्त्यते। निवर्तकं च ज्ञानं तत्त्वमस्यादिवाक्यजन्यम्। तस्यैतस्य वाक्यजन्यस्य ज्ञानस्य स्वरूपोत्पत्तौ, कार्ये वा कर्मणां नोपयोगः। विविदिषायामेव तु कर्मणामुपयोगः। स च पापमूलरजस्तमोनिबर्हणद्वारेण सत्त्वविवृद्ध्या भवति, इतीममुपयोगमभिप्रेत्य "ब्राह्मणा विविदिषन्ति" इत्युक्तमिति। अतः कर्मज्ञानस्यानुपयोगाद् उक्तमेव साधनचतुष्टयं पूर्ववृत्तमिति वक्तव्यम्॥

अत्र श्रीभाष्यलघुपूर्वपक्षः

यदुक्तम्—अविद्यानिवृत्तिरेव मोक्षः, सा च ब्रह्मविज्ञानादेव भवति—इति, तदभ्युपगम्यते। अविद्यानिवृत्तये वेदान्तवाक्यैर्विधित्सितं ज्ञानं किंरूपमिति विवेचनीयम्—किं वाक्याद् वाक्यार्थज्ञानमात्रम्, उत तन्मूलमुपासनात्मकं ज्ञानम्—इति। न तावद् वाक्यजन्यं ज्ञानम्; तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः, तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेश्च॥

न च वाच्यम्—भेदवासनायामनिरस्तायां वाक्यमविद्यानिवर्तकं ज्ञानं न जनयति; जातेऽपि सर्वस्य सहसैव भेदज्ञानानिवृत्तिर्न दोषाय; चन्द्रैकत्वे ज्ञातेऽपि द्विचन्द्रज्ञानानिवृत्तिवत्। अनिवृत्तमपि छिन्नमूलत्वेन न बन्धाय भवति—इति; सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्तेः, सत्यामपि विपरीतवासनायामाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनात्। सत्यपि वाक्यार्थज्ञानेऽनादिवासनया मात्रया भेदज्ञानमनुवर्तत इति भवता न शक्यते वक्तुम्; भेदज्ञानसामग्र्या अपि वासनाया मिथ्यारूपत्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात्॥

ज्ञानोत्पत्तावपि मिथ्यारूपायास्तस्या अनिवृत्तौ निवर्तकान्तराभावात् कदाचिदपि नास्या वासनाया निवृत्तिः। वासनाकार्यं भेदज्ञानं छिन्नमूलम्, अथ चानुवर्तत इति

बालिशभाषितम्। द्विचन्द्रज्ञानादौ तु बाधकसन्निधावपि मिथ्याज्ञानहेतोः परमार्थतिमिरादिदोषस्य ज्ञानबाध्यत्वाभावेनाविनष्टत्वाद् मिथ्याज्ञानानुवृत्तिरविरुद्धा। प्रबलप्रमाणबाधितत्वेन भयादिकार्यं तु निवर्तते ॥

अपि च भेदवासनानिरसनद्वारेण ज्ञानोत्पत्तिमभ्युपगच्छतां कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति; भेदवासनाया अनादिकालोपचितत्वेनापरिमितत्वात्, तद्विरोधिभावनायाश्चाल्पत्वादनया तन्निरसनानुपपत्तेः। अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सितम्। तथा च श्रुतयः—"विज्ञाय प्रज्ञां कुर्वीत" "अनुविद्य विजानाति" "ओमित्येवात्मानं ध्यायथ" "निचाय्य तं मृत्युमुखात् प्रमुच्यते" "आत्मानमेव लोकमुपासीत" "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इत्येवमाद्याः ॥

अत्र "निदिध्यासितव्यः" इत्यादिनैकार्थ्यात् "अनुविद्य विजानाति" "विज्ञाय प्रज्ञां कुर्वीत" इत्येवमादिभिर्वाक्यार्थज्ञानस्य ध्यानोपकारकत्वात् 'अनुविद्य', 'विज्ञाय' इत्यनूद्य 'प्रज्ञां कुर्वीत', 'विजानाति' इति ध्यानं विधीयते। 'श्रोतव्यः' इति चानुवादः; स्वाध्यायस्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात् तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तते, इति श्रवणस्य प्राप्तत्वात् श्रवणप्रतिष्ठार्थत्वाद् मननस्य मन्तव्य इति चानुवादः। तस्माद् ध्यानमेव विधीयते। वक्ष्यति च—"आवृत्तिरसकृदुपदेशात्"—इति ॥

तदिदमपवर्गोपायतया विधित्सितं वेदनमुपासनमित्यवगम्यते; विद्युपास्त्योर्व्यतिकरेणोपक्रमोपसंहारदर्शनात्—"मनो ब्रह्मेत्युपासीते"त्यत्र "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद" "न स वेद अकृत्स्नो ह्येषः" "आत्मेत्येवोपासीत" "यस्तद्वेद यत्स

वेद स मयैतदुक्तः" इत्यत्र "अनु म एतां भगवो देवतां शाधि मां देवतामुपास्से"—इति ॥

ध्यानं च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपम्; "ध्रुवा स्मृतिः। स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः", इति ध्रुवायाः स्मृतेरपवर्गोपायत्वश्रवणात्। सा च स्मृतिर्दर्शनसमानाकारा;

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥"

इत्यनेनैकार्थ्यात्। एवं च सति "आत्मा वा अरे द्रष्टव्यः" इत्यनेन निदिध्यासनस्य दर्शनरूपता विधीयते। भवति च स्मृतेर्भावनाप्रकर्षाद् दर्शनरूपता। वाक्यकारेणैतत् सर्वं प्रपञ्चितम्—"वेदनमुपासनं स्यात् तद्विषये श्रवणात्" इति। सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनमित्युक्तम्। "सकृत्प्रत्ययं कुर्यात् शब्दार्थस्य कृतत्वात् प्रयाजादिवदि"ति पूर्वपक्षं कृत्वा "सिद्धं तूपासनशब्दात्", इति वेदनमसकृदावृत्तं मोक्षसाधनमिति निर्णीतम्। उपासनं स्याद् ध्रुवानुस्मृतिः; दर्शनात् निर्वचनाच्च, इति तस्यैव वेदनस्योपासनरूपस्यासकृदावृत्तस्य ध्रुवानुस्मृतित्वमुपवर्णितम् ॥

सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता। दर्शनरूपता च प्रत्यक्षतापत्तिः। एवं प्रत्यक्षतापन्नामपवर्गसाधनभूतां स्मृतिं विशिनष्टि—"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥" इति। अनेन केवलश्रवण-मनन-निदिध्यासनानामात्मप्राप्त्यनुपायत्वमुक्त्वा, यमेवैष आत्मा वृणुते, तेनैव लभ्य इत्युक्तम्। प्रियतम एव हि वरणीयो भवति, यस्यायं निरतिशयप्रियः, स एवास्य प्रियतमो भवति। यथाऽयं प्रियतम आत्मानं प्राप्नोति, तथा स्वयमेव भगवान् प्रयतत इति भगवतैवोक्तम्—

"तेषं सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥"

इति,

"प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।"

इति च। अतः साक्षात्काररूपा स्मृतिः स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया यस्य, स एव परेणात्मना वरणीयो भवति, इति तेनैव लभ्यते पर आत्मेत्युक्तं भवति । एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते; उपासनपर्यायत्वाद् भक्तिशब्दस्य। अत एव श्रुति-स्मृतिभिरेवमभिधीयते-"तमेव विदित्वाऽतिमृत्युमेति" "तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते।"

"नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप" ॥
"पुरुषः स परः पार्थ ! भक्त्या लभ्यस्त्वनन्यया ।"

—इति । एवंरूपाया ध्रुवानुस्मृतेः साधनानि यज्ञादीनि कर्माणीति--"यज्ञादिश्रुतेरश्ववत्" इत्यभिधास्यते। यद्यपि "विविदिषन्ती"ति यज्ञादयो विविदिषोत्पत्तौ विनियुज्यन्ते; तथापि तस्यैव वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्याभ्यासाधेयातिशयस्य, आप्रायणादनुवर्तमानस्य ब्रह्मप्राप्तिसाधनत्वात् तदुत्पत्तये सर्वाण्याश्रमकर्माणि यावज्जीवमनुष्ठेयानि ॥

वक्ष्यति च—"आप्रायणात्तत्रापि हि दृष्टम्" "अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्" "सहकारित्वेन च" इत्यादिषु। वाक्यकारश्च ध्रुवानुस्मृतेर्विवेकादिभ्य एव निष्पत्तिमाह— "तल्लब्धिर्विवेक-विमोकाभ्यास-क्रिया-कल्याणानवसादानुद्धर्षेभ्यः संभवात्, निर्वचनाच्च" इति। विवेकादीनां स्वरूपं चाह—"जात्याश्रयनिमित्तादुष्टादन्नात् कायशुद्धिर्विवेकः" इति। अत्र निर्वचनम्—"आहारशुद्धौ सत्त्व-

शुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति। "विमोकः कामानभिष्वङ्गः" इति। "शान्त उपासीत" इति निर्वचनम्। "आरम्भणं संशीलनं पुनः पुनरभ्यासः" इति। निर्वचनं च स्मार्तमुदाहृतं भाष्यकारेण—"सदा तद्भावभावितः" इति। "पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया" इति। निर्वचनम्—"क्रियावानेष ब्रह्मविदां वरिष्ठः" "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति च। "सत्यार्जव-दया-दानाहिंसानभिध्याः कल्याणानि" इति। निर्वचनम्—"सत्येन लभ्यः" "तेषामेवैष विरजो ब्रह्मलोकः" इत्यादि। "देश-कालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसोऽवसादः" इति। तद्विपर्ययोऽनवसादः। निर्वचनम्—"नायमात्मा बलहीनेन लभ्यः" इति। "तद्विपर्ययजा तुष्टिरुद्धर्षः" इति तद्विपर्ययोऽनुद्धर्षः अतिसन्तोषश्च विरोधीत्यर्थः। निर्वचनमपि—"शान्तो दान्तः" इति। एवं नियमयुक्तस्याश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति॥

तथाच श्रुत्यन्तरम्—

"विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते॥"

इति। अत्राविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म। अविद्यया = कर्मणा। मृत्युम् = ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म। तीर्त्वा = अपोह्य। विद्यया = ज्ञानेन। अमृतम् = ब्रह्म। अश्नुते = प्राप्नोतीत्यर्थः। मृत्युतरणोपायतया प्रतीता विद्या, अविद्या = विद्येतरत् = विहितं कर्मैव; यथोक्तम्—

"इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया॥" इति।

ज्ञानविरोधि च कर्म पुण्य-पापरूपम्; ब्रह्मज्ञानोत्पत्तिविरोधित्वेनानिष्टफलतयोभयोरपि पापशब्दाभिधेयत्वम्। अस्य च ज्ञानविरोधित्वं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिद्वारेण। पापस्य च ज्ञानोदयवि-

रोधित्वम्—"एष ह्येवासाधु कर्म कारयति तं यमधो निनीषति" इति श्रुत्याऽवगम्यते। रजस्तमसोर्यथार्थज्ञानावरणत्वम्, सत्त्वस्य च यथार्थज्ञानहेतुत्वं भगवतैव प्रतिपादितम् —"सत्त्वात् संजायते ज्ञानम्"—इत्यादिना। अतश्च ज्ञानोत्पत्तये पापं कर्म निरसनीयम्। तन्निरसनं चानभिसंहितफलेनानुष्ठितेन कर्मणा। तथाच श्रुतिः—"धर्मेण पापमपनुदति" इति। तदेवं ब्रह्मप्राप्तिसाधनं ज्ञानं सर्वाश्रमकर्मापेक्षम्। अतोऽपेक्षितकर्मस्वरूपज्ञानम्, केवलकर्मणामल्पास्थिरफलत्वज्ञानं च कर्ममीमांसावसेयम्, इति सैवापेक्षिता ब्रह्मजिज्ञासायाः पूर्ववृत्ता वक्तव्या॥

अपि च नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न संपत्स्यन्ते; फल-करणेतिकर्तव्यताधिकारिविशेषनिश्चयादृते कर्मस्वरूप-तत्फल-तत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनां दुरवबोधत्वात्। एषां साधनत्वं च विनियोगावसेयम्। विनियोगश्च श्रुतिलिङ्गादिभ्यः। स च तार्तीयः। उद्गीथाद्युपासनानि कर्मसमृद्ध्यर्थान्यपि ब्रह्मदृष्टिरूपाणि, ब्रह्मज्ञानापेक्षाणि, इतीहैव चिन्तनीयानि। तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पादकानि तत्साद्गुण्यापादनानि। एतानि सुतरामिहैव सङ्गतानि। तेषां च कर्मस्वरूपाधिगमापेक्षा सर्वसंमता—इति॥

अत्राद्वैतिनां लघुसिद्धान्तः

अविद्यानिवृत्तिरेव मोक्षः। सा च ब्रह्मज्ञानादेव। ब्रह्मज्ञानं च यदि सगुणोपासनमेव, तर्हि तत्र कर्मणामुपयोगे, तद्विचारानन्तर्यस्यैव सगुणोपासनपरदेवताकाण्डोपस्थापितविष्णवाख्यब्रह्मजिज्ञासायाः स्वीकारात्, षोडशलक्षणस्यैकप्रबन्धताया अद्वैतमतेऽपि स्वीकाराच्च न विप्रतिपत्तिः। विप्रतिपत्तिर्हि "अथातो ब्रह्मजिज्ञासे"त्यत्राथशब्दार्थविचारे; तस्यैवात्र प्रस्तुतत्वात्, तत्र च पूर्वोक्तरीत्या सगुणोपासनस्य ज्ञाधात्वर्थत्वाभावात् "आत्मा वा अरे द्रष्टव्यः" इति श्रूयमाणवाक्यजन्यब्रह्मसाक्षात्कारस्योपासनारूपत्वाभावात्, तत्र च पूर्वोक्तरीत्या कर्मणामनुपयोगात्, फलजिज्ञास्यभेदेन शास्त्रभेदाच्च साधनचतुष्टयसम्पत्त्यानन्तर्यमेवाथशब्दार्थ इति वक्तव्यम्॥

अविद्यानिवृत्तिरूपमोक्षसाधनत्वं हि यद्यावरण-विक्षेपशक्तिद्वयविशिष्ट-व्यवस्थापयिष्यमाण-ब्रह्माश्रय-विषयक-भावरूपानिर्वचनीय-ज्ञानमात्रनिवर्त्याविद्यामादाय, तर्हि वस्तुतन्त्र-प्रमाणमात्राधीनज्ञानस्यैवाविद्यानिवर्तकत्वात्, तस्य च पुरुषतन्त्रानधिष्ठानस्वरूपोपासनारूपत्वाभावात्, श्रोतव्यादिवाक्यावगतदर्शनस्यावृतानावृतरूपभेदशून्याखण्डब्रह्मसाक्षात्कारत्वात्, तत्र च कर्मणामनुपयोगाद् न कर्मविचारानन्तर्यमथशब्दार्थः। 'इदं रजतमि'त्यादौ हि वस्तुतन्त्रप्रत्यक्षादिप्रमाणजन्यज्ञानस्यैव 'इयं शुक्तिरि'त्यादिसाक्षात्काररूपस्याविद्यानिवर्तकत्वं दृष्टम्, न तु पुरुषतन्त्रोपासनादिशब्दवाच्यस्य, दर्शनसमानाकारस्य, ध्रुवानुस्मृत्यादिशब्दवाच्यस्य च ध्यानस्य। अतो वाक्यजन्यज्ञानमेवाविद्यानिवर्तकम्, नोपासनम्॥

उपासनं हि पुरुषतन्त्रं दहरोपासनादौ तत्तद्ब्रह्मलोकादिप्राप्तिसाधनमेव तत्तद्विधिमहिम्ना, न त्वविद्यानिवृत्तिसाधनम्, इति यद्यविद्या निवर्तनीया कर्मरूपा, तर्हि कर्मणा मोक्षे जननीय उपासनोपकारकस्योपासनानिवर्त्यत्वे, तयोः श्रीभाष्याभिमतसहभावायोगेन तच्छेषत्वस्य तत्प्रयुक्तब्रह्मजिज्ञासापूर्ववृत्तत्वस्य च बाधः॥

अद्वैतसिद्धान्ते तु कर्मविचारपूर्ववृत्तताविवक्षाऽयोगे हि वाक्यजन्यज्ञानस्य ब्रह्मसाक्षात्काररूपस्य कर्मबाधकत्वम्, अनिर्वचनीयाविद्यानिवर्तकत्वं वा मनसि निधायैव कर्मावबोधपूर्ववृत्तता नोररीक्रियते। तत्र वाक्यजन्याऽखण्डाकारवृत्तिः, अवगतिपर्यन्तं वा ज्ञानम् "आत्मा वा अरे द्रष्टव्यः" इत्यादौ श्रवणादिफलरूपं स्वर्गादिकमिव न विधेयम्, किन्तु तत्साधनं श्रवणादिकमेव, इति न तस्य विधानमन्तरेणासिद्धिः। "आत्मा वा अरे द्रष्टव्यः" इति तव्यप्रत्ययो हि "स्वाध्यायोऽध्येतव्यः" इत्यादौ स्वाध्यायस्येव फलस्याविधेयत्वेऽपि विशिष्टरूपेण फलत्वेऽप्यात्मनो द्रष्टव्यत्वेन फलत्वमादाय निर्वहति॥

न च श्रीभाष्यमतेऽपि द्रष्टव्येतितव्यप्रत्ययस्य विधिसमर्पकत्वं दर्शनस्योपासनारूपत्वे सम्भवति। ध्यानपदवाच्यमुपासनं हि 'निदिध्यासितव्यः' इत्यनेन यदि विवक्ष्यते, तर्हि श्रोतव्यः, मन्तव्यः, द्रष्टव्य इति चानुवादः, इति तव्यप्रत्ययमात्रेण न सर्वत्र विधानमेष्टव्यम्॥

तत्राद्वैतिनः फलरूपत्वाद् वाक्यजन्यमवगतिपर्यन्तं ज्ञानम्—"अथातो ब्रह्मजिज्ञासे" त्यत्र सन्वाच्यायाः इच्छायाः कर्मेति मन्वानास्तत्साधनतया

श्रोतव्यो मन्तव्य इत्यादितव्यप्रत्ययत्रयमपि विधिपरं वदन्ति,—यदि श्रवणादौ विधिपक्षः, वस्तुतन्त्रत्वादपरोक्षज्ञानस्य तत्रापि दर्शनांशे न विधिः। तत्राविधित्वपक्षे सर्वत्रानुवाद एव श्रीभाष्यमत इव; श्रवणादिपरम्परया साक्षात्कारावस्थाविशेषानुवादपरत्वात् सर्वेषाम् ॥

इयान् विशेषः–दर्शनसमानाकारध्रुवानुस्मृत्यंशमात्रे विधिः, तस्यैव पूर्वपूर्वावस्थामात्रानुवादः श्रोतव्यादिवाक्य इति श्रीभाष्यसिद्धान्तः, अद्वैतमते तु वाक्यजन्यज्ञानस्याविद्यानिवर्तकभावावस्थापर्यन्तस्य श्रवणादिक्रमेणानुवादः, इति न कुत्रापि विधिः। अविद्यानिवर्तकं ज्ञानमपरोक्षं साक्षात्काररूपं वाक्यजन्यं फलरूपं न कुत्रापि कल्पेऽद्वैतमते विधानमर्हति, येन वाक्यजन्यज्ञानस्याविद्यानिवर्तकत्वे, मोक्षसाधनत्वे वा विवक्षिते विधानवैयर्थ्यमापद्येत; अन्यथा श्रीभाष्यमतेऽपि 'द्रष्टव्यः' इत्यस्यैव विधिपरत्वे कथं न श्रोतव्यादिवाक्यवैयर्थ्यम्? तत्र यदि पूर्वपूर्वावस्थामात्रानुवाद एवोपासनस्य 'श्रोतव्यः' इत्याद्यंशे, तर्हि प्रकृतेऽपि समानम् ॥

इयान् विशेषः—यत् श्रवण-मननादिपूर्वपूर्वावस्थानां विधिः' तदविधित्वपक्षे तु तेषां तेषामुद्बोधनमात्रम्; सर्वथा तु वाक्यजन्यज्ञानस्याविधीयमानस्यैव यदि विधेयमुख्योपासनाया उपकारकत्वमात्रमादाय श्रोतव्यादिपदम्, तर्हि श्रवणादीनां तत्तत्पूर्वपूर्वावस्थाविशेषमात्रतया श्रवणस्य वाक्यजन्यज्ञानस्यापि विधीयमानत्वं परम्परयाऽविद्यानिवर्तनक्षमसाक्षात्कारोपकारकत्वमात्रेण न कथमुपपद्यते?

निष्कर्षस्तु—वाक्यजन्यं श्रवणरूपं ज्ञानं यदि न साक्षादनाद्यविद्यानिवर्तनक्षमसाक्षात्काररूपम्, किन्तु श्रवणादिप्रतिष्ठापनार्थत्वाद् मननादेर्मननादिद्वारैव परम्परयाऽविद्यानिवर्तनक्षमं भवितुमर्हति, तर्हि वाक्यजन्यत्वमात्रेण विनापि मननम्, अभ्यासं वाऽविद्यानिवर्तनक्षमसाक्षात्काररूपतां न तदापद्यत इति तु समानम् ॥

तत्र वाक्यजन्यमप्यपरोक्षज्ञानम्, वाक्यजन्यपरोक्षज्ञानाभ्यासवशादापादितापरोक्षज्ञानं वाऽप्रामाण्यज्ञानानास्कन्दित-पटुतमसंस्कारसहित-भ्रमव्याप्यभुज्यमानादृष्टाभावसध्रीचीनमेवाद्वैतसिद्धान्तेऽपि मोक्षसाधनम्, इति न श्रवणमात्रेण सर्वेषामविद्यानिवृत्तिः. तद्रूपो मोक्षो वाऽऽपद्येत. यथा श्रीभाष्यमते दर्शनसमानाकारावस्थारूपध्रुवानुस्मृत्यादिपदवाच्यावस्थां विना न मोक्षः ॥

तथाच भाष्यम्—"यदुक्तम्—श्रवणात् पराचीनयोरपि मनन-निदिध्यासनयोर्दर्शनाद् न विधिशेषत्वं ब्रह्मणः; अवगत्यर्थत्वाद् मनन-निदिध्यासनयोः। यद् त्ववगतं ब्रह्माऽन्यत्र विनियुज्येत, भवेत् तदा विधिशेषत्वम्, न तु तदस्ति; मनन-निदिध्यासनयोरपि श्रवणवदवगत्यर्थत्वात्" इति ॥

अनेनेदमवगम्यते—"आत्मा वा अरे द्रष्टव्यः" इति न प्रतिपत्तिविधिपरम्, किन्त्वविद्यानिवर्तनक्षमब्रह्मावगतिमात्रपरम्। प्रतिपत्तिविधिपरत्वे हि पूर्वोक्तरीत्या देवतामीमांसया गतार्थत्वात् "अथातो धर्मजिज्ञासे"त्यनेनैव वा गतार्थत्वात्—"अथातो ब्रह्मजिज्ञासे"ति न पृथक् शास्त्रमारभ्येत, आरभ्यमाणं चैवमारभ्येत—"अथातः क्रत्वर्थ-पुरुषार्थयोर्जिज्ञासे"तिवत् "अथातः परिशिष्टधर्मजिज्ञासे"ति, इति यावदविद्यानिवर्तनक्षमपटुतमसंस्कारसहितात्मसाक्षात्कारोदयमविद्याया जीवन्मुक्तावस्थायामपि वासनारूपेण, संस्कारात्मना वाऽविद्यावस्थाविशेषस्य, तच्छक्तिविशेषस्य वा भेदवासनाया वाऽनुवृत्त्या श्रुतवेदान्तानामपि सर्वव्यवहारनिर्वाहः; यथा श्रीभाष्यमते यावद्दर्शनसमानाकारावस्थं श्रवणावस्थायाम्, मननावस्थायाम्, निदिध्यासनावस्थायां वा बन्धो न व्याहन्यते, न वा व्यवहारः, यथा वा चन्द्रैकत्वे ज्ञातेऽपि द्विचन्द्रज्ञानमनुवर्तते, न चानुवर्तमानमपि तद् बन्धाय भवति। उभयत्र वासनारूपेण जीवन्मुक्तानामपि भेदवासनानुवृत्तिस्तु समाना ॥

तत्र चन्द्रैकत्वे ज्ञातेऽपि दृष्टान्ते यदि तिमिरादिदोषोऽनुवर्तते, तद्वशाच्च द्विचन्द्रज्ञानानुवृत्तिः, तर्हि प्रकृतेऽपि जीवन्मुक्तानामपि संस्कारात्मना भेदा अनुवर्तमानाः, उत्पन्नेऽपि तत्त्वसाक्षात्कारेऽविद्यारूपदोषवशात् तत्प्रयुक्ता अनुवर्तन्त इति समानम् ॥

इयान् विशेषः—यद् द्विचन्द्रादिज्ञान आगन्तुकस्तिमिरादिर्दोषः, द्वितीयश्चन्द्रमास्त्वविद्यायाः परिणामः, प्रकृते त्वविद्यैव स्वतः, वासनात्मतया वा दोषोऽपि, इति सत्यामपि सामग्र्यां भेदवासनयाऽविद्यारूपेण दोषेण प्रतिबन्धाद् न सर्वात्मनाऽविद्यानिवर्तनक्षममवगतिपर्यन्तं ज्ञानमत्रोदेति ॥

तथाच यथा श्रवणावस्थामात्रे, श्रवण-मननोभयावस्थामात्रे वा, किं बहुना ? सर्वात्मनाऽविद्यामत्तादशायामपि भाविबाधदृष्ट्या मिथ्यात्वेऽप्यविद्यानिवर्तनक्षमब्रह्मसाक्षात्कारेणाबाधमादाय भेदव्यवहारो निरुह्यते,

यथा श्रीभाष्यमते यावत्सर्वबन्धनिवृत्तिक्षमध्रुवानुस्मृतिनिर्वृत्ति सर्वेऽपि सांसारिका व्यवहाराः, तथा श्रुतवेदान्तानामपि मात्रया भेदव्यवहारानुवृत्तौ न दोषलेशोऽपि। यथा चोत्पन्नज्ञानानामपि संस्कारात्मनाऽनुवर्तमाना भेदव्यवहाराः "आवृत्तिरसकृदुपदेशात्" इति न्यायेन निदिध्यासनेनाभ्यस्यमानेन पटुतमसंस्कारसहितकर्मरूपप्रतिबन्धासध्रीचीनेन तत्त्वज्ञानेन निवर्तन्ते; तदानीमेव तेषां बाधात्। यथा श्रीभाष्यमते श्रवणाद्यवस्थायामपि सत्यपि मोक्षसाधन उपासने सांसारिकव्यवहाराणामनुवृत्तिर्यावद्दर्शनसमानाकारावस्थमुपासनायाः, ततस्तु सर्वात्मना बन्धानां निवृत्तिः। न ह्यद्वैतिनोऽपि भेदवासनानिवृत्तिं विनैवाऽविद्यानिवर्तनक्षमसाक्षात्कारोत्पत्तिमभ्युपगच्छन्ति, येन भेदवासनाया अनादिकालोपचितत्वेनापरिमितत्वात् तद्विरोधिभावनायाश्चाल्पत्वादनया तन्निरासो नोपपद्येत, किन्तु श्रुतवेदान्तानामपि श्रवणविधिमहिम्नोत्पन्नमपि ज्ञानं प्रारब्धवशात् "भोगेन त्वितरे क्षपयित्वा ततः सम्पद्यते" इति न्यायाद् यावत्तत्क्षयं न सर्वात्मनाऽविद्यानिवृत्तिक्षमम्॥

तत्त्वसाक्षात्कारो ह्यभ्यस्यमानो यद्यप्येक एव, भेदवासनास्त्वनन्ताः; तथाप्यनन्तानामपि भेदवासनानामुपादानमविद्या त्वेकैव, नानन्ता, इति साक्षादेकेनात्मसाक्षात्कारेणैकैवानन्तभेदवासनोपादानाऽविद्या निवर्त्यते, तन्निवृत्त्या त्वर्थसिद्धा तत्प्रयुक्तानामनन्तानामपि निवृत्तिः। ज्ञाननिवर्त्यत्वं हि मिथ्यात्वं साक्षादविद्याया निवृत्तिः, तन्निवृत्त्या तु तत्प्रयुक्तानां सर्वेषां बाधः। इदमेवाभिप्रेत्य ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं ज्ञाननिवर्त्यत्वं मिथ्यात्वमित्यद्वैतवादः॥

जीवभेदेनाविद्यानानात्ववादेऽपि तत्तज्जीवाश्रितसर्वाविद्योपहितब्रह्मविवर्ततामात्रस्य सर्वप्रपञ्चेषु स्वीकारात्, तत्राविद्यापरिणामिताया अस्वीकारात्, तत्तदविद्यानां दोषविधया निमित्तकारणतामात्रत्वात्, तत्तत्तिमिरादिदोषनाशेन तत्तद्द्वितीयचन्द्रादिमात्रस्य निवृत्तिवत् सर्वभ्रमतन्निरासौ निरूह्येते॥

अतः—"आत्मा वा अरे द्रष्टव्यः" इत्यत्र, "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती"त्यत्र वा वाक्यार्थज्ञानादन्यदुपासनं न विषयतया विवक्षितुं शक्यते; अन्यथोपासनस्यैव कर्मरूपाविद्यानिवर्तकतया कर्मविघातकेनोपासनेन कर्मणः सहभावः, तन्महिम्ना कर्मावबोधानन्तर्यस्य "अथातो ब्रह्मजिज्ञासे"त्यत्राथशब्दार्थता च श्रीभाष्याभिमता व्याहन्येत॥

अत्रायं निष्कर्षः—पक्षद्वयेऽपि वाक्यार्थज्ञानमेकं श्रोतव्यादिवाक्ये मोक्षोपयोगितया विवक्ष्यते। तत्र "श्रोतव्यः" इत्यनेन तत्साधनं विचारो विवक्ष्यते, दर्शनं तु वाक्यार्थोऽविद्यानिवर्तनक्षमं फलरूपं विवक्ष्यते॥

इदमेवात्रालोचनीयम्—यत् फलस्यापि निर्देशो विवक्षणीयो वा न वा। यद्यपेक्षितः, तर्हि श्रीभाष्यमते नात्र फलनिर्देशः, किन्तु साधनमात्रनिर्देशः। साध्यं तु प्रकरणादिवशेन, वाक्यान्तरवशेन वा लभ्यते। अद्वैतसिद्धान्ते तु फलस्याप्यत्रैव निर्देश इति। तत्र यद्यपि श्रीभाष्यमतेऽपि फलमत्रोपासनमेव विवक्ष्यते, तथापि तद्वस्तुगत्या साधनमिति विशेषः, अद्वैतमते तु—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः॥"

इति सिद्धान्ताद् मुक्तात्मस्वरूपमेव फलमत्र विवक्ष्यते, इति न फलसाधनयोरत्र साङ्कर्यदोषः॥

तत्र मतद्वयेऽपि ज्ञानमेव "विज्ञाय प्रज्ञां कुर्वीत" "अनुविद्य विजानाति" "ओमित्येवात्मानं ध्यायथ" "निचाय्य तं मृत्युमुखात् प्रमुच्यते" "आत्मा वा अरे द्रष्टव्यः" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इत्यादौ साध्य-साधनभावापन्नं विवक्ष्यत इति समानम्। तत्राद्वैतमते फलावस्था ज्ञानस्य न साक्षात्, किन्तु ज्ञेयस्यात्मन एव। आत्मज्ञानं साधनम, ज्ञातत्वेनोपलक्षित आत्मा फलमिति। तदुक्तम्—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।"

इति। तत्राऽऽत्मसाक्षात्कारस्य फलत्वं तदतिरिक्तस्य प्राप्यस्याभावेनेति ज्ञानमात्रादेव मोक्ष इति सिद्धान्ते स्वरसमुपपद्यते। तत्र साधनावस्थं ज्ञानं श्रवणादिकं विधेयम्, फलावस्थं तु दर्शनम्, यद्वस्तुतन्त्रम्, न चोदनातन्त्रम्, पुरुषतन्त्रं वा। व्यक्तं चैतद् भाष्ये—"चोदनाप्रवृत्तिभेदाच्चे"-त्यादौ। तत्र ब्रह्मसाक्षात्कारस्यानुष्ठानानपेक्षस्य फलत्वमेव, न तूपासनवदनुष्ठानापेक्षं साधनत्वमपीति। एवं च "अनुविद्य विजानाति" "विज्ञाय प्रज्ञां कुर्वीत" "आत्मा वा अरे द्रष्टव्यः" इत्यादौ साध्य-साधनभावेन भिन्नस्य फलावस्थस्य, साधनावस्थस्य च निर्देशः सम्यग् लगति, श्रीभाष्यमते तूपासनस्यैकस्यैवावस्थाभेदमात्रस्य प्रतिपादनेन न साध्य-साधनभावो भिन्नस्य॥

तत्र मतद्वयेऽपि ध्यानं विधेयं साधनमिति सम्प्रतिपन्नम्, फलं तु तत्रोपासनस्य दर्शनसमानाकारत्वे ब्रह्मलोकाद्यवाप्तिः, न तु ज्ञानमेव।

अद्वैतमते तु विधिपक्षे ध्यानफलं तत्त्वसाक्षात्कारः, इति साध्य-साधनभाव-प्रयुक्तो भेद उपपद्यते, येन "अनुविद्य विजानाति" "विज्ञाय प्रज्ञां कुर्वीत" "भक्त्या मामभिजानाति" इत्यादिभेदनिर्देशः स्वरसः, श्रीभाष्यमते तूपासनस्यैव सर्वत्र मोक्षसाधनत्वस्वीकारात् तस्य केनापि रूपेण मुख्यफलत्वाभावात् "अनुविद्य विजानाति" इत्यादौ ज्ञानभेदाम्नानं नोपपद्यते। अवस्थाभेदमात्रेण निर्देशे तु तस्य पुरुषतन्त्रस्यैकेनैव विधिना निर्वाहात् पृथग् विधानं वितथम् ॥

यत्र तु "आत्मानमेव ध्यायीत" इत्यादावेकेनैव विधिना ध्यानस्य विधानम्, तत्रोत्क्रान्त्यपेक्षा लोकान्तरावाप्तिरेव फलमिति वक्तव्यम्। तत्र च "अनुविद्य विजानाति" "भक्त्या मामभिजानाति" इति ज्ञानमात्रस्य फलताम्नानम्, तावन्मात्रेण मोक्षोपपत्तिः, न तूत्क्रान्त्यपेक्षः स इति ज्ञापयति। तथाचोत्क्रान्तिसापेक्षा मुक्तिर्गौणी सगुणोपासनफलम्, तन्निरपेक्षा मुख्या मुक्तिस्तु ज्ञातत्वोपलक्षितात्मरूपतामात्रमिति वक्तव्यम् ॥

तथा च यत्र ध्यानमात्रं निर्विशेषस्य विधीयते, तत्र साक्षात्कारमात्रं फलमित्येव तात्पर्यमिति वक्तव्यम्, न तूत्क्रान्तिसापेक्षायां मुक्तौ, इति ध्यानमात्रस्य "आत्मानमेव ध्यायीत" इत्यादौ विधिश्रवणं न ध्यानातिरिक्ते ज्ञानान्तरे प्रमाणमिति शक्यं वक्तुम् ॥

तत्र श्रीभाष्यमते वेदान्तगतदर्शनादिपदेनापि सगुणोपासनमेव विवक्ष्यत इति स्वीकारात् सगुणब्रह्मण्येव वेदान्तानां तात्पर्यमित्यभिप्रायो निर्विशेषब्रह्मवादस्यानौपनिषदत्वं सिद्धवत्कृत्यैव। एतन्मते हि सगुणमेव शास्त्रतात्पर्यविषयः। तज्ज्ञानमपि चोपासनरूपमेव मोक्षसाधनम्; निर्विशेषस्याब्रह्मत्वाद् न शास्त्रीयत्वम्, अस्य तूपासनमोक्षसाधनतावादो गौणमुक्तिमभिप्रेत्यैव, न तु मुख्यमुक्तिमभिप्रेत्येति वक्तव्यम्। उपासनातिरिक्तप्रमाणतन्त्रमपि वेदान्तशास्त्रतात्पर्यविषय इत्यस्वीकारे "भक्त्या मामभिजानाती"-त्यादौ भक्ति-ज्ञानयोः साध्य-साधनभावाम्नानमसङ्गतं स्यात् ॥

तत्र यद्यपि विद्युपास्त्योरेकार्थत्वमुपासनाप्रकरणे वर्तते, यतः सगुणं ब्रह्म, अन्यद्वोपास्यं निर्दिष्टम्; निर्विशेषप्रकरणे तु कुत्रापि नोपासनापदम्; बाधात्, तथापि "ब्रह्मवेदाप्नोति" "आत्मा वा अरे द्रष्टव्यः" "तत्त्वमसि" "अहं ब्रह्मास्मि" इत्यादौ केवलोपदेशप्रकरणे, यत्रोपास्तिपद-

मेव नास्ति, न चोपासनोपदेशः, तत्रोपासनम् , ध्यानं वा न विवक्ष्यते, इति ध्यानस्य, उपासनस्य वा दर्शनोपदेशातिरिक्तस्थल एव विदिधात्वर्थत्वम् ॥

तथाच दर्शनसमानाकारध्रुवानुस्मृतेरुपासनाप्रकरणे विवक्षायामपि केवलज्ञानोपदेशप्रकरणे विदिधात्वर्थो दर्शनं न ध्यानम । न हि "द्रष्टव्यः" इत्यत्र दर्शनं दर्शनसमानाकारं स्मरणम्; गौणार्थत्वापत्तेः । न हि स्मृति-दर्शनं नाम । न हि प्रमुष्टतत्ताकस्मृतेर्दर्शनपदेन कुत्रापि व्यपदेशः । न चोपासनस्योत्क्रमणद्वारा ब्रह्मलोकावाप्तिफलस्याधिष्ठानसाक्षात्कारस्येव बन्ध-निवर्तकत्वं सम्भवति; अन्यथा 'इदं रजतमि'त्यत्राख्यातिवादे रजतांशेऽपि दर्शनसमानाकारस्मृतित्वाद् रजतनिवर्तकत्वं स्यात्, इति भ्रमज्ञानं स्वस्य स्वत एव बाधकं स्यात् । अत एव—

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।"

इत्यत्र दृष्ट इति दर्शनमेव विवक्ष्यते । न चात्रापि दर्शनसमानाकारस्य विवक्षायां किमपि प्रमाणमस्ति । अतः "आत्मा वा अरे द्रष्टव्यः" इत्यत्र दर्शनं न ध्रुवानुस्मृतिः, येन तत्रापि ध्यानस्यैव विधानं विवक्षितं स्यात् ॥

वाक्यकारेण तत्र यद्यपि ध्यानस्य दर्शनसमानाकारत्वं विवक्ष्यते; तथापि ध्रुवानुस्मृतिरेव सर्वत्र दर्शनम्, न तदतिरिक्तोऽपरोक्षसाक्षात्कारो न कुत्रापीति तदाशयो न वक्तुं शक्यते । प्रकरणादिना निर्णयस्तु "आत्मा वा अरे द्रष्टव्यः" इत्यत्रोपासनाप्रकरणत्वनिश्चये स्यात् । न चात्र तथा निर्णयः; 'निदिध्यासितव्यः'इति पृथग् ध्यानविध्यनुपपत्तेः । ध्रुवानुस्मृत्यवस्थाविशेषमात्रानुवाद एवात्रेति निदिध्यासितव्य इत्यनुवादे तदुपन्यासो वितथः । दर्शनपदेनापरोक्षसाक्षात्कारविवक्षायां तु तत्साधनतया तदुपन्यासः, तद्विधानं वा सार्थकम् । अतो "द्रष्टव्यः" इत्यत्र दर्शनं न ध्रुवानुस्मृतिः ॥

सर्वासूपनिषत्सु मुख्यमोक्षसाधनतयाऽविद्यानिवर्तकाधिष्ठानसाक्षात्कारस्यैव मननादिसाधनकस्योपदेशो दृश्यते । उपासनासाध्या तु मुक्ति-र्गौणी, न तु मुख्या, इति सर्वप्रकरणसार्थक्यम् । आवृत्तिविधानं तूपासनस्यापि तैलधारावदविच्छिन्नज्ञानप्रवाहस्यैव ध्यानशब्दार्थत्वाद् तस्यावृत्तिं विनाऽनिर्वाहम् ॥

तत्राप्याप्रायणादावृत्तिस्तु "स खल्वेवमावर्तयन् यावदायुषं ब्रह्मलोक-मवाप्नोति" इतिवचनवशात्, 'किमिव वचनं न कुर्यात् नास्ति वचनस्या-

तिभारः' इति न्यायाच्च। अत्र ब्रह्मलोकशब्दस्वारस्यादुत्क्रमणापेक्षायां गौणमुक्तावेवोपासनस्यैवावृत्तिरित्यव गम्यते ॥

तत्रोपासनमदृष्टार्थं यद्यपि सकृदनुष्ठितमपि फलाय कल्पते, इति पृथगावृत्त्युपदेशस्य "स खल्वेवमावर्तयन्" इतिवचनैकवाक्यतयैव सार्थक्यं वक्तव्यम्। अद्वैतमते तु दृष्टार्थत्वाद् यावत्फलमावृत्त्युपदेशो यद्यपि विफलः; तथापि सिद्धेऽपि साक्षात्कारे यावत्प्रारब्धक्षयं विदेहकैवल्यपर्यन्तं जीवन्मुक्तानामपि तदावृत्तिव्यवस्थापनार्थमावृत्तिर्न्यायेन साधनीया ॥

अत एव "आप्रायणादि"ति सूत्रानन्तरम् "तदधिगम उत्तर-पूर्वाघयोरश्लेष-विनाशौ" "अनारब्धकार्ये एव तु तदवधेः" "भोगेन त्वितरे क्षपयित्वा ततः संपद्यते" इत्यादिन्यायाः सफलाः। एतैर्हि न्यायैः श्रवणादिफलं देहपातात् पूर्वमपि दृष्टार्थत्वाद् यद्यपि भवति, तेनाविद्यानिवृत्तिरपि; तथापि तत्प्रयुक्तप्रारब्धफलावरोधसम्भवात्, तस्यापि निवृत्तिपर्यन्तमावृत्तिरपेक्ष्यत इति ज्ञायते ॥

इदमेवाभिप्रेत्य ब्रह्मसिद्ध्यादौ प्रारब्धशेषाणामपि यावत्प्रारब्धभोगमभ्यस्यमानेन तत्त्वसाक्षात्कारेणैव निवृत्तिरिति प्रतिपाद्यते। तत्र तत्र प्रारब्धशेषाणामविद्यासंस्कारात्मनां स्वत एव निवृत्तिरित्युक्तिस्तु तदभ्यासोऽप्रयत्नसाध्यो जीवन्मुक्तानाम्, इत्यभिप्रायेणेत्युक्तमन्यत्र। श्रीभाष्यमते तु "स खल्वेवमि ति पूर्वोदाहृतप्रमाणसिद्धत्वात्, आप्रायणमावृत्तेरसन्दिग्धत्वाच्च आप्रायणाधिकरणं व्यर्थम् ॥

कठवल्ल्यां "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति तु "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके" इति निर्गलिताचिद्ग्रन्थि-सोपाधिकेश्वराधिष्ठान-जीवत्वेश्वरत्वोपलक्षितसंविन्मात्रप्रश्नोत्तरत्वात्, तत्र सगुणस्य ब्रह्मणः "अत्ता चराचरग्रहणादि"ति न्यायेन संविन्मात्राधिष्ठितत्वेनैव प्रक्रमाच्च जीवत्वोपलक्षितस्वरूप वेदान्तवाक्यमहातात्पर्यविषयसाक्षात्कारो न प्रवचनादिमात्रेण, किन्त्वाऽऽजीवन्मुक्त्यभ्यासेन, ततस्तु लब्धृ-लब्धव्यादिभेददृष्ट्यभावात् स्वत एव स्वस्वरूपाधिगमः, प्रबलप्रारब्धभोगान्ते विनैव स्वप्रयत्नसाध्यसाक्षात्काराभ्यासं स्वतः प्रवहत एवाखण्डाकारसाक्षात्काराद् ब्रह्मभावमभिप्रेत्य ॥

अयमेव न्यायो मुण्डकोपनिषद्गतेऽस्मिन् वाक्येऽपि। तत्रापि "पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलयन्ती"त्युपक्रम्य "नायमात्मा

प्रवचनेने"त्यादिवाक्यानि प्रवृत्तानि "सम्प्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः। ते सर्वगं सर्वतः प्राप्य धीराः मुक्तात्मानः सर्वमेवाविशन्ति" इत्युपसंहारमुखेन जीवन्मुक्तानां विनैवोत्क्रमणं स्वतः प्रवहत्स्वस्वरूपसाक्षात्कारेण संविन्मात्रतया देहपातेऽवस्थानमेव प्रतिपादयन्ति। उत्क्रमणसाध्यसगुणब्रह्मावाप्तिविवक्षायां नु "अत्रैव सम्प्रलीयन्ते" "सर्वगं सर्वतः प्राप्ये"त्यादि न सङ्गच्छेत ॥

यत्रोपासनासाध्यमोक्षतावादः प्रतीयते, तत्रोपासना यदि दर्शनसमानाकारा ध्रुवानुस्मृतिः, भक्तिर्वा, तस्या मोक्षसाधनत्वमेवोपनिषदर्थ इति वक्तव्यम्। तत्तु न सम्भवति, अन्यत्र—

"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥"

इति भक्तेर्दर्शनसमानाकारायाः आवर्त्यमानाया बुद्धियोगसाधनत्वं प्रतिपाद्यमानं नोपपद्येत। वस्तुतस्तस्य भक्तियोगपरे द्वितीये षट्के सगुणब्रह्मण एव तद्विषयस्य प्रकरणात्, तृतीयषट्कार्थभक्तिसाध्यज्ञानयोगसाधनत्वप्रतिपादनमत्रोपपद्यते, न तु ब्रह्मप्राप्तिसाधनत्वम् ॥

एतेन—

"नाहं वेदैर्न तपसा न दानेन न चेज्यया।
भक्त्या त्वनन्यया लभ्य अहमेवंविधोऽर्जुन ॥
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप।
पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ॥'

इति स्मृतिरपि—व्याख्याता। तत्र सविशेषब्रह्मणो भक्तिप्राप्यत्वे न विप्रतिपत्तिः, यद् भगवता गीताचार्येणाहमित्यनुसन्धीयते, तदेव हि भक्तियोगतत्त्वम्। न च तदतिरिक्तो ज्ञानयोगो नाम न कश्चिदपि योगो नास्ति; अन्यथा—

"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥"

इति भक्तियोगस्य बुद्धियोगसाधनत्वप्रतिपादनमसङ्गतं स्यात् ॥

तत्र भक्तिर्हि यदि तैलधारावदविच्छिन्नज्ञानसंततिः, तर्हि सविशेषस्येव निर्विशेषस्यापि सा ध्यानरूपा न विरुध्यते। अत एव—"आत्मा वा अरे द्रष्टव्यः" इति निर्विशेषप्रकरणेऽपि निदिध्यासनमुपदिश्यते। अनेन

चेदमवगम्यते—सविशेषोऽर्थः, मायोपहितं वा भक्तिमात्रलभ्यं तदादिपदाभिधेयम्, अहम्प्रतीत्यविषयश्च, निरूपाधिकस्वरूपं तु भक्त्या ज्ञातुम्, द्रष्टुम्, प्रवेष्टुं च न शक्यमित्येवात्र विवक्षितम् ॥

अत एवात्र—

"भक्त्या त्वनन्यया लभ्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप" ॥

इति । तत्राहम्पदेन सविशेषस्वरूपं भक्तिमात्रसमधिगम्यं प्रतिपाद्य "पुरुषः स परः पार्थ" इति निर्गलिताहङ्कारपरं चोपसंह्रियते । अत्र सगुणस्वरूपातिरिक्तनिर्विशेषस्वरूपाविवक्षायां पुनः "पुरुषः स परः पार्थ" इत्युपदेशो नोपपद्यते । तत्र—

'नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥
भक्त्या त्वनन्यया लभ्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥"

इति श्लोकद्वये विश्वरूपं स्वस्य प्रदर्श्य भगवता प्रोक्तम्—एवंविधोऽप्यहं भक्त्यैव ज्ञेयः । इतोऽप्यन्यत् तत्त्वेन ज्ञानम् दर्शनम्, तदात्मनैवावस्थितिश्च नानन्यया भक्त्यैव भवति, न भक्तिमात्रेण, इत्यनन्यभक्त्या निदिध्यासनेनैव तत्त्वेन ज्ञानम, साक्षात्कारो वेति ॥

इदं च श्रीभाष्यमतेऽनन्यभक्तेरेव दर्शनसमानाकारध्रुवानुस्मृतिरूपत्वाद् ज्ञातुं च द्रष्टुं चेति मुख्यं दर्शनमभिप्रेत्यैवेति वक्तव्यम् । तेन च "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वामि"ति श्रुतिरप्येतदेकवाक्यतया जातेऽद्वितीयात्मतत्त्वसाक्षात्कारे प्रारब्धशेषावस्थायां प्राप्यप्रापकभावावस्था न परमात्मनः शुद्धस्य, किन्त्वज्ञाननिवृत्त्या प्रारब्धशेषनिवृत्तिमात्रं परममुक्तावपेक्ष्यत इति प्रतिपादयति ॥

अयमेव न्यायः—

"पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ॥"

इत्यत्रापि । अयं हि श्लोकः—

"अव्यक्तोऽक्षर इत्याहुस्तामाहुः परमां गतिम् ।"
"यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥"

इति श्लोकानन्तरं प्रवृत्तः। अक्षरपदार्थश्चात्र शुद्धो मुक्तात्मेति श्रीभाष्यम्। तत्र मुक्तात्मनः प्रापकस्यैव प्राप्यत्वं जीवब्रह्माभेदं विना नोपपद्यते। न च गन्तुरेव परमगतित्वं मात्रयापि भेदे सम्भवति। तत्र प्रकृत्या निर्विकारस्वभावमुक्तात्मनोऽपि नियम्यत्वे तदतिरिक्तस्य नियामकस्यापि प्राप्यस्य सत्त्वे कथं परमात्मत्वं मुक्तात्मनः? अन्यथा—

"पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया।"

इति भक्त्या लभ्यत्वं परस्यापरस्य प्रतिपाद्यमानं कथमुपपद्यते? न चात्र परपुरुषो मुक्तात्मा श्रीभाष्यमते, इति भक्त्याऽनन्यया लभ्यत्वं निदिध्यासननिबन्धनसाक्षात्कारद्वाराऽप्राप्तत्वभ्रमनिवृत्तिमात्रम्॥

सति चैवमत्र, त्रयोदशाध्यायादौ च सर्वत्र, किं बहुना? विष्णुपुराणेऽपि परामूर्तम्, न मुक्तात्मा परमात्मनियम्यः, किन्तु स एव। एतेन —भक्त्यधीनं दर्शनमपि तस्यान्तिमविपाकावस्थेत्यपि—परास्तम्। का वा ध्रुवानुस्मृतेरपि विपाकावस्था दर्शनसमानाकारतातः? न च श्रवणम्, मननम्, निदिध्यासनं च ध्रुवानुस्मृतिपूर्वभावि तस्या विपाकावस्था नाम॥

तत्र ध्रुवानुस्मृतेर्भक्तिपदवाच्याया ब्रह्मविवेकादिभ्यो लाभे वाक्यकारोक्ते, तस्याः सगुणविषयत्वे वा नाद्वैतिनोऽपि विप्रतिपद्यन्ते, भक्त्यधीनं दर्शनं त्वपरम्, निदिध्यासनाधीनं तु न ध्रुवानुस्मृतिः, भक्तिर्वा। अतः श्रोतव्यादिवाक्यमद्वितीयात्मन एव निरूपणपरम्, न विवेकादिसाध्यभक्तिसाध्यसगुणब्रह्मपरम्, इति निदिध्यासनादिवाक्यमज्ञाननिवृत्तिक्षमनिर्विशेषसाक्षात्कारमभिप्रेत्यैव॥

इदमेवाभिप्रेत्य—"अथातो ब्रह्मजिज्ञासा" इत्यत्र 'अवगतिपर्यन्तं च ज्ञानं सन्वाच्याया इच्छायाः कर्मे'ति भाष्यम्, इति दर्शनमत्र परविद्यैव, न तु सा भक्तिमात्रम्, इति परविद्याधिकारिविशेषणं "शान्तो दान्त" इत्यादिपरविद्याप्रकरणगतवाक्यावगम्यसाधनचतुष्टयसम्पत्तिरेव, न तु कर्मावबोधमात्रम्॥

"विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते॥"

इति वाक्यम्—यद्यपि विद्या-कर्मणोः सहभावम्, मृत्युतरणे कर्मणोऽप्युपयोगं च प्रतिपादयति, विद्याशब्देन च भक्तिम्; तथापि न सा परा विद्या मुण्डकोपनिषद्युपदिश्यमाना, यस्यां भक्तिरप्युपयुज्यते॥

इदमेवाभिप्रेत्य कल्पतरुः—

"वशीकृते मनस्येषां सगुणब्रह्मशीलनात्।
तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम् ॥"

इति। अत्राविद्यया मृत्युतरणं भक्तिप्रतिबन्धकपापनिवृत्तिमात्रम्, न त्ववगतिपर्यन्तज्ञानाख्यपरविद्याप्रतिबन्धकमूलाविद्यानिवृत्तिः, यत्र तन्निवृत्तिव्यतिरेकेण प्राप्तव्यं किमपि नास्ति, इति तत्र तत्र विष्णुपुराणादौ—

"इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥' इति।

कर्मणां विद्यासहभावोपदेशोऽपि सगुणब्रह्मविद्या-कर्मणोः सहभावमभिप्रेत्यैव। कर्मयोगानुष्ठानेन भक्त्युत्पत्तिहेतूरजस्तमोनिवृत्तिः, ततो भक्तियोगः, येन ब्रह्मलोकाद्यवाप्तिः, ततस्तु ज्ञानयोगः, येन ब्रह्मभाव इति तु निष्कर्षः ॥

सर्वथा तु कर्मानुष्ठानार्थं कर्मस्वरूपज्ञानमात्रमपेक्षितम्, यदेव पूर्वमीमांसावसेयम्, ब्रह्मज्ञानं तु ब्रह्मविचाराधीनम्, न तु कर्मविचाराधीनम्, इति कर्मविचारानन्तर्यं न ब्रह्ममीमांसायाः, यत्र कर्मफलानित्यत्वज्ञाननिबन्धनेहामुत्रफलभोगविरागादिसाधनचतुष्टयसम्पत्तिरेव प्रयोजिका, इति तदानन्तर्यमेव "अथातो ब्रह्मजिज्ञासे"त्यत्राथशब्दार्थः ॥

न च नित्यानित्यवस्तुविवेको ब्रह्ममीमांसावसेयः। स हि कर्मफलानित्यत्वादिनिर्णयाधीन इति सम्प्रतिपन्नम्। इदमेवात्रानुयुज्यते—तत्कथं कर्मफलानित्यत्वादिकर्मस्वरूपज्ञानमात्रोपयोगि कर्ममीमांसावसेयम्? येन तदानन्तर्यमथशब्दार्थः स्यात्। तत्र यदि कर्मफलानित्यत्वं जन्यत्वादिनाऽनुभीयते, ब्रह्मनित्यता त्वापाततो विचारं विनापि श्रुतिमात्रेण निश्चीयते, तर्हि नित्यानित्यवस्तुविवेकादीनां ज्ञानं कुतो ब्रह्ममीमांसावसेयम्? अन्यथा ब्रह्मनित्यत्वं श्रीभाष्यमते ब्रह्मजिज्ञासां विना कुतोऽवगतम्? इति नित्यानित्यवस्तुविवेको न धर्ममीमांसावसेयः, किन्तु जन्यत्वश्रुति-तदभावाभ्यामेव, इति न कर्मफलानित्यत्वं पूर्वमीमांसायाः, उत्तरमीमांसाया वा विषयः ॥

तत्र यदि शम-दमादीनां ब्रह्मजिज्ञासासाधनत्वं ब्रह्ममीमांसैकावसेयम्, इति तदवसेयस्य शम-दमादिसाधनत्वस्य न ब्रह्ममीमांसातः

पूर्वं नावगतिः, तर्हि श्रीभाष्यमतेऽपि "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इत्युत्तरमीमांसाऽवगम्यत्वात् कर्मापेक्षायाः, तद्विचारापेक्षायाश्चोत्तर-मीमांसैक्यावसेयत्वात् कथं तदानन्तर्यमथशब्दार्थः स्यात् ?

तत्राद्वैतसिद्धान्तेऽत्र कर्मापेक्षामात्रं गम्यते, सा तु जन्मान्तरीयेणाप्य-नुष्ठितेन कर्मणा भवति। न चापेक्षामात्रेण सर्वं सर्वस्याधिकारिविशेषणं भवतीत्यादि पूर्वमेव निरूपितम्। अत एव—"शम-दमाद्युपेतः स्यादि"त्यत्र शमादीनामनुवृत्तिर्ब्रह्ममीमांसाकाल उपदिष्टः, न तु कर्मणामिवापेक्षामात्रम्॥

'ऐकशास्त्र्यवादे ब्रह्मजिज्ञासेत्येव प्रथमप्रतिज्ञा, "अथातो धर्म-जिज्ञासे"ति तु तृतीयाध्यायतुरीयपादेन पाठक्रमादर्थक्रमो बलीयानि"ति-न्यायेन सङ्गते'ति श्रुतिप्रकाशिकापर्यालोचने तु सर्वाऽपि जैमिनीय-मीमांसा ब्रह्मजिज्ञासासाधनाध्यायशेषत्वात् कर्मविचारसाधनत्वमुत्तर-मीमांसयैवावसेयम्, इति कथं तदानन्तर्यपक्षेऽपि नान्योन्याश्रयः ?

सर्वथा तु नित्यानित्यवस्तुविवेकादीनां ब्रह्मजिज्ञासासाधनत्वस्य धर्ममीमांसैकावगम्यतार्तीयश्रुतिलिङ्गादिन्यायापेक्षत्वेऽप्युद्गीथाद्युपासना-नामपि ब्रह्मदृष्टिरूपाणां ब्रह्मज्ञानापेक्षितत्वेऽपि, किं बहुना ? कर्मणा-मपि विविदिषायाम्, वेदने वोपासनाख्ये, तत्त्वसाक्षात्कारे, तत्प्रति-बन्धकनिवृत्तौ वाऽपेक्षायामपि नात्र तदानन्तर्यमथशब्दार्थः; शम-दमादेरिव ब्रह्मजिज्ञासाकालिकानुवृत्तेः कर्मावबोधे, कर्मविचारे वा ब्रह्म-मीमांसायाम्, कर्मजिज्ञासायामन्यत्र वाऽश्रवणात्, इत्यथशब्दार्थसाधन-चतुष्टयसंपत्त्यानन्तर्यमेव; न तु कर्मावबोधानन्तर्यमित्यद्वैतिनां लघु-सिद्धान्तोऽथशब्दार्थविचारमात्रमधिकृत्य॥

वस्तुतस्तु—न कर्मविचारानन्तरं ब्रह्ममीमांसेतिवादो ब्रह्ममीमांसायां स-गुणब्रह्मवाद एव तात्पर्यमिति विवक्षायां नोपपद्यते। धर्ममीमांसायां हि वेदा-ध्ययनानन्तर्यमधीतस्य वेदस्यापि कर्मणा सहभावेनार्थज्ञानद्वाराऽव्यभिचरि-तकर्मानुसम्बन्धेन विनाऽध्ययनं गृहीतानामवेदत्वेन च युक्तं तदानन्तर्यं धर्म-मीमांसायाम्; वेदवत् तदध्ययनस्यापि तदर्थावगमद्वारा कर्मोपकारकत्वात्॥

न चैवं कर्मविचार-ब्रह्मविचारयोः; अध्ययनविधेरक्षरग्रहणार्थत्वमात्र-मिति पक्षे कर्म-ब्रह्मविचारयो रागप्राप्तत्वेन श्रीभाष्यमतेऽवैधत्वात्, आचा-र्योपदेशमात्रेण चोपनीतस्य सन्ध्योपासनाद्यनुष्ठानवत् कर्मानुष्ठाननिर्वाहात्, तदर्थमपि कर्मविचारानैयत्यात्, कर्मणां विविदिषार्थत्वपक्षेऽपि रागप्राप्तायां ब्रह्ममीमांसायां नियमेन कर्मविचारस्यानपेक्षणात्, कर्मविचारशब्देन जैमि-

नीयद्वादशलक्षण्या विवक्षानुसारात् तदनन्तरं देवतामीमांसाया एव प्रस्तुतत्वाच्च ब्रह्ममीमांसापूर्ववृत्तत्वं बाधितम् । षोडशलक्षणस्य कृत्स्नस्य कर्मविचारत्वे तु पूर्वोक्तरीत्या सगुणब्रह्मस्वरूपस्यापि देवतामीमांसया निर्णीतत्वात् स्वतन्त्राऽपरा ब्रह्मजिज्ञासा न वर्तते, इत्य"थातो ब्रह्मजिज्ञासे"त्यत्र न कर्मविचारानन्तर्यवादः साम्प्रतम् । निर्विशेषब्रह्मवादस्यैवौपनिषदत्वे तत्र-पूर्वोक्तरीत्या कर्मणां विरोधित्वेनानुपयोगाद् न कर्मविचारानन्तर्यवादस्योत्थानमपि । व्यक्तं च तत्र तत्राद्वैतनिबन्धेषु निर्विशेषवादस्यैवौपनिषदत्वम् ॥

## महासिद्धान्तावतरणम्

अथ ब्रह्मपदार्थम्, जिज्ञासापदघटकज्ञाधात्वर्थं चाधिकृत्याद्वैतिनाम्, श्रीभाष्यकाराणां चाशयसंकलनमवसरप्राप्तम्, यदेवोपलक्ष्याथशब्दार्थनिर्णयोऽप्यात्मानं लभते । तत्राद्वैतिनां मतेऽशेषविशेषप्रत्यनीकं संविन्मात्रं ब्रह्मपदार्थः; ज्ञानं त्वविद्यानिवर्तकाधिष्ठानतत्त्वसाक्षात्कारः । अविद्या च ब्रह्माश्रय-विषयिका, भावरूपा, अनिर्वचनीयेयं स्वयं सर्वप्रपञ्चात्मना परिणममाना ब्रह्म स्वाश्रयम्, स्वविषयमात्रं वा विवर्तयन्ती च प्रसिद्धा, यस्या अधिष्ठानसाक्षात्कारमात्रनिवर्त्यत्वम्, नोपासनानिवर्त्यत्वमित्यादिकमत्र प्रसक्तानुप्रसक्तं बहु निर्णेयम्, इति महासिद्धान्तविधया बहूनि तत्त्वानि सांप्रतं विचारमर्हन्ति । तानि यथा—

(१) निर्विशेषवस्तुन औपनिषदत्वम्, (२) तस्य निर्विकल्पप्रत्यक्षमात्रसिद्धत्वम्, (३) प्रत्यक्षस्य प्रमाणस्य भेदानवगाहिनः सन्मात्रावगाहित्वम् (४) व्यावर्तमानत्वेन घटादीनामसत्त्वम्, (५) अनुवर्तमानत्वेन ब्रह्मणः सत्त्वम् (६) अनुभूतेः सद्रूपत्वम् (७) अनुभूतिस्वप्रकाशत्वम् (८) प्रागभावाभावेन संविद उत्पत्त्यभावः, तत एव नित्यत्वम् (९) तत एव संविदो विकारान्तराभावः (१०) अनुभूतेर्दृश्यधर्मशून्यत्वम्, निर्विशेषत्वं वा, (११) संविद एवात्मत्वम् (१२) अहमर्थैकदेशसंविदंशस्यैवात्मत्वम्, नाहमर्थस्य, ततोऽहमर्थस्यानात्मत्वमेव, नात्मत्वम्, (१३) अहमर्थस्यान्याधीनप्रकाशस्यास्वप्रकाशत्वम्, जडत्वाच्चानात्मत्वम्, संविद एव तद्विपरीताया आत्मत्वम्, अत एव नात्मनो मुख्यस्य ज्ञातृत्वम्, (१४) अनुभूतिनिर्विषयत्वम् (१५) देहस्यानात्मनो ज्ञातृत्वस्य मिथ्यात्वम्, (१६) ज्ञातृत्वस्य विक्रियात्मत्वम्, न तु स्वाभाविकत्वम् (१७) अहंकारस्यैवाऽऽ-

त्मनो न ज्ञातृत्वम्, ज्ञत्वं च चिच्छायापत्त्या (१८) मुक्तावहमर्थानुवृत्त्यभावः (१९) अहङ्कारस्य क्षेत्रान्तर्गतत्वेनानात्मत्वम्, (२०) दोषमूलतयाऽन्यथासिद्धस्य भेदावलम्बिप्रत्यक्षस्य प्रमाणस्य शास्त्रबाध्यत्वेन तन्महिम्ना नाहमर्थात्मत्वम् (२१) स्वतो मिथ्यात्वेऽपि शास्त्रस्य सत्यब्रह्मविषयकत्वसम्भवः, सत्यस्यापि मिथ्याभूतप्रपञ्चहेतुत्वसम्भवः, स्वप्नवद् मिथ्याभूतस्याप्यर्थक्रियाकारित्वं च (२२) सद्विद्या-परविद्या-सत्यज्ञानादिवाक्य-निर्गुणवाक्यानां ब्रह्मणो ज्ञानस्वरूपत्वमात्रं बोधयतां सगुणश्रुतिविरुद्धानामेव प्राबल्यात् ब्रह्मणि भेदनिषेधपराणाम्, अन्येषां च वेदान्तवाक्यानाम्, "न स्थानतोऽपि" "मायामात्रम्" "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यादिसूत्राणाम्, बहुतरबलवद्गीता-विष्णुपुराणवाक्यानामपि निर्विशेषवाद एव स्वारस्यम्, (२३) तत्सविशेषत्वस्य स्वरूपतिरोधान-विविधविचित्रविक्षेपकर-सदसदनिर्वचनीयाभावानात्मक-ज्ञाननिवर्त्य-मिथ्याभूत-ब्रह्माश्रयविषयाविद्यारूपदोषकल्पितत्वम्, तेन पारमार्थिकनिर्विशेषत्वाविरोधः, (२४) तेन प्रसङ्गेनाविद्याया जीव-ब्रह्मान्यतराश्रयत्वयोगः, (२५) सदसद्विलक्षणत्वादिनाऽनिर्वचनीयत्वम्, (२६) ज्ञानप्रागभावव्यतिरेकेण प्रत्यक्षादिगम्यभावरूपत्वम्, तदुपधानेन ब्रह्मणो विवर्तमानत्वम्, ज्ञानप्रागभावरूपत्वासम्भवः, अज्ञानेन ब्रह्मावरणस्य सम्भवः, (२७) अधिष्ठानाश्रयकत्व-तद्विषयकत्वादिविशिष्टभावरूपस्याज्ञानस्यानुमानिकत्वम्, सप्तविधानुपपत्त्याः, स्वप्नदृष्टान्तेन सदसत्ख्यात्यादेश्चासम्भवेनानिर्वचनीयख्यातिसमर्थनम्, (२८) तस्याः "अनृतेन प्रत्यूढाः" इत्यादिश्रुतिसिद्धत्वम् (२९) इतिहास-पुराणसिद्धत्वम्, (३०) शोधकवाक्यवत् तत्त्वमस्यादिमहावाक्यानामप्यखण्डार्थत्वम् (३१) तत्र बाधायामेव सामानाधिकरण्यम्, (३२) निर्विशेषज्ञानस्यैवाविद्यानिवर्तकत्वस्य श्रुतिसिद्धत्वम् (३३) ऐक्यज्ञानस्याज्ञाननिवर्तकत्वम्, तन्निवृत्त्युपपत्तिरित्यादीनि ॥

तत्रायमद्वैतराद्धान्तः

अशेषविशेषप्रत्यनीकचिन्मात्रं ब्रह्मैव परमार्थः, तदतिरेकि-नानाविध-ज्ञातृ-ज्ञेय-तत्कृतभेदादि सर्वं तस्मिन्नेव परिकल्पितं मिथ्याभूतम्; "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं

परिपश्यन्ति धीराः" "सत्यं ज्ञानमनन्तं ब्रह्म" "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" "यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्।" "न दृष्टेर्द्रष्टारं पश्येः" "न मतेर्मन्तारं मन्वीथाः" "आनन्दो ब्रह्म" "इदं सर्वं यदयमात्मा" "नेह नानाऽस्ति किञ्चन" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् केन कं विजानीयात्" "वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति" "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्,"

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तद् ज्ञानं ब्रह्मसंज्ञितम्॥"
"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥"
"परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते॥"
"यदेतद् दृश्यते मूर्तमेतद् ज्ञानात्मनस्तव।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः॥
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे॥
ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत्।
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर॥
"तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत्।
विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः॥"
"यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम।
तदेषोऽहमयं चान्यो वक्तुमेवमपीष्यते॥"
"वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः।
अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः॥"
"सोऽहं स च त्वं स च सर्वमेत-
दात्मस्वरूपं त्यज भेदमोहम्॥

इतीरितस्तेन स राजवर्य-
स्तत्याज भेदं परमार्थदृष्टिः ॥

"विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥"
"अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः ॥"
"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ! ।"
"न तदस्ति विना यत् स्याद् मया भूतं चराचरम् ॥"

इत्यादिभिर्वस्तुस्वरूपोपदेशपरैः शास्त्रैः, निर्विशेष-चिन्मात्रं ब्रह्मैव सत्यम् , अन्यत् सर्वं मिथ्येत्यभिधानात् ॥

मिथ्यात्वं नाम प्रतीयमानत्वपूर्वकयथावस्थितवस्तु-ज्ञाननिवर्त्यत्वम् ; यथा रज्ज्वाद्यधिष्ठानकसर्पादेः । दोष-वशाद्धि तत्र तत्कल्पनम् । एवं चिन्मात्रवपुषि परे ब्रह्मणि दोषपरिकल्पितमिदं देव-तिर्यङ्मनुष्य-स्थावरादिभेदं सर्वं जगद् यथावस्थितब्रह्मस्वरूपावबोधबाध्यं मिथ्यारूपम् ॥

दोषश्च स्वरूपतिरोधान-विविधविचित्रविक्षेपकरी सद-सदनिर्वचनीयाऽनाद्यविद्या ; "अनृतेन हि प्रत्यूढाः" "तेषां सत्यानां सतामनृतमपिधानम्" "नासदासीन्नो सदासीत्त-दानीं तम आसीत्तमसा गूढमग्रे प्रकेतम्" "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" "इन्द्रो मायाभिः पुरु-रूप ईयते" "मम माया दुरत्यया" "अनादिमायया सुप्तो यदा जीवः प्रबुध्यते"—इत्यादिभिः । निर्विशेषचिन्मात्रं ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वरूपं स्वगतनानात्वं पश्यतीत्यवगम्यते । यथोक्तम्—
ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः ।
ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ॥
यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम् ।
तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥"
"तस्मान्न विज्ञानमृतेऽस्ति किञ्चित् क्वचित् कदाचिद्
द्विज ! वस्तुजातम् ।
विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाऽभ्युपेतम् ॥

ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।
एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥
सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत्तु यत् संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥"

इति । अस्याश्चाविद्याया निर्विशेषचिन्मात्रब्रह्मात्मैकत्वविज्ञानेन निवृत्तिं वदन्ति—"न पुनर्मृत्यवे तदेकं पश्यति" "न पश्यो मृत्युं पश्यति" "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति" "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥" "ब्रह्म वेद ब्रह्मैव भवति" "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाः" इत्याद्याः श्रुतयः । अत्र मृत्युशब्देनाविद्याऽभिधीयते । यथा सनत्सुजातवचनम्—"प्रमादं वै मृत्युमहं ब्रवीमि सदाऽप्रमादममृतत्वं ब्रवीमि"—इति ॥

"सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्म" इत्यादिशोधकवाक्यावसेयनिर्विशेषचिन्मात्रस्वरूपब्रह्मात्मैकत्वविज्ञानं च—"अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद" "अकृत्स्नो ह्येषः" "आत्मेत्येवोपासीत" "तत्त्वमसि" "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते तद्योऽहं सोऽसौ सोऽहमस्मि" इत्यादिवाक्यसिद्धम् । वक्ष्यति चैतदेव—"आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति । तथाच वाक्यकारः "आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः" इति ॥ अनेन च ब्रह्मात्मैकत्वविज्ञानेन मिथ्यारूपस्य सकारणस्य बन्धस्य निवृत्तिर्युक्ता ॥

ननु सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा कथमिव शास्त्रजन्यविज्ञानेन क्रियते ?

कथं वा 'रज्जुरेषा, न सर्पः' इति ज्ञानेन प्रत्यक्षविरुद्धा सर्पनिवृत्तिः क्रियते ?

तत्र द्वयोः प्रत्यक्षयोर्विरोधः, इह तु प्रत्यक्षमूलस्य शास्त्रस्य प्रत्यक्षस्य चेति चेत्,

तुल्ययोर्विरोधे वा कथं बाध्य-बाधक-भावः ?

पूर्वोत्तरयोर्दुष्टकारणजन्यत्व-तदभावाभ्यामिति चेत्, शास्त्र-प्रत्यक्षयोरपि समानमेतत् ॥

एतदुक्तं भवति—बाध्य-बाधकभावे तुल्यत्व-सापेक्षत्व-निरपेक्षत्वादि न कारणम्; ज्वालाभेदानुमानेन प्रत्यक्षोपमर्दायोगात्। तत्र हि ज्वालैक्यं प्रत्यक्षेणावगम्यते। एवं च सति द्वयोः प्रमाणयोर्विरोधे यत् संभाव्यमानान्यथासिद्धि, तद् बाध्यम्, अनन्यथासिद्धमनवकाशमितरद् बाधकम् इति सर्वत्र बाध्य-बाधकभावनिर्णय इति ॥

तस्मादनादिनिधनाविच्छिन्नसंप्रदायासंभाव्यमानदोषगन्धानवकाश-शास्त्रजन्यनिर्विशेष-नित्य-शुद्ध-मुक्त-बुद्ध-स्वप्रकाश-चिन्मात्रब्रह्मात्मभावावबोधेन संभाव्यमानदोषसावकाश—प्रत्यक्षादिसिद्ध—विविधविकल्परूपबन्धनिवृत्तिर्युक्तैव। संभाव्यते च विविधविकल्पभेदप्रपञ्चग्राहिप्रत्यक्षस्यानादिभेदवासनादिरूपाविद्याख्यो दोषः ॥

ननु—अनादिनिधनाविच्छिन्नसंप्रदायतया निर्दोषस्यापि शास्त्रस्य—"ज्योतिष्टोमेन स्वर्गकामो यजेत"त्येवमादेर्भेदावलम्बिनो बाध्यत्वं प्रसज्येत, सत्यम्; पूर्वापरापच्छेदे पूर्वशास्त्रवद् मोक्षशास्त्रस्य निरवकाशत्वात् तेन बाध्यत एव। वेदान्तवाक्येष्वपि सगुणब्रह्मोपासनपराणां शास्त्राणामयमेव न्यायः; निर्गुणत्वात् परस्य ब्रह्मणः ॥

ननु" यः सर्वज्ञः सर्ववित्", "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञान-बल-क्रिया च" "सत्यकामः सत्यसङ्कल्पः" इत्यादिब्रह्मस्वरूपप्रतिपादनपराणां शास्त्राणां कथं बाध्यत्वम्? निर्गुणवाक्यसामर्थ्यादिति ब्रूमः ॥

एतदुक्तं भवति—"अस्थूलमनण्वह्रस्वमदीर्घम्" "सत्यं ज्ञानमनन्तं ब्रह्म" "निर्गुणम्" "निरञ्जनम्" इत्यादिवाक्यानि निरस्तसमस्तविशेष-कूटस्थ-नित्यचैतन्यं ब्रह्मेति प्रतिपादयन्ति, इतराणि च सगुणम्। उभयविधवाक्यानां विरोधे तेनैवापच्छेदन्यायेन निर्गुणवाक्यानां गुणापेक्षत्वेन परत्वाद् बलीयस्त्वमिति न किंचिदपहीनम् ॥

ननु च "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्र सत्यं-ज्ञानादयो गुणाः प्रतीयन्ते, नेत्युच्यते; सामानाधिकरण्येनैकार्थत्वप्रतीतेः ॥

अनेकगुणविशिष्टाभिधानेऽप्येकार्थत्वमविरुद्धमिति चेत्, अनभिधानज्ञो देवानां प्रियः। एकार्थत्वं नाम सर्वपदानामर्थैक्यम्; विशिष्टपदार्थाभिधाने विशेषणभेदेन पदानामर्थभेदोऽवर्जनीयः, ततश्चैकार्थत्वं न सिध्यति ॥

एवं तर्हि सर्वपदानां पर्यायता स्यात्; विशिष्टार्थाभिधायित्वात्, एकार्थाभिधायित्वेऽप्यपर्यायत्वमवहितमनाः शृणु। एकत्वतात्पर्यनिश्चयादेकस्यैवार्थस्य तत्तत्पदार्थविरोधिप्रत्यनीकत्वपरत्वेन सर्वपदानामर्थवत्त्वम्, 'एकार्थत्वम्' अपर्यायता च ॥

एतदुक्तं भवति—लक्षणतः प्रतिपत्तव्यं ब्रह्म सकलेतरपदार्थविरोधिरूपम्। तद्विरोधिरूपं सर्वमनेन पदत्रयेण फलतो व्युदस्यते। तत्र सत्यपदं विकारास्पदत्वेनासत्याद् वस्तुनो व्यावृत्तब्रह्मपरम्। ज्ञानपदं चान्याधीनप्रकाशजडरूपाद् वस्तुनो व्यावृत्तपरम्। अनन्तपदं च देशतः, कालतः, वस्तुतश्च परिच्छिन्नाद् व्यावृत्तपरम् ॥

न च व्यावृत्तिर्भावरूपः, अभावरूपो वा धर्मः, अपि तु सकलेतरविरोधि ब्रह्मैव; यथा शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिस्तत्तत्पदार्थस्वरूपमेव, न धर्मान्तरम्। एवमेकस्यैव वस्तुनः सकलेतरविरोध्याकारतामवगमयदर्थवत्तरम्, एकार्थम्, अपर्यायं च पदत्रयम् ॥

तस्मादेकमेव ब्रह्म स्वयंज्योतिर्निर्धूतनिखिलविशेषमित्युक्तं भवति। एवं वाक्यार्थप्रतिपादने सत्येव—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यादिभिरैकार्थ्यम्। "यतो वा इमानि भूतानि जायन्ते" "सदेव सोम्येदमग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादिभिर्जगत्कारणतयोपलक्षितस्य ब्रह्मणः स्वरूपमिदमुच्यते "सत्यं ज्ञानमनन्तं ब्रह्मे"ति ॥

तत्र सर्वशाखाप्रत्ययन्यायेन कारणवाक्येषु सर्वेषु सजातीय-विजातीयव्यावृत्तमद्वितीयं ब्रह्मावगतम्। जगत्कारणतयोपलक्षितस्य ब्रह्मणोऽद्वितीयस्य प्रतिपिपादयिषितं स्वरूपं तदविरोधेन वक्तव्यम्। अद्वितीयत्वश्रुतिर्गुणतोऽपि सद्वितीयतां न सहते; अन्यथा "निरञ्जनम्" "निर्गुणम्" इत्यादिभिश्च विरोधः। अतश्चैतद् लक्षणवाक्यमखण्डैकरसमेव प्रतिपादयति॥

ननु—सत्य-ज्ञानादिपदानां स्वार्थप्रहाणेन स्वार्थविरोधिव्यावृत्तवस्तुस्वरूपोपस्थापनपरत्वे लक्षणा स्यात्, नैष दोषः; अभिधानवृत्तेरपि तात्पर्यवृत्तेर्बलीयस्त्वात्। सामानाधिकरण्यस्य ह्यैक्य एव तात्पर्यमिति सर्वसंमतम्॥

ननु सर्वपदानां लक्षणा न दृष्टचरी, ततः किम्? वाक्यतात्पर्याविरोधे सत्येकस्यापि न दृष्टा। समभिव्याहृतपदसमुदायस्यैतत्तात्पर्यमिति निश्चिते सति द्वयोः, त्रयाणाम्, सर्वेषां वा तदविरोधायैकस्येव लक्षणा न दोषाय॥

तथाच शास्त्रस्थैरभ्युपगम्यते। कार्यवाक्यार्थवादिभिर्लौकिकवाक्येषु सर्वेषां पदानां लक्षणा समाश्रीयते। अपूर्वकार्य एव लिङादेर्मुख्यवृत्तत्वात् लिङादिभिः क्रिया कार्यं लक्षणया प्रतिपाद्यते। कार्यान्वितस्वार्थाभिधायिनां चेतरेषां पदानामपूर्वकार्यान्वित एव मुख्यार्थ इति क्रियाकार्यान्वितप्रतिपादनं लाक्षणिकमेव। अतो वाक्यतात्पर्याविरोधाय सर्वपदानां लक्षणाऽपि न दोषः। अत इदमेवार्थजातं प्रतिपादयन्तो वेदान्ताः प्रमाणम्॥

प्रत्यक्षादिविरोधे च शास्त्रस्य बलीयस्त्वमुक्तम्। सति च विरोधे बलीयस्त्वं वक्तव्यम्। विरोध एव न दृश्यते; निर्विशेषसन्मात्रब्रह्मग्राहित्वात् प्रत्यक्षस्य॥

ननु—'घटोऽस्ति' 'पटोऽस्ति' इति नानाकारवस्तुविषयं प्रत्यक्षं कथमिव सन्मात्रग्राहीत्युच्यते? विलक्षणग्रहणाभावे सति सर्वेषां ज्ञानानामेकविषयत्वेन धारावाहिकविज्ञानव-

देकव्यवहारहेतुतैव स्यात्, सत्यम्; तथैवात्र विविच्यते। कथम्? 'घटोऽस्ती' त्यत्रास्तित्वम्, तद्भेदश्च व्यवह्रियते॥

न च द्वयोरपि व्यवहारयोः प्रत्यक्षमूलत्वं संभवति; तयोर्भिन्नकालज्ञानफलत्वात्, प्रत्यक्षज्ञानस्य चैकक्षणवर्तित्वात्। तत्र स्वरूपं वा, भेदो वा प्रत्यक्षस्य विषय इति विवेचनीयम्। भेदग्रहणस्य स्वरूपग्रहण-तत्प्रतियोगिस्मरणसव्यपेक्षत्वादेव स्वरूपविषयत्वमवश्याश्रयणीयमिति न भेदः प्रत्यक्षेण गृह्यते। अतो भ्रान्तिमूल एव भेदव्यवहारः॥

किंच भेदो नाम कश्चित् पदार्थो न्यायविद्भिर्निरूपयितुं न शक्यते। भेदस्तावन्न वस्तुस्वरूपम्; वस्तुस्वरूपे गृहीते स्वरूपव्यवहारवत् सर्वस्माद् भेदव्यवहारप्रसक्तेः। न च वाच्यम्—स्वरूपे गृहीतेऽपि भिन्न इति व्यवहारस्य प्रतियोगिस्मरणसव्यपेक्षत्वात्, तत्स्मरणाभावेन तदानीमेव न भेदव्यवहारः—इति; स्वरूपमात्रभेदवादिनो हि प्रतियोग्यपेक्षा नोत्प्रेक्षितुं क्षमा; स्वरूप-भेदयोः स्वरूपत्वाविशेषात्। यथा—स्वरूपव्यवहारो न प्रतियोग्यपेक्षः, भेदव्यवहारोऽपि तथैव स्यात्। 'हस्तः' 'करः' इतिवत् 'घटः' 'भिन्नः' इति पर्यायत्वं च स्यात्। नापि धर्मः; धर्मत्वे सति तस्य स्वरूपाद् भेदोऽवश्याश्रयणीयः; अन्यथा स्वरूपमेव स्यात्। भेदे च तस्यापि भेदस्तद्धर्मस्तस्यापीत्यनवस्था॥

किंच जात्यादिविशिष्टवस्तुग्रहणे सति भेदग्रहणम्, भेदग्रहणे सति जात्यादिविशिष्टवस्तुग्रहणमित्यन्योन्याश्रयणम्। अतो भेदस्य दुर्निरूपत्वात् सन्मात्रस्यैव प्रकाशकं प्रत्यक्षम्॥

किंच 'घटोऽस्ति' 'पटोऽस्ति' 'घटोऽनुभूयते' इति सर्वे पदार्थाः सत्तानुभूतिघटिता एव दृश्यन्ते। अत्र सर्वासु प्रतिपत्तिषु सन्मात्रमनुवर्तमानं दृश्यते, इति तदेव परमार्थः। विशेषास्तु व्यावर्तमानतयाऽपरमार्थाः; रज्जुसर्पादिवत्। यथा रज्जुरधिष्ठानतयाऽनुवर्तमाना

परमार्था सती, व्यावर्तमानाः, सर्प-भूदलनाम्बुधारादयोऽ-परमार्थाः ॥

ननु रज्जुसर्पादौ 'रज्जुरियं न सर्पः' इत्यादि-रज्ज्वाद्यधिष्ठानयाथार्थ्यज्ञानेन बाधितत्वात् सर्पादेर-पारमार्थ्यम्, न व्यावर्तमानत्वात्। रज्ज्वादेरपि पार-मार्थ्यं नानुवर्तमानतया, किन्त्वबाधितत्वात्, अत्र तु घटादीनामबाधितानां कथमपारमार्थ्यम्?

उच्यते; घटादौ दृष्टा व्यावृत्तिः, सा किंरूपेति विवेचनीयम्। किं घटोऽस्तीत्यत्र पटाद्यभावः? सिद्धं तर्हि घटोऽस्तीत्यनेन पटादीनां बाधितत्वम्। अतो बाध-फलभूता विषयनिवृत्तिर्व्यावृत्तिः। सा व्यावर्तमाना-नामपारमार्थ्यं साधयति। रज्जुवत् सन्मात्रमबाधितमनु-वर्तते। तस्मात् सन्मात्रातिरेकि सर्वमपरमार्थः। प्रयोगश्च भवति—सन्, परमार्थः, अनुवर्तमानत्वात्; रज्जुसर्पादौ रज्ज्वादिवत्। घटादयः, अपरमार्थाः, व्यावर्तमानत्वात्; रज्ज्वाद्यधिष्ठानसर्पादिवत्—इति। एवं सत्यनुवर्तमाना-ऽनुभूतिरेव परमार्थः, सैव सती ॥

ननु सन्मात्रमनुभूतेर्विषयतया ततो भिन्नम्, नैवम्; भेदो हि प्रत्यक्षाविषयत्वात्, दुर्निरूपत्वाच्च पुरस्तादेव निरस्तः। अत एव सतोऽनुभूतिविषयभावोऽपि न प्रमाणपदवीमनुसरति। तस्मात् सदनुभूतिरेव ॥

सा च स्वतः सिद्धा; अनुभूतित्वात्। अन्यतः सिद्धौ घटादिवदननुभूतित्वप्रसङ्गः। किंचानुभवापेक्षा चानुभूतेर्न शक्या कल्पयितुम्; सत्तयैव प्रकाशमानत्वात्। न ह्यनुभूतिर्वर्तमाना घटादिवदप्रकाशा दृश्यते, येन परायत्तप्रकाशाऽभ्युपगम्येत ॥

अथैवं मनुषे—उत्पन्नायामप्यनुभूतौ विषयमात्रमव-भासते—'घटोऽनुभूयते' इति। न हि कश्चित् 'घटोऽयम्' इति जानन् तदानीमेवाविषयभूतामनिदम्भावामनुभूति-मप्यनुभवति। तस्माद् घटादिप्रकाशनिष्पत्तौ चक्षुरादि-

करणसन्निकर्षवदनुभूतेः सद्भाव एव हेतुः। तदनन्तरमर्थगतकादाचित्कप्रकाशातिशयलिङ्गेनानुभूतिरनुमीयते ॥

एवं तर्ह्यनुभूतेरजडाया अर्थवद् जडत्वमापद्यत इति चेत्, किमिदमजडत्वं नाम? न तावत् स्वसत्तायाः प्रकाशाव्यभिचारः; सुखादिष्वपि तत्संभवात्। न हि कदाचिदपि सुखादयः सन्तो नोपलभ्यन्ते। अतोऽनुभूतिः स्वयमेव नानुभूयते; अर्थान्तरं स्पृशतोऽङ्गुल्यग्रस्य स्वात्मस्पर्शवदशक्यत्वादिति ॥

तदिदमनाकलितानुभवविभवस्य स्वमतिविजृम्भितम्; अनुभूतिव्यतिरेकिणो विषयधर्मस्य प्रकाशस्य रूपादिवदनुपलब्धेः, उभयाभ्युपेतानुभूत्यैवाशेषव्यवहारोपपत्तौ प्रकाशाख्यधर्मकल्पनानुपपत्तेश्च। अतो नानुभूतिरनुमीयते। नापि ज्ञानान्तरसिद्धा, अपि तु सर्वं साधयन्त्यनुभूतिः स्वयमेव सिध्यति ॥

प्रयोगश्च—अनुभूतिः, अनन्याधीनस्वधर्मव्यवहारा, स्वसंबन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वात्; यः स्वसंबन्धादर्थान्तरे यद्धर्मव्यवहारहेतुः, स तयोः स्वस्मिन्ननन्याधीनो दृष्टः, यथा रूपादिश्चाक्षुषत्वादौ। रूपादिर्हि पृथिव्यादौ स्वसम्बन्धाच्चाक्षुषत्वादि जनयन् स्वस्मिन् न रूपादिसम्बन्धाधीनश्चाक्षुषत्वादौ। अतोऽनुभूतिरात्मनः प्रकाशमानत्वे प्रकाशत इति व्यवहारे च स्वयमेव हेतुः ॥

सेयं स्वयंप्रकाशाऽनुभूतिर्नित्या च; प्रागभावाद्यभावात्। तदभावश्च स्वतः सिद्धत्वादेव। न ह्यनुभूतेः स्वतः सिद्धायाः प्रागभावः स्वतः, अन्यतो वाऽवगन्तुं शक्यते। अनुभूतिः स्वाभावमवगमयन्ती, सती तावद् नावगमयति। तस्याः सत्त्वे विरोधादेव तदभावो नास्ति, इति कथं सा स्वाभावमवगमयति? एवमसत्यपि नावगमयति। अनुभूतिः स्वयमसती स्वाभावे कथं प्रमाणं भवेत्? नाप्यन्यतोऽवगन्तुं शक्यते; अनुभूतेरनन्यगोचरत्वात्। अस्याः प्रागभावं साधयत् प्रमाणम् 'अनुभूतिरियम्' इति विषयीकृत्य तदभावं साधयेत्। स्वतः सिद्धत्वेन 'इयमि'ति विषयी-

कारानर्हत्वाद् न तत्प्रागभावोऽन्यतः शक्यावगमः। अतोऽस्याः प्रागभावाभावादुत्पत्तिर्न शक्यते वक्तुमिति। उत्पत्तिप्रतिसम्बद्धाश्चान्येऽपि भावविकारास्तस्या न सन्ति ॥

अनुत्पन्नेयमनुभूतिरात्मनि नानात्वमपि न सहते; व्यापकविरुद्धोपलब्धेः। न ह्यनुत्पन्नं नानाभूतं दृष्टम्। भेदादीनामनुभाव्यत्वेन च रूपादेरिवानुभूतिधर्मत्वं न संभवति। अतोऽनुभूतेरनुभवस्वरूपत्वादेवान्योऽपि कश्चिदनुभाव्यो नास्या धर्मः। यतो निर्धूतनिखिलभेदा संवित्, अत एव नास्याः स्वरूपातिरिक्त आश्रयो ज्ञाता नाम कश्चिदस्ति, इति स्वप्रकाशरूपा ॥

सैवात्मा; अजडत्वाच्च। अनात्मत्वव्याप्तं जडत्वं संविदि व्यावर्तमानमनात्मत्वमपि हि संविदो व्यावर्तयति ॥

ननु 'अहं जानामी'ति ज्ञातृता प्रतीतिसिद्धा, नैवम्; सा भ्रान्तिसिद्धा, रजततेव शुक्तिशकलस्य; अनुभूतेः स्वात्मनि कर्तृत्वायोगात्। अतो मनुष्योऽहमित्यत्यन्तबहिर्भूतमनुष्यत्वादिविशिष्टपिण्डात्माभिमानवत् ज्ञातृत्वमप्यध्यस्तम् ॥

ज्ञातृत्वं हि ज्ञानक्रियाकर्तृत्वम्। तच्च विक्रियात्मकं जडं विकारिद्रव्याहङ्कारग्रन्थिस्थमविक्रिये साक्षिणि चिन्मात्रात्मनि कथमिव संभवति? दृश्यधीनसिद्धित्वादेव रूपादेरिव कर्तृत्वादेर्नात्मधर्मत्वम्। सुषुप्ति-मूर्च्छादावहम्प्रत्ययापायेऽप्यात्मानुभवदर्शनेन नात्मनोऽहम्प्रत्ययगोचरत्वम् ॥

कर्तृत्वे, अहम्प्रत्ययगोचरत्वे चात्मनोऽभ्युपगम्यमाने देहस्येव जडत्व-पराक्त्वानात्मत्वादिप्रसङ्गो दुष्परिहरः। अहम्प्रत्ययगोचरात् कर्तृतया प्रसिद्धाद् देहात् तत्क्रियाफल-स्वर्गादेर्भोक्तुरात्मनोऽन्यत्वं प्रामाणिकानां प्रसिद्धमेव ॥

तथाऽहमर्थात् ज्ञातुरपि विलक्षणः साक्षी प्रत्यगात्मेति प्रतिपत्तव्यम्। एवमविक्रियानुभवस्वरूपस्यैवाभिव्यञ्जको जडोऽप्यहङ्कारः स्वाश्रयतया तमभिव्यनक्ति। आत्मस्थतयाऽभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः। दर्पण-जलखण्डादिर्हि मुख-चन्द्रबिम्ब-गोत्वादिकमात्मस्थतयाऽभिव्यनक्ति। तत्कृतोऽयं 'जानाम्यहम्' इति भ्रमः॥

स्वप्रकाशाया अनुभूतेः कथमिव तदभिव्यङ्ग्यजडरूपाहङ्कारेणाभिव्यङ्ग्यत्वमिति मा वोचः; रविकरनिकराभिव्यङ्ग्यकरतलस्य तदभिव्यञ्जकत्वदर्शनात्। जालकरन्ध्रनिष्क्रान्तद्युमणिकिरणानां तदभिव्यङ्ग्येनापि करतलेन स्फुटतरप्रकाशो हि दृष्टचरः। यतो'ऽहं जानामी'ति ज्ञाताऽयमहमर्थश्चिन्मात्रात्मनो न पारमार्थिको धर्मः, अत एव सुषुप्ति-मुक्त्योर्नान्वेति॥

तत्र ह्यहमर्थोल्लेखविगमेन स्वाभाविकानुभवमात्ररूपेणात्माऽवभासते। अत एव सुप्तोत्थितः कदाचिद् 'मामप्यहं न ज्ञातवानि'ति परामृशति। तस्मात् परमार्थतो निरस्तसमस्तभेदविकल्प-निर्विशेष-चिन्मात्रैकरस-कूटस्थनित्यसंविदेव भ्रान्त्या ज्ञातृ-ज्ञेय-ज्ञानरूपविविध-विचित्रभेदा विवर्तते, इति तन्मूलभूताविद्यानिबर्हणाय नित्यशुद्ध-बुद्ध मुक्तस्वभाव-ब्रह्मात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते—इति॥

तत्र श्रीभाष्यकाराणां महापूर्वपक्षः

निर्विशेषवस्तुवादिभिर्निर्विशेषे वस्तुनीदं प्रमाणमिति न शक्यते वक्तुम्; सविशेषवस्तुविषयत्वात् सर्वप्रमाणानाम्। यस्तु स्वानुभवसिद्धमिति स्वगोष्ठीनिष्ठः समयः, सोऽप्यात्मसाक्षिकसविशेषानुभवादेव निरस्तः; 'इदमहमदर्शम्' इति केनचिद्विशेषेण विशिष्टविषयत्वात् सर्वेषामनुभवानाम्॥

सविशेषोऽप्यनुभूयमानोऽनुभवः केनचिद् युक्त्याभासेन निर्विशेष इति निष्कृष्यमाणः सत्तातिरेकिभिः

स्वासाधारणैः स्वभावविशेषैर्निष्कृष्टव्यः, इति निष्कर्षहेतु-भूतैः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैः सविशेष एवावतिष्ठते। अतः कैश्चिद् विशेषैर्विशिष्टस्यैव वस्तुनोऽन्ये विशेषा निरस्यन्ते, इति न क्वचिद् निर्विशेष-वस्तुसिद्धिः॥

धियो हि धीत्वम, स्वप्रकाशता च; ज्ञातुर्विषयप्रकाश-नस्वभावतयोपलब्धेः। स्वाप-मद-मूर्च्छासु च सविशेष एवानुभव इति स्वावसरे निपुणतरमुपपादयिष्यामः॥

स्वाभ्युपगताश्च नित्यत्वादयो ह्यनेके विशेषाः सन्त्येव। ते च न वस्तुमात्रमिति शक्योपपादनाः ; वस्तुमात्राभ्युपगमे सत्यपि विधाभेदविवाददर्शनात्, स्वाभिमततद्विधाभेदैश्च स्वमतोपपादनात्। अतः प्रामाणिकविशेषैर्विशिष्टमेव वस्त्विति वक्तव्यम्॥

शब्दस्य तु विशेषेण सविशेष एव वस्तुन्यभिधान-सामर्थ्यम्; पद-वाक्यरूपेण प्रवृत्तेः। प्रकृति-प्रत्यययोगेन हि पदत्वम्। प्रकृति-प्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थ-प्रतिपादनमवर्जनीयम्। पदभेदश्चार्थभेदनिबन्धनः। पदसङ्घातरूपस्य वाक्यस्यानेकपदार्थसंसर्गविशेषाभिधा-यित्वेन निर्विशेषवस्तुप्रतिपादनासामर्थ्याद् न निर्विशेष-वस्तुनि शब्दः प्रमाणम्॥

प्रत्यक्षस्य निर्विकल्पक-सविकल्पकभेदभिन्नस्य न निर्विशेषवस्तुनि प्रमाणभावः। सविकल्पकं जात्याद्यनेक-पदार्थविशिष्टविषयत्वादेव सविशेषविषयम्। निर्विकल्पक-मपि सविशेषविषयमेव ; सविकल्पके स्वस्मिन्ननुभूतपदार्थ-विशिष्टप्रतिसन्धानहेतुत्वात्॥

निर्विकल्पकं नाम केनचिद् विशेषेण वियुक्तस्य ग्रह-णम्. न सर्वविशेषरहितस्य; तथाभूतस्य कदाचिदपि ग्रहणादर्शनात्, अनुपपत्तेश्च॥

केनचिद्विशेषेणेदमित्थमिति हि सर्वा प्रतीतिरुपजायते; त्रिकोण-सास्नादिसंस्थानविशेषेण विना कस्यचिदपि पदार्थस्य ग्रहणायोगात्। अतो निर्विकल्पकमेकजातीय-

द्रव्येषु प्रथमपिण्डग्रहणम्। द्वितीयादिपिण्डग्रहणं सवि-कल्पकमित्युच्यते ॥

तत्र प्रथमपिण्डग्रहणे गोत्वादेरनुवृत्ताकारता न प्रतीयते। द्वितीयादिपिण्डग्रहणेष्वेवानुवृत्तिप्रतीतिः। प्रथम--प्रतीत्यनुसंहितवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिधर्म-विशिष्टत्वं द्वितीयादिपिण्डग्रहणावसेयम्, इति द्वितीया-दिग्रहणस्य सविकल्पकत्वम्। सास्नादिवस्तुसंस्थान-रूपगोत्वादेरनुवृत्तिर्न प्रथमपिण्डग्रहणे गृह्यते, इति प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वम्; न पुनः संस्थान-रूपजात्यादेरग्रहणात्। संस्थानरूपजात्यादेरप्यैन्द्रिय-कत्वाविशेषात्, संस्थानेन विना संस्थानिनः प्रतीत्यनुपप-त्तेश्च प्रथमपिण्डग्रहणेऽपि ससंस्थानमेव वस्तु 'इत्थमि'ति गृह्यते। अतो द्वितीयादिपिण्डग्रहणेषु गोत्वादेरनुवृत्ति-धर्मविशिष्टता संस्थानिवत्, संस्थानवच्च सर्वदैव गृह्यते, इति तेषु सविकल्पकत्वमेव। अतः प्रत्यक्षस्य कदाचिदपि न निर्विशेषविषयत्वम् ॥

अत एव—सर्वत्र भिन्नाभिन्नत्वमपि—निरस्तम्। 'इद-मित्थमि'ति प्रतीताविदमित्थम्भावयोरैक्यं कथमिव प्रत्येतुं शक्यते ? तत्रेत्थम्भावः सास्नादिसंस्थानविशेषः, तद्विशेष्यं द्रव्यमिदमंशः, इत्यनयोरैक्यं प्रतीतिपराहतमेव ॥

तथाहि—प्रथममेव वस्तु प्रतीयमानं सकलेतरव्यावृत्त-मेव प्रतीयते। व्यावृत्तिश्च गोत्वादिसंस्थानविशेषविशिष्ट-तया; इत्थमिति प्रतीतेः। सर्वत्र विशेषण-विशेष्यभावप्रति-पत्तौ तयोरत्यन्तभेदः प्रतीत्यैव सुव्यक्तः। तत्र दण्ड-कुण्ड-लादयः पृथक् संस्थानसंस्थिताः, स्वनिष्ठाश्च कदाचित् क्वचिद् द्रव्यान्तरविशेषणतयाऽवतिष्ठन्ते। गोत्वादयस्तु - द्रव्यसंस्थानतयैव पदार्थभूताः सन्तो द्रव्यविशेषणतया - अवस्थिताः। उभयत्र विशेषण-विशेष्यभावः समानः। तत एव तयोर्भेदप्रतिपत्तिश्च ॥

इयांस्तु विशेषः—पृथक्स्थिति-प्रतिपत्तियोग्या दण्डा-दयः, गोत्वादयस्तु नियमेन तदनर्हाः—इति। अतो

वस्तुविरोधः प्रतीतिंपराहतः; इति प्रतीतिप्रकारनिह्नवादेवो-च्यते। प्रतीतिप्रकारो हि 'इदमित्थमि'त्येव सर्वसंमतः। तदेतत् सूत्रकारेण "नैकस्मिन्नसम्भवात्" इति सुव्यक्त-मुपपादितम् ॥

अतः प्रत्यक्षस्य सविशेषविषयत्वेन प्रत्यक्षादिदृष्ट-संबन्धविशिष्टविषयत्वादनुमानमपि सविशेषविषयमेव। प्रमाणसङ्ख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानामयमेव विषयः, इति न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः। वस्तुगतस्वभावविशेषैस्तदेव वस्तु निर्विशेषमिति वदन् जननीवन्ध्यात्वप्रतिज्ञायामिव स्ववाग्विरोधमपि न जानाति—इति ॥

## अद्वैतिनां महासिद्धान्तः

निर्विशेषे वस्तुनि प्रमाणाभावो यदि प्रमा तद्वति तत्प्रकारकं ज्ञानमेव, तदा स्यात्। न चाद्वैतिनस्तत् प्रमां मन्यन्ते : अनिर्वचनीय-ख्यातिवादिनां तेषां मते शुक्तिकायां रजतज्ञानस्यापि तद्वति तत्प्रका-रकत्वेन प्रमात्वापत्तेः। यथा च न यथार्थं सर्वं विज्ञानम्, किन्तु भ्रम-प्रमा-भेदेन ज्ञानं द्विविधमेव; बहूनां तत्र संवादात्, तथोपरिष्टाद् व्यक्तं भविष्यति, किन्तु स्मृतिव्यावृत्तमनधिगताबाधितार्थगोचरं ज्ञानम्, अबाधितार्थगोचरं वा स्मृतिसाधारणं प्रमेति हि भाट्टाः, अद्वैतिनश्च। न चैवं प्रमात्वाङ्गीकारे श्रीभाष्यसिद्धान्तेऽपि कापि बाधा, अख्यातिवादे प्रभाकरसम्मतेऽप्यबाधितार्थविषयज्ञानस्य प्रमात्वं न व्याहन्यते ॥

सति चैवं वेदान्तवाक्यानां निर्भेदविषयकज्ञानस्य प्रमात्वमव्याहतम्। अखण्डाकारं ज्ञानमपि निर्भेदवस्तुविषयकं ज्ञानमेव। अखण्डाकार-वृत्त्या तत्समानविषयकेऽनाद्यज्ञाने निवृत्ते तत्प्रयुक्तसदादिभेदस्यापि बाधात्, आवृतानावृतरूपभेदशून्यमेव ब्रह्मतत्त्वं तत्र प्रकाशते। निर्वि-शेषत्वं हि ब्रह्मणोऽविद्याप्रयुक्तसदादिभेदशून्यत्वम् ॥

अत एव 'सन् घटः' इत्यादिज्ञानस्यापि—

"सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते।"

इत्युक्तरीत्या ब्रह्मविषयकत्वेऽपि न तत् सदादिभेदशून्याखण्ड-विषयम्। तदानीमनानन्दतापादकाज्ञानस्य सत्त्वेनाविद्याप्रयुक्तसदा-

दिभेदवत एव ब्रह्मणो भानात्, इति सर्वस्य ज्ञानस्य ब्रह्मविषयकत्वेऽपि न घटादिज्ञानमात्रेणाज्ञाननिवृत्तिः। शुद्धं चैतन्यमेवाज्ञानाश्रयः, तद्विषयश्चेत्यद्वैतसिद्धान्ते शुद्धचैतन्यस्येव, तत्सम्बन्ध-तत्प्रयुक्ततदीयसदादिभेदानामप्यनादित्वाद् यावदखण्डाकारज्ञानं ब्रह्मज्ञानमपि सविशेषविषयमेव; अविद्या-तत्सम्बन्धादेरपि यावद्ब्रह्मसाक्षात्कारमबाधेन सविशेषविषयत्वात्॥

न चैतावताऽज्ञातांशान्तरनिवर्तकं ज्ञानमेव नोदेतुमलमिति वक्तुं शक्यम्। तत्र यदि सविशेषत्वावस्थायां वस्तुतस्तज्ज्ञानस्य सविशेषविषयकत्वनियमः, तर्हि बाढम्; आवृतविशेषान्तरविषयकं तदाऽऽवरणनिवर्तकं ज्ञानमेव नोदेतीति प्रमाणे प्रवृत्ते दुर्वचम्, इत्यनधिगताबाधितार्थमावृतानावृतभेदशून्यस्वरूपज्ञानं सति शब्दे प्रमाणे तात्पर्यवशाद् न दुर्वारम्; अनुभवसिद्धत्वाद्। 'इदमहमदर्शमि'ति केनचिद्विशेषेण विशिष्टतयैवानुभवो हि ज्ञेयस्य सविशेषत्वदशायाम्, न तु विशेषाणां बाधेऽपि। अतोऽनुभवसिद्धत्वं निर्विषयस्य वस्तुनो जीवन्मुक्तानामनुभवमादायैव, न त्वहमर्थमेवात्मेत्यनुभवतामनुभवमादाय; अहमर्थानात्मत्वमत्रैवोपरिष्टात् स्पष्टीभविष्यति॥

जीवन्मुक्त्यनङ्गीकारे तु मुख्य आत्मा संविन्मात्रं न ज्ञाता, ज्ञाता तु बद्ध एवेति ब्रह्मविदामनुभवमादाय वेदार्थव्यवस्था महत एवायनाय स्यात्; अन्यथा बद्धानां शरीरस्यैवात्मत्वेनानुभवस्यैव सर्वसाक्षिकत्वात् तदनुभवमादाय वस्तुतत्त्वव्यवस्थायां न विशिष्टाद्वैतम्, न वा शरीरातिरिक्तात्मवादः, इति वेदान्तप्रामाण्यं कथामात्रं स्यात्॥

निर्विशेषत्वं हि ब्रह्मणः स्वाश्रय-स्वविषयकाज्ञान-तत्प्रयुक्तभेदशून्यत्वमेव, इति तत्र तद्वत एव तदभाववत्त्वम्, तस्य तस्य मिथ्यात्वेन न व्याहन्यते। इदं च प्रत्यक्षाद्यपेक्षया प्रबलप्रमाणश्रुतिसिद्धम्। तथाच श्रुतिः—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि"ति। यथा चास्याः श्रुतेरद्वैत एव परमं तात्पर्यम्, स्वारस्यं च, तथोपरि व्यक्तम्॥

शास्त्रं हि "एकमेवाद्वितीयमि"ति सर्वविशेषतादात्म्यम्, सर्वविशेषशून्यत्वं च स्पष्टं प्रतिपादयति, न तु कैश्चिद् विशेषैर्विशिष्टस्यैव विशेषान्तरं निरस्यति; तत्र प्रमाणाभावात्, "अथात आदेशो नेति नेती"त्यपि सर्वविशेषशून्यत्वं ब्रह्मण आम्नाति॥

औपनिषदत्वमप्यत एव; तस्योपनिषदां ब्रह्माश्रयविषयकाज्ञाननिवर्तकत्वमात्रेण, उपनिषज्जन्यवृत्तिव्याप्यत्वमात्रेण वा, न तु घटादीनामिव फलव्याप्यत्वेन, येन निरस्तेऽपि कस्मिंश्चन विशेषे विशेषान्तरं न वारयितुं शक्यम्। अत एवानुभूतिर्नानुभाव्या घटादिवत्, किन्तु स्वप्रकाशा; स्वावरणे निवृत्ते स्वत एव प्रकाशात्। न च संविन्मात्रव्याप्यता ज्ञानानाम्; येन ज्ञानत्वावस्थायामेव धीनां धीत्वम्, स्वप्रकाशशब्दत्वम्, आत्मनश्च भास्यत्वमिति स्यात्। व्यक्तं चैतत् स्वप्रकाशताप्रकरण उत्तरत्र, इति न सविशेष एवानुभवः सर्वदा स्यात्, स्वाप-मूर्च्छाद्यवस्थास्वप्यात्मा नाहम्प्रतीतिविषयः, न वा मुक्तौ, इति संविन्मात्रस्यैव स्वप्रकाशत्वम्, न तु सविशेषस्य, इति "एकमेवाद्वितीयमि"त्यादिवाक्यैः सर्वेषां विशेषाणां ब्रह्मण्यारोपितानामध्यारोपापवादन्यायेन निषेधाद् निर्विशेषमेव वेदान्तमुख्यतात्पर्यविषयः ॥

अयमेव न्यायो नित्यत्वादावपि। नित्यत्वं हि मुख्यमबाधेन सत्यत्वमेव, न तु ब्रह्मणो धर्मः, किन्तु तत्स्वरूपम्, "आकाशवत् सर्वगतश्च नित्यः" "नित्यो नित्यानाम्" इत्यादौ नित्यत्वव्यपदेशस्तु क्वचिद् गौणो नित्योपाधिकत्वेन, क्वचिद् बाधाभावेन। तदपि कल्पनामेवावलम्ब्य। तदुक्तम्—'आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते' इति। तत्रोपाधीनां वस्तुमात्रत्वेऽप्युपाधिभेदमात्रं कल्पितम्, न तु स्वरूपमिति तु निष्कर्षः। न चानुभवसामान्यस्य सविशेषविषयत्वं नियतम्; श्रौते, जीवन्मुक्तानुभवसिद्धे वा निर्विशेषे वस्तुनि तस्य बाधात्। बाधकथा तु या काऽपि भवतु। अनुभवान्तरेण शब्दस्य त्वाकाङ्क्षा-योग्यताऽऽसत्ति-तात्पर्यज्ञानसहकारेणैव प्रामाण्यम्। अभिहितान्वयवादे, अन्विताभिधानवादे वोपक्रमोपसंहारादितात्पर्यग्राहकोपबृंहितस्य वस्तुस्वभावमप्युल्लङ्घ्यानुभावकत्वं स्वाभाविकम्। न हि शब्दः स्वीयस्यार्थस्य प्रतीयमानं स्वरूपमेव सर्वदा बोधयति; लक्षकशब्दादिघटिते वाक्ये व्यभिचारात्। न च लक्षणा तत्र दोषः। साऽपि हि लौकिक्येव। यथा च सर्वपदलाक्षणिकत्वम्, लक्षकत्वमात्रं वा कस्मिंश्चिदर्थे न दोषः, तथोपरि स्पष्टम्।

विवक्षितमेव ह्यर्थं बोधयद् वाक्यं प्रमाणं नाम। विवक्षा तु तात्पर्यानुपपत्त्या, अन्वयानुपपत्त्या वा तत्र तत्र प्रकरणादिनाऽवसेया, न तु प्रतीत-

सर्वमपि पदं सर्वत्र प्रमिणोति, इति प्रकृति-प्रत्यययोरर्थभेदेऽपि तात्पर्यमुद्भाव्यापि शब्दस्य विशिष्टार्थवाचकत्वकल्पनाऽनादरणीया; अन्यथा 'विषं भुङ्क्ष्वे'त्यादिवाक्यानामपि प्रतीतार्थे प्रामाण्यापत्तिः ॥

अयमेव तु न्यायः पदसङ्घातात्मकस्य वाक्यस्य संसर्गविषयकत्वनियमेऽपि; तात्पर्यानुसारित्वाद् वाक्यप्रामाण्यस्य, इति वेदान्तानामभिहितान्वयवादेन, अन्विताभिधानवादेन वा तात्पर्यानुसारेण संसर्गबोधकत्वम्, स्वरूपमात्रबोधकत्वं वा स्वीकरणीयम्। अन्वयो हि तत्राभिहितान्वयवादे, अन्विताभिधानवादे वा तात्पर्यमेव "तत्तु समन्वयादि"त्यादौ तथा प्रयोगदर्शनात्, इति शब्दप्रमाणं न संसर्गविषयकमेव, किन्तु तत् यथा बोधयति, तथैव प्रमाणमिति मन्तव्यम् ॥

शाब्दो न्याय एव प्रत्यक्षेऽपि। प्रत्यक्षं हि त्रिविधम्—शाब्दम्, अभ्यस्यमाननिदिध्यासनाधीनम्, प्रत्यक्षादिप्रमाणाद्यवच्छिन्नं च। तत्राद्ये शाब्दस्य प्रत्यक्षस्य शाब्दार्थविषयकत्वमेव नियतम्, इति पूर्वोक्तन्यायेन शब्दस्यापि निर्विशेषवस्तुनि प्रामाण्यात्, तदीयस्य प्रत्यक्षस्यापि तत्र प्रामाण्यमनपोहम् ॥

### प्रत्यक्षस्य निर्विशेषे वस्तुनि प्रामाण्यम्

इदं शाब्दसाक्षात्कारमङ्गीकृत्य, शाब्दापरोक्षवादानङ्गीकारे तु निर्विशेषवाक्यावगतार्थभावनावैशद्याधीनं प्रत्यक्षमपि शाब्दन्यायमनतिक्रम्यैव प्रमाणतामर्हति, इति तदपि प्रत्यक्षमेकान्तेन निर्विशेषे वस्तुनि नाप्रमाणम्। शब्दानुपजीविप्रत्यक्षविषयत्वम्, अनुमानविषयत्वं वा निर्विशेषब्रह्मणो नोरीक्रियते; चक्षुराद्यविषयत्वात् सकलविशेषप्रत्यनीकसंविन्मात्रस्य। 'सन् घटः' इत्यत्र तु सद्रूपं सदात्मनैव प्रत्यक्षम्, नाखण्डात्मना, इति तस्याधिष्ठानस्य, सद्वितीयस्य च न सकलविशेषप्रत्यनीकत्वम्। कोऽयमिति प्रश्नोत्तरं 'सोऽयं देवदत्तः' इति वाक्यजन्यं ज्ञानमप्यावृतानावृतभेदशून्यस्वरूपज्ञानत्वात् 'इयं शुक्तिरि'ति सन्निकर्षदशायां वाक्यजन्यं ज्ञानमिवाखण्डाकारं ज्ञानमेव; तात्पर्यानुसारित्वाद् वाक्यजन्यज्ञानस्य ॥

चाक्षुषेऽपि प्रमाणजन्ये सविकल्पक-निर्विकल्पकप्रत्यक्षभेदचर्चा त्वत्राकिञ्चित्करी; संविन्मात्रस्योक्तप्रत्यक्षाविषयत्वात्। सविकल्पकत्वं हि ज्ञानस्य विशेषविषयकत्वमात्रेण, न तु सत्तया सविशेषत्वेन; अन्यथैकविशेष-

प्रत्यक्षदशायामपरस्य विशेषस्य प्रत्यक्षत्वम्, तेन सविकल्पकत्वं चापद्येत। तेनांशेन प्रत्यक्षस्य निर्विकल्पकत्वे तु सर्वं निर्विकल्पकम्, सविकल्पकं चेति न सविकल्पक-निर्विकल्पकभेदव्यवस्था प्रत्यक्षस्य स्यात् ॥

एकजातीयेषु द्रव्येषु प्रथमपिण्डग्रहणं निर्विकल्पकम्, यत्र गोत्वादि-जातेरनुवृत्ताकारता न भाति, सविकल्पकत्वं त्वनुवृत्ततया गोत्वादिग्रहणा-त्मकं द्वितीयं ग्रहणमिति तु व्यक्त्यनेकत्वे भवितुमर्हति, न व्यक्त्यैक्ये। तत्रैकजातीयानेकद्रव्याभावात्, अनेकानुगतैकजातेरभावेनानुवृत्ताकारता-प्रतीतिकथाया अभावाच्च, इति पारिभाषिकोक्तविधसविकल्पकनिर्वि-कल्पकप्रत्यक्षभेदकथा प्रकृतविषयेऽकिञ्चित्करी, इति विशेषाविषय-कत्वेन निर्विकल्पकत्वम्, तद्विषयकत्वेन सविकल्पकत्वम्, विशेष-सत्त्वासत्त्वकथा त्वत्रानुपयुक्ता, इति न निर्विकल्पकत्वं केनचिद्विशेषेण वियुक्तस्यैव ग्रहणम्, न सर्वविशेषरहितस्येति वादो विकल्पसहः। निर्विकल्प-काले सर्वविशेषाग्रहणाद् न तेनैव किञ्चिद्विशेषवैशिष्ट्यं नियतं कल्पयितुं शक्यते, किन्तु प्रमाणान्तरेण। अद्वितीयं तु सकलविशेषप्रत्यनीकमेव श्रुत्याऽवगम्यते, इति तत्र विशेषान्तरकल्पना निरालम्बा। श्रुत्येकसमधि-गम्ये ब्रह्मणि सविशेषत्वं न श्रुत्यतिरिक्तेन प्रमाणेन तदनुपजीविना प्रमातुं शक्यते। सगुणवाक्यानि तूपासनाशेषत्वात्, उपासनाया उपास्याभावे-ऽपि निर्वाहाच्च न पारमार्थिकसविशेषत्वे प्रमाणम् ॥

अतः स्वप्रधाननिर्विशेषवाक्यानुसारिण्येव व्यवस्थाऽत्र शरणम्। अत एव न प्रतिपत्तिविषयतया शास्त्रेण ब्रह्म समर्प्यते, इति समन्वया-धिकरणभाष्यं भगवत्पादानाम्। सर्वथा श्रुत्युपजीविनः प्रत्यक्षस्य न निर्वि-शेषे वस्तुन्यप्रामाण्यम्। अखण्डाकारज्ञानस्य निर्विकल्पकत्वं हि तद्विषयस्य, तदुपहितस्य वा ब्रह्मणः स्वप्रयुक्तावस्थितिसामान्यविरहप्रतियोग्यविद्या-तत्प्रयुक्तसकलविशेषप्रत्यनीकसंविन्मात्रत्वेन, न तु सत्स्वेव विशेषेषु विशेषा-विषयकत्वमात्रेण गौरिति प्रथमपिण्डग्रहणवत्। एवं तस्य प्रत्यक्षत्वमपि तद्विषयासत्त्वापादकाभानापादकानानन्दताणदकाज्ञानविनाशनिबन्धनं लौ-किकनिर्विकल्पाद् विलक्षणमेव, इति तन्न्यायो नात्र ॥

तदेवं विशेषाणां श्रौतानां व्यावहारिकं सत्त्वमङ्गीकृत्य, अखण्डार्थविष-यकत्वं तत्त्वमस्यादिमहावाक्यजन्यस्य स्वीकृत्य च व्यवस्था सत्तात्रैविध्यवा-देन, सत्ताजात्यर्थक्रियाकारित्वमेव सर्वस्य सत्त्वमिति वादेन वा ॥

एकसत्तावादे तु 'सन् घटः' इत्यादौ घटादीनां न सत्त्वम्, किन्तु सत्तादात्म्यमेव। तेन च 'सन् घटः' इत्यादौ सत्तादात्म्यमेव भासते, न तु सत्त्वम्, इति 'सन् घटः' इत्यादावधिष्ठानांश एव प्रमात्वम्, विशेषास्तु न सत्प्रतीतिविषयाः, सन्तो वा, किन्त्वनिर्वचनीया एव। मिथ्याभूतस्याप्यर्थक्रियाकारित्वं तु विनापि सत्त्वं न विहन्यते। अतः सर्वस्य ज्ञानस्य, विशिष्य प्रत्यक्षस्य सदंश एव प्रामाण्यम्, न तु विशेषांश इत्यद्वैतिनां राद्धान्तः॥

तत्रायं श्रीभाष्यकाराणां महापूर्वपक्षः

यत्तु—प्रत्यक्षं सन्मात्रग्राहित्वेन न भेदविषयम्, भेदश्च विकल्पासहत्वाद् दुर्निरूपः—इत्युक्तम्, तदपि जात्यादिविशिष्टस्यैव वस्तुनः प्रत्यक्षविषयत्वात्, जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनः, स्वस्य च भेदव्यवहारहेतुत्वाच्च दूरोत्सारितम्। संवेदनवत्, रूपादिवच्च परत्र व्यवहारविशेषहेतोः स्वस्मिन्नपि तद्व्यवहारहेतुत्वं युष्माभिरभ्युपेतं भेदस्यापि संभवत्येव। अत एव च नानवस्था, अन्योन्याश्रयणं वा। एकक्षणवर्तित्वेऽपि प्रत्यक्षज्ञानस्य तस्मिन्नेव क्षणे वस्तुभेदरूपतत्संस्थानरूपगोत्वादेर्गृहीतत्वात् क्षणान्तरग्राह्यं न किञ्चिदिह तिष्ठति॥

अपि च सन्मात्रग्राहित्वे 'घटोऽस्ति' 'पटोऽस्ति' इति विशिष्टविषया प्रतीतिविरुध्यते। यदि च सन्मात्रातिरेकिवस्तुसंस्थानरूपजात्यादिलक्षणो भेदः प्रत्यक्षेण न गृहीतः, किमित्यश्वार्थी महिषदर्शने निवर्तते। सर्वासु प्रतिपत्तिषु सन्मात्रमेव विषयश्चेत्, तत्तत्प्रतिपत्तिविषयसहचारिणः सर्वे शब्दा एकैकप्रतिपत्तिषु किमिति न स्मर्यन्ते?

किञ्च अश्वे, हस्तिनि च संवेदनयोरेकविषयत्वेनोपरितनस्य गृहीतग्राहित्वात्, विशेषाभावाच्च स्मृतिवैलक्षण्यं न स्यात्। प्रतिसंवेदनं विशेषाभ्युपगमे प्रत्यक्षस्य विशिष्टार्थविषयत्वमेवाभ्युपगतं भवति। सर्वेषां संवेदनानामेकविषयतायामेकेनैव संवेदनेनाशेषग्रहणादन्धबधिराद्यभावश्च प्रसज्येत॥

न च चक्षुषा सन्मात्रं गृह्यते; तस्य रूप-रूपिरूपैकार्थ-समवेतपदार्थग्राहित्वात् , नापि त्वचा ; स्पर्शवद्वस्तुविषयत्वात्। श्रोत्रादीन्यपि न सन्मात्रविषयाणि, किन्तु शब्द-रस-गन्धलक्षणविशेषविषयाण्येव। अतः सन्मात्रस्य ग्राहकं न किञ्चिदिह दृश्यते ॥

निर्विशेषसन्मात्रस्य प्रत्यक्षेणैव ग्रहणे तद्विषयागमस्य प्राप्तविषयत्वेनानुवादकत्वमेव स्यात्। सन्मात्रब्रह्मणः प्रमेयभावश्च। ततो जडत्व-नाशित्वादयस्त्वयैवोक्ताः ॥

अतो वस्तुसंस्थानरूपजात्यादिलक्षणभेदविशिष्टविषयमेव प्रत्यक्षम् ; संस्थानातिरेकिणोऽनेकेष्वेकाकारबुद्धिबोध्यस्यादर्शनात् , तावतैव गोत्वादिजातिव्यवहारोपपत्तेः। अतिरेकवादेऽपि संस्थानस्य संप्रतिपन्नत्वाच्च संस्थानमेव जातिः ॥

संस्थानं नाम स्वसाधारणं रूपमिति यथावस्तु संस्थानमनुसन्धेयम्। जातिग्रहणेनैव भिन्न इति व्यवहार-संभवात् , पदार्थान्तरादर्शनात् , अर्थान्तरवादिनाऽप्यभ्युपगतत्वाच्च गोत्वादिरेव भेदः ॥

ननु च जात्यादिरेव भेदश्चेत् , तस्मिन् गृहीते तद्व्यवहारवद् भेदव्यवहारोऽपि स्यात् , सत्यम् ; भेदश्च व्यवह्रियत एव; गोत्वादिव्यवहारात्। गोत्वादिरेव हि सकलेतरव्यावृत्तिः; गोत्वादौ गृहीते सकलेतरसजातीय-बुद्धिव्यवहारयोर्निवृत्तेः। भेदग्रहणेनैव ह्यभेदनिवृत्तिः। 'अयमस्माद्भिन्नः' इति व्यवहार इत्युक्तम् ॥

### अद्वैतिनां महासिद्धान्तः

#### प्रत्यक्षप्रमाणस्य सन्मात्रविषयकत्वम्

अत्रेदं तत्त्वम्—न हि वस्तु स्वभावविशेषैस्तदेव सविशेषम् , निर्विशेषं चाद्वैतसिद्धान्ते, किन्त्वध्यारोपात् सविशेषम् , अपवादाद् निर्विशेषम् , इति नात्र जननीवन्ध्यात्वन्यायः, न वा वाग्व्याघातः, इति प्रत्यक्षं विशेष्यांशे सदर्थविषयकत्वात् सदर्थविषयकत्वप्रयुक्तं प्रामाण्यं प्रत्यक्षस्य

विशेष्यांशे। सत्यम्, प्रत्यक्षं जात्यादिविशिष्टमपि; जात्यादिविशिष्टस्य तत्र प्रकारतया भानात्; तथापि न जात्यादिविशिष्टं तत्र सद्रूपेणाधिष्ठानमिव भासते, किन्तु पूर्वोक्तरीत्यैकसत्तावादेन सत्तादात्म्येनैव, इति सदंश एव तस्य प्रामाण्यम्, न जात्यादिविशिष्टांशेऽपि; सर्वं भ्रान्तिज्ञानमधिष्ठानांश एव प्रमा, प्रकारांशे तु भ्रम इति हि वस्तुस्थितिः। तेन च जात्यादेः कल्पितस्यैव भेदव्यवहारहेतुत्वम्, न तु सत्यस्य, इति जात्यादेः स्व-परनिर्वाहकत्वं यावत्तत्सत्त्वमव्याहतम्॥

तत्र संवेदनस्य स्व-परनिर्वाहकत्वं स्वप्रकाशत्वेन, रूपादेस्तु जात्यादिवत् स्वभावत एव स्व-परनिर्वाहकत्वम्; अन्यथाऽनवस्थानात्, इति स्व-परनिर्वाहकत्वं संवेदनवत् न तत्सत्यत्वमाक्षिपति: इति जात्यादेरपि कल्पितस्य रूपादिवत् स्व-परनिर्वाहकत्वेऽपि न सद्रूपत्वं संवेदनवत्। अयमेव न्यायो भेदेऽपि; संवेदनवद् जात्यादेरबाधितत्वाभावात्। अतो 'घटोऽस्ति' 'पटोऽस्ती'त्यादौ घटादीनां सत्तादात्म्यमेव विषयः, कालसंबन्धो वा कल्पितः, न तु सत्त्वम्॥

सत्यपि सन्मात्रग्राहित्वे प्रत्यक्षस्य, सत्तादात्म्येऽपि घटादीनां सतैव तादात्म्यम्, न पटादिभिः, तेषामपि सत्तादात्म्येऽपि सत्त्वाभावेन सता तादात्म्यस्य सत्तादात्म्यवत् कार्यान्तरतादात्म्यस्याप्यप्रसक्त्या घटादौ पटादिना तादात्म्यस्य बाधितत्वात्; 'कार्यात्मना तु नानात्वमभेदः कारणात्मना' इति न्यायात्, अन्यथा मृत्कार्याणां घट-घटिकादीनां सर्वेषामपि मृत्तादात्म्येन परस्परतादात्म्यापत्त्या परमतेऽप्यन्यज्ञानेनान्यत्र प्रवृत्तिः, निवृत्तिर्वा स्यात् इति सन्मात्रव्यतिरेकेण जात्यादिलक्षणभेदस्य प्रत्यक्षप्रमाणेनाग्रहणेऽपि नायं पर्यनुयोगः—किमित्यश्वार्थी महिषदर्शने निवर्तत इत्युत्थानमप्यर्हति, न वा सर्वासु प्रतिपत्तिषु प्रमाणभूतासु सन्मात्रस्यैव विषयत्वे तत्तत्प्रतिपत्तिषु सर्वासु सर्वेषामपि शब्दानां स्मरणम्, न वाऽश्व-हस्त्यादिज्ञानानामेकविषयकत्वेन गृहीतग्राहित्वमापद्यते; संवेदनमात्रस्यैकत्वेऽपि तद्विषयाणां कल्पितानां परस्परं पूर्वोक्तविधया भेदात्॥

संविन्मात्रस्य नीरूपत्वेऽपि—

'न सोऽस्ति प्रत्ययो लोके यत्र सत्ता न भासते॥'

इति न्यायात् प्रतिनियतेन्द्रियग्राह्येष्वेव प्रत्यक्षविषयत्वे रूपादिकं तन्त्रम्, न तु सर्वेन्द्रियग्राह्येष्विति सिद्धान्तात्, सन्मात्रस्याधिष्ठानस्य

स्वप्रकाशस्य चाक्षुषकल्पितघटादितादात्म्येनैव हि चाक्षुषत्वम्, न तु चाक्षुषस्यैव सतोऽधिष्ठानत्वम्। अधिष्ठानं हि स्वप्रकाशतया स्वत एव; भ्रमात् पूर्वं तज्ज्ञानस्य वृत्त्यादिरूपस्यानपेक्षणादिति कवितार्किकसिद्धान्ताच्च न सन्मात्रस्य चाक्षुषत्वं विहन्यते, इति साक्षात् तत्तच्चक्षुरादिनियतेन्द्रियाग्राह्यत्वेन सन्मात्रस्य चाक्षुषत्वं सूपपादम्॥

यद्यपि 'सन् घटः', इत्यत्र भासमानं सद्रूपं ब्रह्मापि स्वप्रकाशतयाप्यनाद्यविद्याकल्पितसच्चिदादिभेदवद्ब्रह्मैकदेशत्वाद् भ्रमाधिष्ठानत्वेन सविशेषत्वाच्च न निर्विशेषम्, अखण्डं च, इति न ब्रह्म तेन रूपेण चाक्षुषादिवृत्तिविषयः, इति सदात्मना ब्रह्मग्रहणमविद्यादशायां न निर्विशेषग्रहणम्, इति न "तत्त्वमसी"त्यागमग्राह्यं स्वरूपम्, इति नागमस्यानुवादकत्वापत्तिः; तस्य सदादिभेदवत्त्वेन सखण्डत्वेनाखण्डत्वाभावात्, आवृतानावृतरूपभेदशून्यस्यैवाखण्डपदार्थत्वात्, 'सन् घटः' इत्यादिप्रतीतिदशायां सदात्मना ज्ञानम्, आनन्दात्मनाऽज्ञानमिति सदादिभेदस्वीकाराच्च; अन्यथाऽऽश्रयस्यैवायोगेन "सन् घटः" इति प्रतीतेरेवानुपपन्नत्वाच्च। अत एव न 'सन् घटः' इति ज्ञानस्याविद्या-तत्प्रयुक्तसर्वभेदनिवर्तकत्वापत्तिः, न वा सन्मात्रस्याप्रमेयत्वविरोधः॥

अप्रमेयत्वं ह्यनाद्यविद्याप्रयुक्तसदादिभेदशून्यस्याखण्डस्यैव, न तु सखण्डस्य। न हि 'सन् घटः' इत्यादिप्रत्यक्षे जात्यादिविशिष्टं न भासत इत्यद्वैतसिद्धान्तः, किन्तु भासमानं तद् न सत्यम्, किन्तु मिथ्या, इति न तस्याबाधितत्वम्, ततस्तत्रापि न घटादिज्ञानस्य प्रमात्वम्, किन्तु तस्मिन्नंशे 'इदं रजतमि'त्यादौ रजतांश इव भ्रमत्वम्; अन्यथा तत्रापीदमंश इव रजतांशेऽपि तज्ज्ञानस्य प्रमात्वापत्तिः॥

तत्र यथैकमृत्कार्यत्वेनानेकेषु घटसंस्थानेष्वेकैव घटत्वादिजातिः; एकघटत्वविशिष्टानामेवैकमृत्कार्यत्वात्, तथैकाविद्यापरिणामत्वे, एकब्रह्मविवर्तत्वेऽपि वा तत्तदवान्तरोपादानकार्येष्वनुगतैकजातिविशिष्टता न विरुध्यते, इति सर्वानुगतजातेरिव तद्विशिष्टस्य संस्थानस्यापि तत्तद्रूपस्य मिथ्यात्वमुपपद्यते॥

तत्र संस्थानातिरिक्तं वा जातिर्भवतु, भेद एव वा जातिः, जातिविशिष्टस्य मिथ्यात्वात् तत्र प्रत्यक्षादेर्न प्रामाण्यम्। सर्वथा तु जात्यादिविशिष्टानां प्रकाराणां सर्वसत्प्रतीत्यविषयत्वेन सदतिरेकेण सतो व्या-

वर्तमानत्वेन मिथ्यात्वम्, सर्वत्र विशिष्टप्रतीतौ सन्मात्रस्यानुवर्तमानत्वेन सत्यत्वं च, इति सत्यसन्मात्रांशे प्रत्यक्षस्य प्रामाण्यम्, अन्यत्र तु सत्ता-दात्म्यमात्रावगाहित्वेन भ्रमत्वमिति वेदान्तसिद्धान्त इति सुस्थम् ॥

अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

यत् पुनर्घटादीनां विशेषाणां व्यावर्तमानत्वेनापारमार्थ्यमुक्तम्, तदनालोचितबाध्य-बाधकभावव्यावृत्त्यनुवृत्तिविशेषस्य भ्रान्तिपरिकल्पितम्। द्वयोर्ज्ञानयोर्विरोधे हि बाध्य-बाधकभावः, बाधितस्यैव व्यावृत्तिः। अत्र घट-पटादिषु देश-कालभेदेन विरोध एव नास्ति। यस्मिन् देशे यस्मिन् काले यस्य सद्भावः प्रतिपन्नः, तस्मिन् देशे तस्मिन् काले तस्याभावः प्रतिपन्नश्चेत्, तत्र विरोधात् बलवतो बाधकत्वम्, बाधितस्य च निवृत्तिः। देशान्तर-कालान्तरसंबन्धितयाऽनुभूतस्यान्यदेश-कालयोरभावप्रतिपत्तौ न विरोधः, इति कथमत्र बाध्य-बाधकभावः? अन्यत्र निवृत्तस्यान्यत्र निवृत्तिर्वा कथमुच्यते? रज्जुसर्पादिषु तु तद्देश-कालसंबन्धितयैवाभावप्रतीतेर्विरोधः, बाधकत्वम्, व्यावृत्तिश्चेति देश-कालान्तरदृष्टस्य देश-कालान्तरव्यावर्तमानत्वं मिथ्यात्वव्याप्तं न दृष्टम्, इति न व्यावर्तमानत्वमात्रमपारमार्थ्यहेतुः। यत्तु—अनुवर्तमानत्वात् सन् परमार्थ इति, तत् सिद्धमेव, इति न साधनमर्हति। अतो न सन्मात्रमेव वस्तु ॥

अत्राद्वैतिनां महासिद्धान्तः

व्यावर्तमानत्वानुवर्तमानत्वाभ्यां मिथ्यात्व सत्यत्वसाधनम्

अयमाशयः—यथा रज्जुसर्पादौ तत्तदधिकरणे, तत्तत्सदाद्यधिष्ठाने वा तत्तदधिष्ठानसाक्षात्कारे तत्र तदभावप्रतीत्या प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वाद् यथा रज्जुतत्त्वज्ञानदशायां रज्जौ तदभावावगमाद् रज्जुसर्पादि मिथ्या, एवं घटादयोऽपि स्वाधिष्ठाने सति ब्रह्मण्यज्ञानदशायां प्रतीयमानाः सद्रूपब्रह्मतत्त्वसाक्षात्कारे जाते जीवन्मुक्तानां ब्रह्मण्यखण्डे तदभावावगमात् प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगिनः यत्र यत्र प्रतीयन्ते, तत्र तत्रैव नास्तीति प्रतीयमाना मिथ्यैव दृश्यन्ते ॥

इयान् विशेषः—सर्पादिभ्रमः संसारदशायामेव तत्रैव तदधिष्ठाने साक्षात्कारे निवर्तते; तदुपादानस्य तूलाज्ञानस्यावच्छिन्नचैतन्याश्रितस्याधिष्ठानतावच्छेदकसाक्षात्कारेणाविद्यामात्रे निवृत्तेऽपि मूलाविद्याकार्यत्वादवच्छेदकस्यानिवृत्त्या बाधानन्तरमप्यधिष्ठानतावच्छेदकस्याभावो न गम्यते, प्रकृते तु यद्यपि सद्रूपाधिष्ठानतत्त्वसाक्षात्कारो न व्यवहारदशायाम्, यावद्ब्रह्मतत्त्वसाक्षात्कारं वा सर्पादीनामिव बाध्यत्वम्, तत्प्रयुक्तस्तदभावो वाऽवगम्यते; तथापि शास्त्रप्रामाण्याद् भावी बाधो शास्त्रतोऽवगम्यते, इति यत्राधिष्ठाने घटादिकं प्रतीयते, तत्रैव तदभावोऽपि रज्जुसर्पादीनामिवानुमीयते। इदं च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वमित्यत्र प्रतिपन्नोपाधिपदेन स्वाधिष्ठानविवक्षामाश्रित्य॥

तत्र सर्पभ्रमनिवृत्तावधिष्ठानसाक्षात्कारवान्, तूलाविद्याश्रयश्च प्रमाताऽहमर्थ एव, इति तत्र स इव तदभावोऽपि साक्षात्क्रियते, प्रकृते त्वधिष्ठानतत्त्वसाक्षात्कारदशायां ज्ञातृत्वादीनाम्, तदाश्रयाहमर्थादेरपि बाधात् तद्वत्तावुद्धिरिव तदभावबुद्धिरपि तत्र न भवति; तथापि शास्त्रेण तदभावो बोध्यते, इति प्रतिपन्नोपाधौ त्रैकालिकनिषेधो भावी शास्त्रतः सिध्यति॥

इदं च बाधदशामाश्रित्य सुवचम्, व्यवहारदशायां तु सदेवाधिष्ठानतया सर्वेषु ज्ञानेषु भासते, इति तदधिकरणकतया प्रतीयमानं सर्वं रज्ज्वधिकरणकतया प्रतीयमानसर्प-भूरन्ध्रादिकं यथा भ्रमान्तरकाले रज्जावप्रतीयमानं रज्जुतो व्यावृत्तम्, रज्जुतो भिन्नम्, एवं घटादिकमेकसत्तावादे सत्तादात्म्यवत्तया प्रतीयमानं सतो भिन्नम्, इति सदनुविद्धसर्वप्रत्यक्षाविषयत्वात् सतो भिन्नम्, इत्यनिर्वचनीयमित्युररीकर्तव्यम्, इति देश-कालादीनां प्रतिपन्नोपाधित्वाभावात्, तेषां भेदाच्च देशान्तर-कालान्तरसत्त्वासत्त्वाभ्यामविरोधशङ्काया नात्रावकाशः; एकस्य सत एव सर्वाधिष्ठानस्य प्रतिपन्नोपाधित्वात्, चालिनीन्यायेन सर्वस्य प्रकारस्य भिन्नभिन्नस्यैकत्राभावात् व्यावर्तमानत्वम्. ततो मिथ्यात्वं च मनुमातुं शक्यते॥

वस्तुतस्त्वत्र साध्यमानं मिथ्यात्वं सद्भिन्नत्वम्, सदसद्भिन्नत्वं वाऽनिर्वचनीयत्वमेव, न तु प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम्, येन देश-कालान्तरसत्त्वासत्त्वाभ्यामविरोधादिकथाया अवकाशः स्यात्॥

सद्भिन्नत्वं चेदं यदि दोषाकरणकधीविषयान्यत्वं पञ्चममिथ्यात्वम्, तर्हि पूर्वोक्तगत्या प्रत्यक्षादीनां सन्मात्रे प्रामाण्यात् दोषाकरणकधीविषयत्वं

सत एव, तदधिष्ठानकानां तु दोषकरणकधीविषयत्वात् सद्भिन्नत्वम् , इति सदनुविद्धसर्वप्रतीतिविषयान्यत्वेन सद्भिन्नत्वसाधनं निर्दुष्टम् ॥

तत्र पक्षे प्रतीयमानोऽपि न सत्त्वेन प्रतीयते, किन्तु सत्तादात्म्येन, इति नाश्रयासिद्ध्यादिकं श्रुतप्रकाशिकाद्युक्तमत्रावसरति। सदनुविद्धप्रतीत्यविषयत्वं व्यावर्तमानत्वं तु विशदं विवेचितं शतभूषण्याम्—

"नासतो विद्यते भावो नाभावो विद्यते सतः।"

इति गीताभाष्य-तद्व्याख्याद्यनुसारेण। अधिकं तत एवावगन्तव्यम् ॥

अयमाशयः—यद् यदनुविद्धसर्वप्रतीतिविषयः, स ततोऽभिन्नः; यथा परिणामस्थले मृदनुविद्धसर्वप्रतीतिविषया घटादयः ततोऽभिन्नाः ॥

अयमेव न्यायः "सर्वं खल्विदं ब्रह्म" इत्यादौ बाधायां सामानाधिकरण्येऽपि। इयान् विशेषः—अत्राभेदः, अनन्यत्वं वा तद्व्यतिरेकेणाभावः, 'यथेदं रजतमि'त्यादौ। न चायं न्यायः 'सन् घटः' इत्यादौ घटादौ। न हि घटादिकं सदनुविद्धसर्वप्रतीतिविषयः; 'सन् पटः' इत्यादौ तत्प्रतीत्यभावात् , इति तत् सतो भिन्नम्। तत्र पटबुद्धौ घटो न प्रतीयते; विरोधात् , इति यथा घटभिन्नः पटोऽवगम्यते, एवमत्रापि सद्भेदमात्रमवगम्यते, तदेव तस्य मिथ्यात्वं नाम ॥

"सर्वं खल्विदमि"त्यादाविव बाधायां सामानाधिकरण्यविवक्षायां सद्भेदो सद्व्यतिरेकेणाभावः, इति तेनापि ज्ञाननिवर्त्यत्वं मिथ्यात्वं सम्भवत्येव; तथापि प्रतीत्यन्तरं सदनुविद्धमादाय सद्रूपत्वमेव घटादीनामिति विवरणं निरसितुम् , अनिर्वचनीयत्वं साधयितुं च व्यावर्तमानत्वहेतुरत्र मिथ्यात्वसाधनं विवक्षितम्। तेन चार्थसिद्धं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमित्यनुसन्धेयम् ॥

एवं च घटादिप्रकारांशे प्रतीतिमात्रमादाय मिथ्यात्वं साधितम्, विशेष्यसन्मात्रमादाय तु घटादिसर्वानुविद्धप्रतीतिविषयत्वात् , सर्वत्रैकरूपेण प्रतीतेश्चैकमेव स्वरूपम् ; एकाकारप्रतीतिविषयत्वात् , न तु तत्तन्मात्रानुगतसत्तादिजातिविशिष्टपरमिति तु निष्कर्षः; अन्यथा जात्यादावपि सत्प्रतीत्यनुपपत्तिः। अङ्गीकृतं च श्रीभाष्येणापि सतः सत्त्वमनुवर्तमानत्वेन। न च सत्प्रतीतिविषयत्वं घटादीनामिव, येनानुभूतिरपि व्यावर्तमानत्वेन मिथ्या स्यात् , किन्तु "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादाविवाभेदे सामानाधिकरण्यम्; तयोर्भेदस्यासिद्धत्वात् , तद्भेदस्य बाधितत्वाच्च। अत एव प्रतीतिश्चात्र

वृत्तिमात्रम्, विषयत्वं तु वृत्तिव्याप्यत्वमात्रम्, न तु घटादाविव फलव्याप्यत्वम्। तत्रानुवर्तमानत्वं सकलविशेषानुगतैकरूपप्रतीतिविशेष्यत्वं सदेवेदमनुवर्तमानस्य स्वप्रकाशस्य चिद्रूपस्यैव। इदमेवाभिप्रेत्येष्टसिद्धिः—

अनुभूतेर्घटादीनामिव नानुभाव्यत्वम्, न वा व्यावर्तमानत्वम्, तेन मिथ्यात्वं वेति मत्वोपक्षिपति—'अनुभूतिः, स्वप्रकाशा, अनुभूतित्वात्; अनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गः'—इति॥

अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

अनुभूतिस्वप्रकाशत्वनिरासः

अनुभूति-सद्विशेषयोश्च विषय-विषयिभावेन भेदस्य प्रत्यक्षसिद्धत्वात्, अबाधितत्वाच्चानुभूतिरेव सतीत्येतदपि निरस्तम्॥

यत्तु—अनुभूतेः स्वयंप्रकाशत्वम्—उक्तम्, तद्विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव; न तु सर्वेषां सर्वदा तथैवेति नियमोऽस्ति; परानुभवस्य हानोपादानादिलिङ्गकानुमानज्ञानविषयत्वात्, स्वानुभवस्याप्यतीतस्य 'अज्ञासिषम्' इति ज्ञानविषयत्वदर्शनाच्च। अतोऽनुभूतिश्चेत्, स्वतःसिद्धेति वक्तुं न शक्यते॥

अनुभूतेरनुभाव्यत्वे तदननुभूतित्वमित्यपि दुरुक्तम्; स्वगतातीतानुभवानाम्, परगतानुभवानां चानुभाव्यत्वेनाननुभूतित्वप्रसङ्गात्। परानुभवानुमानानभ्युपगमे च शब्दार्थसंबन्धग्रहणाभावेन समस्तशब्दव्यवहारोच्छेदप्रसङ्गः। आचार्यस्य ज्ञानवत्त्वमनुमाय तदुपसत्तिश्च क्रियते, सा च नोपपद्यते। न चान्यविषयत्वेऽननुभूतित्वम्॥

अनुभूतित्वं नाम वर्तमानदशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वम्, स्वसत्तयैव स्वविषयसाधनत्वं वा। ते चानुभवान्तरानुभाव्यत्वेऽपि स्वानुभवसिद्धे नापगच्छतः इति नानुभूतित्वमपगच्छति॥

घटादेस्त्वननुभूतित्वमेतत्स्वभावविरहात्, नानुभाव्यत्वात्। तथाऽनुभूतेरननुभाव्यत्वेऽप्यननुभूतित्वप्रसङ्गो दुर्वारः; गगनकुसुमादेरननुभाव्यस्याननुभूतित्वात्॥

गगनकुसुमादेरननुभूतित्वमसत्त्वप्रयुक्तम् , नाननुभाव्यत्वप्रयुक्तमिति चेत् , एवं तर्हि घटादेरप्यज्ञानाविरोधित्वमेवाननुभूतित्वनिबन्धनम् , नानुभाव्यत्वमित्यास्थीयताम् ॥

अनुभूतेरऽनुभाव्यत्वेऽज्ञानाविरोधित्वमपि तस्या घटादेरिव प्रसज्यत इति चेत् , अननुभाव्यत्वेऽपि गगनकुसुमादेरिवाज्ञानाविरोधित्वमपि प्रसज्यत एव । अतोऽनुभाव्यत्वेऽननुभूतित्वमित्युपहास्यम् ॥

### अद्वैतिनां महासिद्धान्तः

#### अनुभूतिस्वप्रकाशत्वसमर्थनम्,

अयमत्राद्वैतिनामाशयः—अनुभूतिः, स्वप्रकाशा, अनुभूतित्वादित्यत्रानुभूतिशब्देन संविन्मात्रं विवक्ष्यते, न तु धर्मभूतं ज्ञानम् , अन्तःकरणवृत्तिर्वा, यत्सम्बन्धेनात्मा ज्ञाता नाम । व्यवस्थापयिष्यते च संविद एवात्मत्वम् । तस्य ज्ञानस्वरूपस्य चिदचिद्ग्रन्थिरूपाहमर्थविशेष्यमात्रस्यानहमर्थत्वम् , वस्तुतोऽज्ञातृत्वं च ॥

स्वातिरिक्तसंविदनपेक्षप्रकाशत्वं हि स्वप्रकाशत्वं संविन्मात्ररूपेण सर्वेषामात्मनामेकत्वात् , स्व-परभेदेनात्मभेदाभावात् , वेदान्तजन्याखण्डाकारवृत्तिभास्यत्वेऽपि स्वातिरिक्तसंविदनपेक्षत्वात् , घटादीनामिव स्वातिरिक्तसंविदनपेक्षत्वेनानुभाव्यत्वाभावात् , संविद्रूपस्य स्वरूपमात्रस्यैव, न तु वृत्तिरूपस्य गौणस्य ज्ञानस्य, न वा ज्ञातुरौपाधिकस्य, इति ज्ञातुरात्मनः साक्षिभास्यतावेलायां स्वस्य, परस्य वा न स्वप्रकाशत्वम् ॥

अयमेव न्यायो धर्मभूतज्ञानस्यान्तःकरणवृत्तेरपि । तत्रापि स्वभानार्थं वृत्त्यन्तरानपेक्षामात्रेण गौणस्वप्रकाशत्वस्वीकारेऽपि निष्कृष्टमुक्तरूपं स्वप्रकाशत्वं नोररीक्रियते, इति सर्वेषामात्मनामनौपाधिकरूपेणैकत्वाद् यावदखण्डाकारवृत्ति न स्वप्रकाशत्वम् , इति परानुभवेन स्वानुभवस्यापि 'अज्ञासिषमि'ति वेद्यत्वानुभवः संविद्रूपस्यात्मनः स्वप्रकाशत्वं न विहन्ति ॥

अतोऽत्रानुभूतिशब्देन धर्मभूतज्ञानस्य विवक्षायामुक्तरूपं स्वप्रकाशत्वं बाधितम् , स्वरूपज्ञानविवक्षायां तु न स्वप्रकाशत्वव्याघातः ॥

न चात्रानुभूतिशब्देन धर्मभूतज्ञानस्य विवक्षा, इति अनुभूतिः स्वप्रकाशेति न विरुध्यते । स्वप्रकाशत्वं ह्यात्मनः संविन्मात्रतया स्वभासकसंविदन्तरावभास्यत्वाभावेनैव, न तु वृत्तिव्याप्यत्वाभावेन, इति घटा-

दिवत् फलव्याप्यत्वरूपमनुभाव्यत्वमेव विवक्ष्यते, इत्यनुभूतिस्वप्रकाशत्वानुमानं फलव्याप्यत्वाभावेनैव; अन्यथा घटादिवदननुभूतित्वप्रसङ्गोऽनुभूतेः, स्वरूपज्ञानस्य वा ॥

अत्रानुभूतिशब्देन धर्मभूतज्ञानस्याविवक्षणात् परानुभवानां परेणानुभाव्यत्वम्, प्रमाणजन्यस्य परानुभवस्यान्तःकरणपरिणामविशेषस्य स्वरूपज्ञानस्वरूपमनुभूतित्वं वा न कस्यापि सम्प्रतिपन्नम् ; तस्यान्तःकरणपरिणामविशेषस्य, घटस्य च जडत्वेन स्वरूपज्ञानरूपानुभूतित्वाभावापत्तिरिष्टा पत्तिरेव, इति परानुभवाङ्गीकारो नानुभूत्यननुभाव्यत्वविरोधी, इति शब्दार्थग्रहणम्, आचार्यस्य ज्ञानवत्त्वमनुमाय तदुपसत्तिश्च न व्याहन्यते ॥

द्विविधं हि स्वप्रकाशत्वम्- स्वरूपज्ञानगतम्, धर्मभूतज्ञानगतं च। आद्यं स्वस्मै स्वयं प्रकाशमानत्वम्, द्वितीयं स्वाश्रयं प्रति स्वसत्तयैव प्रकाशमानत्वमिति श्रीभाष्यसिद्धान्तः। तत्र प्रथमं स्वप्रकाशत्वमद्वैतमतेऽपि वृत्तिमात्रभास्यत्वरूपं संविदात्मनो घटादिवदनुभाव्यत्वाभावेऽप्युपपद्यते। द्वितीयं तु श्रीभाष्यमते धर्मभूतज्ञानस्थानीयान्तःकरणवृत्तेरपि घटादिवदेव संविद्भास्यत्वस्वीकाराद् जडस्य तस्याविरुद्धं वृत्त्यन्तरास्वीकारेऽपि। स्वसत्तयैव प्रकाशमानत्वं हि मुख्यस्य संविदात्मनो वृत्तेरावरणनिवृत्तिमात्रप्रयोजकत्वेन स्वप्रकाशमात्रस्यान्यानधीनत्वाद् नानुभाव्यत्वमपेक्षते ॥

अत एव घटादिवैलक्षण्यम्। अनुभूतं घटादिकं ह्यनुभूतिरिव न वृत्तिव्याप्यमात्रम, किन्तु फलव्याप्यम्। न हि वृत्तिविषयत्वमात्रमप्यनुभाव्यत्वमनुभूतेः, इति घटादिरननुभूतिः; उक्तविधानुभाव्यत्वात्। अनुभूतेरपि तथाऽनुभाव्यत्वे तु सापि घटादिवदननुभूतिः स्यात्; तस्यानुभूतिस्वभावविरहाद्, घटादिवदननुभाव्यत्वेऽपि वृत्तिव्याप्यत्वरूपमनुभाव्यत्वमनुभूतेर्नाननुभूतित्वप्रयोजकम् ॥

न चानुभूतेरननुभाव्यत्वे गगनकुसुमादिवदसत्त्वं प्रसज्यते; गगनकुसुमादेरपि विकल्पाख्यवृत्तिविषयत्वेनानुभाव्यत्वाभावेन वृत्तिमात्रव्याप्यत्वात्। इयान् विशेषः--अनुभूतेः प्रमाणजन्यवृत्तिव्याप्यत्वम्, गगनकुसुमादेस्तु विकल्पाख्यवृत्तिविषयत्वम, इति न गगनकुसुमादिसाम्यमनुभूतेः, घटादेर्वा, इति न गगनकुसुमादिवदनुभूतेरननुभाव्यत्वेऽसत्त्वप्रसङ्गः; प्रमाणजन्यवृत्तिव्याप्यत्व-विकल्पाख्यवृत्तिविषयत्वाभ्यां तयोर्विशेषात् ॥

तत्र न स्वरूपज्ञानमज्ञानविरोधि, किन्तु वृत्त्युपहितम्, इत्यनुभाव्यत्वेऽप्यनुभूतेरुक्तविधे घटादिकमज्ञानाविरोधि, अनुभूतिस्तु प्रमाणजन्याऽज्ञानविरोधिनी। तत्र संविदात्मरूपाया अनुभूतेरज्ञानाविरोधित्वम्; तस्या अज्ञानाश्रयत्व-तद्विषयत्वाभ्याम्। घटादिकं तु नाज्ञानस्याश्रयः, विषयो वा; अज्ञानकार्यत्वात्। तदुक्तम्—

"आश्रयत्व-विषयत्वभागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥"

इति। घटादिकमज्ञानाविरोधि; तदाश्रयत्व-तद्विषयत्वयोस्तत्राभावात्। न हि घटादिकमज्ञानस्याश्रयः शुद्धं संविद्रूपमिव; अन्यथा घटोऽज्ञ इति प्रतीत्यापत्तेः, 'घटं न जानामी'ति प्रतीतिस्त्वस्याज्ञानविरोधि-तदवच्छिन्नचैतन्यावच्छेदकत्वेन ॥

अज्ञानविरोधित्वं सर्वत्र वृत्तिरूपाया एवानुभूतेर्ज्ञातृ धर्मभूतायाः, न तु केवलायाः संविदः। न च तस्या अज्ञानाविरोधित्वं स्वाभाविकं घटादेरिवाऽऽपादनमर्हति। धर्मभूतायास्तु तद्विरोधित्वाद् घटादेरिव नाज्ञानाविरोधित्वापत्तिः; अनुभूतेरिव घटादेरज्ञाननिवर्तकत्वाभावेन ततो विशेषात्। अज्ञानाविरोधित्वं हि घटादेरज्ञानानिवर्तकत्वेन। न चेदमनुभूतिसाधारणम्; अज्ञाननिवर्तकत्वादनुभूतेः, इति न घटादेरिवाज्ञानाविरोधित्वमनुभूतेर्धर्मभूतायाः ॥

अयमेव न्यायो गगनकुसुमादिस्थलेऽपि; गगनकुसुमादेः स्वतोऽज्ञानानिवर्तकत्वात्, अनुभूतेः तन्निवर्तकत्वाच्च। अज्ञानाविरोधित्व-तद्विरोधित्वे तन्निवर्तकत्व-तदभावनिबन्धने, न तु वस्तुस्वभावनिबन्धने। अतो घटादिवदनुभाव्यत्वेऽप्यनुभूतेर्वृत्तिव्याप्यत्वरूपस्यानुभाव्यत्वस्य घटादिविलक्षणस्याद्वैतिमते स्वीकारात्, तस्याननुभूतित्वाप्रयोजकत्वाद् न घटादिवदननुभूतिप्रसङ्गो दुर्वारः ॥

अयं भावः—अनुभूतिर्द्विविधा— प्रमाणजन्यवृत्तिरूपा, अनुत्पादस्वभावसंविन्मात्ररूपा च। तत्राद्याया अज्ञानविरोधित्वम्, द्वितीयस्यास्तदविरोधित्वम्; तस्या एव संविदात्मरूपता, सत्य-ज्ञानादिवाक्यावगतसत्यादिस्वरूपता वा। सा हि नित्यात्मस्वरूपा, न घटादिवदनुभाव्या, अनुभूतिरूपत्वात् स्वप्रकाशा च। प्रथमा तु स्वातिरिक्तसंविदवभास्यत्वाद् न स्वप्रकाशा; अनुभूतिशब्दवाच्यत्वेऽपि जडान्तःकरणधर्मत्वात्, तत्तादात्म्या-

पत्त्याऽहमर्थात्मधर्मत्वाच्च घटादिवद् जन्या। तस्यां ज्ञानत्वव्यपदेशस्त्वनुभूतिस्वरूपसंविदवच्छेदकत्वेन केवलमुपचारात्। तदुक्तम्—'अन्तःकरणवृत्तौ ज्ञानत्वोपचारात्' इति ॥

तत्राद्वैतिनः स्वप्रकाशत्वानुमाने नित्यामेव संविदं पक्षीकुर्वन्ति, न तु प्रमाणजन्यां गौणीमनुभूतिम्, इति तस्याः पक्षतामादायाननुभूतित्वापादनमनापादनमेव। नित्यायास्तु पूर्वोक्तरीत्या मुख्यानुभूतिस्वरूपाया वृत्तिमात्रव्याप्याया घटादिविलक्षणाया अननुभूतित्वापादनं तु न साम्प्रतम्। श्रीभाष्यकारास्त्वनुभूतिशब्देन स्वरूपज्ञान-धर्मभूतज्ञानयोर्भिन्नयोर्मुख्यानुभूतिशब्दव्यपदेश्यत्वमात्रेणैक्यमिव मत्वा धर्मभूतज्ञानदूषणानि सर्वाणि प्रायेण स्वरूपज्ञानेऽप्यतिदिशन्ति। इदं तु व्यधिकरणम् ॥

अयमत्र निष्कर्षः—अनुभूतिः, स्वप्रकाशा, अनुभूतित्वात्; अनुत्पादस्वभावा, विकारान्तरशून्या, निर्विशेषा, आत्मस्वरूपा, अहङ्कारानानुबन्धिनी, ज्ञातृत्वादीनां मिथ्यात्वादित्यादयो विषया अद्वैतसिद्धान्तस्य मूलतत्त्वानि। तत्रानुभूतिस्वप्रकाशत्वमनुपदं समर्थितम्; तस्या अनुत्पत्तिस्तु श्रुत्यादिप्रमाणैरवसीयते ॥

### अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

#### अनुभूतेरनुत्पादस्वभावत्वायोगः

यत्तु—संविदः स्वतः सिद्धायाः प्रागभावाद्यभावादुत्पत्तिर्निरस्यते, तदन्धस्य जात्यन्धेन यष्टिः प्रदीयते। प्रागभावस्य ग्राहकाभावादभावो न शक्यते वक्तुम्; अनुभूत्यैव ग्रहणात् ॥

कथमनुभूतिः सती तदानीमेव स्वाभावं विरुद्धमवगमयतीति चेत्, न ह्यनुभूतिः स्वसमकालवर्तिनमेव विषयीकरोतीत्यस्ति नियमः; अतीतानागतयोरविषयत्वप्रसङ्गात् ॥

अथ मन्यसे–अनुभूतिप्रागभावादेः सिद्ध्यतस्तत्समकालभावनियमोऽस्ति—इति, किं त्वया क्वचिदेवं दृष्टम्, येन नियमं ब्रवीषि ?

हन्त तर्हि तत एव दर्शनात् प्रागभावादिः सिद्ध इति न तदपह्नवः। तत्प्रागभावं च तत्समकालवर्तिनमनुन्मत्तः को ब्रवीति ? इन्द्रियजन्मनः प्रत्यक्षस्य ह्येष स्वभावनियमः,

यत् स्वसमकालवर्तिनः पदार्थस्य ग्राहकत्वम्, न सर्वेषां ज्ञानानाम्, प्रमाणानां च; स्मरणानुमानागम-योगिप्रत्यक्षादिषु कालान्तरवर्तिनोऽपि ग्रहणदर्शनात् ॥

अत एव च प्रमाणस्य प्रमेयाविनाभावः। न हि प्रमाणस्य स्वसमकालवर्तिनाऽविनाभावोऽर्थसंबन्धः, अपि तु यद्देश-कालादिसंबन्धितया योऽर्थोऽवभासते, तस्य तथाविधाकारमिथ्यात्वप्रत्यनीकता। अत इदमपि निरस्तम्—स्मृतिर्न बाह्यविषया; नष्टेऽप्यर्थे स्मृतिदर्शनात्—इति ॥

अथोच्येत—न तावत् संवित्प्रागभावः प्रत्यक्षावसेयः; अवर्तमानत्वात्, न च प्रमाणान्तरावसेयः; लिङ्गाद्यभावात्, न हि संवित्प्रागभावव्याप्तमिह लिङ्गमुपलभ्यते। नानुपपत्तिरपि कस्यचित् दृश्यते। न चाऽऽगमस्तद्विषयो दृष्टचरः। अतस्तत्प्रागभावः प्रमाणाभावादेव न सेत्स्यति—इति, यद्येवं स्वतः सिद्धत्वविभवं परित्यज्य प्रमाणाभावेऽवरूढश्चेत्, योग्यानुपलब्ध्यैवाभावः समर्थित इत्युपशाम्यतु भवान् ॥

किंच—प्रत्यक्षज्ञानं स्वविषयं घटादिकं स्वसत्ताकाले सन्तं साधयत् स्वस्य न सर्वदा सत्तामवगमयद् दृश्यते, इति घटादेः पूर्वोत्तरकालसत्ता न प्रतीयते। तदप्रतीतिश्च संवेदनस्य कालपरिच्छिन्नतया प्रतीतेः। घटादिविषयमेव संवेदनं स्वयं कालानवच्छिन्नं प्रतीतं चेत्, संवेदनविषयो घटादिरपि कालानवच्छिन्नः प्रतीयेत, इति नित्यः स्यात् ॥

नित्यं चेत् संवेदनं स्वतः सिद्धम्, नित्यमित्येव प्रतीयेत, न च तथा प्रतीयते। एवमनुमानादिसंविदोऽपि कालानवच्छिन्नाः प्रतीताश्चेत्, स्वविषयानपि कालानवच्छिन्नान् प्रकाशयन्ति, इति ते सर्वे कालानवच्छिन्ना नित्याः स्युः; संविदनुरूपस्वरूपत्वाद् विषयाणाम् ॥

न च निर्विषया काचित् संविदस्ति; अनुपलब्धेः। विषयप्रकाशनतयैवोपलब्धेरेव हि संविदः स्वयंप्रकाशता समर्थिता। संविदो विषयप्रकाशनतास्वभावविरहे सति स्वयंप्रकाशत्वासिद्धेः, अनुभूतेरनुभवान्तराननुभाव्यत्वाच्च संविदस्तुच्छतैव स्यात्॥

न च—स्वाप-मद-मूर्च्छादिषु सर्वविषयशून्या केवलैव संवित् परिस्फुरतीति-वाच्यम्; योग्यानुपलब्धिपराहृतत्वात्। तास्वपि दशास्वनुभूतिरनुभूता चेत्, तस्याः प्रबोधसमयेऽनुसन्धानं स्यात्। न च तदस्ति॥

ननु—अनुभूतस्य पदार्थस्य स्मरणनियमो न दृष्टचरः; अतः स्मरणाभावः कथमनुभवाभावं साधयेत्? उच्यते; निखिलसंस्कारतिरस्कृतिकरदेहविगमादिप्रबलहेतुविरहेऽप्यस्मरणनियमोऽनुभवाभावमेव साधयति। न केवलमस्मरणनियमादनुभवाभावः; सुप्तोत्थितस्य 'इयन्तं कालं न किंचिदहमज्ञासिषम्' इति प्रत्यवमर्शेनैव सिद्धेः॥

न च—सत्यप्यनुभवे तदस्मरणनियमो विषयावच्छेदविरहात्, अहङ्कारविगमाद्वेति—शक्यते वक्तुम्; अर्थान्तराननुभवस्य, अर्थान्तराभावस्य चानुभूतार्थान्तरस्मरणहेतुत्वाभावात्। तास्वपि दशास्वहमर्थोऽनुवर्तत इति च वक्ष्यते॥

ननु—स्वापादिदशास्वपि सविशेषोऽनुभवोऽस्ति-इति पूर्वमुक्तम्, सत्यमुक्तम्? स त्वात्मानुभवः, स च सविशेष एवेति स्थापयिष्यते, इह तु सकलविषयविरहिणी निराश्रया च संविद् निषिध्यते॥

केवलैव संविदात्मानुभव इति चेत्, सा च साश्रयेति ह्युपपादयिष्यते, अतोऽनुभूतिः सती स्वयं स्वप्रागभावं न साधयति। इति प्रागभावासिद्धिर्न शक्यते वक्तुम्। अनुभूतेरनुभाव्यत्वसंभवोपपादनेनान्यतोऽप्यसिद्धिर्निरस्ता। तस्माद् न प्रागभावाद्यसिद्ध्या संविदोऽनुत्पत्तिरुपपत्तिमती॥

## अत्राद्वैतिनां महासिद्धान्तः

### अनुभूत्यनुत्पादसमर्थनम्

अत्रेदं तत्त्वम्—अनुभूत्यनुत्पत्तिवादो नाम स्वरूपतस्तस्या अनुत्पत्तिवादः, न तु तदुपाध्यन्तःकरणपरिणामगौणानुभूत्यनुत्पत्तिवादः, उपाध्युत्पत्तिप्रयुक्तोपहितसंविदनुत्पत्तिवादो वा। अयमेव न्यायः श्रीभाष्यसिद्धान्तेऽपि, यत्रापि स्वरूपज्ञानस्य न स्वरूपतोऽन्यथाभावलक्षणोत्पत्तिः, किन्तु धर्मभूतज्ञानस्यैव विकासलक्षणोऽन्यथाभावः, तत्प्रयुक्तश्च स्वरूपज्ञानस्योत्पत्तिवादः; संविदात्मनः स्वरूपज्ञानस्य तु स्वतः सिद्धस्य प्रागभावाभावेनोत्पत्त्यसंभवात् ॥

प्रागभावो हि यत्रोत्पत्तिप्रत्ययः, तत्र कारणतयोत्पत्त्यनुपपत्त्या कल्प्यते। स्वरूपज्ञानस्य तु स्वरूपतो नोत्पत्तिः, इति न तत्प्रागभावो मतद्वयेऽपि। धर्मभूतज्ञानस्य, अन्तःकरणपरिणामस्य वा तूत्पत्तिः, प्रागभावस्वीकारश्च। श्रीभाष्यमते तु धर्मभूतज्ञानस्यापि नित्यत्वाद् न प्रागभावः, न वोत्पत्तिः संभवति; नित्यत्वोत्पत्त्योर्व्याघातात् ॥

सत्कार्यवादे हि घटादीनामपि कारणस्य मृदो घटात्मना विकासः, आविर्भावः, अभिव्यक्तिर्वा जन्म, विनाशस्तु सूक्ष्मरूपकारणात्मता संकोचः, इति न संकोच-विकासातिरिक्तोत्पत्ति-विनाशव्यपदेशः। अतः संकोचविकासौ, नित्यत्वं चेति व्याहतम् ॥

सत्यम्, अनुभूतिप्रागभावो नानुभूत्या प्रत्यक्षीक्रियते; अतीतानागतानामप्यनुमानादिना ग्रहणसम्भवात्। अतीतानागतत्वं तु ध्वंस-प्रागभावप्रतियोगिन एव भवति। न च नित्यस्यातीतत्वम्, अनागतत्वं वा, इत्यनुभूतिनित्यत्वे तदुत्पत्ति-ध्वंसप्रतीत्यभावेन तत्प्रागभावस्यैवासंभवात् केन वा कथं वा तत्प्रागभावग्रहणम्? न च स्वतः सिद्धस्य, स्वप्रकाशस्य वा स्वप्रकाशार्थं प्रमाणापेक्षा। प्रमाणं हि स्वतः सिद्धस्यावरणनिवृत्त्यर्थमेव। निवृत्ते त्वावरण एव प्रमाणाभावकथा। न चानावृते स्वप्रकाशे प्रमाणाप्रवृत्त्याऽनुपलब्ध्याऽभावग्रहणं प्रमाणप्रवृत्तियोग्यस्य सत्यां प्रमाणसामग्र्याम्; तदभावे खल्वनुपलब्धिप्रमाणं प्रवर्तते, न तु सर्वथा प्रमाणाविषये प्रमाणाप्रवृत्त्याऽनुपलब्ध्या तदभावग्रहणं संभवति; अन्यथा शशशृङ्गादिप्रागभावादिकमपि प्रमाणाभावात् कल्प्येत। योग्यानुपलब्धिर्ह्यनुपलब्धिप्रमाणं नाम ॥

प्रत्यक्षं हि स्वविषयं घटादिकं स्वसत्ताकाले सन्तं साधयद् न सर्वदा सत्तामवगमयद् दृश्यते, इत्यनित्यस्य घटादेः कालावच्छेदग्रहणानुपपत्त्या तत्प्रागभावादिः, सत्यम्, अर्थापत्त्या गृह्यते, न तु नित्यस्यात्मनोऽपि प्रागभावः, इति संविद्रूपस्यात्मनोऽर्थापत्त्याऽपि न प्रागभावादिरुपपादयितुं शक्यते; अन्यथा श्रुत्यादिप्रमाणान्तरावगतनित्यत्वेपु सर्वत्र प्रागभावादिकल्पनायां नित्यत्वकथैव लुप्येत। यथाऽऽकाशादि नित्यमेव श्रुत्यादिप्रमाणेन प्रतीयते, एवं स्वरूपज्ञानमपि नित्यमित्येव प्रतीयते ॥

वस्तुतस्तु—सविषयकस्य धर्मभूतज्ञानस्यैव विषयस्येव कालपरिच्छेदः सम्भवति, न तु स्वरूपज्ञानस्य, यत्तु निर्विषयम्, नित्यमेव च शास्त्रतः सिद्धम्। निर्विषया च संविदात्मस्वरूपभूता श्रुतिसिद्धा नापलपितुं शक्यते। सविदः स्वयंप्रकाशत्वं हि तस्या अनावरणमात्रेण, न तु सा विषयप्रकाशनस्वभावा, येन विषयप्रकाशनस्वभावतयैव स्वप्रकाशत्वम्; अन्यथा सर्वेषां सर्वदा भानापत्तिः। यथाऽनुभूतिरननुभाव्या, अननुभाव्यत्वेऽपि न तुच्छा, तथा व्यक्तमधस्तात् ॥

न च स्वाप-मूर्च्छादौ संवित् सविषयैव प्रकाशते। प्रबोधसमये तु संविन्मात्रस्यानुसन्धानं वर्तत एव—'सुखमहमस्वाप्समि'ति। इयान् विशेषः—यत् सुप्तोत्थितस्या'हमि'ति ज्ञानमहङ्कारांशेऽनुसन्धानम्, चिदंशे त्वनुभव एव। तदुक्तम्—"न सुषुप्तिगविज्ञानं नाज्ञासिषमिति स्मृतिः। कालाद्यव्यवधानत्वात्" इति। अतो नात्रानुभूतेः स्वयंप्रकाशायाः प्रबोधसमयेऽननुसन्धानम्। अधिकं वार्तिकतोऽवगन्तव्यम्। निर्विषया, निराश्रया च संविदुपरिष्टादुपपादयिष्यते। अयमेव न्यायः संविदो विनाशाख्यविकाराभावेऽपि; नित्यत्वेनैव तस्यापि सिद्धत्वात् ॥

### अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

#### अनुभूतेर्विकारान्तरसमर्थनम्

यदप्यस्या अनुत्पत्त्या विकारान्तरनिरसनम्, तदप्यनुपपन्नम्; प्रागभावे व्यभिचारात्। तस्य हि जन्माभावेऽपि विनाशो दृश्यते। भावत्वे सतीति विशेषणे तर्ककुशलताऽऽविष्कृता भवति। तथाच भवदभिमताऽविद्याऽनुत्पन्नैव विविधविकारास्पदम्, तत्त्वज्ञानोदयादन्तवती च, इति तस्यामनैकान्त्यम् ॥

तद्विकाराः सर्वे मिथ्याभूता इति चेत्, किं भवतः परमार्थभूतोऽप्यस्ति विकारः, येनैतद्विशेषणमर्थवद् भवति ? न ह्यसावभ्युपगम्यते ॥

### अनुभूतेर्विभागसमर्थनम्

यदपि—अनुभूतिरजत्वात् स्वस्मिन् विभागं न सहते—इति, तदपि नोपपद्यते; अजस्यैवात्मनो देहेन्द्रियादिभ्यो विभक्तत्वात्, अनादित्वेन चाभ्युपगताया अविद्याया आत्मनो व्यतिरेकस्यावश्याश्रयणीयत्वात्। स च विभागो मिथ्यारूप इति चेत्, जन्मप्रतिबद्धः परमार्थविभागः किं क्वचिद् दृष्टस्त्वया? अविद्याया आत्मनः परमार्थतो विभागाभावे वस्तुतो ह्यविद्यैव स्यादात्मा। अबाधितप्रतिपत्तिसिद्धदृश्यभेदसमर्थनेन दर्शनभेदोऽपि समर्थित एव, छेद्यभेदाद् छेदनभेदवत् ॥

## अत्राद्वैतिनां महासिद्धान्तः

### अनुभूतेर्विकारान्तरनिरसनम्

अत्रेदं तत्त्वम् :-संविदो विकारान्तरशून्यत्वं भावत्वे सत्यनुत्पत्त्या, नानुत्पत्तिमात्रेण। अद्वैतिनामविद्या तु न भावरूपा, न वाऽभावरूपा, किन्तु भावाभावविलक्षणा तृतीयप्रकारेति व्यक्तं तत्त्वप्रदीपिकादौ, इति न तत्र व्यभिचारः; अविद्याया भावरूपत्वेऽपि तस्य विनाशस्य स्वरूपतोऽप्यभावरूपत्वेन तेन साकं कार्याणामपि बाधात्, निवृत्तेरपि मिथ्यात्वपक्षे धर्म-धर्मिणोरुभयोरप्यभावात्, निवृत्तिसत्यत्वपक्षे तद्वतो धर्मिणोऽभावाच्च विकारान्तरवत्त्वमविद्यायां बाधितम्, इति न तत्र व्यभिचारः। कारणात्मनाऽवस्था हि ब्रह्मण इव नाऽविद्याया अपि, इति विकारे मिथ्याभूतत्वविशेषणं न दीयते, इति तद्विशेषणमादाय प्रयुक्तानां दूषणानां नावसरः ॥

विशेषस्तु—ब्रह्मण्यविकृतेऽपि तद्व्यतिरेकेणान्यस्याभावः; निर्विशेषत्वात्, अविद्यायां तु तस्या बाधाद् विकारान्तरशून्यत्वम्। नाशो नाम विकारः कारणात्मनाऽवस्थानम्। न चेदमविद्यायां वर्तते, इति न विकारवत्त्वमविद्यायाः, इति हेतुरिव साध्यमपि तत्र वर्तते, इति न व्यभिचार इति तु तत्त्वम् ॥

### अनुभूतेर्विभागासहत्वसमर्थनम्

एतेन—अनुभूतिः, न वस्तुपरिच्छिन्ना, विभागानर्हा वा, अजत्वादित्यपि—व्याख्यातम्; विभागो ह्यत्र धर्मिसमसत्ताक एव विवक्ष्यते, न च स आत्मनि वर्तते। आत्मन इव भेदस्य पारमार्थिकत्वाभावेन समसत्ताकत्वाभावात्॥

एतेन—अविद्याभेदोऽप्यात्मनः—व्याख्यातः। तस्या अपि ब्रह्मव्यतिरेकेण तत्कार्याणामिवाभावात्, इति नाविद्याया आत्मत्वापत्तिः। इदमेवाभिप्रेत्य मिथ्याभूतोऽविद्याविभाग आत्मन इति तत्र तत्रोच्यते। इदं तु वस्तुस्थितिकथनम्, न तु विशेषणं विभागस्य। अयमेव न्यायो दृश्य-दर्शनादिभेदेऽपि। निर्धर्मकत्वात्तु ब्रह्मणो न तत्र दृश्यमन्यत्, तद्विभागो वा॥

### अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

#### अनुभूतिसधर्मकत्वसमर्थनम्

यदपि—नास्या दृशेर्दृशिरूपाया दृश्यः कश्चिदपि धर्मोऽस्ति। दृश्यत्वादेव तेषां न दृशिधर्मत्वम्—इति च, तदपि स्वाभ्युपगतैः प्रमाणसिद्धैर्नित्यत्व-स्वयंप्रकाशत्वादिधर्मैरुभयमनैकान्तिकम्। न च ते संवेदनमात्रम्; स्वरूपभेदात्॥

स्वसत्तयैव स्वाश्रयं प्रति कस्यचिद् विषयस्य प्रकाशनं हि संवेदनम्। स्वयंप्रकाशता तु स्वसत्तयैव स्वाश्रयाय प्रकाशमानता॥

प्रकाशश्च चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यम्, सर्वकालवर्तमानत्वं हि नित्यत्वम्, एकत्वमेकसङ्ख्यावच्छेदः, इति तेषां जडत्वाद्यभावरूपतायामपि तथाभूतैरपि चैतन्यधर्मभूतैस्तैरनैकान्त्यमपरिहार्यम्। संविदि तु स्वरूपातिरेकेण जडत्वादिप्रत्यनीकत्वम्, इत्यभावरूपः, भावरूपो वा धर्मो नाभ्युपेतश्चेत्, तत्तन्निषेधोक्त्या किमपि नोक्तं भवेत्॥

अपि च संवित् सिध्यति वा, न वा? सिध्यति चेत्, सधर्मता स्यात्। न चेत्, तुच्छता; गगनकुसुमादिवत्। सिद्धिरेव संविदिति चेत्, कस्य कं प्रतीति वक्तव्यम्।

यदि न कस्यचित् कंचित् प्रति, सा तर्हि न सिद्धिः। सिद्धिर्हि पुत्रत्वमिव कस्यचित् कंचित् प्रति भवति ॥

आत्मन इति चेत् , कोऽयमात्मा ? ननु संविदेवेत्युक्तम् , सत्यमुक्तम् ; दुरुक्तं तु तत् ॥

तथाहि—कस्यचित् पुरुषस्य किंचिदर्थजातं प्रति सिद्धिरूपा, तत्संबन्धिनी वा संवित् स्वयं कथमिवात्मभावमनुभवेत् ?

एतदुक्तं भवति—अनुभूतिरिति स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद् वस्तुनो व्यवहारानुगुण्यापादनस्वभावो ज्ञानावगति-संविदाद्यपरनामा सकर्मकोऽनुभवितुरात्मनो धर्मविशेषो 'घटमहं जानामि' 'इममर्थमवगच्छामि' 'पटमहं संवेद्मि' इति सर्वेषामात्मसाक्षिकः प्रसिद्धः। एतत्स्वभावतया हि तस्याः स्वयंप्रकाशता भवताप्युपपादिता। अस्य सकर्मकस्य कर्तृधर्मविशेषस्य कर्मत्ववत् कर्तृत्वमपि दुर्घटमिति ॥

तथाहि—अस्य कर्तुः स्थिरत्वम् , कर्तृधर्मस्य संवेदनाख्यस्य सुख-दुःखादेरिवोत्पत्ति-स्थिति-निरोधाश्च प्रत्यक्षमीक्ष्यन्ते ॥

कर्तृस्थैर्यं तावत् 'स एवायमर्थः पूर्वं मयाऽनुभूतः' इति प्रत्यभिज्ञाप्रत्यक्षसिद्धम्। 'अहं जानामि' 'अहमज्ञासिषम्' 'ज्ञातुरेव ममेदानीं ज्ञानं नष्टम्' इति च संविदुत्पत्त्यादयः प्रत्यक्षसिद्धाः, इति कुतस्तदैक्यम् ?

एवं क्षणभङ्गिन्याः संविद आत्मत्वाभ्युपगमे पूर्वेद्युर्दृष्टमपरेद्युः 'इदमहमदर्शम्' इति प्रत्यभिज्ञा च न घटते ; अन्येनानुभूतस्य न ह्यन्येन प्रत्यभिज्ञानसंभवः ॥

### अद्वैतिनां महासिद्धान्तः

#### अनुभूतिसधर्मकत्वनिरासः

अयमत्र निष्कर्षः—सत्यम् , नित्यत्व-स्वयंप्रकाशत्वादिकमनुभूतिधर्मैः स्वीक्रियते। सर्वं तु तत् कल्पितम्। कल्पितं च सर्वमधिष्ठानव्यतिरेकेण नास्ति, इति संविन्मात्रस्य न तैर्धर्मैर्धर्मवत्त्वम्। सधर्मत्वं ह्यनुभूतेः कल्पितमेव। तदपि व्यवहारदशायाम्। यदा तदनाद्यविद्योपहितम् , तदा तु—

"अहमा भवतः केयं कारणत्वप्रकल्पने ।
किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम् ॥"

इति न्यायाद् न वस्तुतो निर्धर्मकत्वं व्याहन्यते; संविन्मात्रत्वाच्च वस्तुतः सर्वधर्माणाम्। संविन्मात्रता च तद्व्यतिरेकेणाभावः। अत एव "सर्वं खल्विदं ब्रह्मे"ति सर्वस्य ब्रह्माभेदाम्नानम्, स्वसत्तयैव स्वाश्रयं प्रति कस्यचन प्रकाशनं हि धर्मभूतस्य स्वरूपज्ञानातिरिक्तस्यैव ॥

न च तद् निर्धर्मकमित्यद्वैतवादः। न च तद् नित्यमपि, किन्तु स्वरूपज्ञानमेव तथा। तस्य नित्यत्वं त्वनित्यत्वाभावरूपं स्वरूपमेव। संविन्मात्रे धर्माणां निषेधो ह्यध्यारोपापवादन्यायेन, इत्यारोपेण प्रसक्तिः, तस्यापवादश्च, इति नाप्रसक्तप्रतिषेधोऽपि। "सदेव सोम्येदमग्र आसी"दिति तादात्म्येन प्रसक्तिः, "एकमेवाद्वितीयमि"ति निषेधश्च ॥

संविन्मात्रं तु स्वयंसिद्धम्; प्रकाशत्वात्। न च तावता सधर्मत्वम्; सिद्धेरपि संविद्रूपत्वात्। न च कस्येयं सिद्धिः? कं प्रतीति चाकाङ्क्षा नियता। न च सर्वत्र कस्येति सम्बन्ध्याकाङ्क्षा नियता। न ह्यादित्यं दृष्ट्वा कस्यायमित्याकाङ्क्षा भवति। न च संविदन्यस्य कस्यापि गुणः, येन गुण इव गुणिनमाकाङ्क्षेत्। व्यक्तं चेदं शाबरभाष्ये नित्यज्ञानरूपमेवात्मेति विवेचनावसरे। तस्याहमर्थत्वम्, अनहमर्थत्वं वेति त्वन्यदेतत्। सिद्धिर्न तदाश्रयं नियमेनाकाङ्क्षतीत्येतदेवात्र विवक्षितम्। स्पष्टं च संविद एवात्मत्वम्। तत् सिद्धम्— न संविदतिरेकेण तदाश्रय आत्मा कश्चनास्तीति ॥

अत्र संविन्मात्रात्मतायां श्रीभाष्यकाराणां महापूर्वपक्षः

संविन्मात्रात्मत्वनिरासः

अनुभूतेरात्मत्वाभ्युपगमे तस्या नित्यत्वेऽपि प्रतिसन्धानासंभवस्तदवस्थः। प्रतिसन्धानं हि पूर्वापरकालस्थायिनमनुभवितारमुपस्थापयति, नानुभूतिमात्रम्—'अहमेवेदं पूर्वमप्यन्वभूवमि'ति। भवतो ह्यनुभूतेर्नानुभवितृत्वमिष्टम्। अनुभूतिरनुभूतिमात्रमेव। संविद् नाम काचिद् निराश्रया, निर्विषया वाऽत्यन्तानुपलब्धेर्न संभवतीत्युक्तम्। उभयाभ्युपेता संविदेवात्मेत्युपलब्धिपराहतम्। अनुभूतिमात्रमेव परमार्थ इति निष्कर्षकहेत्वाभासाश्च निराकृताः ॥

## अद्वैतिनां महासिद्धान्तः

### संविन्मात्रात्मत्वसमर्थनम्

तत्र न धर्मभूतज्ञानं संविदात्मा नाम, किन्तु तदतिरिक्तं स्वरूपज्ञानमेव, धर्मभूतज्ञानं तु कस्यचित् पुरुषस्य किञ्चिदर्थंजातं प्रति सिद्धिरित्यत्र न विप्रतिपत्तिः, इति ज्ञानावगत्याद्यपरनामाऽनुभूतिः स्वसत्तया स्वाश्रयं प्रति कस्यचिद् वस्तुनो व्यवहारानुगुण्यापादनस्वभावा नात्मेत्यद्वैतिनोऽपि स्वीकुर्वन्ति। ते हि स्वरूपज्ञानमेव- स्वप्रकाशसंविदात्मेति मन्यन्ते ॥

स हि धर्मी, अयं तु धर्मविशेषः, यमेवाश्रित्य 'जानामी'ति व्यपदेशः। सकर्मका हीयम् , न स्वरूपज्ञानमिव निर्विषया; अनात्मत्वाच्च। तस्य कर्ता त्वन्यो ज्ञाता वा यद्यपि न स्वरूपज्ञानमात्रम् ; अहमर्थस्य चिदचिद्ग्रन्थिरूपस्यैव कर्तृत्वात् , ज्ञातृत्वाच्च ॥

स हि स्वतः स्थिरः, उपाधिसम्बन्धात्तूपाधिनाश उपहितरूपेण नाशादस्थिरः। 'स एवायं मया पूर्वमनुभूतः' इति प्रत्यभिज्ञा ह्युपहितमात्मानं यावदुपाधिसत्त्वं स्थिरमेव विषयीकरोति, न तु संविन्मात्रम् ; पूर्वस्य क्षणभङ्गुरत्वात् , उत्तरस्य च स्थिरैकस्वभावत्वात्। न च संविन्मात्रस्य प्रतिसन्धानं नोपपद्यते; प्रतिसन्धातुरहमर्थत्वात् , तस्य च यावदुपाधि स्थिरत्वात्, पूर्वापरकालभावित्वाच्च। संविन्मात्रं नाहन्तत्त्वम् , न वा प्रतिसन्धातृ ; निरस्तसमस्तोपाधिकाहमर्थैकदेशचिन्मात्रत्वाच्च तस्य, इति न तस्याननुभूतित्वम् , अननुसन्धातृत्वं च विना किमप्यनुपपन्नम्। आत्मत्वं तु मुख्यं संविन्मात्रस्यैव, नाहमर्थस्य चिदचिद्ग्रन्थिरूपस्य। 'अहमि'ति न मुख्यमात्मानं विषयीकरोति; अन्यथा शरीरेन्द्रियादीनामप्यहमनुभवेन शरीरादीनामपि ज्ञात्रात्मरूपतापत्तिः। स हि कदाचित् शरीरम् , कदाचिदिन्द्रियम्, कदाचिद् मनः, कदाचित् कारणशरीरं च गृह्णन् नैकरूपमात्मानं गोचरयति, इति पूतिकूष्माण्डायमानत्वाद् नात्मनि प्रमाणम्। अतोऽनुभूतिमात्रमेवात्मा। 'अहं जानामि' इत्यहम्प्रत्यये योऽयमनिदमंशः प्रकाशैकरसः, स सच्चित्पदार्थ एवात्मा। तस्मिन् तद्बलनिर्भासिततया 'अहं जानामी'ति सिद्ध्यन् अहमर्थश्चिन्मात्रव्यतिरेकी युष्मदर्थ एव, मुख्यात्मा तु संविन्मात्रमहमर्थाधिष्ठानं स्वरूपमिति निष्कर्षः ॥

## अथ श्रीभाष्यकाराणां महापूर्वपक्षः

### अहमर्थात्मत्वसमर्थनम्

ननु च 'अहं जानामि' इत्यस्मत्प्रत्यये योऽनिदमंशः प्रकाशैकरसश्चित्पदार्थः, स एवाऽऽत्मा। तस्मिन् तद्बलनिर्भासिततया युष्मदर्थलक्षणः 'अहं जानामी'ति सिध्यन्नहमर्थश्चिन्मात्रातिरेकी युष्मदर्थ एव, नैतदेवम्, 'अहं जानामि' इति धर्म-धर्मितया प्रत्यक्षप्रतीतिविरोधादेव। किञ्च—

अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत्।
अहंबुद्ध्या परागर्थात् प्रत्यगर्थो हि भिद्यते ॥
निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट्।
भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते ॥
अहमर्थविनाशश्चेद् मोक्ष इत्यध्यवस्यति।
अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥
मयि नष्टेऽपि मत्तोऽन्या काचिद् ज्ञप्तिरवस्थिता।
इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति ॥
स्वसंबन्धितया ह्यस्याः सत्ताऽपि ज्ञप्तितादि च।
स्वसंबन्धवियोगे तु ज्ञप्तिरेव न सिद्ध्यति ॥
छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत्।
अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम् ॥
'विज्ञातारमरे केन जानात्येवे'ति च श्रुतिः।
"एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति" च स्मृतिः ॥
"नात्मा श्रुतेरि"त्यारभ्य सूत्रकारोऽपि वक्ष्यति।
'ज्ञोऽत एव"त्यतो नात्मा ज्ञप्तिमात्रमिति स्थितम् ॥

अहंप्रत्ययसिद्धो ह्यस्मदर्थः, युष्मत्प्रत्ययविषयो युष्मदर्थः। तत्र'अहं जानामी'ति सिद्धो ज्ञाता युष्मदर्थ इति वचनं जननी मे वन्ध्येतिवद्व्याहतार्थम्। न चासौ ज्ञाताऽहमर्थोऽन्याधीनप्रकाशः; स्वयंप्रकाशत्वात्। चैतन्यस्वभावता हि स्वयंप्रकाशता। यः प्रकाशस्वभावः; सोऽनन्याधीनप्रकाशः, दीपवत्। न हि दीपादेः स्वप्रभाबलनिर्भासितत्वेनाप्रकाशत्वम्, अन्याधीनप्रकाशत्वं च। किं तर्हि ?

दीपः स्वयंप्रकाशस्वभावः स्वयमेव प्रकाशते, अन्यानपि प्रकाशयति स्वप्रभया ॥

एतदुक्तं भवति—यथैकमेव तेजोद्रव्यं प्रभा-प्रभावद्रूपेणावतिष्ठते । यद्यपि प्रभा प्रभावद्द्रव्यगुणभूता; तथाऽपि तेजोद्रव्यमेव, न शौक्ल्यादिवद् गुणः; स्वाश्रयादन्यत्रापि वर्तमानत्वात्, रूपवत्त्वाच्च शौक्ल्यादिवैधर्म्यात् । प्रकाशवत्त्वाच्च तेजोद्रव्यमेव, नार्थान्तरम् । प्रकाशवत्त्वं च स्वस्वरूपस्य, अन्येषां च प्रकाशकत्वात् । अस्यास्तु गुणत्वव्यवहारो नित्य-तदाश्रयत्व-तच्छेषत्वनिबन्धनः ॥

न चाश्रयावयवा एव विशीर्णाः प्रचरन्तः प्रभेत्युच्यन्ते; मणि-द्युमणिप्रभृतीनां विनाशप्रसङ्गात्, दीपेऽप्यवयवविप्रतिपत्तिः कदाचिदपि न स्यात् । न हि विशरणस्वभावावयवा दीपाश्चतुरङ्गुलमात्रं नियमेन पिण्डीभूता ऊर्ध्वमुद्यम्य ततः पश्चाद् युगपदेव तिर्यगूर्ध्वमधश्चैकरूपा विशीर्णाः प्रचरन्तीति शक्यं वक्तुम् । अतः सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना विनश्यन्ति पुष्कलकारणक्रमोपनिपातात् । प्रभायाः स्वाश्रयसमीपे प्रकाशाधिक्यमित्याद्युपलब्धिव्यवस्थाप्यम्; अग्न्यादीनामौष्ण्यादिवत् । एवमात्मा चिद्रूप एव चैतन्यगुणक इति ॥

चिद्रूपता हि स्वयंप्रकाशता । तथाहि श्रुतयः–"स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव, एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" "विज्ञानघन एव" "अत्रायं पुरुषः स्वयंज्योतिर्भवति" "न विज्ञातुर्विज्ञातेर्विपरिलोपः" "अथ यो वेदेदं जिघ्राणीति स आत्मा" "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" "एष हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः" "विज्ञातारमरे केन विजानीयात्" "जानात्येवायं पुरुषः" "न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्" "स उत्तमः पुरुषः" "नोपजनं स्मरन्निदं शरीरम्" "एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति"

"तस्माद्वा एतस्मान्मनोमयात्। अन्योऽन्तर आत्मा विज्ञानमयः—इत्याद्याः। वक्ष्यति च "ज्ञोऽत एवे"ति। अतः स्वयंप्रकाशोऽयमात्मा ज्ञातैव, न प्रकाशमात्रम्। प्रकाशत्वादेव कस्यचिदेव भवेत् प्रकाशः, दीपादिप्रकाशवत्। तस्माद् नात्मा भवितुमर्हति संवित्। संविदनुभूतिज्ञानादिशब्दाः संबन्धिशब्दा इति च शब्दार्थविदः। न हि लोक-वेदयोर्जानात्यादेरकर्मकस्याकर्तृकस्य च प्रयोगो दृष्टचरः॥

## अत्राद्वैतिनां महासिद्धान्तः

### अहमर्थात्मत्वनिरासः

आत्माऽद्वैतसिद्धान्ते निष्कृष्टः सविन्मात्रमेव। अहमर्थो युष्मदर्थ एव 'अहं जानामी'ति प्रतीतिस्त्वन्तःकरणतादात्म्यापन्नस्य संविद्रूपस्याहंवृत्तिता-दात्म्यस्याप्यध्यासात्, संविन्मात्रस्य संवित्कर्मत्वानुपपत्तेश्च चिदचिद्ग्रन्थिरूपमहमर्थं वस्तुतो युष्मदर्थमेवाश्रित्य। तत्र प्रत्यक्त्वं संविन्मात्रस्यैव; तत्रैव स्वातिरिक्तचिदनपेक्षप्रकाशत्वरूपस्य स्वप्रकाशत्वस्य सत्त्वात्, अहमर्थस्यौपाधिकस्याहंकारातिरिक्तसंविदपेक्षप्रकाशस्य स्वप्रकाशसंविन्मात्रतादात्म्येनौपचारिकमेव प्रत्यक्त्वम्॥

यथाऽहङ्कारस्य स्वोपहितस्वप्रकाशसाक्षिसम्बन्धेन सार्वदिकेन प्रत्यक्त्वम्; साक्षिणः सर्वदाऽनावृतत्वात्, नैवं घटाद्यवच्छिन्नस्य युष्मदर्थस्य चैतन्यस्य, इति घटाद्यवच्छिन्नं चैतन्यं न प्रत्यक्, इति न मुख्यं स्वप्रकाशत्वमादायाहमर्थस्य प्रत्यक्त्वम्। तच्च संविन्मात्रस्याहङ्कारोपहितस्य, तदनुपहितस्य वा न संविन्मात्रस्यात्मन एव, इति नाहमर्थस्यात्मत्वम्; प्रत्यक्त्वस्यानुपहितसंविन्मात्रस्वभावत्वात्, इति संविदात्मत्वेऽप्युपपन्नत्वाद् नाहमर्थ आत्मा, किन्तु स युष्मदर्थान्तरेणोपहितस्वरूपत्वादनात्मैव॥

"युष्मदस्मत्प्रत्ययगोचरयोर्विषय-विषयिणोरि"त्यस्मत्प्रत्ययगोचरत्वं विषयिणः, युष्मत्प्रत्ययगोचरत्वं विषयस्य च प्रतीयते। इदं चाहमध्यासनिरूपणमुपलक्ष्य, तेन च विषयिणः संविन्मात्रस्य, विषयस्य च तादात्म्याध्यासेन निष्पन्नोऽहमर्थ इति प्रतीयते। तत्रास्मत्प्रत्ययगोचरपदेन संविन्मात्रं प्रतीयते॥

तत्रास्मदिति समासघटकपदेन युष्मदर्थस्येवास्मदर्थस्यापि बहुत्वं प्रतीयमानमहमर्थानां बहुत्वमौपचारिकम्, युष्मदर्थस्य तु बहुत्वं स्वा-

भाविकम्; तथापि विषय-विषयिणोरित्येकवचनाद् विषयत्वेन विषयाणामिवास्मदर्थस्थत्वेन संविदामेकत्वं स्वाभाविकमिति विवक्षयाऽऽत्माभेदं सिद्धवत् कृत्वैवाध्यासाक्षेप इति वक्तव्यम् ॥

स चाहमर्थस्यानात्मत्व एवोपपद्यते; तस्याध्यासनिबन्धनत्वात्। अध्यासवादस्यात्माभेदमाश्रित्यानङ्गीकारादध्यासाक्षेपोऽयमनुक्तोपालम्भनमेव स्यात्, एवं युष्मदर्थस्येवास्मदर्थस्यापि विषयत्वाविशेषात् विषयविषयिणोरिति पदभेदेन तन्निर्देशोऽप्यसङ्गतः स्यात् ॥

अतोऽहमर्थमेकमेवोपाध्यंशेन, उपहितांशेन च पृथक्कृत्य 'युष्मदस्मत्प्रत्ययगोचरयोरि'त्यत्र निर्देशः। तेन चाहमर्थस्यापि संविदंशस्य स्वरूपतो न बहुत्वम्, विषयत्वं वा, किन्त्वौपाधिकं बहुत्वम्, स्वतस्तु युष्मदर्थमात्रस्य बहुत्वमेव। तत्तदात्मनः स्वरूपत ऐक्येऽप्युपहितात्मना भेद एव, इत्यहङ्कारभेदमात्रेणात्मभेदः, तदुपाधिविगलितरूपेण तु न विषयत्वम्, किन्तु विषयित्वमेव; तथापि भिन्नभिन्नाहङ्काररूपोपाधिभेदाध्यासेन बहुत्वम्, वस्तुतस्त्वैक्यमिति विवेचयितुमेव 'युष्मदस्मत्प्रत्ययगोचरयोरि'त्यध्यासाक्षेप-तत्समाधानभाष्यम् ॥

तथाचाहमर्थाद् विशिष्टात् परागर्थात् संविन्मात्रं प्रत्यग् भिद्यमानं वस्तुतोऽहमर्थमनात्मानम्, संविन्मात्रमेवात्मानं च मत्वैव 'युष्मदस्मदि'त्यध्यासाक्षेपभाष्यमिति वक्तव्यम् ॥

निष्कर्षस्तु—मोक्षान्वयिस्वरूपं संविन्मात्रं मुख्यात्मा, मिथ्यात्मा तु सांसारिकोऽहमर्थो बद्ध इति फलति। तेन च शृङ्खलादिबद्धस्य 'बद्धोऽहं मुक्तो भवितुमिच्छामि' इति बन्धनिवृत्तिमात्रमिच्छतो बन्धनिवृत्तिमात्रे यथाऽभिनिवेशः, एवमहङ्कारसम्बन्धस्यैवात्र बन्धत्वात् तन्निवृत्तिमात्रं लक्ष्यीकृत्य 'अहं मुक्तः स्यामि'तीच्छा नानुपपन्ना ॥

न चाहमर्थविनाशो लक्ष्यम्, किन्तु तदेकदेशाहंकारविनाशः, विशिष्टरूपेणाहमर्थविनाशो वा, न तु सोऽहमर्थाधिष्ठानसंविन्मात्रविनाशः। अतोऽत्र 'शिखी ध्वस्तः' इत्यत्र शिखाया ध्वंसमात्रमिव विशेषणांशस्योपाधिमात्रस्य ध्वंस एव लक्ष्यम्, न तूपाध्युपहितोभयनाशः, इति न मोक्षकथामात्रेणापसर्पणप्रसङ्गो मुमुक्षूणाम् ॥

सारांशस्तु—यथा श्रवणादौ प्रवृत्तिकाल उपहितं स्वरूपमिवोपाधिरन्तःकरणम्, अहङ्कारो वाऽनुवर्तते, यथा शृङ्खलादिबद्धस्य, ततो मोचेच्छया

प्रवृत्तिदशायां बन्धोऽनुवर्तते, फलोपधानावस्थायां तु शृङ्खलादिबन्धमात्रस्य विगमः, न तु बद्धस्य स्वरूपतोऽपि, एवमेवात्र व्यवस्थाऽनुसन्धेया ॥

तत्राहमर्थश्चिदचिद्ग्रन्थिरूपः, यत्र चिन्मात्रं स्वरूपतो नित्यम्, अनित्यं तु तदुपाधिनाशमात्रेण । अतो मुमुक्षूणां प्रवृत्तिः—

"मयि नष्टेऽपि मत्तोऽन्या काचित् ज्ञप्तिरवस्थिता ॥"

इति न तत्प्राप्तय इति दृष्ट्या, किन्तु स्वोपाधिमात्रनाशार्थं प्रवर्त इति दृष्ट्या । न हि साधनानुष्ठानकालेऽनुवर्तमानं रूपं फलकालेऽप्यनुवर्तनीयमिति नियमः; अन्यथा 'ब्राह्मणोऽहं स्वर्गी स्यामि'ति स्वर्गेच्छया प्रवृत्तिकाले वर्तमानं ब्राह्मण्यादिकमपि स्वर्गानुभवकालेऽनुवर्तेत, तेन स्वर्गाद्यनुभवोऽप्यनेनैव शरीरेणेत्यापत्त्या परलोकवादः, उत्क्रान्तिसापेक्षतत्प्राप्तिवादो वा श्रौतोऽप्यप्रमाणं स्यात् ॥

न चात्र मयि नष्टेऽपि स्वस्मादन्यस्य मुक्तीच्छया श्रवणादौ प्रवृत्तिः, न वा मोक्षभाक् स्वस्मादन्यः; स्वस्वरूपस्यैवाहमर्थविमुक्तस्य मुक्तात्मरूपत्वात् ॥

संविन्मात्रं हि मुक्त्यवस्थायां सत्त्व-चित्त्वादिभेदशून्यमखण्डमेव स्वरूपम् । अनादितद्भेदप्रयोजकानाद्यविद्याविनाशे श्रवणाद्यपेक्षसाक्षात्काराधीने सत्त्व-चित्त्वादिधर्मभेदस्यापि विलयाद् नावृतं संविद्रूपमप्यमहमर्थविनाशे विनङ्क्ष्यति; तत्र सत्तादिधर्माणामपारमार्थिकत्वात् । न ह्यपारमार्थिकधर्मनाशे धर्मिणोऽपि स्वरूपविलोपः; शुक्तिरजतादौ व्यभिचारात्, इति नाहङ्कारस्येव ज्ञप्तिमात्रस्यापि सत्यस्य स्वरूपापलापापत्तिः ॥

तत्र कर्तृ-कर्म-क्रियादिविभागोऽविद्याप्रयुक्तोऽधिष्ठानतत्त्वसाक्षात्कारेण निवर्तते; सर्वस्याविद्याप्रयुक्तत्वात्, न तु तावताऽविद्याविषयोऽधिष्ठानमपि नश्यति; अविद्या-तद्वियोगादीनामधिष्ठानस्य साक्षात्कारेण विनाशेऽप्यविद्या-तत्प्रयुक्तेतरस्याधिष्ठानस्य निवर्तकसाक्षात्कारविषयस्य रजतप्रयोजकाज्ञाननाशे तत्प्रयोजकशुक्तितत्त्वसाक्षात्कारविषयस्य शुक्तेरिव नाशासम्भवात् । अतो नाहमर्थो ज्ञाता प्रत्यगात्मा, किन्तु विगलिताहङ्कारसंविन्मात्रमेव स्वप्रकाशं प्रत्यगात्मा—इति ॥

"विज्ञातारमरे केन विजानीयात्" "एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विद," "नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः" "ज्ञोऽत एव" इत्यादिश्रुतिस्मृतिसूत्राण्यपि संविन्मात्रमेवात्मानं प्रत्याययन्ति ॥

तत्र "विज्ञातारमरे केन विजानीयात्" इति वाक्यम् "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येदि"त्यात्मनोऽन्यस्मिन् कर्म-करणे निषिद्धे कुत आत्मानं जानातीति शङ्कायां स्वप्रकाशं विज्ञातारं केन विजानीयादिति स्वकर्मत्वमात्मनो निषेधति ॥

अयं च निषेध ऐकान्तिकाद्वैत आत्मनोऽकर्मकरणत्वात् 'केन कमि-' त्यात्मनः कर्मत्वम्, "विज्ञातारमरे केन विजानीयादि'ति करणं च गोचरयति। भेदाभेदपक्षे, भेदे वैकान्तिके सर्वमेतदद्वैताश्रयं नोपपद्येत ॥

तत्र यद्यपि "विज्ञातारमरे केन विजानीयादि"ति कर्तृवचनेनोपसंहारः; तथापि भूतपूर्वगत्यैव विज्ञातृत्वम्; अन्यथाऽविद्याविषये तस्यैव दर्शनादिलक्षणम् "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यती"ति प्रपञ्च्य, "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येदि"ति विद्याविषये तस्यैव दर्शनादिलक्षणस्य विशेषदर्शनस्य निषेधो नोपपद्यते ॥

अथ विषयाभावेऽप्यदर्शनं कुतो न भवतीति शङ्कायामिदं वचनम्— "विज्ञातारमरे केन विजानीयादि"ति। अतो विशेषविज्ञानाभावोपपादनपरमिदं वाक्यं सकलविशेषप्रत्यनीकं केवलं संविन्मात्रमेव भूतपूर्वगत्यैव विज्ञातृपदेन तृजन्तेन निर्दिशतीति वक्तव्यम्। अतो विज्ञानात्मपरमात्मनोरविद्याप्रत्युपस्थापितनाम-रूपोपाधिसम्बन्धनिबन्धनो भेदो न पारमार्थिक इत्येषोऽर्थः सर्ववेदान्तप्रतिपिपादयिषितः, इति न केवलं प्रकृतपौर्वापर्यपर्यालोचनया किन्तु सर्ववेदान्तप्रत्ययवशादपि स्वीकर्तव्यम्, इति "विज्ञातारमरे" इति वाक्यमैकान्तिकमद्वैतमेव द्रढयति ॥

"एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥" इत्यपि "क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ॥" इति क्षेत्राणां बहुत्वम्, ज्ञस्य ततो निष्कृष्टस्यैकत्वं च विविच्य क्षेत्रतो विविक्तस्यैव परमात्मनाऽभेदवचनात्, तस्यैवानुषङ्गेणैव 'शरीरम्' 'ज्ञं' च पृथक्कृत्य क्षेत्रज्ञपदनिर्वचनाच्च, देहाद्युपाधिविनिर्मुक्तं संविन्मात्रमेव परमात्मनैकान्तिकाभेदयोग्यं प्रतिपादयदप्यद्वैतवादमेवोपबृंहयति ॥

"ज्ञोऽत एव" इति तु भावार्थे क्प्रत्ययात्, संविन्मात्रपरम्, न तु ज्ञानाश्रयपरम्; अन्यथा "आत्माऽश्रुतेरि"ति प्रस्तुत आत्मा नैयायिकमत इवाचेतन एव ज्ञानाश्रयमात्रमित्यापद्येत, ज्ञानरूपत्वं चाऽऽत्मस्वरूपस्य नोक्तं स्यात्। अत इदमूरीकर्तव्यम्—स्वरूपतो ज्ञानमात्रमात्मा, पूर्वोक्तरीत्या वसेपाधितादात्म्यात् तत्तद्विशेषदर्शनात्तु ज्ञातेति वाक्यार्थ एवात्र सुष्ठु

लगति; तस्यैव स्वप्रकाशत्वात्, इत्यहमर्थो न मुख्य आत्मा। तस्य सर्वदा प्रकाशः परं यद्यपि स्वप्रकाशसन्मात्रेण प्रतिभानात्, तत्सम्बन्धप्रयुक्तसाक्षिभास्यत्वाच्च, न स्वयं तस्य स्वप्रकाशता ॥

अतो "युष्मदस्मत्प्रत्ययगोचरयोः" इत्यत्रास्मदर्थो भूतपूर्वगत्या संविन्मात्रमेव, यस्यैव विषय-विषयिणोरित्यनन्तरपदे विषयिपदेनोपक्षेपः, अहमर्थस्तु युष्मदर्थः; अन्यथाऽहमर्थस्यैवास्मत्प्रत्ययगोचरत्वे, तस्य स्वप्रकाशत्वे च तस्यापि विषयत्वात् विषयिपदेनोपक्षेपो बाध्येत ; अस्वप्रकाशत्वादहमर्थस्य। अत एव ज्ञानाश्रयोऽहमर्थः ; चिन्मात्रत्वेऽहमर्थस्य ज्ञानाश्रयत्वं तस्य नोपपद्यते ॥

न हि ज्ञाताऽहमर्थो नान्याधीनप्रकाशः; संवित्तादात्म्याध्यासनिबन्धनसाक्षिस्वरूपभास्यत्वात्। न च साक्षिभास्यं सर्वं स्वप्रकाशम्; शुक्तिरूप्य-सुखादीनाम्, चक्षुरादीनामपि च साक्षिभास्यानां स्वप्रकाशतापत्तेः। न चाहमर्थो न साक्षिभास्यः; अन्यथा स्वाप-मूर्च्छादिष्वहङ्कारोपाधिविलयदशायामहमर्थप्रकाशापत्तेः, इत्यहङ्कारानुपहितसंविन्मात्ररूपेण स्वप्रकाशः, तदुपहितरूपेण, तद्विशिष्टरूपेण वा साक्षी, तद्भास्यो वेत्येव स्वीकर्तव्यम् ॥

न च चैतन्यस्वभावः, चिदचिद्ग्रन्थिरूपस्याहमर्थस्य; जडस्य केवलचिद्रूपत्वाभावात्। तत्र चिन्मात्रमज्ञानविरोधि-तदाश्रयविषयवृत्त्यधीनप्रकाशम्; वृत्तेरेव साक्षात्, परम्परया वाऽज्ञानविरोधित्वात्, इति स्वप्रकाशचिन्मात्राद्, दीपस्य तमोविरोधिनो विशेषात्, दीपस्यापि द्रव्यत्वेन तमोऽनाश्रयविषयस्य, किं बहुना? सूर्य-चन्द्रादीनामपि चैतन्याधीनप्रकाशत्वेन न तेन न्यायेन प्रकाशस्वभावत्वमनन्याधीनप्रकाशत्वं च न चिद्रूपस्यात्मनः संभवति ॥

दीपादेर्हि स्वप्रभाबलेन विषयावभासकत्वम्, चैतन्यस्य तु न स्वप्रभावलेन निर्भासकत्वम्। प्रभायाः प्रदीपादिनाऽविनाभाववत् आत्मनोऽहमर्थस्य मुख्यस्य स्वस्वरूपावरणनिवर्तकप्रभास्थानीयगौणानुभूत्यविनाभावाभावात्, अन्यथा प्रभायाः तदविनाभूतप्रदीपस्येवाऽऽवरणासंभवाच्च 'अहमज्ञः' इत्यहमर्थस्याज्ञानाश्रयत्वानुपपत्तिः, न वाऽहमर्थावरकत्वोपपत्तिः ॥

तत्र यथैकमेव तेजोद्रव्यं प्रभा-तद्वद्रूपेणावतिष्ठते, न तथाऽहमर्थ एक एव प्रकाश-तद्वद्रूपे णावतिष्ठते; अहमर्थेऽज्ञानाश्रयत्वानुभवविरोधात्। न हि प्रभा-प्रभावद्रूपेणावतिष्ठमानमेकं तेजोद्रव्यं तमस आश्रयो दृष्टचरम् ॥

तत्र प्रभायाः संकोच-विकासशालिन्या द्रव्यत्वमिवाहमर्थस्यापि संकोच-विकासशाल्यन्तःकरणस्यापि द्रव्यत्वमेव; तथापि प्रभेवान्तःकरणं नात्मनाऽविनाभूतम्, तद्द्वारा सर्वावभासकं च विनाप्यन्तःकरणमत्यन्त-स्वाप-मूर्च्छादौ प्रकाशेनात्मनोऽनेनाविनाभावाभावात्। अत्र तदात्मनाऽन्तः-करणपरिणामो वृत्तिर्यदि विवक्ष्यते, तर्ह्यन्तःकरणमेव दीपस्थाने भवति, आत्मा त्वन्तःकरणमात्रपरिणामप्रभास्थाने, इति नात्मान्तःकरणयोरविना-भावः, इति सान्तःकरणं चित्तत्वमेवाहमर्थो भवति, इति स्वाप-मूर्च्छा-दिष्वन्तःकरणविलयेऽप्यात्मनः प्रकाशात्, अन्यत्रैव सान्तःकरणस्य भानात् मुख्यात्मा सर्वत्र, सर्वदा, किं बहुना? मुक्तावपि प्रकाशमानं संविन्मात्रमेव ॥

अत एव नित्यतदाश्रयत्व-तच्छेषत्वयोरभावादात्मधर्मस्य प्रभास्थानी-यस्य द्रव्यस्य न प्रभास्थानीयत्वम्; अन्यथा संकोच-विकासशालित्वेऽनि-त्यत्वं धर्मभूतज्ञानस्यापद्येत। 'ज्ञानमुत्पन्नं नष्टमि'त्यादावुत्पत्ति-विनाश-व्यवहारः संकोच-विकासाभिप्राय इति हि श्रीभाष्यम् ॥

मणि-द्युमणिप्रभृतयो ह्यन्तःकरणवत् संकोच-विकासशालिनः सप्रभा एवान्यत्र गत्वैकलोलीभावेन प्रकाशयन्ति ॥

अयमेव न्यायः प्रदीपादावपि। न चात्मन्यप्ययं न्यायः। आत्मनोऽणु-परिमाणस्य, सर्वगतस्य वा सान्तःकरणस्य बहिर्निर्गमनायोगेन, स्वस्थान-स्थितस्यैव संकोच-विकासाङ्गीकारस्यावश्यकत्वेऽनित्यत्वापत्तेः। अत एव मध्यमपरिमाणस्यात्मनः संकोच-विकासयोस्तत्तच्छरीरव्यापित्वेऽनित्यत्वा-पत्तिः "न च पर्यायादप्यविरोधः" इत्यादावापादिता, इति सप्रभप्रदीप-साम्यमहमर्थस्यात्मनः ॥

चिद्रूपो ह्यात्मा चिद्गुणः। चिद्गुणश्च चित एव चैतन्यात्मना परिणामः। तत एव चिद्गुणत्वमपीति मीमांसकाः, यदि न जड आत्मा। तज्जडत्वपक्षे तु जडान्तःकरणपरिणामस्य चैतन्यान्तःकरणयोः परस्पर-तादात्म्येन तदुपहितस्य चिच्छायापत्त्या ज्ञातृत्वम्। नैयायिकास्तु स्वतो जडस्यात्ममनःसंयोगवशात् तत्रोत्पन्नं ज्ञानवत्त्वमादाय चेतन इति मन्यन्ते। श्रीभाष्यकारास्तु धर्म-धर्मिणोरुभयोरपि नित्यत्वम्, तयोरविना-भावं चोरीकुर्वन्ति यथा दीप-प्रभयोः ॥

तत्र दीप-प्रभयोः सहैवोत्पद्यमानत्वाद् मिलितयोरेव तयोर्बहिर्गम-नादिस्वीकाराद्वास्तु नामाविनाभावः। न चैवं नित्ययोरात्म-तद्धर्मभूतज्ञान-

योरविनाभावः सम्भवति; संकोच-विकासासम्भवात् । न हि ययोर-विनाभावः, तत्रैकमात्रस्य संकोच-विकासौ दृष्टचरौ । अहमर्थो न चिद्रूपः, न वा स्वाविनाभूतसंकोच-विकासशालिज्ञानगुणकः, किन्तु जन्यज्ञानोपादा-नान्तःकरणतादात्म्येनैव चिद्गुणकः; अन्यथा धर्मभूतज्ञानस्यात्माविनाभावे सर्वदा ज्ञानगुणकत्वात् आत्मन इव धर्मस्यापि स्वप्रकाशत्वे वाऽन्यानधीन-प्रकाशत्वेन प्रमाणव्यापारो वितथः ॥

"स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरेऽय-मात्मा विज्ञानघनः" "विज्ञानघन एव" "अत्राऽयं पुरुषः स्वयं ज्योतिः" "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्" इति श्रुतिवाक्यानि तु संविन्मात्रमेव मुख्यमात्मानमुपदिशन्ति ॥

तत्र 'विज्ञातुर्विज्ञातेरि'ति षष्ठ्याः सामानाधिकरण्यमप्यहमर्थानात्मता-वादमुपदिशति; अन्यथा 'ज्ञानमुत्पन्नं नष्टमि'त्यनुभवविरोधात् । वैयधिकर-ण्यविवक्षायां तु धर्मभूतस्य विज्ञानमात्रस्य विपरिलोपाभावविवक्षायां धर्मिणः स्वरूपज्ञानस्याविपरिलोपेऽतात्पर्यकल्पनापत्तिः; चशब्दाभावेनो-भयाविलोपविवक्षाऽयोगात्, उपरि वाक्यान्तरेणात्ममात्राविनाशित्वोप-संहाराच्च, इति न धर्मभूतज्ञाननित्यत्वं प्रामाणिकम् । सर्वथा तु न कुत्राप्य-हंपदेनात्मनो ग्रहणम्, इति नाहमर्थात्मतायामिमानि प्रमाणम् ॥

"अथ यो वेदं जिघ्राणाति" "एष हि स्रष्टा, श्रोता, रचयिता" इति तु संविन्मात्रस्य, तत्रापि सत्तादात्म्येनैव ज्ञातृत्वम्, न तु स्वरूपत इति बोध्यते; अन्यथा स्वतो घ्रातृत्वादौ स्वीक्रियमाणे बाधिर्यादिकथाऽस्त-मियात् ॥

"विज्ञातारमरे" इति श्रुत्यर्थस्तु प्रकरणपर्यालोचनेनाद्वैत एव स्वरस इत्यनुपदमधस्ताद् विशदीकृतम् । अयमेव न्यायः "जानात्येवायं पुरुषः" इत्यादौ ज्ञातृत्वोपक्षेपेऽपि । अतः संविन्मात्रमनुपहितमेवात्मा, न तु सोपा-धिक इत्येव श्रुतीनामुपपत्तिर्वर्णनीया ॥

"अन्योऽन्तर आत्मा विज्ञानमय." इति तु न मुख्यात्मपरम् । स हि 'ब्रह्म पुच्छं प्रतिष्ठे'ति वाक्येनैवोपदिश्यत इत्यानन्दमयाधिकरणपरीक्षायां व्यक्तीभविष्यति ॥

'ज्ञोऽत एवे'त्यादि सूत्रार्थस्तु अधस्तादेव परीक्षितः । तस्मात् संविन्मा-त्रमेव मुख्यात्मा, न त्वहमर्थः, यो ज्ञातेति निष्कर्षः । संवित्पदं तु स्वरूप-ज्ञाने मुख्यम्, तदवच्छेदकत्वात्तु धर्मभूतज्ञानेऽपि, यदेवाभिप्रेत्य सकर्म-

कस्य, सकर्तृकस्य च जानात्यादेर्लोक-वेदयोः प्रयोगः, अकर्तृकस्य, अकर्मकस्य च जानात्यादेः "सत्यं ज्ञानमि"त्यादौ प्रयोगस्तु स्वरूपज्ञानमात्रमभिप्रेत्य, इत्युभयथापि जानात्यादेः प्रयोगो न विरुध्यते, यत्र संवित्पदं मुख्यात्माभिप्रायेण, अन्यत्र तु गौणं संवित्पदम्। अतः संविदेवात्मा, न तदतिरिक्तो मुख्यात्मा नाम कश्चिदस्ति, योऽजडो नाम ॥

श्रीभाष्यकाराणां महापूर्वपक्षः

संविदजडत्वनिरासः

यच्चोक्तम्—अजडत्वात् संविदेवात्मा—इति, तत्रेदं प्रष्टव्यम्—अजडत्वमिति किमभिप्रेतम्? स्वसत्ताप्रयुक्तप्रकाशत्वमिति चेत्, तथा सति दीपादिष्वनैकान्त्यम्, संविदतिरिक्तप्रकाशधर्मानभ्युपगमेनासिद्धिः, विरोधश्च। अव्यभिचरितप्रकाशसत्ताकत्वमपि सुखादिषु व्यभिचाराद् निरस्तम्॥

यद्युच्येत—सुखादिरव्यभिचरितप्रकाशोऽप्यन्यस्मै प्रकाशमानतया घटादिवद् जडत्वेनानात्मा, ज्ञानं वा किं स्वस्मै प्रकाशते? तदपि ह्यन्यस्यैवाहमर्थस्य ज्ञातुरवभासते—'अहं सुखी'तिवत्, 'जानाम्यहमि'ति। अतः स्वस्मै प्रकाशमानत्वरूपमजडत्वं संविद्यसिद्धम्। तस्मात् स्वात्मानं प्रति स्वसत्तयैव सिध्यन्नजडोऽहमर्थ एवात्मा। ज्ञानस्यापि प्रकाशता तत्संबन्धायत्ता। तत्कृतमेव हि ज्ञानस्य सुखादेरिव स्वाश्रयचेतनं प्रति प्रकटत्वम्, इतरं प्रत्यप्रकटत्वं च। अतो न ज्ञप्तिमात्रमात्मा, अपि तु ज्ञातैवाहमर्थः॥

अत्राद्वैतिनां महासिद्धान्तः

संविदजडत्वसमर्थनम्

तत्राजडत्वं स्वातिरिक्तसंविदनपेक्षप्रकाशत्वं स्वप्रकाशत्वम्। संवित्पदेन च नित्यं स्वरूपज्ञानं सत्य-ज्ञानादिवाक्यावगतं विवक्ष्यते, न धर्मभूतज्ञानम्; तस्याप्यजडत्वं नाद्वैतिनः श्रीभाष्यकारा इव मन्यन्ते, यस्य गौणमेव ज्ञानत्वम्। तच्च श्रीभाष्यमतेऽपि स्वाश्रयं प्रत्येव स्वसत्तया प्रकाशते, यस्य विकसितस्य द्वारेणात्मनो बाह्यप्रकाश उपपाद्यते॥

दीपादीनां प्रकाशोऽपि स्वातिरिक्तसंविदपेक्षत्वात् गौण एवेत्यादि प्रदीपवैलक्षण्यविवेचनेन स्पष्टीकृतम् , अतो न तत्रानैकान्त्यम् ॥

तत्र गौणः, मुख्यश्चेति द्विविधः संवित्पदार्थो न विवक्ष्यते; अन्यथा चित्स्वरूपम् , चिद्गुणकमिति प्रतिज्ञाविलोपापत्तेः ॥

अव्यभिचरितप्रकाशसत्ताकत्वमजडत्वमिति तु न स्वीक्रियते, येन सुखादीनां प्रातिभासिकानामप्यात्मत्वं स्यात् , किन्तु स्वस्मा एव प्रकाशमानत्वम् । न च गौणं संविद्ज्ञानं स्वस्मा एव प्रकाशते; तस्य प्रकाशजन्यफलाभागित्वात् , इति न जन्यज्ञानम् , धर्मभूतं ज्ञानं वाऽऽत्मा । अयमेव न्यायः—सुखादावपि । अतो नाजडत्वं धर्मभूतस्य ज्ञानस्य, किन्तु मुख्यात्मनः स्वरूपज्ञानस्यैव, इति स्वात्मानं प्रति स्वसत्तयैव सिद्ध्यन्नात्माऽजडः स्वरूपज्ञानम् , अन्यत्तु स्वातिरिक्तसंविदपेक्षप्रकाशं जडमेव, इत्यहमर्थस्य पूर्वोक्तस्याजडत्वस्याभावात् , निर्विशेषस्यैव प्रकाशात्मनः तत्स्वीकाराच्च स्वरूपज्ञानमात्रमात्मा ॥

तत्र स्वरूपज्ञानस्य प्रकाशमानता स्वत एव, न तु ज्ञानान्तरसम्बन्धात् , येन स्वाश्रयं प्रति प्रकाशमानतायास्तत्सम्बन्धायत्तत्वात् तदतिरिक्त आत्माऽहमर्थ इति स्यात् । न च स्वरूपज्ञानं धर्मभूतज्ञानमिव स्वान्यसम्बन्धापेक्षम् , येन तदतिरिक्तः स्वाश्रयोऽपेक्ष्येत, स चाहमर्थ एव स्यादित्यहमर्थात्मतावाद उत्तिष्ठेत् , इति ज्ञानमात्रमेवाऽऽत्मा, न तु ज्ञाताऽहमर्थ इति सिद्धम् । अतः—अनुभूतिः, परमार्था, निर्विषया, निराश्रया च सती भ्रान्त्या ज्ञातृतयाऽवभासते रजततयेव शुक्तिः; निरधिष्ठानभ्रमानुपपत्तेः, इति सर्वाधिष्ठानचैतन्यमेवात्मा, नाहमर्थः, यमेवाश्रित्य—"आत्मनि विदिते सर्वमिदं विज्ञातं भवति" इति मुण्डकोपनिषदः परविद्या नाम । अतो नाहमर्थ आत्मा; तस्योपहितस्य कल्पितस्याधिष्ठानत्वानुपपत्तेः ॥

### अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

#### अनुभूतिनिर्विषयत्वनिरासः

> अथ यदुक्तम्—अनुभूतिः, परमार्थतो निर्विषया, निराश्रया च सती भ्रान्त्या ज्ञातृतयाऽवभासते, रजततयेव शुक्तिः; निरधिष्ठानभ्रमानुपपत्तेः—इति, तदयुक्तम् ; तथा सत्यनुभवसामानाधिकरण्येनानुभविताऽहमर्थः प्रतीयेत

–'अनुभूतिरहम्' इति—पुरोऽवस्थितभास्वरद्रव्याकारतया रजतादिरिव। अत्र तु पृथगवभासमानैवेयमनूभूतिरर्थान्तरमहमर्थं विशिनष्टि, दण्ड इव देवदत्तम् , तथाहि—'अनुभवाम्यहम्' इति प्रतीतिः। तदेवमस्मदर्थमनुभूतिविशिष्टं प्रकाशयन् 'अनुभवाम्यहमि'ति प्रत्ययो दण्डमात्रे 'दण्डी देवदत्तः' इति प्रत्ययवद् विशेषणभूतानुभूतिमात्रावलम्बनः कथमिव प्रतिज्ञायेत ?

अत्राद्वैतिनां महासिद्धान्तः

अनुभूतिर्निर्विषयत्वादिसमर्थनम्

अत्रानुभूतिर्मुख्यं स्वरूपज्ञानम् , गौणं तु धर्मभूतज्ञानम् , येन श्रुतप्रकाशिकोक्तरीत्या स्वरूपज्ञानवाचिशब्दानामनुभूत्यादिशब्देभ्यः शब्दान्तरत्वं स्यात् , तत्राद्वैतिनो मुख्यं ज्ञानत्वम् , अनुभूतित्वं वा न स्वीकुर्वन्ति। तत्र यदि श्रीभाष्यकारा धर्मभूतज्ञानस्य सविषयत्वम् , अनात्मत्वम् , असद्रूपत्वं वा साधयन्ति, तर्हि सिद्धसाधनम् ॥

तत्र सविषयत्वं स्वरूपज्ञानस्य विषयाध्यासनिबन्धनम् , 'सदेव सोम्येदम्' इत्यादावपि न वार्यते, किन्तु सविषयत्वम् , सद्वितीयत्वं वा न पारमार्थिकम् ; "एकमेवाद्वितीयमि"त्यादिवचनात्। अतः सा परमार्थतो निर्विषया, निराश्रया, च सती भ्रान्त्या ज्ञातृतयाऽवभासते, रजततयेव शुक्तिरिति। स्वयं त्वनुभूतिरेवात्मा, तस्या आत्मत्वं तु नात्मनोऽहमर्थत्वेन, किन्तु निर्गलिताहङ्कारसंविन्मात्रत्वेन, न वा स्वरूपज्ञानातिरिक्तेन गौणेनानुभूतित्वेन, इति न सामानाधिकरण्येन 'अहमनुभूतिरि'ति प्रतीत्यापत्तिः। न चात्रानुभूतिः, धर्मभूतं ज्ञानं वाऽहमर्थतादात्म्याध्यासेनेत्यद्वैतसिद्धान्तः, येनेदं-रजतयोरिव तादात्म्यं तयोः स्यात् , तत्प्रयुक्तं पुरोवस्थितभास्वर-रजततादात्म्याद्याकारतया रजतादिरिव 'अहमनुभूतिरि'ति प्रतीतिर्वा स्यात् ॥

'अहं जानामी'ति प्रतीतिरन्तःकरणसंविन्मात्रयोर्धर्मिणोः, तयोः परस्परधर्माणां च परस्परविनिमयेन तादात्म्याध्यासेन, न त्वहमर्थेऽधिष्ठानेऽनुभूतिमात्रसम्बन्धेन। अतोऽहमर्थस्य, अनुभूतेश्च विशेष्य-विशेषणभावो विरुद्धः, अध्यासनिष्पन्नौपाधिकाहमर्थधर्मतयैव परस्परधर्माध्यासेन ज्ञातृतायाः प्रतीतेर्न मुख्यात्मधर्मत्वमनुभूतेः। स्वरूपज्ञानस्य विशेष्य-विशे-

षणभावो ह्यत्राहमर्थ-धर्मभूतज्ञानयोरेव, न तु स्वरूपज्ञान-धर्मभूतयोः, इति न 'अहमनुभूतिरि'ति प्रतीतिः ॥

तथा च 'दण्डी देवदत्तः' इत्यादिवद् न स्वरूपज्ञानाहमर्थयोरत्र विशेष्य-विशेषणभावः; अन्यथा 'स्थूलोऽहमि'त्यादिसामानाधिकरण्यप्रत्ययात् शरीरात्मनोः शरीरात्मत्वम् , 'अहं पश्यामी'त्यादिप्रतीत्येन्द्रियाद्यात्मभावश्च स्यात्। तेन च देहात्माभिमानवत एव ज्ञातृत्वप्रतिभासनात् स एव ज्ञाताऽपि स्यात् ॥

### श्रीभाष्यकाराणां महापूर्वपक्षः

#### अहमर्थज्ञातृत्वमिथ्यात्वनिरासः

यदप्युक्तम्—'स्थूलोऽहमि'त्यादिदेहात्माभिमानवत एव ज्ञातृत्वप्रतिभासनात् ज्ञातृत्वमपि मिथ्या—इति, तदयुक्तम्; आत्मतयाऽभिमन्यमानाया अनुभूतेरपि मिथ्यात्वं स्यात् , तद्वत एव प्रतीतेः ॥

सकलेतरोपमर्दितत्त्वज्ञानाबाधितत्वेनानुभूतेर्न मिथ्यात्वमिति चेत् , हन्तैवं सति तदबाधादेव ज्ञातृत्वमपि न मिथ्या ॥

### अत्राद्वैतिनां महासिद्धान्तः

#### अहमर्थज्ञातृत्वमिथ्यात्वसमर्थनम्

यद्यप्यात्मतयाऽनुभूतिरप्यभिमन्यते; तथापि न सा धर्मभूता, किन्तु स्वरूपज्ञानमेव। तस्य च नाहमर्थत्वम् ; स ह्यन्तःकरणतादात्म्याध्यासेनैव। तत्र चानुभूतिमात्रमन्तःकरणस्याधिष्ठानमात्रम् , नाध्यस्तम् , इति, तस्याधिष्ठानस्य स्वरूपतो मिथ्यात्वं बाधितम् ; अन्यथा 'नेदं रजतमि'ति प्रतीत्या रजतस्येदमर्थरजतताया इव इदमर्थस्य शुक्तेरप्यधिष्ठानतावच्छेदकत्वेन मिथ्यात्वमापद्येत ॥

अविक्रियस्यात्मनो ज्ञानक्रियाकर्तृत्वरूपं ज्ञातृत्वं नाकल्पितं सम्भवति, कल्पितं तु तत् तस्यान्तःकरणतादात्म्याध्यासनिबन्धनं सम्भवत्येव, मुख्यं तु तत्र ज्ञातृत्वमव्यक्तपरिणामाहङ्कारोपहितचिदचिद्ग्रन्थिरूपस्याहमर्थस्यैव; तदपि ग्रन्थिस्थमेव, उपहितस्थमेव वा। विक्रियात्मकं हि कर्तृत्वादि रूपादिवद् दृश्यधर्मः। न चानुभूतिमात्रमहमर्थः, आत्मा वा; अन्यथा देहादीनामिवानुभूतेरप्यनात्मत्व-पराक्त्व-जडत्वादिप्रसङ्गः ॥

### अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

#### ज्ञातृत्वाध्यासनिरासः

यदप्युक्तम्—अविक्रियस्यात्मनो ज्ञानक्रियाकर्तृत्वरूपं ज्ञातृत्वं न संभवति। अतो ज्ञातृत्वं विक्रियात्मकं जडं विकारास्पदाव्यक्तपरिणामाहङ्कारग्रन्थिस्थम्, इति न ज्ञातृत्वमात्मनः, अपि त्वन्तःकरणरूपस्याहङ्कारस्य। कर्तृत्वादिर्हि रूपादिवद् दृश्यधर्मः; कर्तृत्वे, अहम्प्रत्ययगोचरत्वे चात्मनोऽभ्युपगम्यमाने देहस्येवानात्मत्व-पराक्त्व-जडत्वादिप्रसङ्गश्च—इति, नैतदुपपद्यते; देहस्येवाचेतनत्व-प्रकृतिपरिणामत्व - दृश्यत्व-पराक्त्व-परार्थत्वादियोगादन्तःकरणरूपस्याहङ्कारस्य, चेतनासाधारणस्वभावत्वाच्च ज्ञातृत्वस्य ॥

एतदुक्तं भवति—यथा देहादिर्दृश्यत्व-परावत्वादिहेतुभिस्तत्प्रत्यनीकद्रष्टृत्व-प्रत्यक्त्वादेर्विविच्यते, एवमन्तःकरणरूपाहङ्कारोऽपि दृश्यत्वादेव तैरेव हेतुभिस्तस्माद्विविच्यत इति ॥

अतो विरोधादेव न ज्ञातृत्वमहङ्कारस्य; दृशित्ववत्। यथा दृशित्वं तत्कर्मणोऽहङ्कारस्य नाभ्युपगम्यते, तथा ज्ञातृत्वमपि न तत्कर्मणोऽभ्युपगन्तव्यम्। न च ज्ञातृत्वं विक्रियात्मकम्। ज्ञातृत्वं हि ज्ञानगुणाश्रयत्वम्। ज्ञानं चास्य नित्यस्य स्वाभाविकधर्मत्वेन नित्यम्। नित्यत्वं चात्मनो "नात्मा श्रुतेः" इत्यादिषु वक्ष्यति। "ज्ञोऽत एव" इत्यत्र 'ज्ञः' इति व्यपदेशेन ज्ञानाश्रयत्वं च स्वाभाविकमिति वक्ष्यति ॥

अस्य ज्ञानस्वरूपस्यैव मणिप्रभृतीनां प्रभाश्रयत्वमिव ज्ञानाश्रयत्वमप्यविरुद्धमित्युक्तम्। स्वयमपरिच्छिन्नमेव ज्ञानं सङ्कोच-विकासार्हमित्युपपादयिष्यामः। अतः क्षेत्रज्ञावस्थायां कर्मणा संकुचितस्वरूपं तत्तत्कर्मानुगुणतरतमभावेन वर्तते। तच्चेन्द्रियद्वारेण व्यवस्थितम्। तमिममिन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्योदयास्तमयव्यपदेशः प्रवर्तते ॥

ज्ञानप्रसरे तु कर्तृत्वमस्त्येव। तच्च न स्वाभाविकम्, अपि तु कर्मायत्तमित्यविक्रियस्वरूप एवात्मा। एवंरूपविक्रियात्मकत्वं ज्ञानस्वरूपस्याऽऽत्मन एव, इति न कदाचिदपि जडस्याहङ्कारस्य ज्ञातृत्वसंभवः॥

अद्वैतिनां महासिद्धान्तः

ज्ञातृत्वाध्याससमर्थनम्

न चान्तःकरणमात्रस्याहङ्कारस्य ज्ञातृत्वमद्वैतमते, किन्तु तत्तादात्म्यापन्नस्य चिदचिद्ग्रन्थिरूपस्याहमर्थस्यैव, येनाचेतनसाधारणं न ज्ञातृत्वं स्यात्। तत्र देहादेरहमर्थतो विविक्तस्य स्वरूपतो दृश्यत्व-पराक्त्वादिः, अहमर्थस्य तूपहितस्यौपाधिकं दृश्यत्वादि, न तु स्वरूपतः। तत्र यद्यहमर्थो मुख्य एवात्मा, तर्हि तस्य देहादेरिवा'हमि'ति प्रतीयमानस्यानात्मत्वापत्तिरनिवार्या, इति नाहङ्कारमात्रस्य ज्ञातृत्वम्, दृशित्वं वा, इति नाद्वैतमतेऽहङ्कारस्य ज्ञातृत्वम्, दृशित्वं वा स्यात्॥

तत्र ज्ञातृत्वमुपहितस्य संविन्मात्रस्यैव परिणामस्वभावान्तःकरणविकासात्मवृत्त्याख्यविक्रियात्मकज्ञानवत्त्वेन, न संविन्मात्रस्य, इति नाहमर्थस्य तत् स्वाभाविकम्, किन्त्वौपाधिकमेव। न च तद् नित्यम्; अनित्यान्तःकरणधर्मत्वात् ज्ञानस्य, तस्य च नात्मत्वम्; विगलितोपाधिसंविन्मात्रस्यैवात्मत्वात्, तस्य च नित्यत्वात्, इति न "ज्ञोऽत एव"इति सूत्रार्थविरोधः॥

इदं हि सूत्रं ज्ञानस्यात्मत्वमवगमयति। तच्च स्वरूपज्ञानत्वमादाय, न तु धर्मभूतज्ञानाश्रयत्वमादाय। 'ज्ञ'पदं तु तत्र भावार्थकप्रत्ययान्तत्वात् स्वरूपज्ञानमात्रपरं ज्ञानपदमिव; अन्यथा श्रीभाष्यमते ज्ञानाश्रयत्वमात्रस्यानेन विवक्षायां तस्य स्वरूपज्ञानत्वे प्रमाणाभावादचेतनस्यापि तस्य धर्मभूतज्ञानाश्रयत्वमात्रविवक्षयाऽप्युक्तसूत्रार्थनिर्वाहे नैयायिकमतवद् न स्वरूपज्ञानत्वमप्यात्मन इति न स्यात्। ज्ञानाश्रयत्व-ज्ञानरूपत्वोभयविवक्षायां तु वाक्यभेदापत्तिः, क्लिष्टकल्पना च॥

तत्र स्वरूपज्ञानत्वं सिद्धवत्कृत्य ज्ञानाश्रयत्वमात्रविवक्षायामद्वैतमतेऽप्यन्तःकरणधर्मवृत्त्यात्मकज्ञानस्य पूर्वोक्तरी[illegible]ध्यासमात्रविवक्षायामपि न विरोधः। तत्रा[illegible]जानामि'इत्यादिप्रत्यक्षसिद्धत्वात्, ज्ञातृत्वस्य स्व[illegible]ज्ञानेऽसंप्रतिपन्नत्वात्;

स्वरूपज्ञानत्वव्यवस्थापनमेव "ज्ञोऽत एव" इति सूत्रस्य लक्ष्यमित्यकामैरपि स्वीकर्तव्यम्। ज्ञानस्वरूपस्यैव ज्ञानगुणात्मत्वं मणि-द्युमण्यादाविव लोकसिद्धं न साधनमपेक्षते ॥

तत्र यद्यात्मनो ज्ञानरूपस्य नित्यस्य धर्मभूतज्ञानाश्रयत्वेनैव ज्ञातृत्वाद् धर्मभूतं ज्ञानमपि नित्यमेव भवितुमर्हतीति बोधनार्थमिदं सूत्रम्, तर्ह्याकाशादिनित्यपदार्थधर्मशब्दादौ नित्यत्वस्य बाधाद् आत्मन्यपि सुख दुःखादेरनित्यत्वस्य स्वीकाराद् न तद्बोधनं सम्भवति; अन्यथाऽऽत्मनो नित्यदुःखित्वाद्यापत्त्या बन्ध-मोक्षव्यवस्थानुपपत्तिः। धर्मभूतं ज्ञानं संकोचविकासशालि नित्यं चेति व्याहतम् ॥

तत्र परिच्छिन्नाणुपरिमाणस्यात्मनो धर्मरूपं ज्ञानमपरिच्छिन्नमिति तु व्याहतम्; अन्यथा सर्वदा सर्वेषामपरिच्छिन्नधर्मभूतज्ञानस्य सत्त्वात् सर्वबाह्यप्रकाशाद्यापद्येत। कर्मणा तस्य संकोच-विकासकथा त्वप्रामाणिकी; अन्यथा संकोचावस्थायां सर्वात्मना विषयप्रकाशायोगः, प्रसरावस्थायामपरिच्छिन्नस्वभावस्य परिच्छिन्नप्रदेशप्रसरायोगः। कर्मणा यदि संकुचितस्वरूपं धर्मभूतज्ञानम्, तर्हि प्रतिक्षणं संकोचविकासतारतम्यमनुभूयमानमेकेन कर्मणा नोपपद्यते। प्रतिक्षणमनेककर्मकल्पनं त्वप्रामाणिकम् ॥

एकेनैव कर्मणा संकोचादौ तारतम्यनिर्वाहस्तु न सम्भवति; दूरदेशपर्यन्तं निमेषमात्रप्रसारस्य विनैवेन्द्रियद्वारा कर्मणा निर्वाहासम्भवात्; अन्यथा तु तत्रेन्द्रियद्वारकल्पनावैयर्थ्यम्, इष्टापत्तौ सर्वदा सर्वेषामिन्द्रियद्वारा प्रसरे यद्देशविशेषपर्यन्तं प्रसरः, तत्रत्यानां सर्वेषामपि प्रतिभासापत्तिः, कर्माधीने प्रसरे तत्तत्प्रयोजकतत्तत्कर्मविशेषाणां सर्वेषां जन्मान्तरीयाणामदृष्टविधया कारणत्वस्य तेषां तत्तज्जन्मनि तत्तत्फलभोगमात्रप्रयोजकत्वेनोपक्षयाद् ज्ञानप्रसरतारतम्यप्रयोजकत्वायोगः, तत्र बहूनां क्षेत्रज्ञानामेकवस्तुप्रकाशप्रयोजकज्ञानप्रसर एकस्य कर्मणो निमित्तत्वायोगः, अनेककर्मनिमित्ते प्रसरे बहूनामेकरूपतया तत्तद्विषयप्रकाशायोगश्च। कर्मनिमित्ते प्रसरादौ क्षेत्रज्ञानां तत्र कर्तृत्वम्, ज्ञातृत्वं च श्रीभाष्यमतेऽपि विक्रियात्मकमेव स्यात्, इष्टापत्तौ त्वद्वैतसिद्धान्तेऽप्यन्तःकरणसंकोचविकासैकस्वभाववृत्तिविषयाश्रयत्वेनाहमर्थस्य ज्ञातृत्वनिर्वाहात् तादृशविक्रियात्मकज्ञानाश्रयत्वस्य नानुपपत्तिः, संकोच-विकासाश्रयस्य मणिद्युमणिप्रदीपादौ सति विनाशसामग्रीसमवधाने विनाशदर्शनात् धर्म-

भूतज्ञानस्यान्तःकरणादेरिव नाशापत्तेर्दुर्निवारतया धर्मभूतज्ञानस्य नित्यत्व-सिद्धान्तविरोधः ॥

स्वरूपज्ञानस्याविक्रियात्मत्वं तु संप्रतिपन्नम्। न च धर्मभूतज्ञानस्य स्वरूपज्ञानस्येव नित्यत्वे किमपि प्रमाणम्। "विज्ञातुर्विज्ञाते"रिति विज्ञातुरेव स्वरूपज्ञानात्मनो नित्यत्वमाम्नाति; सामानाधिकरण्येनान्वयस्तु तत्रापि पक्षे न मतद्वयेऽपि विरुध्यते। वैयधिकरण्येनैवान्वयोऽपि विज्ञातुरहमर्थ-स्याधिष्ठानस्वरूपज्ञानात् पृथक्कृत्याविनाशित्वबोधनेनाद्वैतमतेऽपि न व्या-हन्यते। एतेन—संकोच-विकासाभ्युपगमे विक्रियात्मकत्वं स्यादित्यत्राह—ज्ञानप्रसरे त्विति॥ तादृशविक्रियात्मकत्वं प्रामाणिकत्वादिष्टमिति श्रुत-प्रकाशिकापि—व्याख्याता॥

वस्तुतस्तु—प्रसरमात्रं यदि विक्रिया, तर्हि 'जानामी'त्यादौ ज्ञानप्रसर-कर्तृत्वेन ज्ञातृत्वं यदि स्वीक्रियते, तर्हि तत्र प्रसरादेर्धर्मभूतज्ञानधर्मत्वात्, तस्य विक्रियात्मत्वाच्च कथमात्मनो ज्ञातृत्वम? न हि ज्ञाधातोरर्थो ज्ञान-प्रसरः। ज्ञानमात्रविवक्षायां तु ज्ञानस्य नित्यस्याजन्यत्वात् कथं ज्ञानकर्तृ-त्वेन ज्ञातृत्वम्? अधिकमन्यत्र॥

अद्वैतमते तु जडस्वभावस्याहङ्कारस्य संविन्मात्रे चिदात्मके तादात्म्या-ध्यासात्, तन्मात्रस्याज्ञातृत्वेऽपि तदुपधानेन तद्भावमापन्नस्याहमर्थस्य ज्ञातृत्वं जन्यज्ञानाश्रयत्वेन, तत्र कर्तृत्वेन च न व्याहन्यते। जडस्वभाव-स्याप्यहङ्कारस्य चित्संनिधानात् तच्छायापत्त्या तत्संभवात्॥

### तत्र श्रीभाष्यकाराणां महापूर्वपक्षः

#### चिच्छायापत्त्यादिनाऽहमर्थस्य ज्ञातृत्वादिनिरासः

जडस्वरूपस्याप्यहङ्कारस्य चित्संनिधानेन तच्छाया-पत्त्या तत्संभव इति चेत्, केयं चिच्छायापत्तिः? किम-हङ्कारच्छायापत्तिः संविदः? उत संविच्छायापत्तिरहङ्का-रस्य? न तावत् संविदः; संविदो ज्ञातृत्वानभ्युपगमात्। नाप्यहङ्कारस्य; उक्तरीत्या तस्य जडस्य ज्ञातृत्वायोगात्, द्वयोरप्यचाक्षुषत्वाच्च। न ह्यचाक्षुषाणां छाया दृष्टा॥

अथ—अग्निसंपर्कादयःपिण्डौष्ण्यवत् चित्संपर्काद् ज्ञातृत्वोपलब्धिरिति चेत्, नैतत्; संविदि वस्तुतो ज्ञातृ-त्वानभ्युपगमादेव न तत्संपर्कादहङ्कारे ज्ञातृत्वम्;

ङ्कारस्य त्वचेतनस्य ज्ञातृत्वासंभवादेव सुतरां न तत्संपर्कात् संविदि ज्ञातृत्वम्, तदुपलब्धिर्वा ॥

यदप्युक्तम्—उभयत्र न वस्तुतो ज्ञातृत्वमस्ति, अहङ्कारस्त्वनुभूतेरभिव्यञ्जकः स्वात्मस्थामेवानुभूतिमभिव्यनक्ति; आदर्शादिवत्—इति, तदयुक्तम्; आत्मनः स्वयम्ज्योतिषो जडस्वरूपाहङ्काराभिव्यङ्ग्यत्वायोगात्। तदुक्तम्—

"शान्ताङ्गार इवादित्यमहङ्कारो जडात्मकः।
स्वयम्ज्योतिषमात्मानं व्यनक्तीति न युक्तिमत् ॥"

इति। स्वयंप्रकाशानुभवाधीनसिद्धयो हि सर्वे पदार्थाः। तत्र तदायत्तप्रकाशोऽचिदहङ्कारोऽनुदितानस्तमितस्वरूपप्रकाशमशेषार्थसिद्धिहेतुभूतमनुभवमभिव्यनक्तीत्यात्मविदः परिहसन्ति ॥

किंचाहङ्कारानुभवयोः स्वभावविरोधादनुभूतेरननुभूतित्वप्रसङ्गाच्च न व्यङ्क्तृ-व्यङ्ग्यभावः। यथोक्तम्—

"व्यङ्क्तृव्यङ्ग्यत्वमन्योन्यं न च स्यात् प्रातिकूल्यतः ॥
व्यङ्ग्यत्वेऽननुभूतित्वमात्मनि स्याद्यथा घटे ॥"

इति। न च रविकरनिकराणां स्वाभिव्यङ्ग्यकरतलाभिव्यङ्ग्यत्ववत् संविदभिव्यङ्ग्याहङ्काराभिव्यङ्ग्यत्वं संविदः साधीयः; तत्रापि रविकरनिकराणां करतलाभिव्यङ्ग्यत्वाभावात्। करतलप्रतिहतगतयो हि रश्मयो बहुलाः स्वयमेव स्फुटतरमुपलभ्यन्ते, इति तद्बाहुल्यमात्रहेतुत्वात् करतलस्य, नाभिव्यञ्जकत्वम् ॥

किंचास्य संवित्स्वरूपस्यात्मनोऽहङ्कारनिर्वर्त्याऽभिव्यक्तिः किंरूपा? न तावदुत्पत्तिः; स्वतः सिद्धतयाऽनन्योत्पाद्यत्वाभ्युपगमात्, नापि तत्प्रकाशनम्; तस्यानुभवान्तराननुभाव्यत्वात्। तत एव च न तदनुभवसाधनानुग्रहः ॥

स हि द्विधा—ज्ञेयस्येन्द्रियसंबन्धहेतुत्वेन वा; यथा जाति-निजमुखादिग्रहणे व्यक्ति-दर्पणादीनां नयनादीन्द्रियसंबन्धहेतुत्वेन, बोद्धृगतकल्मषापनयनेन वा; यथा-

परतत्त्वावबोधनसाधनस्य शास्त्रस्य शम-दमादिना। यथोक्तम्—

"करणानामभूमित्वान्न तत्संबन्धहेतुता ॥"

इति। किंचानुभूतेरनुभाव्यत्वाभ्युपगमेऽप्यहमर्थेन न तदनुभवसाधनानुग्रहः सुवचः। स ह्यनुभाव्यानुभवोत्पत्तिसाधनप्रतिबन्धनिरसनेन भवेत्; यथा रूपादिग्रहणोत्पत्तिनिरोधिसंतमसनिरसनेन चक्षुषो दीपादिना ॥

न चेह तथाविधं निरसनीयं संभाव्यते। न तावत् संविदात्मगतं तज्ज्ञानोत्पत्तिविरोधि किंचिदप्यहंकारापनेयमस्ति ॥

अस्ति ह्यज्ञानमिति चेत्, न; अज्ञानस्याहङ्कारापनोद्यत्वानभ्युपगमात्। ज्ञानमेव ह्यज्ञानस्य निवर्तकम ॥

न च संविदाश्रयत्वमज्ञानस्य संभवति; ज्ञानसमानाश्रयत्वात्, तत्समानविषयत्वाच्च। ज्ञातृभाव-विषयभावविरहिते ज्ञानमात्रे साक्षिणि नाज्ञानं भवितुमर्हति। यथा ज्ञानाश्रयत्वप्रसक्तिशून्यत्वेन घटादेर्नाज्ञानाश्रयत्वम्, तथा ज्ञानमात्रेऽपि ज्ञानाश्रयत्वाभावेन नाज्ञानाश्रयत्वं स्यात् ॥

संविदोऽज्ञानाश्रयत्वाभ्युपगमेऽप्यात्मतयाऽभ्युपगतायास्तस्या ज्ञानविषयत्वाभावेन ज्ञानेन न तद्गताज्ञाननिवृत्तिः। ज्ञानं हि स्वविषय एवाज्ञानं निवर्तयति; यथा रज्ज्वादौ। अतो न केनापि कदाचित् संविदाश्रयमज्ञानमुच्छिद्येत। अस्य च सदसदनिर्वचनीयस्याज्ञानस्य स्वरूपमेव दुर्निरूपमित्युपरिष्टाद् वक्ष्यते ॥

ज्ञानप्रागभावरूपस्य चाज्ञानस्य ज्ञानोत्पत्तिविरोधित्वाभावेन न तन्निरसनेन तज्ज्ञानसाधनानुग्रहः। अतो न केनापि प्रकारेणाहङ्कारेणानुभूतेरभिव्यक्तिः ॥

न च स्वाश्रयतयाऽभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः; प्रदीपादिष्वदर्शनात्, यथावस्थितपदार्थप्रतीत्यनुगुणस्वाभाव्याच्च ज्ञान-तत्साधनयोरनुग्राहकस्य च। तच्च स्वतःप्रामाण्यन्यायसिद्धम् ॥

न च दर्पणादिर्मुखादेरभिव्यञ्जकः, अपि तु चाक्षुष-तेजःप्रतिफलनरूपदोषहेतुः। तद्दोषकृतश्च तत्रान्यथाव-भासः, अभिव्यञ्जकस्त्वालोकादिरेव। न चेह तथाऽह-ङ्कारेण संविदि स्वप्रकाशायां तादृशदोषापादनं संभवति। व्यक्तेस्तु जातिराकार इति तदाश्रयतया प्रतीतिः, न तु व्यक्तिव्यङ्ग्यत्वात्॥

अतोऽन्तःकरणभूताहङ्कारस्थतया संविदुपलब्धेर्व-स्तुतः, दोषतो वा न किंचिदिह करणम्, इति नाहङ्कारस्य ज्ञातृत्वम्, तथोपलब्धिर्वा। तस्मात् स्वत एव ज्ञातृतया सिद्ध्यन्नहमर्थ एव प्रत्यगात्मा, न ज्ञप्तिमात्रम्। अह-म्भावविगमे तु ज्ञप्तेरपि न प्रत्यक्त्वसिद्धिरित्युक्तम्॥

तमोगुणाभिभवात् परागर्थानुभवाभावाच्चाहमर्थस्य विविक्तस्फुटप्रतिभासाभावेऽप्याऽऽप्रबोधाद'हमि'त्येकाका-रेणात्मन स्फुरणात् सुषुप्तावपि नाहम्भावविगमः। भवदभि-मताया अनुभूतेरपि तथैव प्रथेति वक्तव्यम्॥

न हि सुप्तोत्थितः कश्चिदहम्भाववियुक्तार्थान्तरप्रत्य-नीकाकारा ज्ञप्तिरहमज्ञानसाक्षितयाऽवतिष्ठते इत्येवंविधां स्वापसमकालामनुभूतिं परामृशति। एवं हि सुप्तोत्थि-तस्य परामर्शः 'सुखमहमस्वाप्समि'ति॥

अनेन प्रत्यवमर्शेन तदानीमप्यहमर्थस्यैवात्मनः सुखित्वम्, ज्ञातृत्वं च ज्ञायते। न च वाच्यम्—यथेदानीं सुखं भवति, तथा तदानी'मस्वाप्समि'त्येषा प्रतिपत्तिः—इति; अतद्रूपत्वात् प्रतिपत्तेः। न चाहमर्थस्यात्मनोऽस्थिर-त्वेन तदानीमहमर्थस्य सुखित्वानुसन्धानानुपपत्तिः; यतः सुषुप्तिदशायाः प्रागनुभूतं वस्तु सुप्तोत्थितो 'मयेदं कृतम्' 'मयेदमनुभूतम्' 'अहमेतदवोचम्' इति परामृशति॥

'एतावन्तं कालं न किंचिदहमज्ञासिषम्' इति च परा-मृशतीति चेत्, ततः किम्?

'न किंचिदि'ति कृत्स्नप्रतिषेध इति चेत्, न; 'नाह-मवेदिषम्' इति वेदितुरहमर्थस्यैवानुभूतेः। वेद्यविषयो हि स प्रतिषेधः॥

'न किंचिदि'ति निषेधस्य कृत्स्नविषयत्वे भवदभिमतानुभूतिरपि प्रतिषिद्धा स्यात्। सुषुप्तिसमये त्वनुसन्धीयमानमहमर्थमात्मानं ज्ञातारम्'अहमि'ति परामृश्य 'न किंचिदवेदिषम्' इति वेदने तस्य प्रतिषिध्यमाने तस्मिन् काले निषिध्यमानाया वित्तेः सिद्धिम्, अनुवर्तमानस्य ज्ञातुरहमर्थस्य चासिद्धिमनेनैव 'न किंचिदहम् वेदिषम्' इति परामर्शेन साधयंस्तमिममर्थं देवानामेव साधयतु ॥

'मामप्यहं न ज्ञातवान्' इत्यहमर्थस्यापि तदानीमनुसन्धानं प्रतीयत इति चेत्,'स्वानुभव-स्ववचनयोर्विरोधमपि न जानन्ति भवन्तः। 'अहं मां न ज्ञातवान्' इति ह्यनुभव-वचने ॥

मामिति किं निषिध्यत इति चेत्, साधु पृष्टं भवता। तदुच्यते–अहमर्थस्य ज्ञातुरनुवृत्तेर्न स्वरूपं निषिध्यते, अपि तु प्रबोधसमयेऽनुसन्धीयमानस्याहमर्थस्य वर्णाश्रमादिविशिष्टता। 'अहं मां न ज्ञातवानि'त्युक्ते विषयो विवेचनीयः ॥

जागरितावस्थानुसंहितजात्यादिविशिष्टोऽस्मदर्थो 'मामि'त्यंशस्य विषयः। स्वापाद्यवस्थाप्रसिद्धाविशदस्वानुभवैकतानश्चाहमर्थोऽहमित्यंशस्य विषयः। अत्र 'सुप्तोऽहम्' 'ईदृशोऽहमि'ति च 'मामपि न ज्ञातवानहमि'त्येव खल्वनुभवप्रकारः ॥

किंच सुषुप्तावात्माऽज्ञानसाक्षित्वेनाऽऽस्त इति हि भवदीया प्रक्रिया। साक्षित्वं च साक्षात् ज्ञातृत्वमेव। न ह्यजानतः साक्षित्वम्। ज्ञातैव हि लोक-वेदयोः साक्षीति व्यपदिश्यते, न ज्ञानमात्रम्। स्मरति च भगवान् पाणिनिः "साक्षाद् द्रष्टरि संज्ञायाम्" इति साक्षाद् ज्ञातर्येव साक्षिशब्दम् ॥

स चायं साक्षी 'जानामी'ति प्रतीयमानोऽस्मदर्थ एव, इति कुतस्तदानीमहमर्थो न प्रतीयेत? आत्मने स्वयमवभासमानो'ऽहमि'त्येवावभासते, इति स्वापाद्यवस्थास्वप्यात्मा प्रकाशमानो'ऽहमि'त्येवावभासत इति सिद्धम् ॥

## अद्वैतिनां महासिद्धान्तः

### चिच्छायापत्त्यादिनाऽहमर्थस्य ज्ञातृत्वाध्याससमर्थनम्

तत्र जडस्याहङ्कारस्य चिच्छायापत्तिर्नाम तयोः परस्परतादात्म्याध्यासः। न चाहङ्कारमात्रस्य चित्तादात्म्यम्, न वा चिन्मात्रस्याहङ्कारतादात्म्याध्यासः, येन सिद्धान्ते संविदि ज्ञातृत्वानभ्युपगमात् जडस्याहङ्कारस्यापि ज्ञातृत्वानभ्युपगमात्, द्वयोरप्यचाक्षुषत्वेन प्रतिबिम्बासंभवाच्च न ज्ञातृत्वाध्यासायोगः स्यात्। चिच्छायापत्तिपदेन हि परस्परसम्बन्धमात्रं विवक्षितम्, न त्वन्यत् किमपि। तच्चाध्यासिकम्, अन्यद्वेति त्वन्यदेतत्॥

तत्र 'अयो दहती'त्यादावयसो दग्धृत्वम्, गौरवादिकं चोभयं यद्यपि न प्रत्यग्धर्मः; तथाप्युभयधर्मो मिलितस्यैव। इयान् विशेषः— सोपाधिकाध्यासस्तत्र धर्ममात्रस्य—लोहितः स्फटिक इत्यत्रेव, अत्र तूपाधि-तद्धर्मोभयाध्यासः, इति ज्ञातृत्वादेः, प्रत्येकधर्मत्वाभावोऽकिञ्चित्करः। व्यक्तं चैतत् 'यथाच तच्चाधिकरणे'॥

तत्र संविन्मात्रस्याऽऽवृतस्यान्तःकरणतादात्म्याध्यासादुपहितरूपेण यावत्तत्सत्त्वं तदुपधानात् साक्षितया प्रकाशः, अहङ्कारस्य स्वतः, स्वपरिणामवृत्त्युपरागद्वारा वाऽसत्त्वाभानापादकाज्ञाननिवर्तकत्वेन ज्ञातृतया संविन्मात्रस्य प्रतिभासः, स्वयंप्रकाशस्यापि संविन्मात्रस्याज्ञानाश्रय-विषयस्य विनाऽहङ्कारसम्बन्धमभिव्यङ्ग्यत्वम्॥

तत्र तत्त्वसाक्षात्कारस्याविद्या-तत्प्रयुक्ताहङ्कारादिविनाशे तु नाभिव्यक्तिकथाऽपि। अतो नात्र शान्ताङ्गारन्यायापातः॥

स्वयंप्रकाशानुभवाधीनसिद्धिरपि पदार्थानां स्वप्रकाशार्थं वृत्त्यन्तरानपेक्षवृत्त्युपरागमभिप्रेत्यैव, न तु स्वप्रकाशस्वरूपज्ञानोपरागमनपेक्ष्य। यथाच स्वप्रकाशमपि संविन्मात्रमनाद्यज्ञानसम्बन्धप्रयुक्तानादिभेदैः सच्चिदादिरूपैरावृतानावृतरूपभेदमनाद्यज्ञान-तत्प्रयुक्तसर्वभेदनिवृत्त्यर्थं वृत्त्युपरागमपेक्षते, तथाऽज्ञानप्रकरणे व्यक्तीभविष्यति, इति नाहङ्कारानुभूत्योः स्वभावविरोधः, न वा पूर्वोक्तरीत्या स्वरूपज्ञानस्याननुभूतित्वापत्तिः॥

तत्राहङ्कारस्य स्वतः स्वोपहितविषयाज्ञानमात्रनिवर्तनेनाभिव्यञ्जकत्वम्, अभिव्यक्तस्वप्रकाशचैतन्यतादात्म्यादहङ्कारस्य प्रकाशः; यथा रविकरनिकरव्यङ्ग्यकरतलेन रविकरप्रकाशः। तत्र रविकरनिकराः स्वय-

मभिव्यक्ताः स्वोपरक्तं करतलं प्रकाशयन्ति, स्वयं चाभिव्यक्ता भवन्ति, एवमेवात्राप्यहङ्कारः स्वयमज्ञाननिवर्तनादभिव्यञ्जकोऽपि, स्वोपरक्त-चैतन्यभास्योऽपीत्यविशिष्टम् ॥

तत्र स्वप्रकाशस्य संविन्मात्रस्वरूपस्यात्मनोऽहङ्कारेणाभिव्यक्तिर्नाम संविन्मात्रज्ञानविषयकाज्ञाननिवृत्तिमात्रम्, न तु तदीयप्रकाशस्योत्पत्तिः, न तत्प्रकाशनम्, न वा तदनुभवसाधनानुग्रहः; आवरणनिवृत्तिमात्र-परत्वादहङ्कारस्य, तत्परिणामान्तःकरणवृत्तेर्वा। तथा च भाष्यम्— "अविद्यानिवृत्तिपरत्वात् शास्त्रस्ये"ति। व्यक्तीभविष्यति च संविन्मात्रस्व-रूपस्याज्ञानाश्रयत्वम्, तेनावरणं च, यस्य निरसनमहङ्कारादिकृत्यम् ॥

प्रमाणजन्यवृत्तेरेवाज्ञानविरोधित्वेनाज्ञाननिवर्तकत्वम्, अहङ्कारस्य तु तदुपादानस्यासत्त्वापादकाद्यज्ञानविशेषमात्रनिवर्तकत्वमप्युपरिष्टाद् ज्ञाननिवर्तकोपपत्तिपरीक्षायां व्यक्तम्। आश्रय-विषयोपपत्तिप्रकरणं तु संविन्मात्रस्याज्ञानेनाविरोधं समर्थयिष्यति। सत्यप्येवं संविन्मात्राननुभा-व्यत्वं तु समर्थितमेवाधस्तात्। सर्वं चाज्ञानस्वरूपानुपपत्त्यादि परस्तात् स्फुटीभविष्यति ॥

तत्र यथा प्रदीपादयः स्वसम्बद्धपदार्थगताऽऽवरणनिवृत्तिमात्रेण चरितार्थाः, न तु तत्प्रकाशनमपि तेषां कृत्यम्; चक्षुरादेरेव प्रकाशन-कृत्यत्वात्, अन्यथा निमीलिताक्षाणामपि सति प्रदीपादौ तत्प्रति-भासापत्तिः ॥

वस्तुतस्तु—प्रदीपादेरपि जडस्वभावतैलवर्त्त्यभिव्यक्तस्य स्वाभिव्यञ्ज-कस्वसम्बद्धतैलादिप्रकाशकत्वमपि दृष्टमेव, इति जडाहङ्कारव्यङ्ग्यस्व-सम्बद्धाहङ्कारप्रकाशकत्वम्, स्वाभिव्यक्तप्रदीपनाश्यत्वं च तैलवर्त्त्या-देरिवाविरुद्धम्, इति परस्परतादात्म्याध्यासेनाहङ्कारोपधानेनाज्ञान-निवृत्तौ साक्षिभावमापन्नम्, विशिष्टजीवभावमापन्नं वा स्वरूपज्ञानमेव, ज्ञातृ, नाहङ्कारमात्रम्, इति न ज्ञातृत्वम्, अहमर्थत्वं वा स्वरूपज्ञानमा-त्रस्य, किन्तु तदुपहितस्यैव, इति न काऽपि बाधाऽहमर्थमुख्यानात्मता-यामपि देहाद्यभिमानवत इव ॥

अत एव सुषुप्तावहङ्कारविलये ना'हमि'त्यात्मनः प्रकाशः; जागरादाविव। सुषुप्तावपि स्वयंप्रकाशप्रत्यगात्मनो'ऽहमि'ति विविक्तस्फुटप्रतिभासो-ऽन्यथा समापद्येत ॥

अद्वैतमते त्वहङ्कारस्याव्याकृतभावमापन्नस्याव्याकृतवद् न विविक्तं स्फुटप्रतिभासः सुषुप्त्यादौ । अनुभूतिमात्रं हि सुषुप्तावव्यक्तकारण-शरीरमात्रोपहितमव्यक्तमेव प्रकाशते । सुषुप्तोत्थाने तु विविक्तम् , स्फुटं चावभासत इति सुष्ठु सङ्गति ॥

निष्कर्षस्तु—अव्यक्तभावापन्नाहङ्कारोपहितो जीवः सुषुप्तावव्यक्तमव-भासते, जागरे तु व्यक्तभावमापन्नाहङ्कारोपाधिकः स व्यक्त'महमि'ति भासते। अनुभूतिमात्रं त्वनुपहितं सुषुप्तौ, जागरे वा यावदखण्डा-कारज्ञानमावृतं न प्रकाशते, न वा ज्ञातृ, इति न नानुभूतिमात्रत्वमात्मनः, सुप्तोत्थितस्याहम्भाववियुक्तार्थान्तरप्रत्यनीकाकारा ज्ञप्तिरहमज्ञानसाक्षितया-ऽवतिष्ठते, इत्यनुसन्धानोपपत्तिः। साक्षित्वमपि संविदो व्यक्तभावम् , अव्यक्तभावं वाऽऽपन्नस्याहङ्कारस्योपधानमात्रेण, न तु स्वरूपत इत्य-नुसन्धेयम् , इति न सुप्तोत्थितस्य 'सुखमहमस्वाप्समि'ति प्रतीति-विरोधः ॥

तत्र सुप्तोत्थितस्य व्यक्तात्मनाऽहमनुभवः सुप्तेः पूर्वमिव व्यक्तात्मना-ऽहङ्कारानुवेधप्रयुक्त एव। अत एव सुषुप्तिदशातः पूर्वमनुभूतं वस्तु सुप्तोत्थितः—'मयेदं कृतम्' 'मयेदमनुभूतम्' 'अहमेवेदमवोचम्' इति परामृशति। न चैवं सुषुप्तिदशायाम्। अतो व्यक्तात्मनाऽहमनुभवो जागर इव नास्तीति स्वीकर्तव्यम्। इदं चाहमर्थस्यैवात्मत्वे नोपपद्यते। अहङ्कार-स्याव्यक्तात्मता विलीनावस्थैव हि सुषुप्तिर्नाम, 'नाहमवेदिषमिति तु न सुषुप्ति-कालीनाहमर्थमादाय, किन्तु व्यक्ताहङ्कारानुवेधमादाय। अत एव वार्तिक-काराः—अहमंशेऽनुभव एव, न स्मरणमिति मन्यन्ते। तत्र 'नाहं किंचिद-वेदिषमि'ति परामर्शः स्वप्रकाशसंविन्मात्रप्रकाशातिरिक्तवेद्यनिषेधमात्रम् , न तु संविन्मात्रस्वरूपप्रकाशस्यापि निषेधपरम्। संविन्मात्रम् , अनुभूतिर्वा स्वरूपज्ञानं त्वननुभाव्यत्वात् घटादिवत् सुषुप्तावपि नानुभाव्यम् , इति तस्याप्यनुभाव्यत्वनिषेधोऽत्र न व्याहन्यते।

अत एव 'मामप्यहं तदानीं नाज्ञासिषमि'ति व्यक्तात्मनोऽहङ्कारोप-हितस्य तदाऽभानानुसन्धानमुपपद्यते। तत्र यद्यपि कारणशरीराव्यक्ता-हङ्कारोपहितोऽप्यात्मा साक्षिरूपेण सुषुप्तौ भासते; तथाप्यज्ञानस्यो-पाधितायामेव सुषुप्तौ साक्षिणो भानात् , विशेषणस्येवोपाधेर्वर्तमान-त्वेऽपि तस्य कार्यानन्वयित्वाच्च नाहङ्कारविशिष्टस्य, अविद्याविशिष्टस्य वा जीवस्य तदाऽहमर्थस्य भानम् , किन्तु तदुपहितस्य साक्षिमात्रस्य

व्यक्तात्मना, अव्यक्तात्मना वाऽहङ्कारस्य जागरदशायामिवाभानात् नाहमर्थस्य तदा भानम् ॥

तस्य साक्षिशब्देन व्यपदेशस्तु द्रष्टव्यस्य वस्तुनः कस्यापि तत्राभानात्, स्वप्रकाशत्वमात्रमादाय सुषुप्तौ गौणमेव, न तु जागरितावस्थायामिव मुख्यम्। "साक्षाद् द्रष्टरि संज्ञायामि"ति पाणिनिसूत्रं जागरितावस्थं साक्षिगमभिप्रेत्य, यत्राहङ्कारतादात्म्यादहमर्थोऽपि व्यक्तात्मना संवित्तादात्म्येन भासते, द्रष्टव्यं चास्ति, इति न सुषुप्तावहमर्थोऽव्यक्ताहङ्कारोपहितो ज्ञातृतया भासते। तत्र ज्ञातृत्वं वृत्तिमात्राश्रयत्वेन, विकसितावस्थधर्मभूतज्ञानाश्रयत्वेन वा। सुषुप्तावन्तःकरणवृत्तेर्बहिःप्रसराया विकसितावस्थधर्मभूतज्ञानस्य वाऽभावात् सौषुप्ते पुरुषे ज्ञातृत्वं जागर इव दुरुपपादम्। अहमात्मनाऽऽत्मनो भानं हि तस्य व्यक्तावस्थायामेव, न तस्याव्यक्तावस्थायाम्, इति न स्वापाद्यवस्थास्वात्माऽहमित्येव भासते। अयमेव न्यायो मुक्तावपि तत्राप्यहमर्थस्याननुवृत्तेः ॥

### श्रीभाष्यकाराणां महापूर्वपक्षः

#### मुक्तावहमर्थान्वयसमर्थनम्

यत्तु—मोक्षदशायामहमर्थो नानुवर्तते—इति, तदपेशलम्; तथा सत्यात्मनाश एवापवर्गः प्रकारान्तरेण प्रतिज्ञातः स्यात्। न चाहमर्थो धर्ममात्रम्, येन तद्विगमेऽप्यविद्यानिवृत्ताविव स्वरूपमवतिष्ठेत, प्रत्युत स्वरूपमेवाहमर्थ आत्मनः। ज्ञानं तु तस्य धर्मः; 'अहं जानामि' 'ज्ञानं मे जातम्' इति चाहमर्थधर्मतया ज्ञानप्रतीतेरेव ॥

अपि च यः परमार्थतो भ्रान्त्या वाऽऽध्यात्मिकादिदुःखैर्दुःखितया स्वात्मानमनुसन्धत्ते—'अहं दुःखी'ति 'सर्वमेतद् दुःखजातमपुनर्भवमपोह्य कथमहमनाकुलः स्वस्थो भवेयम्' इत्युत्पन्नमोक्षरागः, स एव तत्साधने प्रवर्तते। स साधनानुष्ठानेन यद्यहमेव न भविष्यामीत्यवगच्छेत्, अपसर्पेदेवासौ मोक्षकथाप्रस्तावात्। ततश्चाधिकारिविरहादेव सर्वं मोक्षशास्त्रमप्रमाणं स्यात् ॥

अहमुपलक्षितं प्रकाशमात्रमपवर्गेऽवतिष्ठत इति चेत्, किमनेन? मयि नष्टेऽपि किमपि प्रकाशमात्रमपवर्गेऽव-

तिष्ठेतेति मत्वा नहि कश्चित् बुद्धिपूर्वकारी प्रयतते। अतोऽहमर्थस्यैव ज्ञातृतया सिद्ध्यतः प्रत्यगात्मत्वम् ॥

स च प्रत्यगात्मा मुक्तावप्य'हमि'त्येव प्रकाशते; स्वस्मै प्रकाशमानत्वात्। यो यः स्वस्मै प्रकाशते, स सर्वोऽह-मित्येव प्रकाशते यथा, तथाऽवभासमानत्वेनोभयवादि-संमतः संसार्यात्मा। यः पुनर'हमि'ति न चकास्ति, नासौ स्वस्मै प्रकाशते; यथा घटादिः। स्वस्मै प्रकाशते चायं मुक्तात्मा; तस्माद'हमि'त्येव प्रकाशते॥

न च'अहमि'ति प्रकाशमानत्वेन तस्याज्ञत्व-संसारि-त्वादिप्रसङ्गः; मोक्षविरोधात्, अज्ञत्वाद्यहेतुत्वाच्चाहं-प्रत्ययस्य॥

अज्ञानं नाम स्वरूपाज्ञानम्, अन्यथाज्ञानम्, विपरीत-ज्ञानं वा 'अहमि'त्येवात्मनः स्वरूपमिति स्वरूपज्ञानरूपो-ऽहम्प्रत्ययो नाज्ञत्वमापादयति, कुतः संसारित्वम्? अपि तु तद्विरोधित्वाद् नाशयत्येव। ब्रह्मात्मभावापरोक्ष्यनिर्धूत-निरवशेषाविद्यानामपि वामदेवादीनाम् 'अहमि'त्येवात्मा-नुभवदर्शनाच्च॥

श्रूयते हि—"तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च" इति, "अहमेकः प्रथममासं वर्तामि च भविष्यामि च" इत्यादि। सकलेतराज्ञानविरोधिनः सच्छब्दप्रत्ययमात्रभाजः परस्य ब्रह्मणो व्यवहारोऽप्येव-मेव—'हन्ताहमिमास्तिस्रो देवताः," "बहु स्यां प्रजायेय," "स ऐक्षत लोकान्नु सृजा" इति। तथा—

"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः॥
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥"
"अहमात्मा गुडाकेश" "न त्वेवाहं जातु नासम्"
"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा"।
"अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते।"
"तेषामहं समुद्धर्ता मृत्युसंसारसागरात्"।
"अहं बीजप्रदः पिता," "वेदाहं समतीतानि"।

इत्यादिषु॥

## अद्वैतिनां महासिद्धान्तः

### मुक्तावहमर्थानन्वयसमर्थनम्

तत्र मुक्तात्माऽऽवृतानावृतरूपभेदशून्यतयाऽनाद्यविद्याप्रयुक्तसच्चिदानन्दभेदशून्यतयाऽवभासात् स्वप्रकाशानावृतसंविन्मात्रम्, तस्याखण्डात्मना प्रकाशस्तु सर्वात्मनाऽऽवरणविरहेणाखण्डाकारसाक्षात्कारप्रयुक्तेन। स्वप्रकाशत्वं ह्यात्मनो न स्वस्मै प्रकाशमानत्वेन; संसारावस्थायामपि स्वस्मै प्रकाशमानत्वरूपस्य स्वप्रकाशत्वस्याविशेषात्, इति निवृत्तावरणस्वप्रकाशस्वभावत्वेन। बन्धनिवृत्तिमात्रम्, अनाद्यावरणनिवृत्तिमात्रं वा हि तत्रापेक्ष्यते; स्वातिरिक्तचिदधीनप्रकाशत्वाभावः खलु स्वप्रकाशत्वम्। इदं तु प्रकाशमात्रत्वेनापि निवर्हति, इति प्रकाशप्रयुक्तफलभागित्वं न स्वप्रकाशत्वम्। तच्चात्मनः 'अहमि'ति प्रतीतिं विनापि; अन्यथा मुक्तानामपि 'अहमि'ति प्रकाशेऽविद्याप्रयुक्ताहङ्काराख्यबन्धाश्रयत्वाद् न बद्धावस्थातो मुक्तावस्थाया विशेषः स्यात्; मोक्षविरोधित्वादहङ्कारोपधानस्य॥

तत्राज्ञानं स्वरूपावरणं स्वरूपाश्रिताविद्याप्रयुक्तम्, तत्प्रयुक्तमन्यथाज्ञानं वा। न चात्रात्मनः स्वरूपमहं नाम। तत्र च स्वरूपज्ञानस्याज्ञानाविरोधित्वात्, धर्मभूतज्ञानस्यैव तद्विरोधित्वाच्च नाहङ्कारोपधानम्, तत्प्रयुक्तप्रतीतिर्वाऽज्ञानं साधयति, न वा बाधते, इति यावदखण्डाकारवृत्त्यैव 'अहमि'ति प्रतीतिः॥

तत्र वामदेवादयो यदि जीवन्मुक्ताः, तर्हि तेषां संस्कारात्मनाऽहङ्कारस्य विशेषणतयाऽननुवर्तनेऽप्युपाधितयाऽनुवर्तनात् तेषामहमनुभवोऽहंकारोपहितस्वरूपमात्रानुभवः, तदुपलक्षितस्वरूपमात्रानुभवो वाऽहम्प्रत्ययः, न तावताऽहमर्थ एवात्मा॥

अयमेव न्यायः—"अहमेकः प्रथममासम्" "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नाम-रूपे व्याकरवाणि" "बहु स्यां प्रजायेय" "स ऐक्षत लोकान्नु सृजा" "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" "अहमात्मा गुडाकेश" "न त्वेवाहं जातु नासम्" "अहं कृत्स्नस्य प्रभवः" "मत्तः सर्वं प्रवर्तते" "तेषामहं समुद्धर्ता मृत्युसंसारसागरात्" "अहं बीजप्रदः पिता" "वेदाहं समतीतानि" इत्यादिषु।

वामदेवादीनामहम्प्रत्ययस्तेषां जीवन्मुक्तानामादेहपातमुपाधितामात्रेणाहङ्कारानुवृत्त्या, तदुपलक्षणेन वाऽहङ्कारभानेऽप्यहम्प्रतीतिर्निर्वहतीति

व्यक्तमधस्तात् । भगवतोऽन्तःकरणमात्रविशिष्टस्य, तदुपहितस्य वाऽहम्प्रतीतिस्तु सर्वाहङ्कारमूलमायापरिणामाहमाकारवृत्त्योपहितस्यैव भक्तिमार्गादिविषया । तस्य संविन्मात्रादहंकारस्येव तन्मूलाया मायाया अप्यनादितादात्म्याध्यासेन सत्यप्यध्यास उपाधेः प्रतिबिम्बपक्षपातित्वात्, मायायास्तदज्ञत्वादिप्रयोजकत्वायोगादहम्प्रतीतिर्न विरुद्धा ॥

न हीश्वरः, जीवन्मुक्तो वा स्वोपाधिना बद्धः, किन्तु बद्धवद् व्यवहरति, इति तदुपाधिकत्वेऽपि स तदतीत एव । अत एव गीतायाम्—"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः" इति । अतो ना'हमि'त्येवात्मनः स्वरूपम् । अत एव ह्यहङ्कारस्य—

"महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।"

इति पृथक् क्षेत्रकोटौ निर्देशः । न हि स्वरूपोपदेशपरेषु प्रकरणेषु कुत्राप्य'हमि'त्यात्मन उपदेशः ॥

अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

आत्मनोऽहमर्थत्वोपपत्तिः

यद्यहमित्येवात्मनः स्वरूपम्, कथं तर्ह्यहङ्कारस्य क्षेत्रान्तर्भावो भगवतोपदिश्यते—

"महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।"

इति, उच्यते; स्वरूपोपदेशेषु सर्वेष्व'हमि'त्येवोपदेशात् तथैवात्मस्वरूपप्रतिपत्तेश्चा'हमि'त्येव प्रत्यगात्मनः स्वरूपम् । अव्यक्तपरिणामभेदस्याहङ्कारस्य क्षेत्रान्तर्भावो भगवतैवोपदिश्यते ॥

स त्वनात्मनि देहेऽहम्भावकरणहेतुत्वेनाहङ्कार इत्युच्यते । अस्य त्वहङ्कारशब्दस्याभूततद्भावार्थे च्विप्रत्ययमुत्पाद्य व्युत्पत्तिर्द्रष्टव्या । अयमेव त्वहङ्कार उत्कृष्टजनावमानहेतुर्गर्वापरनामा शास्त्रेषु बहुशो हेयतया प्रतिपाद्यते । तस्माद् बाधकापेताऽहम्बुद्धिः साक्षादात्मगोचरैव । शरीरगोचरा त्वहम्बुद्धिरविद्यैव । यथोक्तं भगवता पराशरेण—

"श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन ! ।
अनात्मन्यात्मबुद्धिर्या—" इति ॥

यदि ज्ञप्तिमात्रमेवात्मा, तदाऽनात्मन्यात्माभिमाने शरीरे ज्ञप्तिमात्रप्रतिभासः स्यात्, न ज्ञातृत्वप्रतिभासः। तस्माद् ज्ञाताऽहमर्थ एवात्मा। तदुक्तम्—

"अतः प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात्।
अविद्यायोगतश्चाऽऽत्मा 'ज्ञाताऽहमि'ति भासते॥"

इति। तथाच—

"देहेन्द्रियमनः-प्राण-धीभ्योऽन्योऽनन्यसाधनः।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी॥"

इति॥

## अत्राद्वैतिनां महासिद्धान्तः

### आत्मनोऽहमर्थत्वनिरासः

अत्राहङ्कारशब्देन भूतपरिणामहेतुर्द्रव्यं विवक्ष्यते, क्षेत्रेऽहम्बुद्धि-प्रयोगाच्चास्य क्षेत्रत्वमिति च सम्प्रतिपन्नम्। सति चैवं क्षेत्रस्यात्मनो-ऽप्यौपाधिकं क्षेत्रत्वमेव, परन्तु स्वरूपेण क्षेत्रज्ञो न क्षेत्रमिति स्थिते "क्षेत्रज्ञं चापि मां विद्धि" इत्यत्र क्षेत्रज्ञपदार्थो विगलितक्षेत्रोपाधिकं संवि-न्मात्रमिति बोधयितुमेव "महाभूतान्यहङ्कारः" इति श्लोकः। अत एव—

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।"

इत्यत्र क्षेत्रतो विवेको ज्ञपदार्थस्य स्वरूपज्ञानस्य विवक्ष्यते॥

तत्र यथा शरीरादौ जडेऽहम्प्रत्ययहेतुत्वोपरागादहङ्कारः, एवमन-हम्भावयोग्ये संविन्मात्रेऽप्यहंभावहेतुरहङ्कारोपरागः, तेन च शरीरादिक-मिव संविन्मात्रमपि साक्षात्, परम्परया वाऽहङ्कारोपधानेनैवाहम्पदार्थः, स्वरूपं तु क्षेत्रज्ञस्यात्मनः क्षेत्रविविक्तस्यैव॥

तत्राहङ्कारस्य च्विप्रत्ययान्तशब्दत्वं परमार्थतोऽनहमोऽहम्भाव-हेतुत्वेनैव, न त्वनात्मन्यात्मभावहेतुत्वेन, इत्यनहम्यहम्भावहेतुर-हङ्कारः सात्त्विकादिभेदभिन्नेष्वविद्यापरिणामेष्वहङ्कारेष्वावरणशक्तिमान-त्राहङ्कारपदार्थः॥

"श्रूयतां चाप्यविद्यायाः स्वरूपं कुरुनन्दन। अनात्मन्यात्मबुद्धिर्या" इति विष्णुपुराणवचनं त्वावरणशक्तिमद् द्रव्यं स्वोपरागेण तत्तद्वस्तु-स्वरूपमावृण्वानं परस्पराध्यासेन परस्परात्मत्वमध्यारोपयति, येनानात्म-न्यात्मबुद्धिः, आत्मन्यनात्मबुद्धिश्च परस्पराध्यासेनैवेत्यभिप्रैति। तत्र "अनात्मन्यात्मबुद्धिर्ये"त्येकाध्यासमात्रोपन्यासोऽपि परस्पराध्यासस्योप-

लक्षणम्, इत्यहङ्कारस्य तामसस्योपधानेनाहमर्थस्य विशिष्टस्य वस्तुतो मुख्यात्मत्वाभावेऽप्यहमर्थत्व-ज्ञातृत्वादिकमध्यारोपितमेवोपपद्यते। सर्वथा त्वहङ्कारस्य क्षेत्रत्वेनोपदेशोऽहमर्थमुख्यात्मतामाहन्ति॥

अत एव—"अथातोऽहङ्कारादेशः" इत्यहमर्थमात्मानं प्रथममुपदिश्य "क्षेत्रज्ञं चापि मां विद्धि" इत्यत्र क्षेत्रविविक्तात्मरूपमिवाहङ्काराख्यक्षेत्रमपि विविच्य मुख्यात्मस्वरूपोपदेशः—'अथात आत्माऽऽदेशः" इति॥

अतोऽहमर्थोपाधिमात्रमहङ्कारपदार्थः, यतो विविक्तमेव परमात्माभेदयोग्यमात्मस्वरूपं क्षेत्रविविक्तं 'ज्ञ' पदार्थः, मुख्यात्मा वेति स्वीकर्तव्यम्। कुत्र वाऽऽत्मस्वरूपोपदेशप्रकरणे'अहमि'त्यात्मोपदेशः, येनाहङ्कारोऽत्र न भूतकारणमहत्तत्त्वं स्यात्॥

अनात्मस्वरूपमनात्मन्यात्मबुद्धिहेतुरविद्या तु नात्र क्षेत्रतामर्हति; अव्यक्तपदेन तस्य ग्रहणेनाहङ्कारपदेनापि तदुपन्यासस्य वैतथ्यात्। अतो ज्ञप्तिमात्रमात्मा, तत्राहम्प्रतीतिः, ज्ञातृत्वावभासो वाऽहङ्काराध्यासनिष्पन्नरूपेणैव। अत एव—

"अविद्यायोगतश्चात्मा ज्ञाताऽहमिति कथ्यते।"
'देहेन्द्रिय-मनःप्राण-धीभ्योऽनन्यसाधनः॥
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः सुखी स्वतः॥"

इति स्वप्रकाशत्वमिवाऽऽत्मत्वम्, भिन्नत्वं चोपदिश्यमानमुपपद्यते। तत्र ज्ञातुरहमर्थस्यैव स्वत आत्मत्वे तस्य श्रीभाष्यसिद्धान्तदृष्ट्याऽणुपरिमाणस्य व्यापित्वम्, भिन्नत्वं चानुपपन्नं स्यात्। तत्र यद्यपि प्रत्यक्षतः 'अहमि'त्येवात्मा प्रतिक्षेत्रं नानेत्यवगम्यते; तथापि संभावितदोषप्रत्यक्षापेक्षयाऽसंभावितदोषागमप्राबल्यात् सर्वक्षेत्रविविक्तं संविन्मात्रमेव मुख्यात्मेति व्यवस्थैवात्र शरणम्; अन्यथा देहात्मप्रत्यक्षवशात् देह एवाहमर्थः, ज्ञाता चेत्यापत्त्या सर्वं शास्त्रमप्रमाणं स्यात्, इति दोषमूलत्वेनान्यथासिद्धिसंभावनया सकलभेदावलम्बिप्रत्यक्षस्य शास्त्रबाध्यत्वमेव साम्प्रतम्॥

### अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

#### प्रत्यक्षस्य संभाव्यमानदोषत्वनिरासः

यदुक्तम्—दोषमूलत्वेनान्यथासिद्धिसंभावनया सकलभेदावलम्बिप्रत्यक्षस्य शास्त्रबाध्यत्वम्—इति, तत्र कोऽयं

दोष इति वक्तव्यम् , यन्मूलतया प्रत्यक्षस्यान्यथासिद्धिः। अनादिभेदवासनैव हि दोष इति चेत् , भेदवासनायास्तिमिरादिवद् यथावस्थितवस्तुविपरीतज्ञानहेतुत्वं किमन्यत्र ज्ञातपूर्वम् ?

अनेनैव शास्त्रविरोधेन ज्ञास्यत इति चेत् , अन्योन्याश्रयणात्—शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चये सति भेदवासनाया दोषत्वनिश्चयः, भेदवासनाया दोषत्वनिश्चये सति शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चयः—इति। किंच—यदि भेदवासनामूलत्वेन प्रत्यक्षस्य विपरीतार्थत्वम् , शास्त्रमपि तन्मूलत्वेन तथैव स्यात् ॥

## अद्वैतिनां महासिद्धान्तः

### प्रत्यक्षस्य संभाव्यमानदोषत्वनिर्णयः

अत्रायं निष्कर्षः—संभाव्यमानदोषत्वं प्रत्यक्षस्याप्रामाण्यशङ्कास्पदत्वम्। दोषश्चात्रेन्द्रियगतः, मनोगतो वाऽप्रामाण्यशङ्काकारणम्। तत्र मनोगतदोषः=यत्र प्रत्यक्षस्य तदपेक्षया प्रबलप्रमाणविरोधः, तत्र भेदवासना ॥

तत्र भेदवासनाऽनादिर्भेदप्रतीतिकारणम् , भेदश्चाविद्याकृतः, इति तिमिरादिवद् न यथावस्थितार्थविपरीतज्ञानहेतुत्वम्। तत्र भेदवाक्यानां स्वविषयस्याऽऽविद्यकत्वात् श्रुतिगतानामपि यावत्तत्त्वसाक्षात्कारं वासनारूपेण स्वकारणाविद्यायाः सत्त्वात् , श्रुतिप्रामाण्यानुसारेण भाविबाधं संभावितमादाय प्रत्यक्षादीनामिव संभावितदोषत्वमुन्नीयते ॥

यत्र तिमिरादीनां दोषत्वमवधार्यते, तत्रापि मिथ्यात्वप्रत्ययम् , बाधं वा निश्चित्य पश्चादेवाप्रामाण्यं निर्धार्यते, न तु तिमिरादीनां दोषत्वनिर्णये बाधनिश्चयः, बाधनिश्चये दोषनिश्चयः। स्वतः प्रामाण्यम् , परतोऽप्रामाण्यमिति सिद्धान्ते यावद् बाधं नाप्रामाण्यनिर्णयः; दोषस्य तदाऽनिश्चयात् , इति न कुत्रापि बाध-दोषयोर्निर्णयेऽन्योन्याश्रयः। बाधेन दोषनिश्चयः, दोषेणाप्रामाण्यमिति हि वस्तुस्थितिः; बाधानन्तरकालत्वाद् दोषादप्रामाण्यनिश्चयस्य। तत्र लौकिकेषु व्यवहारेषु यावद् व्यवहारमबाधे न दोषनिर्णयः, न वाऽप्रामाण्यनिर्णयः। अत एव व्यावहारिकं प्रामाण्यं सर्वेषां प्रत्यक्षादीनां व्यवहारदशायाम् ॥

अप्रामाण्यं हि ज्ञानानां बाधानन्तरनिर्णेयम्, न ज्ञानोत्पत्तिकाल एव। तथाच यथा बाधे निश्चितेऽविद्यमान एवार्थः पूर्वमासीदिति निर्णयेनाप्रामाण्यनिश्चयः, एवमेवात्र प्रबलशास्त्रबाधितत्वेन ज्ञानस्याप्रामाण्यनिश्चयः, इति नान्योन्याश्रयः ॥

यद्यपि शास्त्रमपि प्रत्यक्षादिकमिव यदि भेदविषयकम्, तर्हि भेदवासनामूलकत्वेनाप्रमाणमेव परमार्थतः; तथापि यावद्बाधं तत्रापि प्रामाण्यमेव। तत्र भेदनिषेधपरं शास्त्रं भेदपरस्य शास्त्रस्य बाधकम्, यथा 'इदं रजतमि'ति ज्ञानस्य प्रत्यक्षत्वाविशेषेऽपि 'इयं शुक्तिरि'ति, 'नेदं रजतमि'ति वा तन्निषेधपरं पूर्वस्य प्रत्यक्षस्य बाधकम्, एवमेवात्रापि ॥

तत्राविद्याख्यदोषमूलत्वेऽपि शास्त्रस्य, भेदनिरसनपरशास्त्रान्तरेण विरोधे पूर्वशास्त्रस्य बाध एव। न हि दोषमूलत्वमात्रमप्रामाण्यकारणम्, किन्तु विषयबाधोत्तरदोषनिश्चयः। तत्र यदि भेदनिरासपरस्य शास्त्रस्याप्यन्येन बाधज्ञानेन बाधः, तर्हि तत्राप्यप्रामाण्यमेव, अन्यथा तु प्रामाण्यम्। तदुक्तं वार्तिके—

"दुष्टकारणबोधे तु सिद्धेऽपि विषयान्तरे।
अर्थात्तुल्यार्थतां प्राप्य बाधो गोदोहनादिवत् ॥
तत्र दोषान्तरज्ञानम् बाधधीर्वा परा न चेत्।
तदुद्भूतौ द्वितीयस्य मिथ्यात्वादाद्यमानता ॥
स्वत एवं हि तत्रापि दोषज्ञानादमानता।
दोषज्ञाने त्वनुत्पन्ने न शङ्क्या निष्प्रमाणता ॥
एवं त्रिचतुरज्ञानजन्मनां नाधिका मतिः।
प्रार्थ्यते तावदेवैकं स्वतः प्रामाण्यमश्नुते ॥"

इति ॥

अनेनैव न्यायेनाद्वैतपराणां पाश्चात्यानां प्रमाणानां भेदपरवाक्यबाधकत्वेन सत्यार्थबोधकत्वं निर्धार्यते। न चात्र भेदनिरासस्यापि निरासकमुत्तरमेकं प्रमाणं किमप्यस्ति, अतो दोषमूलत्वेऽपि विषयाबाधेन शास्त्रस्य सर्वबाधकस्य तद्बाधकशास्त्रान्तराभावे प्रामाण्यमेव। अतः प्रत्यक्षं शास्त्रविरुद्धमप्रमाणमिति स्वीकर्तव्यम् ॥

अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

शास्त्रस्यापि निश्चितदोषस्य परत्वेऽपि बाधः

अथोच्येत—दोषमूलत्वेऽपि शास्त्रस्य प्रत्यक्षावगतसकलभेदनिरसनज्ञानहेतुत्वेन परत्वात्, तत् प्रत्यक्षस्य

बाधकम्—इति, तन्न; दोषमूलत्वे ज्ञाते सति परत्वमकिंचित्करम्। रज्जुसर्पज्ञाननिमित्तभये सति भ्रान्तोऽयमिति परिज्ञातेन केनचित् 'नायं सर्पो मा भैषीः' इत्युक्तेऽपि भयानिवृत्तिदर्शनात्॥

शास्त्रस्य च दोषमूलत्वं श्रवणवेलायामेव ज्ञातम्; श्रवणावगतनिखिलभेदोपमर्दिब्रह्मात्मैकत्वविज्ञानाभ्यासरूपत्वाद् मननादेः॥

अपि चेदं शास्त्रम्, एतच्चासंभाव्यमानदोषम्, प्रत्यक्षं तु संभाव्यमानदोषमिति केनावगतं त्वया? न तावत् स्वतः सिद्धा निर्धूतनिखिलविशेषाऽनुभूतिरिममर्थमवगमयति; तस्याः सर्वविषयविरक्तत्वात्, शास्त्रपक्षपातविरहाच्च। नाप्यैन्द्रियिकं प्रत्यक्षम्; दोषमूलत्वेन विपरीतार्थत्वात्। तन्मूलत्वादेव नान्यान्यपि प्रमाणानि। अतः स्वपक्षसाधनप्रमाणानभ्युपगमाद् न स्वाभिमतार्थसिद्धिः॥

ननु व्यावहारिकप्रमाण-प्रमेयव्यवहारोऽस्माकमप्यस्त्येव, कोऽयं व्यावहारिको नाम? आपातप्रतीतिसिद्धो युक्तिभिर्निरूपितो न तथाऽवस्थित इति चेत्, किं तेन प्रयोजनम्? प्रमाणतया प्रतिपन्नेऽपि यौक्तिकबाधादेव प्रमाणकार्याभावात्॥

अथोच्येत—शास्त्र-प्रत्यक्षयोः द्वयोरप्यविद्यामूलत्वेऽपि प्रत्यक्षविषयस्य शास्त्रेण बाधो दृश्यते, शास्त्रविषयस्य सदद्वितीयब्रह्मणः पश्चात्तनबाधादर्शनेन निर्विशेषानुभूतिमात्रं ब्रह्मैव परमार्थः—इति, तदयुक्तम्; अबाधितस्यापि दोषमूलस्यापारमार्थ्यनिश्चयात्॥

एतदुक्तं भवति—यथा सकलेतरकाचादिदोषरहितपुरुषान्तरागोचरगिरिगुहासु वसतस्तैमिरिकजनस्याज्ञातस्वतिमिरस्य सर्वस्य तिमिरदोषाविशेषेण द्विचन्द्रज्ञानमविशिष्टं जायते, न तत्र बाधकप्रत्ययोऽस्ति, इति न तन्मिथ्या न भवति, इति तद्विषयभूतं द्विचन्द्रत्वमपि मिथ्यैव। दोषो ह्ययथार्थज्ञानहेतुः; तथा ब्रह्मज्ञानमविद्यामूलत्वेन बाधकज्ञानरहितमपि स्वविषयेण ब्रह्मणा सह मिथ्यैवेति॥

भवन्ति चात्र प्रयोगाः—विवादाध्यासितं ब्रह्म, मिथ्या, अविद्यावत् उत्पन्नज्ञानविषयत्वात् ; प्रपञ्चवत् , ब्रह्म, मिथ्या, ज्ञानविषयत्वात् , प्रपञ्चवत् ; ब्रह्म, मिथ्या, असत्यहेतुजन्यज्ञानविषयत्वात् ; प्रपञ्चवदेव ॥

असत्यात् सत्योत्पत्तिनिरासः

न च वाच्यम्—स्वाप्नस्य हस्त्यादिविज्ञानस्यासत्यस्य परमार्थशुभाशुभप्रतिपत्तिहेतुभाववदविद्यामूलत्वेनासत्यस्यापि शास्त्रस्य परमार्थभूतब्रह्मविषयप्रतिपत्तिहेतुभावो न विरुद्धः—इति; स्वाप्नज्ञानस्यासत्यत्वाभावात् ॥

स्वप्नादिस्थले सर्वत्र सत्यस्य ज्ञानस्यैव हेतुत्वम्

तत्र हि विषयाणामेव मिथ्यात्वम् ; तेषामेव हि बाधो दृश्यते, न ज्ञानस्य । न हि मया स्वप्नवेलायामनुभूतं ज्ञानमपि न विद्यत इति कस्यचिदपि प्रत्ययो जायते । दर्शनं तु विद्यते, अर्था न सन्तीति हि बाधकप्रत्ययः ॥

असत्यस्य सत्यार्थक्रियाकारित्वे सर्वदृष्टान्तपरीक्षणेन तन्निरासः

मायाविनो मन्त्रौषधादिप्रभवं मायामयं ज्ञानं सत्यमेव प्रीतेः, भयस्य च हेतुः; तत्रापि ज्ञानस्याबाधितत्वात् ॥

विषयेन्द्रियादिदोषजन्यं रज्ज्वादौ सर्पादिविज्ञानं सत्यमेव भयादिहेतुः ॥

असत्यदष्टेऽपि स्वात्मनि सर्पसन्निधानाद् दष्टबुद्धिः सत्यैव शङ्काविषबुद्धिर्मरणहेतुभूता ॥

वस्तुभूत एव जलादौ मुखादिप्रतिभासो वस्तुभूतमुखगतविशेषनिश्चयहेतुः । एषां संवेदनानामुत्पत्तिमत्त्वात्, अर्थक्रियाकारित्वाच्च सत्यत्वमवसीयते ॥

हस्त्यादीनामभावेऽपि कथं तद्बुद्धयः सत्या भवन्तीति चेत् , नैतत् ; बुद्धीनां मालम्बनत्वमात्रनियमात् ॥

अर्थस्य प्रतिभासमानत्वमेव ह्यालम्बनत्वेऽपेक्षितम् ; प्रतिभासमानता चास्त्येव दोषवशात् । स तु बाधितोऽसत्यः इत्यवसीयते । अबाधिता हि बुद्धिः सत्यैवेत्युक्तम् ॥

रेखया वर्णप्रतिपत्तावपि नासत्यात् सत्यबुद्धिः; रेखायाः सत्यत्वात् ॥

ननु वर्णात्मना प्रतिपन्ना रेखा वर्णबुद्धिहेतुः, वर्णात्मता त्वसत्या, नैवम्; वर्णात्मताया असत्याया उपायत्वायोगात्। असतो निरुपाख्यस्य ह्युपायत्वं न दृष्टम्, उपपन्नं च ॥

अथ तस्यां वर्णबुद्धेरुपायत्वम्, एवं तर्ह्यसत्यात् सत्यबुद्धिर्न स्यात्; बुद्धेः सत्यत्वादेव, उपायोपेययोरेकत्वप्रसङ्गश्च; उभयोर्वर्णबुद्धित्वाविशेषात्। रेखाया अविद्यमानवर्णात्मनोपायत्वे चैकस्यामेव रेखायामविद्यमानसर्ववर्णात्मकत्वस्य सुलभत्वाद् रेखादर्शनात् सर्ववर्णप्रतिपत्तिः स्यात् ॥

अथ—पिण्डविशेषे देवदत्तादिशब्दसंकेतवत् चक्षुर्ग्राह्यरेखाविशेषे श्रोत्रग्राह्यवर्णविशेषसंकेतवशाद् रेखाविशेषो वर्णविशेषबुद्धिहेतुः—इति, हन्त! तर्हि सत्यादेव सत्यप्रतिपत्तिः; रेखायाः, संकेतस्य च सत्यत्वात् ॥

रेखागवयादपि सत्यगवयबुद्धिः सादृश्यनिबन्धना। सादृश्यं च सत्यमेव ॥

न चैकरूपस्य शब्दस्य नादविशेषेणार्थभेदबुद्धिहेतुत्वेऽप्यसत्यात् सत्यप्रतिपत्तिः; नानानादाभिव्यक्तस्यैकस्यैव शब्दस्य तत्तन्नादाभिव्यङ्ग्यस्वरूपेणार्थविशेषैः सह संबन्धग्रहणवशादर्थभेदबुद्ध्युत्पत्तिहेतुत्वात्। शब्दस्यैकरूपत्वमपि न साधीयः; गकारादेर्बोधकस्यैव श्रोत्रग्राह्यत्वेन शब्दत्वात्। अतोऽसत्यात् सत्यब्रह्मविषयप्रतिपत्तिर्दुरुपपादा ॥

ननु न शास्त्रस्य गगनकुसुमवदसत्यत्वम्; प्रागद्वैतज्ञानात् सद्बुद्धिबोध्यत्वात्, उत्पन्ने तत्त्वज्ञाने ह्यसत्यत्वं शास्त्रस्य, न तदा शास्त्रं निरस्तनिखिलभेदचिन्मात्रब्रह्मज्ञानोपायः; यदोपायः, तदाऽस्त्येव शास्त्रम्; अस्तीतिबुद्धेः, नैवम्; असति शास्त्रे 'अस्ति शास्त्रमि'ति बुद्धेर्मिथ्यात्वात् ॥

ततः किम्? इदं ततः—मिथ्याभूतशास्त्रजन्यज्ञानस्य मिथ्यात्वेन तद्विषयस्यापि ब्रह्मणो मिथ्यात्वम्; यथा धूमबुद्ध्या गृहीतबाष्पजन्याग्निज्ञानस्य मिथ्यात्वेन

तद्विषयस्याग्नेरपि मिथ्यात्वम्। पश्चात्तनबाधादर्शनं चासिद्धम्; शून्यमेव तत्त्वमिति वाक्येन तस्यापि बाधदर्शनात्॥

तत्तु—भ्रान्तिमूलमिति—चेत्, एतदपि भ्रान्तिमूलमिति त्वयैवोक्तम्। पाश्चात्यबाधादर्शनं तु तस्यैवेत्यलमप्रतिष्ठितकुतर्कपरिहसनेन॥

## अद्वैतिनां महासिद्धान्तः

### आविद्यकस्यापि शास्त्रस्य ब्रह्मणि प्रामाण्यम्

अयमत्र निष्कर्षः—सत्यम्, दोषमूलत्वे परत्वमकिञ्चित्करम्, परन्तु दोषमूलत्वं कथमवगन्तुं शक्यते? यदि बाधधीमहिम्ना, तर्हीदं विविच्यताम्—किं विषयबाधधीर्दोषमूलत्वमाद्यस्य ज्ञानस्य निश्चाययति, उत प्रमाणस्वरूपबाधधीः। अन्त्ये द्वितीयज्ञानस्य विषयतोऽबाधधीर्न बाधधीः; प्रमाणस्वरूपबाधेऽप्यबाधितार्थविषयकत्वरूपप्रामाण्याविघातात्। स्वरूपतो बाधे तु निश्चिते तस्य बाधितस्य बोधकत्वं चाऽऽशातीतम्; अविद्यावद्विषयत्वात् प्रमाणानाम्। तदुक्तं भाष्ये "अविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि, शास्त्राणि च विधि-प्रतिषेध-मोक्षपराणी"ति॥

यत्तु—रज्जुसर्पज्ञाननिमित्ते भये सति भ्रान्तोऽयमिति परिज्ञातेन केनचित् 'नायं सर्पः' 'मा भैषीरि'त्युक्तेऽपि न भीतिरपसरति; तत्रापरोक्षभ्रमस्य परोक्षज्ञानेनाबाधात्। तत्राप्रामाण्यसंभावनायामपि रज्जुतत्त्वसाक्षात्काराभावेन रज्ज्वज्ञानस्य, सर्पस्य चाबाधादेव भयानिवृत्तिः; यथा—यावदात्मसाक्षात्कारं श्रवण-मनन-निदिध्यासनपाटवाधीनाप्रामाण्यशङ्काऽनास्कन्दित-पटुतमसंस्कारसहकृताद्वितीयात्मतत्त्वसाक्षात्कारपर्यन्तं सर्वेषां निर्विचिकित्सपरोक्षज्ञानिनाम्, किं बहुना? —जीवन्मुक्तानामपि सर्वे व्यवहारा न निवर्तन्ते। अत एव शास्त्रस्य परोक्षविधया दोषमूलत्वे स्वरूपतो निश्चितेऽपि श्रवणादिवेलायामपि स्वरूपतः, विषयतश्च बाधानिश्चयात्, तत एव दोषमूलकत्वस्याप्यनिश्चयाच्च शास्त्रप्राबल्येनैव प्रत्यक्षादि-शास्त्रयोः प्रामाण्यव्यवस्था॥

तत्र शास्त्रमपौरुषेयत्वादसंभावितपुरुषदोषम्, पुरुषदोषस्तु तदीयमनोदोषः, इन्द्रियदोषो वा नापौरुषेये शास्त्रे सम्भाव्यतेऽपि। प्रत्यक्षं तु पुरुषाश्रितेन्द्रियदोषमूलकं सम्भाव्यते, इति तत्तत्प्रमाणस्वभावसिद्धो

दोषमूलकत्व-तदभावनिश्चय । स च बाधान्यथानुपपत्तिगम्यः, न तु स्वतः । सति चैवमनुभूतिरपि यदि धर्मभूतज्ञानरूपाऽबाधिता ततः प्रबलेन प्रमाणेन, तर्हि प्रमाणमेव । स्वरूपज्ञाने तु प्रमाणाजन्ये प्रामाण्याप्रामाण्यकथैव नास्ति, इति न शास्त्रे पक्षपातलेशोऽपि, इति यावद्बाधनिश्चयं तदप्रामाण्यनिर्णयाभावात्, तत्तद्व्यवहारनिर्वाहस्यापि संभवाच्च नाद्वैतसिद्धान्तेऽपि सर्वाभिमतार्थासिद्धिः । यावद्व्यवहारं तत्तद्व्यवहारनिर्वाहकं प्रामाण्यं तु नाद्वैतिनामपि विप्रतिपन्नम् ॥

तत्र यावद्व्यवहारमबाधितार्थविषयकत्वात् प्रत्यक्षादेः सफलप्रवृत्तिप्रयोजकस्य व्यावहारिकं प्रामाण्यम् । अयमेव न्यायः—शुक्तिरजतादिभ्रमस्थलेऽपि, यत्र यावत्प्रातिभासम्, यावत्तदुपादानाज्ञाननिवृत्ति, तद्बाधपर्यन्तं वा प्रातिभासिकसाधारणं प्रामाण्यम्, यत्तु मिथ्यात्वेनानिश्चीयमानार्थविषयकत्वरूपं कालभेदपरिच्छिन्नापरिच्छिन्नबाधागोचरार्थविषयकत्वम्, इति सर्वेषामेषां प्रवृत्तिप्रयोजकत्वरूपं प्रामाण्यमविशिष्टम । तदेवं भेदवासनाख्यदोषमूलकत्वेन प्रत्यक्षस्य दौर्बल्यमालोचितम् ॥

सा च भेदानां कारणात्मता, अविद्यात्मता वा, इत्यविद्यारूपदोषमूलकत्वेन प्रत्यक्षादेर्बाधितस्याप्रामाण्यम् । तच्च भेदविषयाणामेव भेदवासनामूलकत्वेन; तद्विषयस्य भेदस्य बाध्यत्वात्, अद्वितीयात्मतत्त्वपराणां तु तद्विषयस्याबाधाद् वेदान्तप्रमाणस्याविद्योपादानत्वेऽपि नाप्रामाण्यम् ॥

तत्र दोषविधयाऽप्रामाण्यप्रयोजकत्वं प्रत्यक्षादेर्विषयस्य प्रमाणबाध्याविद्याप्रयुक्तत्वनिबन्धनम ; यथा शुक्तिरजतादेः "इयं शुक्तिरिति"प्रमाबाध्याविद्योपादानकत्वं 'इदं रजतमि'त्यादौ रजतादेः ॥

व्यावहारिकप्रामाण्यस्थलेऽप्ययमेव न्यायः । तत्रापि ब्रह्मप्रमाबाध्याऽविद्याप्रयुक्तत्वमेव बाधितस्य घटादेः । न चैवमखण्डाकारब्रह्मसाक्षात्कारस्याप्रामाण्यम् ; तद्विषयस्य ब्रह्मणः साक्षात्, परम्परया वाऽविद्यानिवर्तकज्ञानाबाध्यत्वात् ॥

इदं विवरणप्रस्थानेन, भामतीप्रस्थानेन तु विभ्रयस्य तदधिष्ठानविवर्तत्वं विषयबाध्यत्वे प्रयोजकम्; यथा घटादेर्ब्रह्मविवर्तस्य । अखण्डाकारवृत्तिविषयि तु ब्रह्म न कस्याप्यपरस्याधिष्ठानस्य विवर्तः, इति न तत्राप्रामाण्यशङ्का । शून्यं तु न ब्रह्मणोऽधिष्ठानम्, न वा ब्रह्म तस्य विवर्तः कुत्रापि दर्शने, इति ब्रह्मसाक्षात्कारस्य नाप्रामाण्यम् । अतः शास्त्रबाधितार्थविषयकत्वेन भेदपराणां वाक्यानां व्यावहारिकं प्रामाण्यम्, ब्रह्मसाक्षात्कारस्य

तु तद्विषयस्य स्वाधिष्ठानब्रह्मसाक्षात्काराबाध्यत्वाद् नाप्रामाण्यम्। अतः प्रत्यक्षादेः शास्त्रेण बाधः, इति तद्विषयोऽपरमार्थः, अद्वितीयवाक्यस्य तु न केनापि प्रमाणेन बाधः; अतस्तद्विषयः पारमार्थिकः॥

तत्रापारमार्थिकत्वमधिष्ठानज्ञाननिवर्त्याज्ञान-तत्प्रयुक्तान्यतरत्वम्, यथाऽविद्या-तत्प्रयुक्तानां सर्वेषाम्, ब्रह्म तु न तथा, इति नापारमार्थिकम्। ब्रह्मणः पारमार्थिकत्वं त्वज्ञान-तत्प्रयुक्तान्यतरनिवर्तकसाक्षात्कारविषयाधिष्ठानत्वेन, इति न शून्यवादित्वं ब्रह्मवादिनाम्॥

चतुष्कोटिविनिर्मुक्तं हि शून्यं नाम। ब्रह्म तु न 'सत्' इति प्रथमकोटिविनिर्मुक्तम्। न च शून्यं ब्रह्माधिष्ठानम्; अधिष्ठानलक्षणाभावात्। न चाबाधितस्यापि दोषमूलस्यापारमार्थ्यं कुत्रापि। सदोषत्वनिर्णयो हि विषयबाधावसेयः, इत्यबाधितत्वम्, दोषमूलत्वं च व्याहतम्॥

आब्रह्मसाक्षात्कारमबाधितं प्रातिभासिकं शुक्तिरूप्यादि, द्विचन्द्रज्ञानं वा ब्रह्मप्रमातिरिक्ताबाध्यत्वाद् देहात्म्यैक्यज्ञानमिव व्यावहारिकमेव; तस्याऽऽबाधं दोषमूलत्वानवधारणात्। दूरम्, सामीप्यं वा न नियतो दोषः, गुणो वा॥

अन्येषामुपदेशेऽपि बहुकालानन्तरं परोक्षबाधेन दोषनिश्चयेऽप्याब्रह्मसाक्षात्कारमपरीक्षायां तत्र व्यावहारिकत्वमेव, परीक्षायां तु कृतायां दोषमूलत्वावधारणात् मिथ्यैव। दोषत्वं ह्यविद्यायाः केवलमावरणमात्रेण, न तु विषयात्मना परिणामेन। ब्रह्मण एव विवर्तोपादानतामात्रमिति तु प्रस्थानान्तरम्॥

तत्राखण्डाकारसाक्षात्कारेण ब्रह्मविवर्तताया निवृत्तिः, विक्षेपशक्तिनिवृत्त्या तु विषयस्य बाधः, इति सति ब्रह्मसाक्षात्कारेऽविद्या-तत्प्रयुक्तसर्वनिवृत्त्या वेदस्यापि ब्रह्मविवर्तस्य, मायापरिणामस्य वा बाधः सति च तस्मिन् अविद्या-तत्प्रयुक्तसर्वबाधे किं वा प्रत्यक्षादिकमवशिष्यतेऽबाधितम्, येन भेदसत्यत्वम्, अद्वितीयत्वमिथ्यात्वं च निर्णीयेत। बाधयोग्यतामात्रेणाप्रामाण्यं तु योग्यतामात्रस्याकार्यकारित्वात्, तस्या दुरवसेयत्वात्, संभावनामात्रस्य पौरुषेये प्रत्यक्षेऽपौरुषेयापेक्षया दुर्बले समुत्थानस्याऽऽस्याञ्च प्रत्यक्ष एव संभवति, इत्यपौरुषेयवेदैकगम्याद्वितीयत्वश्रुतिविरोधेन प्रत्यक्षस्यैव बाधः, न तु तद्बलेन श्रुतेः, इति ब्रह्मणोऽबाधितस्य दोषमूलवेदगम्यत्वेऽप्यनाविद्यकस्य तस्य बाध्यत्वसंभावनाया अभावाद् न मिथ्यात्वापत्तिः॥

ब्रह्म, मिथ्या, अविद्यावदुत्पन्नज्ञानविषयत्वात्, प्रपञ्चवत्; ब्रह्म, मिथ्या, असत्यहेतुजन्यज्ञानविषयत्वात्, प्रपञ्चवत्; इत्यादिप्रयोगास्त्वप्रयोजकाः, सोपाधिकाश्च न ब्रह्ममिथ्यात्वमवगमयितुमीशते ॥

तत्र प्रथमे 'इदं रजतमि'ति भ्रमदशायां इदंज्ञानमप्यविद्यावदुत्पन्नज्ञानविषयाऽबाधावस्थायाम्, इति तत्र सत्ये व्यभिचारः। इदम्पदार्थः, प्रातिभासिकः, अविद्यावदुत्पन्नज्ञानविषयत्वात्, व्यतिरेके देहात्म्यैक्यवदित्याभाससाम्यम्। प्रपञ्चेऽप्यबाधावस्थायां मिथ्यात्वाग्रहात्, बाधानन्तरमेव मिथ्यात्वनिर्णयात् अविद्यावत्तादशायां तत्र मिथ्यात्वस्यानिर्णयाच्च दृष्टान्ते हेत्वसिद्धिः, शुक्तिरूप्यादावप्यज्ञानदशायां सत्यत्वप्रतीत्याऽनिर्णीतमिथ्यात्ववति मिथ्यात्वाभाववति वा हेतुसत्त्वाद् व्यभिचारः, बाधस्यैव सर्वत्र मिथ्यात्वप्रयोजकत्वादप्रयोजकता च ॥

द्वितीये तु हेत्वसिद्धिः। ज्ञानस्य मिथ्यात्वं यदि बाधितविषयकत्वेन, तर्हि ब्रह्मणो बाध्यत्वानिर्णयदशायां तज्ज्ञानस्यापि मिथ्यात्वानिर्णयात् न तत्र हेतुसिद्धिः। न हि स्वरूपज्ञानं मिथ्या नाम; सर्वज्ञानाऽयथार्थ्यवादप्रसङ्गात्। सर्वत्राधिष्ठानज्ञानबाध्यत्वम्, अध्यारोपापवादविषयत्वं वोपाधिः, ज्ञानविषयत्वेनैव निर्वाहेणोभयत्रासत्यहेतुजन्येत्यादिविशेषणवैयर्थ्यम् ॥

एवमसत्यहेतुजन्यज्ञानविषयत्वेऽसत्यपदेन यदि बाधितत्वं हेतोर्विवक्ष्यते, तर्हि बाधितस्य दोषस्य निःस्वरूपस्य हेतुत्वायोगः, अबाधावस्थायां बाधितत्वविशेषणासिद्धिः, दृष्टान्ते त्वज्ञानदशायां हेतोरसत्यत्वानिर्णयात् हेत्वसिद्धिः। तत्रासत्यपदेन यदि स्वन्यूनसत्ताकत्वं विवक्ष्यते, तर्हि दृष्टान्ते हेत्वसिद्धिः, अन्यूनसत्ताकत्वविवक्षणे पक्षे हेत्वसिद्धिः। अयमेव न्यायः समसत्ताकत्वविवक्षायामपि; अधिष्ठानज्ञाननिवर्त्यत्वस्य, स्वाधिष्ठाननिष्ठात्यन्ताभावप्रतियोगित्वस्य, सदसद्विलक्षणत्वस्य वाऽसत्यत्वे ब्रह्मणो धर्मिग्राहकप्रमाणेनैवासत्यत्वविरोधावगमाद् बाधः। यद्यपि मिथ्यात्वाभाववति शुभाशुभादिसूचकत्वम्; तथापि सर्वस्य ज्ञानस्य ज्ञानत्वाविशेषात् फलसाङ्कर्यापत्तिः—यदि विषयस्य मिथ्यात्वेऽपि ज्ञानमात्रं सत्यं मन्यते, परन्तु भ्रमज्ञानस्य विषयाकारस्य विषयोपादानाविद्यापरिणामत्वस्यैव स्वीकारात्, अधिष्ठानांशे ज्ञानस्य प्रमात्वेऽपि तस्य स्वरूपतोऽसत्यत्वाभावात्, स्वाप्नज्ञानस्यापि स्वाप्नवत् तूलाविद्याकार्यस्य मिथ्यात्वाच्च न सत्यत्वम्, इति न तत्र हेतु-फलयोरुभयोरपि सत्यत्वम्, इत्यसत्यहेतुजन्यज्ञानविषयत्वमेव स्वाप्नसूचितशुभाशुभादौ वर्तते, इति व्यभिचारस्तत्र दुरुत्तरः ॥

किं बहुना ? शुक्तिरूप्यादीनामप्यबाधावस्थायां सत्यानन्दादिहेतुत्व-दर्शनात्, तत्र शुक्तिरूप्यस्येव तज्ज्ञानस्यापि तदुपादानतूलाज्ञानेन सह बाधाच्च तत्रापि व्यभिचारः ॥

बाधितावस्थामादायैवासत्यत्वमत्र यदि विवक्ष्यते, तर्हि प्रपञ्चे तदुपादानेन सह बाधावस्थायां प्रपञ्चस्य तदुपादानमृदादीनाम्, अन्येषां च सर्वेषां बाधात्, बाधितावस्थायां दृष्टान्तस्वरूपस्यैवाभावाच्च दृष्टान्तासिद्धिः। किं बहुना ? अत्रासत्यहेतुपदेनाविद्या यदि विवक्ष्यते, तर्हि तस्या हेतुत्वं परिणामविधयैव, न तु प्रमाणविधया। न च घटादिज्ञाने सत्येऽप्यविद्या प्रमाणविधया कारणम्; प्रमाणव्यापारवैयर्थ्यात्, सर्वदा सर्वज्ञानप्रसङ्गाच्च, किन्तु तत्तद्विषयोत्पत्तिप्रयोजकत्वेन, इति वेदान्तप्रमाणजन्याखण्डाकार-वृत्तेरन्तःकरणपरिणामरूपाया विनश्यदवस्थाविद्यापरिणामत्वेऽपि, तद्विषय-स्याखण्डस्य ब्रह्मणोऽविद्याऽप्रयुक्तत्वात्, तत्परिणामत्वाभावाद्वा नासत्य-हेतुजन्यज्ञानविषयत्वम्; अन्यथा सर्वस्य सत्यत्वादसत्यविषयकं ज्ञानं कथा-मात्रं स्यात्। इष्टापत्तौ तु सत्यासत्यकथैव लुप्येत, इति हेतावसत्यत्वविशेषणं किमभिप्रेत्येति वक्तव्यम् ॥

तत्र यद्यद्वैतसिद्धान्तं सिद्धवत्कृत्येदं साधनम्, तर्हि सर्वत्र परिणाम-विधया विषयोपादानतयैवाऽविद्याया हेतुत्वात्, निराश्रयायाः, निर्विषयाया-श्चाविद्याया अहेतुत्वात्, ब्रह्मातिरिक्ततदाश्रयविषयाभावात्, तत्कार्यस्य तदाश्रयत्वायोगात्, अविद्याया एवाभावप्रसङ्गाच्चासत्यहेतुजन्यत्वमेवा-प्रसिद्धम् ॥

अतो 'दर्शनं तु विद्यते, अर्थास्तु न सन्ती'ति व्यवस्थायां श्रीभाष्यमते सगुणब्रह्मणोऽपि दर्शनं वर्तते, ब्रह्म नास्तीति दिशाऽसिद्धिः स्यात्। विषयबाधं विना दर्शनमात्रबाधा हि विषयस्यानाविद्यकत्व एव, न तस्याप्याविद्यकत्वे। न चाखण्डाकारवृत्तिरपि सत्या, येन दर्शनं सत्यम्, विषय-मात्रं मिथ्येति स्यात् ॥

असत्यात् सत्योत्पत्तिवादस्य सर्वदृष्टान्तपरीक्षया निर्णयः

मायाबलादिप्रभवं ज्ञानं मन्त्रादिमहिम्नाऽन्यत उपस्थापितस्य सत्यस्यैव पदार्थस्य हेतुः। अत उभयमपि तत्र सत्यमेव। तत्र मायाशब्दप्रयोगस्तु तेषामघटितघटनापटीयस्त्वेन, न तु तूलाविद्या-मूलाविद्यावदावरण-विक्षेपशक्तिमत्त्वेन, इति न तत्रासत्यात् सत्योत्पत्तिकथा ॥

रज्जुसर्पज्ञाने रज्जुज्ञानं यद्यपि सत्यार्थविषयकम्; तथापि तत्र रज्जुः, तज्ज्ञानं च सत्यम्, सर्पांशे तु सर्पस्य, तज्ज्ञानस्य च तूलाविद्या-

कार्यत्वादुभयमपि मिथ्यैव; तथापि तस्य सत्य-भय-कम्पाद्युत्पत्तिहेतुत्वमपि; अन्यथा रज्जुज्ञानस्यापि ज्ञानत्वाविशेषात् तेनापि भय-कम्पाद्यापत्तिः। बाधितत्वं हि सर्वत्रोपादानेन सह कार्यस्य नाश एव; स तु सर्पज्ञानेऽपि सर्पस्येव तज्ज्ञानस्यापि तूलाविद्यया तदुपादानेन सह नाशात् समानः॥

एतेन—सर्पदंशभ्रमोऽपि—व्याख्यातः; न हि तत्र सर्पसंनिधानमात्रं भय-कम्पादिकारणम्; तत्र सर्पस्य वस्तुतोऽभावेन संनिधानस्याप्यभावात्। सर्पदंशभ्रमेण भय-कम्पादिः कथं वा सर्पसंनिधानमात्रात् स्यात्, इति नात्र सर्पसंनिधानेन निर्वाहः॥

प्रतिबिम्बभ्रमे प्रतिबिम्बो यद्यपि बिम्बाभिन्नः; तथापि न बिम्बवत् सत्यः। न च तत्रापि प्रतिबिम्बज्ञानस्य न सुखादिहेतुत्वम्। तत्र प्रतिबिम्बज्ञानत्वेन विशेषरूपेण हेतुत्वे प्रतिबिम्बस्य विशेषणविधया भाने तस्यापि कार्यान्वयित्वापत्तिः, उपलक्षणविधयाऽन्वयेऽपि। लक्ष्यबहिर्भूतस्य लक्ष्यप्रतिपत्त्युपायस्य ह्युपलक्षणत्वम्। तत्रासत्यस्योपलक्षणस्योपलक्ष्यसत्यप्रतिपत्त्युपायत्वमसत्यात् सत्योत्पत्तिस्वीकारमन्तरा नोपपद्यते॥

### स्वप्नासत्यत्वनिर्णयः

"मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति" सूत्रस्याद्वैत एव स्वारस्यं सिद्धवत्कृत्यैवासत्यात् सत्योत्पत्तिवादः परैर्निरस्यते, इति स्थिते श्रुतप्रकाशिकायां स्वाप्नानामपि सत्यत्वमेवेति व्यवस्थापनं सविषयस्यैव ज्ञानस्य कारणत्वं स्वीकृत्य, इति ज्ञानमात्रस्य कारणतासमर्थनं स्वसिद्धान्तविरुद्धम्; सर्वसत्यतावादेऽपि तु सर्वत्र ज्ञानमात्रस्य कारणतासमर्थनं स्वसिद्धान्तविरुद्धमापद्येत; अन्यथा सर्वसत्यतावादेऽपि सर्वत्र ज्ञानमात्रस्य कारणत्वात्, अर्थाविशेषितस्य तस्य हेतुत्वे फलसाङ्कर्यप्रसङ्गः, ज्ञानातिरिक्तार्थालम्बनत्वस्वीकारवैयर्थ्यम्, निरालम्बनवादप्रवेशापत्तिश्च स्यात्, हस्त्यादिज्ञानत्वव्यपदेशोऽपि न स्यात्, इति सालम्बनत्वे नियते स्वाप्नेऽपि ज्ञाने हस्त्याद्यालम्बनत्वमवश्यं स्वीकर्तव्यम्। तच्च प्रातिभासिकहस्त्याद्युत्पत्तिस्वीकारं विना न निर्वहति॥

अन्यथा स्वाप्नादिज्ञानानां तत्तत्पुरुषमात्रानुभाव्यत्वम्, परिमिते देशे महापरिमाणरथ-रथ्यादिदर्शनं चानुपपन्नं स्यात्। ईश्वरशक्तिवशात् तत्र तथा व्यवस्था तु तस्याः सूक्ष्माचिद्रूपप्रकृत्यतिरिक्ताया असम्भवात्, जागरादीनामपि तथात्वात् स्वाप्न-जागरवैषम्यानुपपत्तिः॥

अत एव "वैधर्म्याच्च न स्वप्नादिवत्" इति सूत्रे स्वाप्न-जागरयो-र्बाधाबाधप्रयुक्तं वैधर्म्यं भाष्यद्वयेऽपि स्वीक्रियते। तत्राद्वैतसिद्धान्ते स्वाप्नानां शुक्तिरूप्यादीनामिव ब्रह्मसाक्षात्कारात् पूर्वमेव बाधितत्वम्, जागराणां तु तदनन्तरमिति कृत्वा जागर एव बाधाबाधाभ्यां वैधर्म्य-मिति युक्तम्, श्रीभाष्यमते तु न जागरे स्वप्नस्य बाधः, इति कथं वैधर्म्यम्?

न चार्थस्य प्रतिभासमानतामात्रं तस्य विशेषणत्वम्, उपलक्षणत्वं वा विनोपपद्यते, इति दोषवशात् विनाऽप्यर्थं प्रतिभासमानतामात्रकथा नामान्तरेण निरालम्बनत्वकथैव, इति स्मृतिविलक्षणस्यानुभवस्य साक्षा-त्काररूपस्य स्वाप्निकज्ञानस्य व्यावहारिकज्ञानविलक्षणस्य विषयतोऽपि वैलक्षण्यं स्वप्नेऽपि प्रातिभासिकरथाद्युत्पत्तिस्वीकारमन्तरा नोपपद्यते। सर्वथा तु विषयमात्रस्य बाधः, न दर्शनस्येति कथा निरालम्बा॥

अयमेव न्यायः—आरोपित-ह्रस्वत्व-दीर्घत्वादिविशिष्टानां वर्णानां मिथ्याभूतानां सत्यार्थधीहेतुत्वेऽपि। वर्णात्मका हि शब्दाः, न तु रेखाः; अलिखितानां श्रूयमाणानामपि वर्णानां बोधकत्वदर्शनात्। न च रेखात्वेन रेखाणां बोधकत्वम्, रेखाविशेषाणामेव शब्दविशेषोपस्थापकत्वे प्रमाणा-भावेन पद-पदार्थव्यवस्थायाः कथामात्रत्वापातात्, इत्यारोपितवर्णविशेष-त्वादीनामेव रेखाविशेषाणां बोधकत्वं वक्तव्यम्॥

तत्र यदि वर्णात्मताया असत्याया नार्थप्रत्ययोपायत्वम्, तर्हि लिखितपुस्तकदर्शिनां कथं पद-वाक्यार्थादिबोधः? न च वर्णात्मकताऽ-सत्या, गगनकुसुमादिवदसती वा, येन निरुपाख्यस्यासतोऽनुपायत्वमत्र किञ्चित्करं स्यात्। अतस्तत्राप्यारोपितवर्णत्वानां रेखाणामेव वर्णात्मना ज्ञातानां बोधकत्वं वक्तव्यम्, इति तत्र सालम्बनाया बुद्धेरेव हेतुत्वेऽपि नासत्यात् सत्योत्पत्त्यविरोधः। तत्र यद्यपि रेखाया अविद्यमानवर्णा-त्मतया बोधकत्व एकस्यां रेखायामनेकवर्णात्मताबुद्धिरापद्यते; तथापि 'आरोपे सति निमित्तानुसरणम्, न तु निमित्तमस्तीत्यारोपः' इति न्यायाद् नेयमापत्तिः। प्रकृतं तु वर्णात्मतया गृहीतानां बोधकत्वमेव, तत्तु न बाधि-तम्। रेखागवयादावप्ययं न्यायः। सर्वथा त्वसत्यात् सत्योत्पत्तिर्न व्याहन्यते, इत्यसत्यादपि शास्त्रात् सत्यब्रह्मबुद्धिः सूपपादा॥

न चासत्यं शास्त्रं गगनकुसुमवदसत्, येनासत इव बोधकत्वं न स्यात्। असत्यत्वम् सदसद्विलक्षणत्वम्, ज्ञाननिवर्त्यत्वम्, स्वसमानाधिकरणात्य-

न्ताभावप्रतियोगित्वं वा, नासत्त्वम् ; असति सर्वस्य बाधात् । असद्धि सर्वदाऽसदेव, न तु कदापि सत् । असत्यं तु प्रागधिष्ठानज्ञानात् सदिति प्रतीयते—सत्तादात्म्येन, अन्यथा वा, इति मिथ्याभूतमपि शास्त्रं सदित्येव प्रत्येतुमर्हति—यावदखण्डाकारसाक्षात्कारम् ॥

मिथ्याभूतेऽपि शास्त्रे घटादाविवास्तीति बुद्धिर्न व्याहता । असत्यमन्यत्, असदन्यत् । तत्रासत्यस्य सदिति व्यपदेश एकसत्तावादे सत्तादात्म्यमात्रेण, न तु सत्त्वेनापि, सत्तात्रैविध्यवादे तु सत्ताजात्यर्थक्रियाकारित्वमात्रेण मिथ्यात्वाविरुद्धेन; मिथ्याभूतस्याप्यर्थक्रियाकारित्वस्यानुपदमेव व्यवस्थापनात्, इति मिथ्याभूतमपि शास्त्रं सत्यब्रह्मबुद्धिहेतुरिति सिद्धम् ॥

न चैतावता ब्रह्ममिथ्यात्वापत्तिः; मिथ्यात्वस्य बाधबुध्यवसेयस्य बाधं विनाऽनुपपत्तेः । न च ब्रह्म बाध्यम् ; तस्याऽनाविद्यकस्य सर्वाधिष्ठानस्य, निरधिष्ठानस्य वा स्वाधिष्ठानसाक्षात्कारनिवर्त्यत्वादिरूपस्य मिथ्यात्वस्य बाधात् ॥

न हि ज्ञानमिथ्यात्वम्, तत्सत्यत्वं वा विषयमिथ्यात्वस्य, तत्सत्यत्वस्य वा प्रयोजकम् ; अन्यथा रज्जुसर्पादीनामपि ज्ञानवत् सत्यत्वापत्तेः । न हि ज्ञान-विषययोः समसत्ताकत्वनियमः, इति विषयसत्यत्वम्, ज्ञानसत्यत्वं वा तस्य बाधबुध्यविषयत्वप्रयुक्तमित्येवोरीकर्तव्यम् ॥

तत्र ब्रह्मविषयिण्यखण्डाकारवृत्तिराविद्यकत्वात्, अन्तःकरणात्मनाऽविद्यापरिणामत्वाद्वा तयाऽविद्याया बाधे स्वयमपि बाध्यत्वाद् मिथ्या । न च तथा विषयो ब्रह्म बाधितम्, इति तत्र विषय-विषयिणोरेकसत्ता बाधिता । तत्र यदि श्रीभाष्यरीत्या विषयमात्रं बाधितम्, तर्हि तत्र विषय-विषयिणोर्विषयमात्रस्य बाधः, न तु ज्ञानस्य । तत्र च निरालम्बनतावाद एव पर्यवसानम् ॥

धूमबुद्ध्या गृहीतबाष्पजन्याग्निज्ञानम्, विषयश्च तत्राग्निः सत्य एव, न तत्र बाधः, बाधे तु मिथ्यात्वमग्नेर्बाध्यत्वप्रयुक्तम्, न तु मिथ्याज्ञानविषयत्वप्रयुक्तम् । तत्र वह्निमिथ्यात्वमपि धूमवत्त्वस्य वह्नेश्च बाधेनैव । न चैवमखण्डाकारवृत्तिविषयो ब्रह्म बाध्यम्, तद्बाधकस्यौपनिषदस्य, अन्यस्य वा ज्ञानस्यासंप्रतिपत्तेः ॥

तत्र शून्यं तत्त्वमिति ज्ञानं नौपनिषदम्, किन्तु सौगतम् । तत्तु श्रीभाष्य-शाङ्करभाष्ययोरुभयोरपि संप्रतिपन्नम् ; औपनिषदत्वादेव, अन्यथा

सगुणब्रह्मवादायापि तिलाञ्जलिः स्यात्। न च शून्यमधिष्ठानं ब्रह्मणः, इति शून्यवादिनः, अद्वैतिनः, श्रीभाष्यकारा वा मन्यन्ते, येन साधिष्ठानकत्वप्रयुक्तं सर्वविधमपि मिथ्यात्वं ब्रह्मण्यापादयितुं शक्येत ॥

तत्र शून्यमेव तत्त्वमिति वाक्यं शून्यस्य बाधादर्शनेन यदि सत्यत्वं साधयति, तावता किमायातं ब्रह्मसत्यतायाः? तत्र यदि तदितरद् मिथ्येति फलति, तर्हि किं तत्र मिथ्यात्वमिति वर्णनीयम्। न च सौगता अद्वैतिन इव मिथ्यात्वं शून्यव्यतिरिक्तस्य मन्यन्ते ॥

तेषां मते मिथ्याशब्दप्रयोगस्तु—'मिथ्याशब्दो द्विवचनः—अपह्नववचनः, अनिर्वचनीयतावचनश्चे'ति भाष्यव्याख्योल्लिखिते मिथ्यात्वद्वये सौगतानामपह्नवाभिप्रायो मिथ्या वचनः, अद्वैतिनां त्वनिर्वचनीयताभिप्रायः। न च तदभिमतो ब्रह्मापह्नवः ब्रह्ममिथ्यात्वं व्यञ्जयितुमलम् ॥

इदमनेनावगम्यते—तत्र तत्र द्वैतिनाम्, श्रीभाष्यानुयायिनां च सौगतसिद्धान्त एवाद्वैतसिद्धान्त इत्याक्रमणं बौद्धसिद्धान्तविरुद्धम्, भामत्यादीनामपि सौगताद्वैतसिद्धान्तयोरैक्य एव तात्पर्यमिति वादस्तु हठवादः ॥

न चौपनिषदः सिद्धान्तोऽपौरुषेयप्रमाणमूलः पौरुषेयभ्रान्तिवचनेन बाधितुं शक्यते। न चापौरुषेयं वाक्यं भ्रान्तिमूलमिति श्रीभाष्याद्वैतसिद्धान्तयोरुभयोः संप्रतिपन्नम्। तत्राद्वैतसिद्धान्ते शास्त्रस्याप्याविद्यादोषमूलत्वेन तज्जन्यज्ञानस्य भ्रान्तित्वास्वीकारात् सौगतादविशेषाऽऽपादनं त्वनुपदमेवाविद्यामूलकत्वेऽपि शास्त्रस्य, तद्विषयस्य ब्रह्मणोऽनाविद्यकत्वादेव निरस्तम् ॥

तत्र ब्रह्ममात्रसत्यत्वं तस्याद्वितीयत्वश्रुत्या द्वितीयमात्रनिषेधेन निर्विशेषब्रह्ममात्रपरिशेषणात्, सर्वासामुपनिषदां तत्रैव तात्पर्यावधारणाच्चावधार्यते; अन्यथाऽद्वितीयश्रुत्या विरोधादित्यद्वैतपरमराद्धान्तः, येषां नान्यत्र तात्पर्यं संभवदुक्तिकम्। तत्र ब्रह्मणो निर्विशेषत्वं व्यवस्थापयन्ति वेदान्तवाक्यानीमानि—

(१) "सदेव सोम्येदमग्र आसीत्" इत्येवमादीनि "तत्त्वमसी" त्यन्तानि (२) "अथ परा यया तदक्षरमधिगम्यते" इति प्रवृत्ता परविद्याऽक्षरब्रह्मनिरूपणपरा (३) "सत्यं ज्ञानमनन्तं ब्रह्म" (४) "निर्गुणं निरञ्जनम्" (५) "निष्कलं निष्क्रियं शान्तम्" (६) "सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चितेति" (७) "यस्यामतं तस्य

मतं मतं यस्य न वेद सः" (८) "ब्रह्म वेद ब्रह्मैव भवति" (९) "यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति" (१०) "न दृष्टेर्द्रष्टारं पश्येः न मतेर्मन्तारम्" (११) "आनन्दो ब्रह्म" (१२) "विज्ञानमानन्दं ब्रह्म" (१३) "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" (१४) "नेह नानास्ति किञ्चन" (१५) "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" (१६) "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्" (१७) 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति" (१८) "सर्वं खल्विदं ब्रह्म" (१९) "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति" (२०) "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" (२१) "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" (२२) "मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः । न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।" (२३) "भूतभृद् न च भूतस्थो भूतात्मा भूतभावनः ।" (२४) "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।" (२५) "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" (२६) "इदं सर्वं यदयमात्मा" (२७) "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्', ॥

(२८) "प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥"

"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥

परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते ।"
"यदेतद् दृश्यते मूर्तमेतद् ज्ञानात्मनस्तव ॥

भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ।"
"ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ॥

अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ।"
"ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् ॥

ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ।"
"तस्यात्म-परदेहेषु सतोऽप्येकमयं हि तत् ॥

विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः ।"
"यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ॥
तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते ।"
"वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः ॥
अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः ।"
"सोऽहं स च त्वं स च सर्वमेतद् ॥
आत्मस्वरूपं त्यज भेदमोहम् ।
इतीरितस्तेन स राजवर्यः
तत्याज भेदं परमार्थदृष्टिः ॥"
"विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥"
"अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।"
"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ॥"
"न तदस्ति विना यत् स्याद् मया भूतं चराचरम् ॥"

इत्यादीनि । जगन्मिथ्यात्वप्रतिपादकान्यपि वाक्यान्यनिर्वचनीयाविद्यास्वरूपबोधकानि चात्रानुसन्धेयानि । तानि यथा—

( १ ) "अनृतेन प्रत्यूढाः" ( २ ) तेषां सत्यानां सतामनृतमपिधानम्" ( ३ ) नासदासीद् नो सदासीत् तदानीम् । तम आसीत् तमसा गूढमग्रे प्रकेतम्" ( ४ ) "मायां तु प्रकृतिं विद्याद् मायिनं तु महेश्वरम् ।" ( ५ ) "इन्द्रो मायाभिः पुरुरूप ईयते" ( ६ ) "मम माया दुरत्यया" ( ७ ) "अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते"

( ८ ) "ज्ञानस्वरूपो भगवान् यतोऽसा-
वशेषमूर्तिर्न तु वस्तुभेदः ।
ततो हि शैलाब्धिधरादिभेदान्
जानीहि विज्ञानविजृम्भितानि ॥
यदा तु शुद्धं निजरूपि सर्वं
कर्मक्षये ज्ञानमपास्तदोषम् ।
तदा हि संकल्पतरोः फलानि
भवन्ति नो वस्तुषु वस्तुभेदाः ॥
तस्माद् न विज्ञानमृतेऽस्ति किञ्चित्
क्वचित् कदाचिद् द्विज वस्तुजातम् ।

विज्ञानमेकं द्विजकर्मभेद-
विभिन्नचित्तैर्बहुधाऽभ्युपेतम् ॥
ज्ञानं विशुद्धं विमलं विशोक-
मशेषलोभादिनिरस्तसङ्गम् ।
एकं सदैकं परमः परेशः
स वासुदेवो न यतोऽन्यदस्ति ॥
सद्भाव एवं भवतो मयोक्तो
ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत्तु यत् संव्यवहारभूतम्
तत्रापि चोक्तं भुवनाश्रितं ते" ॥

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।

(९) क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।" (१०) "तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" (११) "प्रमादं वै मृत्युमहं ब्रवीमि सदाऽप्रमादममृतत्वं ब्रवीमि ।" (१२) "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद ।" (१३) "अकृत्स्नो ह्येष आत्मेत्येवोपासीत" (१४) "तत्त्वमसि" (१५) "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते । तद्योऽहं सोऽसौ सोऽहमस्मि ।" (१६) "आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥" इत्यादीनि

### श्रीभाष्यकाराणां महापूर्वपक्षः

#### अत्र सद्विद्याया निर्विशेषपरत्वायोगः

यदुक्तम्—वेदान्तवाक्यानि निर्विशेषज्ञानैकरसवस्तुमात्रप्रतिपादनपराणि—"सदेव सोम्येदमग्र आसीत्", इत्येवमादीनि—इति, तदयुक्तम्; एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनमुखेन सच्छब्दवाच्यस्य परस्य ब्रह्मणो जगदुपादानत्वम्, जगन्निमित्तत्वम्, सर्वज्ञता, सर्वशक्तियोगः, सत्यसङ्कल्पत्वम्, सर्वान्तरत्वम्, सर्वाधारत्वम्, सर्वनियमनमित्याद्यनेककल्याणगुणविशिष्टताम्, कृत्स्नस्य जगतस्तदात्मकतां च प्रतिपाद्य, एवम्भूतब्रह्मात्मकस्त्वमसीति श्वेतकेतुं प्रत्युपदेशाय प्रवृत्तत्वात् प्रकरणस्य । प्रपञ्चितश्चायमर्थो वेदार्थसंग्रहे । अत्राप्यारम्भणाधिकरणे निपुणतरमुपपादयिष्यते ॥

### परविद्याया निर्विशेषपरत्वायोगः

"अथ परा यया तदक्षरम्" इत्यत्रापि प्राकृतान् हेयगुणान् प्रतिषिध्य नित्यत्व-विभुत्व-सूक्ष्मत्व-सर्वगतत्वाव्ययत्व-भूतयोनित्व-सार्वज्ञ्यादिकल्याणगुणयोगः परस्य ब्रह्मणः प्रतिपादितः ॥

### अत्राद्वैतिनां महासिद्धान्तः

### सद्विद्याया निर्विशेषपरत्वव्यवस्था

तत्र सद्विद्याविचारः—सद्विद्यैकविज्ञानेन सर्वविज्ञानप्रतिपादनपरा ब्रह्मस्वरूपातिरिक्तं सर्वं मिथ्येति तात्पर्येणैव प्रवृत्ता । अत एव सा 'सदेव सोम्येदमग्रे" इत्यत्र प्रपञ्चतादात्म्येन कारणं ब्रह्म प्रस्तुत्य "एकमेवाद्वितीयम्" इति तदेव निर्विशेषमुपसंहृत्य, तदेव विस्तरेण प्रतिपादयन्ती, "बहु स्यां प्रजायेये"त्युपक्रम्य, "ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इत्युपसंहृत्य, "ऐतदात्म्यमिदमिति" सतोऽद्वितीयपदोपक्षिप्तमद्वितीयत्वम्, तेन जीवब्रह्माभेदम्, तस्य च "मृत्तिकेत्येव सत्यम्" इत्यादिना ब्रह्मेतरप्रपञ्चमिथ्यात्वोपपादनेनोपसंहृत्य, उपहितस्य ब्रह्मणो जगदुपादानत्वम्, तन्निमित्तत्वम, सर्वज्ञत्वम्, सर्वशक्तियोगम्, सत्यसंकल्पत्वम्, सर्वान्तरत्वम्, सर्वाधारताम्, सर्वनियन्तृत्वादिविशिष्टताम्, कृत्स्नस्य जगतस्तदात्मकतां च प्रतिपाद्य "तत्त्वमसि श्वेतकेतो" इत्युपदिशन्ती कार्य-कारणभावनिबन्धनेन तादात्म्येन "सदेवेदमि"त्युपक्रम उपक्षिप्तं तादात्म्यं वाधायामेव परमार्थत इत्यैतदात्म्यमुपसंहरन्ती च "तत्त्वमसी"त्यादिना निर्विशेषात्मना जीवत्वेश्वरत्वोपलक्षितसंविन्मात्रात्मना जीवब्रह्माभेदमेव तात्पर्येणोपदिशतीति वक्तव्यम् ॥

तथा चेदन्तादात्म्येन तत्पदवाच्यार्थमध्यारोपेण प्रक्रम्या"द्वितीयमि"ति तस्यैवोपादानेनोपसंहृत्य निष्प्रपञ्चमेव ब्रह्मतत्त्वं महातात्पर्यविषयः, सद्वितीयत्वं त्वध्यारोपनिधयाऽवान्तरतात्पर्यविषय इति ज्ञापयति, इति "सदेवेदमि"तीदन्तादात्म्योपक्रममात्रेण सविशेषत्व एव ब्रह्मणः सद्विद्यायाः पर्यवसानमिति न वक्तुं शक्यम्; अध्यारोपापवादस्थल उपक्रमापेक्षयोपसंहारस्यापवादपरस्यैव प्राबल्यम्; यथा 'इदं रजतम्' 'नेदं रजतम्' इत्यादौ; अन्यथा तत्राप्युपक्रमस्यैव प्राबल्ये 'नेदं रजतमि'त्यस्यापवादत्वम्, तस्यैव मुख्यं तात्पर्यमिति च न स्यात् ॥

अत्र "उत तमादेशम्" इत्यत्रादेशशब्दो घञन्तः। तत्र घञ्प्रत्ययस्य कर्मण्येव प्रयोगस्य साधुत्वात् "एष आदेशः" "एष उपदेशः" इति महाप्रकरणसमाप्तिद्योतकवाक्ययाद्वयोपदेशादेशयोरैकार्थ्यात्, प्रकरणानुसारेणान्यत्र शासनपरत्वेऽप्यादेशपदस्य प्रकृतेऽज्ञातोपदेशमात्रपरत्वस्यैव प्रकरणात्, शासितुरत्र विवक्षायां ब्रह्मणो निमित्तकारणत्वमात्रस्य वक्तव्यत्वेऽभिन्ननिमित्तोपादानत्वोपपादने सामान्यरूपेण, विशेषरूपेण वाऽनुमानादिप्रमाणान्तरेणाज्ञातस्यैवात्र ज्ञापने च स्वारस्यात्, आदेशपदस्वारस्यस्योपदेशपरत्व एव श्रुतिसिद्धत्वात्, कुत्रापि तस्मिन्नर्थे आदेशपदस्याप्रसिद्धत्वाच्चोपदेशगम्यार्थप्रस्ताव एवात्र स्वरसः। आदेशपदस्योपदेशपदपर्यायत्वमेवात्रेति श्रीदीक्षितवर्याः स्वीये सद्विद्याविलासे विवेचयन्तीत्यधिकं तत एवावगन्तव्यम्। सति चैवमध्यारोपनयेनावान्तरतात्पर्यविषयतया जगदुपादानत्व-तन्निमित्तत्व-सर्वात्मत्वादीनां प्रमाणान्तरसिद्धानामप्युपदेशो धर्म-धर्मिभावेन न विरुध्यते॥

अत एव "तत्त्वमसी"त्यभेदे सामानाधिकरण्यमुपपद्यते। न हि कुत्रापि शासक-शास्ययोर्नियम्य-नियामकयोर्वा राज-प्रजयोः सामानाधिकरण्यं लोकसिद्धम्। अन्तर्यामिब्राह्मणमपि "यस्य पृथिवी शरीरम्" इत्यादौ नियम्य-नियामकयोर्भेदेनैव प्रवर्तमानं नियम्य-नियामकतया सामानाधिकरण्यकथां विहन्ति॥

न च जीवात्मा नियामकः शरीरस्य; तस्यापि श्रीभाष्यमते परमात्मशरीरत्वेन शरीर-शरीरिणोर्लोकसिद्धयोरेकनियन्तृ-नियम्ययोः परस्परं नियम्य-नियामकभावाभावेन तयोरपि सामानाधिकरण्यं न नियम्य-नियामकभावनिबन्धनम्॥

सद्विद्या हि कार्य-कारणभावमुखेन सद्रूपं ब्रह्म प्रस्तुवन्ती कार्य-कारणभावस्य, नियम्य-नियामकभावस्य च भिन्नत्वात्, स्वप्रकरणे तस्याप्रस्तावात्, शरीर-शरीरिणोः कार्य-कारणभावाभावेन तस्य नियम्य-नियामकभावविनाभूतत्वाच्च कार्य-कारणभावो नियम्य-नियामकभावमप्याक्षिपतीति न वक्तुं शक्यम्॥

मृत्पिण्डादिदृष्टान्तैर्नियम्य-नियामकभावविवक्षायां मृदो घटादिनियन्तृत्वस्य चेतनासाधारणधर्मशासकत्वस्य तत्रासंभवात्, मृत्तिकापदेन परम्परया सर्वोपादानसत्पदार्थस्यैव विवक्षणेन मृत्पदेन तस्याप्युपादाने

तदवच्छिन्नस्य स्वात्मनाऽविद्योपहितस्यान्यस्यैव विवक्षणात्, घटादिषु मृत्तिकायाः सदात्मनाऽविद्याया इव ब्रह्मकार्यत्वस्यापि श्रौतत्वात्, नियामकपरिणामत्वस्य नियम्येऽभावेन श्रीभाष्यमत एव मृत्तिकाद्युदाहरणस्यानाञ्जस्यात्, भास्करादिसंमतब्रह्मपरिणामकारणताया ब्रह्मणः "प्रकृतिश्चे"ति सूत्रे श्रीभाष्येणापि निरसनात्, परिणाम-विवर्तयोः सत्यप्यवान्तरे भेदे विवर्तस्य परिणामपदेनेव तात्पर्यानुसारेण परिणामस्यापि विवर्तस्थाने प्रयोगाविरोधात्, ब्रह्मानधिष्ठानेनाविद्यायाः, अविद्याऽविषयत्वेन ब्रह्मणश्च भिन्नाभिन्नरूपेणोभयोरनुपादानत्वेन तयोरविनाभूतयोरेवोपादानत्वेन च ब्रह्मणि परिणामपदस्याविद्यायां विवर्तपदस्य च तत्र तत्र शतदूषण्यादावनुवाददर्शनाच्चाभिन्ननिमित्तोपादानतामुखेन प्रवृत्तायाः सद्विद्याया न शासक-शास्यभावपरता युक्ता। सर्वं चेदमारम्भणाधिकरणे भगवत्पादभाष्येऽपि सूचितम्॥

तत्र "सदेव सोम्येदमग्र आसीत्" इत्येकं वाक्यम्, "एकमेवाद्वितीयमित्यपरम्। तत्र प्रथमेन वाक्येनाव्यक्तात्मना सर्वतादात्म्यापन्नं सद्रूपं ब्रह्मैवासीत्, न तु व्यक्त-कार्यतादात्म्यापन्नं ब्रह्मासीदित्यर्थे न विप्रतिपत्तिः। द्वितीये तु वाक्ये "एकमेवाद्वितीयमि"त्यत्रापि विशेष्यं सदेव। तेन चाव्यक्तंदंतादात्म्यापन्नं ब्रह्म सृष्टेः पूर्वम्, परन्तु तत्केवलमध्यारोपविधया, परमार्थतस्तु—तदेकमेव, अद्वितीयं चेत्युपदिश्यते॥

तेन चेदमवगम्यते—एकत्वमपि ब्रह्मणो न द्वितीयत्वेन, किन्त्वद्वितीयत्वेनैव। अत एवाध्यारोपापवादनयेन प्रकरणस्योपक्रमः; अन्यथा सतः 'सदेवे'त्यनेनैव निर्देशः, पुनरपि तस्यैकत्वेनोल्लेखेन विजातीयस्यापरस्य, अद्वितीयेन पदेन सजातीयस्य, 'एवेति' धर्मस्य च निषेधो वितथः। अत एव पूर्वमुक्तम्—अध्यारोपापवादनयैनेव सद्विद्यायाः प्रक्रम—इति॥

### परविद्याया निर्विशेषपरत्वव्यवस्था

अयमेव न्यायः परविद्यायामपि। अत्रापि कार्य-कारणभावेनैकविज्ञानेन सर्वविज्ञानोपपादनं वर्तते। तच्चाध्यारोपापवादविधयैव, न तु शासक-शास्यभावेन, नियम्य-नियामकभावेन वा, परन्तु पूर्वत्र कार्यतादात्म्येन कारणस्य प्रस्तावः, उपसंहारस्त्वद्वितीयत्वेन। अत्र तु व्यक्ताव्यक्तसर्वप्रपञ्चशून्यतयोपक्रमः, कार्यतादात्म्येनोपसंहारः, एवं पूर्वत्र तादात्म्यमध्यारोपनिबन्धनं बाधायां सामानाधिकरण्यमद्वितीयवाक्येनोपसंहारमवष्टभ्य, तेन च

बाधात् पूर्वत्र बाधायां सामानाधिकरण्य 'मिदं रजतमि'त्यादाविव, अत्र तु श्रुत्यन्तरसिद्धं तदुपपाद्यते ॥

ततश्च "सदेव सोम्येदमग्र आसीत्" "सर्वं खल्विदं ब्रह्मे"त्यादितादात्म्यं बाधायामेव, न तु विशेषण-विशेष्यभावे, अन्यथा वा। अतोऽद्वितीयपदमपि सद्वितीयत्वाविरोध्येवेति शङ्कावारणार्थं तदभाववति तत्प्रकारकत्वेनैवोक्तस्थलेषु सर्वत्र तादात्म्यं विवक्षणीयम्, इति ब्रह्ममात्रस्य बाधकज्ञानविषयस्य सत्यत्वम्, अन्येषां तु मिथ्यात्वमिति सूचनार्थमेव— "यत्तदद्रेश्यम्" "यद् भूतयोनिं परिपश्यन्ति" "यः सर्वज्ञः सर्ववित्" इति चाम्नायमानमद्वितीयत्वम्, सद्वितीयत्वं च सद्विद्यायामिव। तच्चाध्यारोपापवादनयेनैव ॥

अत एव सद्विद्यायां "ऐतदात्म्यमिदं सर्वं तत् सत्यमि"ति सत्तादात्म्यं सर्वस्योपक्षिप्य "तत् सत्यमि"ति सन्मात्रं ब्रह्मैव सत्यमित्युपसंहृतम्, इति तदेकवाक्यतया "मृत्तिकेत्येव सत्यमि"त्यपि मृत्तिकेत्येवेति मृत्तिकामुखेनोपक्षिप्तब्रह्मसत्यतामेवानुवदति ॥

एतदेवाभिप्रेत्य "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यद्वितीयं ब्रह्मस्वरूपमेव तत्पदलक्ष्यं सत्यपदेन प्रत्यभिज्ञातमनाद्यज्ञानप्रयुक्तसत्यादिभेदशून्याखण्डरूपेणोपदिश्यते, यत् सदादिभेदेनाविद्याप्रयुक्तेन तत्र तत्राम्नायते, तदेव तद्भेदशून्यमखण्डं 'ब्रह्मविदाप्नोति" इति ज्ञेयतयोपदिश्यते, यदेव—"यो वेद निहितं गुहायामि"ति त्वम्पदार्थभेदेनोपक्षिप्यते, इति तत्पदार्थशोधकवाक्यार्थः ॥

तदेव ज्ञानम्, तदेवानन्तं च ब्रह्मेति प्रतिपादननाऽऽवृतानावृतसत्यादिभेदशून्यमखण्डं ब्रह्मैव तत्त्वमिति निष्कर्षः। अतोऽत्र सामानाधिकरण्यमभेदे, न तु बाधायाम् ॥

### अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

#### सत्य-ज्ञानादिवाक्यस्य निर्विशेषपरत्वायोगः

"सत्यं ज्ञानमनन्तं ब्रह्मे"त्यत्रापि सामानाधिकरण्यस्यानेकविशेषणविशिष्टैकार्थाभिधानव्युत्पत्त्या न निर्विशेषवस्तुसिद्धिः। प्रवृत्तिनिमित्तभेदेनैकार्थवृत्तित्वं हि सामानाधिकरण्यम्। तत्र सत्य-ज्ञानादिपदमुख्यार्थैर्गुणैः, तत्तद्गुण-

विरोध्याकारप्रत्यनीकाकारैर्वैकस्मिन्नेवार्थे पदानां प्रवृत्तौ निमित्तभेदोऽवश्याश्रयणीयः ॥

इयांस्तु विशेषः—एकस्मिन् पक्षे पदानां मुख्यार्थता, अपरस्मिंश्च तेषां लक्षणा। न चाज्ञानादीनां प्रत्यनीकता वस्तुस्वरूपमेव; एकेनैव पदेन स्वरूपं प्रतिपन्नमिति पदान्तरप्रयोगवैयर्थ्यात्, तथा सति सामानाधिकरण्यासिद्धिश्च; एकस्मिन् वस्तुनि वर्तमानानां पदानां निमित्तभेदानाश्रयणात् ॥

न चैकस्यैवार्थस्य विशेषणभेदेन विशिष्टताभेदादनेकार्थत्वं पदानां सामानाधिकरण्यविरोधि; एकस्यैव वस्तुनोऽनेकविशेषणविशिष्टताप्रतिपादनपरत्वात् सामानाधिकरण्यस्य। 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमि'ति हि शाब्दिकाः ॥

यदुक्तम्—"एकमेवाद्वितीयमि"त्यत्राद्वितीयपदं गुणतोऽपि सद्वितीयतां न सहते। अतः सर्वशाखाप्रत्ययन्यायेन कारणवाक्यानामद्वितीयवस्तुप्रतिपादनपरत्वमभ्युपगमनीयम्। कारणतयोपलक्षितस्याद्वितीयस्य ब्रह्मणो लक्षणमिदमुच्यते—"सत्यं ज्ञानमनन्तं ब्रह्मे"ति। अतो लिलक्षयिषितं ब्रह्म निर्गुणमेव; अन्यथा "निर्गुणम्" "निरञ्जनम्" इत्यादिभिर्विरोधः—इति, तदनुपपन्नम्; जगदुपादानस्य ब्रह्मणः स्वव्यतिरिक्ताधिष्ठात्रन्तरनिवारणेन विचित्रशक्तियोगप्रतिपादनपरत्वादद्वितीयपदस्य। तथैव विचित्रशक्तियोगमेवावगमयति—"तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इत्यादि ॥

अविशेषेणा'द्वितीयमि'त्युक्ते निमित्तान्तरमात्रनिषेधः कथं ज्ञायत इति चेत्, सिसृक्षोर्ब्रह्मण उपादानकारणत्वं "सदेव सोम्येदमग्र आसीदेकमेवे"ति प्रतिपादितम्। कार्योत्पत्तिस्वाभाव्येन बुद्धिस्थं निमित्तान्तरम्, इति तदेवाद्वितीयपदेन निषिद्ध्यत इत्यवगम्यते। सर्वनिषेधे हि स्वाभ्युपगताः, सिसाधयिषिता नित्यत्वादयश्च निषिद्धाः स्युः।

सर्वशाखाप्रत्ययन्यायश्चात्र भवतो विपरीतफलः; सर्वशाखासु कारणान्वयिनां सर्वज्ञत्वादीनां गुणानामत्रोपसंहारहेतुत्वात्। अतः कारणवाक्यस्वभावादपि "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यनेन सविशेषमेव प्रतिपाद्यत इति विज्ञायते ॥

### अत्राद्वैतिनां महासिद्धान्तः

#### सत्य-ज्ञानादिवाक्यस्य निर्विशेषपरत्वव्यवस्था

तत्र यद्यपि 'सत्यं ज्ञानमि'ति सामानाधिकरण्यं प्रतीयते; तथापि तत्र सत्यपदेन प्रत्यभिज्ञातं स्वरूपं सद्विद्याविषयः सजातीय-विजातीय-स्वगतधर्मशून्यमेव विवक्षितम्, नात्रानेकगुणविशिष्टं सविशेषं ब्रह्म विवक्ष्यते, इति नात्र विशेषण-विशेष्यभावे सामानाधिकरण्यम्, किन्त्वखण्डाकारवृत्तिनिवर्त्याज्ञान-तत्प्रयुक्तभेदशून्याखण्डनिर्विशेषस्वरूपमात्राभिप्रायमभेदे 'सत्यं ज्ञानमि'त्यादिसामानाधिकरण्यम् ॥

न चैतावता भिन्नप्रवृत्तिनिमित्तकत्वे सत्यैकार्थबोधकत्वलक्षणस्य सामानाधिकरण्यस्यात्रानुपपत्तिः। प्रवृत्तिनिमित्तभेदो हि पदानाम्, न तु वाक्यस्य। अत्र च सत्यादिपदानां वाचकतावस्थायां प्रथमोपस्थितायामस्त्येव वाच्यतावच्छेदकभेदः। तत्र प्रवृत्तिनिमित्तभेदः, एकत्वं चार्थस्य एकत्र द्वयमिति रीत्या तत्तद्धर्मवदेकधर्मिबोधकत्वेनेति वक्तव्यम्। तच्च वाक्यतात्पर्यमवष्टभ्यैव वक्तव्यम्, न तु प्रवृत्तिनिमित्तापरित्यागेनैव वाक्यानां बोधकत्वम्, सत्यपि तात्पर्ये विशिष्टार्थबोधकत्वं वा नियतम्; अन्यथा तात्पर्यानुसारेण लक्षकशब्दघटितानां वाक्यानामबोधकत्वमापद्येत, इति लक्षणामात्रोच्छेदापत्तिः ॥

अस्ति चात्र तात्पर्यानुसारेण सत्यादिपदेन सत्यत्वादिधर्माविवक्षया बोधः, तत्र सत्यपदं सद्विद्याप्रकरणमुपस्थापयन्, आदौ प्रयुक्तं चाद्वितीयमधिष्ठानमखण्डाकारवृत्त्युपहितपरत्वाद् निर्विशेषमेव तात्पर्यवशाद् लक्षयति, इत्यभेदे सामानाधिकरण्यं नात्र शाब्दमर्यादाविरोधि। प्रवृत्तिनिमित्तविवक्षायामावश्यकायां विशेषण-विशेष्यभावे सामानाधिकरण्यम्, अन्यथा त्वभेदे, तस्यापि वाक्ये वाधायां सामानाधिकरण्यमिति वाक्यतात्पर्यविदां व्यवस्था। सत्यम् विशेषण-विशेष्यभावविवक्षायां भिन्नप्रवृत्तिनिमित्तकत्वे सत्यैकार्थबोधकत्वम्, अन्यथा तु तात्पर्या-

नुसारेणासति बाध एकार्थबोधकत्वमात्रं सामानाधिकरण्यम्, परन्तु तदपि लाक्षणिकत्वेऽप्यपर्यायशब्दानामेव, न तु पर्यायाणाम्। पर्यायत्वं तु वाच्यतावच्छेदकैक्ये, न तु लक्ष्यैक्येऽपि ॥

तत्रैकार्थबोधकत्वं बोध्यस्वरूपैक्येऽपि भवति, विवक्षितधर्मभेदेन विशिष्टस्वरूपैक्येऽपि। तत्र प्रवृत्तिनिमित्तविवक्षायां धर्मविशिष्ट-धर्मिस्वरूपैक्यम्, अन्यथा तु स्वरूपैक्यमात्रम्। तत्र स्वरूपमात्रैक्यं येषु वाक्येषु, तत्र पदानां स्वरूपोपस्थापकत्वं लक्षणया, न तु शक्त्या ॥

न च शक्तिभेदादेकस्वरूपपराणामपर्यायत्वम्, इति लक्षणया स्वरू-पैक्यपरत्वेऽपि न पर्यायत्वापत्तिः। शक्यतावच्छेदकभेदः प्रवृत्तिनिमित्त-भेदः। स च सत्यादिपदेष्वपि समानः; तात्पर्यवशात् लक्षणयैकार्थत्वं तु नापर्यायत्वं विहन्ति, इति लक्षणयैकस्वरूपपरत्वेऽपि बहूनां पदाना-मेकार्थबोधकत्वेन सामानाधिकरण्यं नाद्वैतसिद्धान्ते व्याहतम् ॥

तत्र यद्यपि सत्य-ज्ञानादिपदमुख्यार्थैर्गुणैः, तत्तद्गुणप्रत्यनीकाकारैर्वै-कस्मिन्नर्थे पदानां प्रवृत्तावपि सामानाधिकरण्यं निरूह्यते, मुख्यार्थता च सर्वेषां भवति; तथापि तत्तद्गुणविवक्षायामसति तात्पर्ये मुख्यार्थ-लोभमात्रेण नानेकगुणविशिष्टार्थपरता युक्ता; अन्यथाऽसत्यपि तात्पर्ये 'सैन्धवमानये'त्यादौ भोजनावसरेऽश्वादिबोधकत्वमबाधात् स्यात्। न चात्रान्वयानुपपत्तिः, न वा "विषं भुङ्क्ष्वे"त्यादिवाक्यानां विषभक्षणबोध-नेनापि निर्वाहादर्थान्तरलक्षणा मुख्यार्थतालोभेन वारयितुं शक्यते ॥

पदान्तरवैयर्थ्यं तु धर्मभेदप्रयुक्तस्वरूपभेदशङ्कावारणार्थत्वात् तत्त-त्पदानां नोत्तिष्ठति। पदान्तरवैयर्थ्यं ह्येकेनापि पदेन विवक्षितवाक्यार्थ-निर्वाहेऽवसरति ॥

इदमेवात्र पृच्छ्यते—सत्यज्ञानादिवाक्येषु केन पदेनेष्टनिर्वाह इति? न चात्रैकेन सत्यपदेन विवक्षितार्थनिर्वाहः; पदमात्रं ह्य-प्रमाणम् ॥

अत एव पदद्वयेनास्तु निर्वाहः, कथं न तृतीयपदवैयर्थ्य-मिति न शङ्का। का वा विनिगमना पदविशेषस्यैवात्र सार्थक्ये? तत्रायं प्रश्नः—किं वा प्रयोजनं द्वितीयस्य पदस्य? तत्र सत्य-ज्ञान-पदभेदात्, स्वरूपभेदशङ्का, धर्मभेदाद् धर्मभेदप्रयुक्तधर्मिभेदशङ्का

च मां प्रसारीति यदि पदान्तरसार्थक्यम्, तर्हीदं विविच्यताम्—किं निर्विशेषमात्रपरत्वं सत्यादिपदानामभिप्रेत्यैवमुपन्यस्यते लक्षणापक्षमाश्रित्य, उत सविशेषविवक्षा शक्तिपक्षमाश्रित्य। द्वितीये पदान्तरवैयर्थ्यशङ्कैव नोत्थानमर्हति। प्रथमे न विशिष्टस्वरूपैक्यस्य, न वा धर्मभेदस्य विवक्षा, इति कथं न पदान्तरवैयर्थ्यम्?

अद्वैतमतेऽखण्डस्यैव ब्रह्मणोऽविद्याप्रयुक्तस्वरूपभेदशङ्कावारणार्थं तत्र कल्पितभेदापारमार्थिकत्वोद्बोधनद्वाराऽखण्डस्वरूपैक्यबोधनार्थानि बहूनि पदान्यखण्डार्थेष्वपि वाक्येषु॥

इदमेवाभिप्रेत्याद्वैतिनो वदन्ति--"एकमेवाद्वितीयमि"त्यत्राद्वितीयपदं गुणतोऽपि सद्वितीयतां न सहते—इति। अतः सर्वशाखाप्रत्ययन्यायेन तत्पदवाच्यार्थपराणां कारणवाक्यानामध्यारोपापवादनयेनारोपितसद्वितीयत्वेऽवान्तरं तात्पर्यम्, अपवादविधया प्रवृत्तानां "एकमेवाद्वितीयमि"त्यादीनामेव महातात्पर्यम्, मुख्यं च प्रामाण्यमिति, इति तदेकवाक्यतया सत्य-ज्ञानादितत्पदार्थशोधकवाक्यानाम्—"सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादीनां निर्विशेषस्वरूपबोधन एव तात्पर्यम्, इति निर्विशेषमेव ब्रह्म वेदान्तमहातात्पर्यविषयः। अत एव "निर्गुणम्" "निरञ्जनम्" इत्यादिवाक्यानि; यैरारोपितद्वितीयवत्त्वेनैवाध्यारोपविधया सद्वितीयम्, परमार्थतस्त्वद्वितीयमेव ब्रह्मेति ज्ञाप्यते॥

न चैतावता जगदुपादानत्वादि ब्रह्मणो विरुध्यते; अनाद्यारोपिताज्ञानाश्रयविषयत्वेन; अघटितघटनापटीयस्त्वाद् मायया आवरण-विक्षेपशक्तिमत्या ब्रह्मणो जगदुपादानत्वाद्युपपत्तेः। न केवलमुपादानत्वम्, किन्तु निमित्तकारणत्वमपि स्वोपाधिमायापरिणामवृत्त्याश्रयत्वेन। तच्चाऽऽरोपितमेव। एतदेवाभिप्रेत्य—"तदैक्षत बहु स्यां प्रजायेय" इत्यादिः॥

तत्र "सदेवेदमि"ति तादात्म्यं त्वध्यारोपनिबन्धनम्, न तु मृदादीनां परिणामिकारणानामिव स्वसमसत्ताकाविद्यापरिणामत्वप्रयुक्तम्। निमित्तत्वमपि तस्य तदुपाधिपरिणामाश्रयत्वेनैव। सर्वं चेदमध्यारोपविधयैवेत्यनुपदमेव विवेचितम्, न जगदुपादानत्वादिना ब्रह्मणोऽधिष्ठात्रन्तरनिवारणं लक्ष्यम्॥

कार्योत्पत्तिस्वभावेन निमित्तान्तरशङ्का तु मायासम्बन्धमात्रेणैकस्यैवोभयत्वस्य साधनात्, इति सजातीय-विजातीय-स्वगतानां सर्वेषामेव

विशेषाणामत्र निषेधाच्च नोत्तिष्ठति। निषेधश्चायमविद्यादीनां तत्प्रयुक्ताना-मारोपितानामेव, न तु वस्तुसताम्, इति स्वोपाधिप्रयुक्तानाम्, सिसाधयिषितानां च नित्यत्वादीनाम्, अनाद्यविद्याप्रयुक्तसत्य-ज्ञानादिभेदानां च सर्वेषां निषेधो न व्याहन्यते॥

तत्र सर्वशाखाप्रत्ययन्यायो योऽवान्तरतात्पर्यपरकारणवाक्येष्वध्यारोपविधया प्रवृत्तेषु, न केवलं महातात्पर्यविधयाऽद्वितीयादिवाक्येषु, इति सर्वशाखप्रत्ययन्यायेन सगुणवाक्यानां सर्वेषामेकीकृत्यावान्तरतात्पर्यविषयसविशेषत्वप्रतिपादनम्, तेन च सर्वेषां विशेषाणामध्यारोपविधयैव तत्र बोध इति निष्कर्षो बोध्यः॥

तत्र निर्गुणादिवाक्यानामेकीकृत्य प्रवृत्तानां कारणादिवाक्यावगतसर्वविशेषापवादविधयैव बोधः, इति सर्वेषां सगुणवाक्यानामध्यारोपवादेन प्रवृत्तिः, सर्वेषां विशेषनिषेधपराणां वाक्यानामपवादविधयैव प्रवृत्तिः। उभयेषां चाध्यारोपापवादविधयैकनिर्विशेषचिन्मात्र एव महातात्पर्यविषये पर्यवसानमित्यवसीयते। ततश्च 'सत्यं ज्ञानमनन्तं ब्रह्मे"ति वाक्यस्य द्वितीयापवादपरवाक्यैकवाक्यतयैव प्रमाणत्वाद् निर्विशेषसंविन्मात्र एव पर्यवसानमर्थसिद्धम्, तेन च सगुणवाक्यानामविरोधोऽपि; अन्यथा सविशेषत्वपरमार्थतायामेव वेदान्तानां तात्पर्ये निर्विशेषवाक्यानि निरवकाशानि स्युः; तेषामर्थविशेषे सावकाशत्वासम्भवात्। अध्यारोपापवादविधया सविशेषवाक्यानां प्रामाण्यं तु "नेति ने"ति निषेधमुखेन निर्विशेषप्रतिपत्त्युपायत्वात् स्वार्थे तात्पर्याभावेऽपि न निष्प्रयोजनम्, इति निर्गुणवाक्यैर्विरोधात् सगुणवाक्यानां बाध एव॥

### अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

#### निर्गुणवाक्यानामपि सविशेषपरत्वम्

न च निर्गुणवाक्यविरोधः; प्राकृतहेयगुणविषयत्वात्तेषाम्—"निर्गुणम्," "निरञ्जनम्," "निष्कलं निष्क्रियं शान्तम्," इत्यादीनाम्। ज्ञानमात्रस्वरूपवादिन्योऽपि श्रुतयः ब्रह्मणो ज्ञानस्वरूपतामभिदधति। न तावता निर्विशेषज्ञानमात्रमेव तत्त्वम्; ज्ञातुरेव ज्ञानस्वरूपत्वात्।

ज्ञानस्वरूपस्यैव तस्य ज्ञानाश्रयत्वं मणि-द्युमणि-दीपादिवद् युक्तमेवेत्युक्तम् ॥

ज्ञातृत्वमेव हि सर्वाः श्रुतयो वदन्ति—"यः सर्वज्ञः सर्ववित्" "तदैक्षत", "सेयं देवतैक्षत", "स ईक्षत लोकान्नु सृजा इति" "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" "ज्ञाज्ञौ द्वावजावीशानीशौ" "तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्। पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्" "न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः—इत्याद्याः श्रुतयो ज्ञातृत्वप्रमुखान् कल्याणगुणान् ज्ञानस्वरूपस्यैव ब्रह्मणः स्वाभाविकान् वदन्ति, समस्तहेयरहिततां च ॥

निर्गुणवाक्यानाम् सगुणवाक्यानां च विषयम'पहतपाप्मे'त्याद्य 'पिपास' इत्यन्तेन हेयगुणान् प्रतिषिद्ध्य "सत्यकामः सत्यसङ्कल्पः" इति ब्रह्मणः कल्याणगुणान् विदधतीयं श्रुतिरेव विविनक्ति, इति सगुण-निर्गुणवाक्ययोर्विरोधाभावादन्यतरस्य मिथ्याविषयताश्रयणमपि नाशङ्कनीयम् ॥

### अद्वैतिनां महासिद्धान्तः

#### निर्गुणवाक्यानां सगुणपरत्वायोगः

तत्र 'निर्गुणम्" "निष्कलम्" "निष्क्रियम्" इति श्रुतयो गुणसामान्यम्, शरीरसामान्यम्, क्रियासामान्यं च बोधयन्त्यो न गुणविशेषनिषेधपरतया संकोचनमर्हन्ति। अत एव ब्रह्मणो ज्ञानमात्रत्वं सत्य-ज्ञानादिश्रुतयो विविञ्चते। न च सगुणवाक्यं निर्गुणवाक्याद् प्रबलम्; अपच्छेदन्यायेन परत्वाद् निर्गुणवाक्यानामेव प्राबल्यात्, सगुणवाक्यानां निषेधापेक्षितप्रतियोगिसमर्पकत्वेन साफल्याच्च; अन्यथाऽप्रसक्तप्रतिषेधापत्तेः। सर्वत्राध्यारोपापवादस्थले स्थूलारुन्धतीन्यायविषयेषु लौकिकेषु, अन्नमयादिपूर्वपूर्वनिषेधेनोत्तरोत्तरोपदेशवाक्येषु

च सूक्ष्मतत्त्वोपदेशावसरेऽध्यारोपापवादस्थल एवं रीतेरेव दर्शनात्। न चात्र वैपरीत्यं युक्तम्; गुणादिपदस्य सामान्यपरस्य विशेषलक्षणायां प्रमाणाभावात्, निषेधस्य प्रतियोग्यपेक्षाया इव विधिषु स्वार्थबोधनार्थं स्वार्थव्यवस्थापनाय वा निषेधानपेक्षणेन गुणबोधनमात्रेण चारितार्थ्यात्, विधेयनिषेधपर्यन्तं तात्पर्यकल्पनाऽयोगाच्च ॥

सामान्यपदस्य विशेषपरत्वं विध्युपसंहारन्यायेन—"पुरोडाशं चतुर्धा करोति" "आग्नेयं चतुर्धा करोति" "वार्ताकं न भक्षयेत्" "श्वेतवार्ताकं न भक्षयेदि"ति शाखाभेदेन, तन्मूलस्मृतिभेदेन वा प्रवृत्तेषु वाक्येषु सामान्य-विशेषयोरुभयोरपि स्वतन्त्रतया निर्देशे प्रसरति। न चात्र शाखाभेदेनैव 'निर्गुणः' 'निर्हेयगुणः' इति च वाक्यद्वयं कुत्रापि दृश्यते, येन निर्गुणपदस्य हेयगुणनिषेधपरतया योजनं संभवति ॥

तत्रोपसंहारन्यायो हि विधेययोर्वा, निषेधयोर्वा भवति; न तु विधि-निषेधयोः। न च विनाऽऽरोपेण प्रसक्तिं प्रत्यक्षेण, श्रुत्या वा निषेधः कस्या-प्येकस्य, येन निर्गुणपदस्य गुणसामान्यनिषेधपरस्य गुणविशेषपरतया योजनं संभवति। अन्यथा "न ब्राह्मणं हन्यात्" "नात्रेयं हन्यादि"त्यत्राप्यु-पसंहारन्यायापत्तिः। तत्र यथा प्रत्यक्षेणारोपप्राप्तस्य प्रत्यक्षेणैव प्रमाणेन निषेधः, एवमेवारोपेण श्रुत्या प्राप्तस्य श्रुत्या निषेधः, इति जगत्कारणत्वा-दीनां सर्वेषां गुणोपसंहारन्यायेन निषेधपरत्वमेव निर्गुणादिवाक्यानां सामान्यतो गुणनिषेधपराणामपि, इति हेयगुणनिषेधपरत्वे तेषामप्रसक्त-प्रतिषेधापत्तिः ॥

तत्र "सत्यं ज्ञानमि"त्यादौ ज्ञानस्वरूपमात्रं ब्रह्मेति यत् प्रतिपाद्यते, तदपि धर्मभूतज्ञानस्येव सविषयत्वाभावाद् वस्तुतोऽज्ञातृत्वाच्च संविन्मा-त्रस्याऽऽत्मनो निर्विशेषत्वमुपपादयति। "यः सर्वज्ञः सर्ववित्" "तदैक्षत" "सेयं देवतैक्षत" "स ईक्षत लोकान्नु सृजा" "चेतनश्चेतनानाम्" "ज्ञाज्ञौ द्वावजावीशानीशौ" इत्याद्याः श्रीभाष्योदाहृताः श्रुतयः कारणमी-श्वरमधिकृत्य प्रवृत्ताः, न तु संविन्मात्रम्। तस्य चात्रौपाधिकस्यान्तःकर-णोपाधिकस्य जीवस्यैवौपाधिकमेव ज्ञातृत्वम्, न तु स्वाभाविकमिति

त्तमधस्तात् ॥

"एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इति वाक्यं तूपास्यसगुणपरम्, न निर्विशेषपरम्। उपास्यं च सगुणं बिम्बस्थानीय ईश्वर एव, न तु सन्मात्रम्, इत्युपाधेः प्रतिबिम्बपक्षपातित्वाद् न बिम्बपक्षपातित्वमिति न्यायसिद्धार्थानुवादपरं तत्, इति निर्विशेषस्येव सगुणस्यापि निर्दोषत्वं न व्याहतम्। अतो नात्र हेयगुणप्रतिषेधेन सत्यकामत्वादिगुणविधानं निर्विशेषसंविन्मात्रस्य, इति सगुणस्वरूपस्यैव शास्त्रतात्पर्यविषयत्वेऽपि न सगुणनिर्गुणवाक्याविरोध इति न विकल्पसहम्॥

न चात्र सगुण-निर्गुणवाक्ययोर्विरोधः; सगुणपरत्वात् पूर्वस्य, तदधिष्ठाननिर्विशेषमात्रपरत्वाच्चोत्तरस्य। तत्र पूर्वमध्यारोपेण प्रवृत्तम्, उत्तरमपवादेन, पूर्वस्य मिथ्याभूतगुणविषयत्वम्, उत्तरस्य तु निर्विशेषाधिष्ठानसंविन्मात्रपरत्वमित्यविरोध उभयोः॥

अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

तैत्तिरीयश्रुतेः सगुणैकपरत्वम्

"भीषाऽस्माद्वातः पवते" इत्यादिना ब्रह्मगुणानारभ्य "ते ये शतमि"त्यनुक्रमेण क्षेत्रज्ञानन्दातिशयमुक्त्वा "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्" इति ब्रह्मणः कल्याणगुणाऽऽनन्त्यमत्यादरेण वदतीयं श्रुतिः॥

"सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चिता" इति ब्रह्मवेदनफलमवगमयद् वाक्यं परस्य विपश्चितो ब्रह्मणो गुणाऽऽनन्त्यं ब्रवीति—विपश्चिता ब्रह्मणा सह सर्वान् कामान् समश्नुते। काम्यन्त इति कामाः = कल्याणगुणाः। ब्रह्मणा सह तद्गुणान् सर्वानश्नुत इत्यर्थः॥

दहरविद्यायाम्—"तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इतिवद् गुणप्राधान्यं वक्तुं सहशब्दः। फलोपासनयोः प्रकारैक्यम् 'यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवती"ति श्रुत्यैव सिद्धम्॥

## अद्वैतिनां महासिद्धान्तः

### तैत्तिरीयश्रुतेरपि निर्विशेषैकपर्यवसानम्

ब्रह्मवल्ली हि "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति श्रुत्यन्तरसिद्धमानन्दस्वरूपनिर्विशेषसंविन्मात्रस्य पुच्छब्रह्मण एव प्रकरणप्रतिपाद्यत्वं विवक्षितुमेवानन्दमीमांसां प्रस्तौति, इति तत्त्वमसिवाक्यार्थमेवोपदिशन्ती समष्टिरूपेणेश्वरस्याप्यधिष्ठानं संविन्मात्रं जीवत्वेश्वरत्वोपलक्षितं स्वरूपमेव सर्ववेदान्ततात्पर्यविधया सिद्धान्तयति। अधिकं त्वानन्दमयाधिकरणपरीक्षावसरे व्यक्तीभविष्यति ॥

सविशेषब्रह्मपरत्वेऽस्य प्रकरणस्य, "ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः" इति सविशेषस्य ब्रह्मणः प्रजापत्यानन्दशतगुणितानन्दवत्त्वं सङ्ख्याय, निष्कृष्य चानन्तरं प्रवृत्ता "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्।" इति श्रुतिर्व्यष्टि-समष्ट्यात्मकसविशेष-जीवेश्वरोभयाधिष्ठानं पुच्छं ब्रह्मैव परमार्थं गमयति। अत्र "आनन्दं ब्रह्मणो विद्वानि"ति षष्ठी 'राहोः शिरः' इतिवत्, 'पुरुषस्य चैतन्यमि'ति वाऽभेद एव। अत एव—"आनन्दो ब्रह्मेति व्यजानादि"ति ब्रह्मैवानन्द इत्युपदेशोपसंहारः ॥

अयमेव न्यायः—"सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चिता" इत्यत्र। अत्र 'ब्रह्मणा विपश्चिते'तीत्थंभूतलक्षणतृतीययाऽभेदः, सहपदेन वाक्यान्तरगतेन युगपदित्येव च विवक्षितमिति तैत्तिरीयभाष्य-तद्वार्तिकादौ व्यक्तम्; अन्यथा मुक्तानां ब्रह्मलोकगतानामानन्दानुभवे प्राधान्यम्, ब्रह्मणस्तूपास्यस्य नियामकस्याप्यप्राधान्यम्, इति मुक्तस्य स्वोपास्यप्राप्तिः तस्याधःकरणाय, इति ब्रह्मप्रधानभावः, नियम्य-नियामकभावः, आनन्दसातिशय-निरतिशयत्वं च सर्वं मुक्तावधरोत्तरं विपरीतभावेन स्यात् ॥

तत्र यथाक्रतुन्यायोऽपि विपरीत एवात्र, अद्वैतसिद्धान्ते तु ब्रह्मभावस्य मुक्तिस्वरूपत्वाद् जीवन्मुक्तदशायाम्, कैवल्ये वा ब्रह्मानन्द-मुक्तानन्दयोर्न वैषम्यलेशोऽपि, इति श्रुत्युक्तनिर्णयो महदाञ्जस्यमश्नुते ॥

दहरविद्यायां गुणप्राधान्यं तु शास्त्रप्रामाण्यादुपासनस्य स्वतन्त्रकर्तृकृतिसाध्यत्वाच्च यथाशास्त्रं युज्यते, फलानुभवस्तु यथायथमेव कर्मानुगुणो भवति। सर्वथा त्वानन्दानुभवे ब्रह्मणोऽप्राधान्यवादः "स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्ये"त्यानन्दमीमांसोपसंहारविरुद्धोऽपि ॥

## अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

### 'यस्यामतमि'ति श्रुतेर्ब्रह्मसविशेषतायामेव स्वारस्यम्

"यस्यामतं तस्य मतम्" "अविज्ञातं विजानताम्" इति ब्रह्मणो ज्ञानाविषयत्वमुक्तं चेत्, "ब्रह्मविदाप्नोति परम्" "ब्रह्म वेद ब्रह्मैव भवति" इति ज्ञानाद् मोक्षोपदेशो न स्यात् ॥

"असन्नेव स भवति। असद् ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुः।" इति ब्रह्म-विषयज्ञानसद्भावासद्भावाभ्यामात्मनाशम्, आत्मसत्तां च वदति। अतो ब्रह्मविषयवेदनमेवापवर्गोपायं सर्वाः श्रुतयो वदन्ति। ज्ञानं चोपासनात्मकम् ॥

उपास्यं च ब्रह्म सगुणमित्युक्तम्। "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह," इति ब्रह्मणोऽनन्तस्या-परिच्छिन्नगुणस्य वाङ्मनसयोरेतावदिति परिच्छेदायोग्य-त्वश्रवणेन ब्रह्मैतावदिति ब्रह्मपरिच्छेदज्ञानवतां ब्रह्माविज्ञा-तम् = अमतमित्युक्तम्; अपरिच्छिन्नत्वाद् ब्रह्मणः, अन्यथा "यस्यामतं तस्य मतम्" "विज्ञातमविजानतामि"ति मत-त्व-विज्ञातत्ववचनं तत्रैव विरुध्यते ॥

यत्तु—' न दृष्टेर्द्रष्टारं न मतेर्मन्तारम्" इति श्रुतिर्दृ-ष्टेः, मतेर्व्यतिरिक्तं द्रष्टारम्, मन्तारं च प्रतिषेधति—इति, तदाऽऽगन्तुकचैतन्यगुणयोगितया ज्ञातुरज्ञानस्वरूपतां कुत-र्कसिद्धां मत्वा, न तथाऽऽत्मानं पश्येः, न मन्वीथाः, अपि तु द्रष्टारं मन्तारमप्यात्मानं दृष्टि-मतिरूपमेव पश्येरित्यभि-दधातीति परिहृतम् ॥

अथवा—दृष्टेर्द्रष्टारं मतेर्मन्तारं जीवात्मानं प्रतिषिध्य सर्वभूतान्तरात्मानं परमात्मानमेवोपास्वेति वाक्यार्थः; अन्यथा "विज्ञातारमरे केन विजानीयात्" इत्यादिज्ञातृत्व-श्रुतिविरोधश्च ॥

### अत्राद्वैतिनां महासिद्धान्तः

#### 'यस्यामतमि'त्यादिश्रुतिस्वारस्यमद्वैतसिद्धान्त एव

"यस्यामतं तस्य मतम्" "अविज्ञातं विजानताम्" इत्यादिवाक्यान्यखण्डाकारवृत्तिं विना ब्रह्मण आवृतानावृतसदादिभेदरूपसखण्डज्ञानमात्रेण न मोक्षः, इति जीव-ब्रह्मणोरैक्यसिद्धान्तं मनसि कृत्य 'अहमि'त्यात्मज्ञानमेव न ब्रह्मज्ञानमिति प्रतिपादयन्ति सन्ति घटादिवद् नानुभाव्यत्वमनुभूतिस्वरूपस्य ब्रह्मणः, किन्तु "यतो वाचो निवर्तन्ते" इत्युक्तरीत्याऽखण्डाकारवृत्तौ सर्वप्रमाणव्यापारनिवृत्तिरित्यभिप्रयन्ति च ब्रह्मस्वप्रकाशत्वम्, घटादिवत् तस्याननुभाव्यत्वं च पूर्वोपपादितमेव द्रढयन्ति। तेन च वेदान्तानां ब्रह्मणि प्रामाण्यं तस्य वृत्तिव्याप्यत्वमात्रेण, न तु फलव्याप्यत्वेनेति सिध्यतीत्यद्वैतसिद्धान्ते ज्ञेयत्वाज्ञेयत्वयोरविरोधः—ब्रह्म ज्ञेयम्, अखण्डाकारवृत्त्याऽविद्यानिवृत्तौ स्वतःप्रकाशात्, ब्रह्म न ज्ञेयम्; घटादिवत् तस्यानध्यस्तत्वेन तस्य वृत्त्यभिव्यक्तस्वातिरिक्तसंविद्भास्यत्वात्—इति॥

अयमेव न्यायो ब्रह्मवेद्यत्वेऽपि—"न दृष्टेर्द्रष्टारं पश्येः" "न मतेर्मन्तारं मन्वीथाः" इति त्वनुभूतिव्यतिरिक्तं तदाश्रयमात्मानं निषेधति। अनेन चेदमवगम्यते—चिदचिद्ग्रन्थिरूपोऽहमर्थो न मुख्यात्मा, तस्य ज्ञातृत्वं वृत्तिरूपगौणज्ञानाश्रयान्तःकरणतादात्म्येन, इत्यहमर्थानात्मत्वकल्प एव साधुरिति। श्रीभाष्यमते त्वहमर्थस्यैव मुख्यात्मत्वात्, तस्य ज्ञातृत्वस्यापि मुख्यत्वाच्च प्रकृते मन्तुर्मतिनिषेधोऽप्रसक्तप्रतिषेध एव। न चाद्वैतमत आगन्तुकवृत्तिरूपज्ञानाश्रयस्य पारमार्थिकस्यास्वीकाराद् न ज्ञातुरात्मत्वं लोकसिद्धं पारमार्थिकम्, इति नाप्रसक्तप्रतिषेधः॥

अयमेव न्यायो "विज्ञातारमरे केन विजानीयादि"त्यत्रापि। अत्रान्तःकरणोपहितस्याहमर्थस्यैव तत्तादात्म्येन सानन्दत्वात्, तत्स्वरूपान्तर्गतस्यान्तःकरणस्य तदसम्भवात्, तदुपहितस्य साक्षिणोऽनावृतस्य स्वभानार्थमन्तःकरणान्तरानपेक्षणाच्च "न विज्ञातेर्विज्ञातारमि"त्युपपद्यते॥

### तत्र श्रीभाष्यकाराणां महापूर्वपक्षः

#### "आनन्दो ब्रह्मे"ति श्रुतेः सविशेषपरत्वम्

"आनन्दो ब्रह्मे"त्यानन्दमात्रमेव ब्रह्मस्वरूपं प्रतीयत इति यदुक्तम्, तद् ज्ञानाश्रयस्य ब्रह्मणो ज्ञानं स्वरूपमिति

वदतीति परिहृतम् । ज्ञानमेव ह्यनुकूलमानन्द इत्युच्यते । "विज्ञानमानन्दं ब्रह्मे"त्यानन्दरूपमेव ज्ञानं ब्रह्मेत्यर्थः । अत एव भवतामेकरसता । अस्य ज्ञानस्वरूपस्यैव ज्ञातृत्वमपि श्रुतिशतसमधिगतमित्युक्तम् । तद्वदेव "स एको ब्रह्मण आनन्दः" "आनन्दं ब्रह्मणो विद्वान्" इति व्यतिरेकनिर्देशाच्च नानन्दमात्रं ब्रह्म, अपि त्वानन्दि । ज्ञातृत्वमेव ह्यानन्दित्वम् ॥

## अद्वैतिनां महासिद्धान्तः

### "आनन्दो ब्रह्मे"ति श्रुतेर्निर्विशेषमात्रपर्यवसानम्

'सत्यं ज्ञानम्' "आनन्दो ब्रह्मे"त्यादौ ब्रह्मणो ज्ञानानन्दस्वरूपत्वप्रतिपादनमेव स्वरसम् । न हि वस्तुतो ज्ञानाश्रयो ज्ञानरूपोऽपि, येन तदाश्रितं ज्ञानम्, तदाश्रयश्चैकः स्यात् ; धर्म-धर्मिभावस्य भेदापेक्षत्वात् । न चान्यत्र कुत्रापि धर्मभूतं ज्ञानं नित्यं वाऽनित्यं वा दृष्टचरम् ॥

तत्र श्रीभाष्यकारमते संकोच-विकासहेत्वभावाद् नात्मा तत्स्वरूपं भवति; अन्यथाऽऽत्मनोऽपि संकोच-विकासापत्तेः, अणुपरिमाणस्य तस्य तदसम्भवात्, सम्भवे 'ज्ञानमुत्पन्नं नष्टमि'तिवदात्मोत्पत्ति-नाशप्रतीत्यापत्तेश्च, अद्वैतमते त्वात्माऽऽश्रितं ज्ञानमौपाधिकमनित्यमेव, तदप्यौपाधिकस्याहमर्थस्यैव, न तु स्वरूपज्ञानस्येति नानुपपत्तिलेशोऽपि ।

अयमेव न्याय आनन्देऽपि; तस्यापि न धर्मभूतज्ञानत्वम् ; सुखवद् दुखस्यापि तथात्वापत्त्या तस्यापि नित्यात्मधर्मतापत्त्या मुक्तावपि दुःखप्रसङ्गाद् नित्यदुःखित्वमात्मन आपद्येत । "विज्ञानमानन्दमि"ति ब्रह्मण आनन्दस्वरूपत्वमेवाभिदधाति; नपुंसकत्वा"दानन्दमि'ति पदस्य । अत एव ब्रह्मज्ञाननिर्णयार्थं स्थूलारुन्धतीन्यायेन प्रवृत्ते प्रकरणे "आनन्दो ब्रह्मेति व्यजानादि"त्यानन्दस्वरूपमेव ब्रह्मोपदिश्यते ॥

तत्र तत्र 'ब्रह्मण अनन्दः' इति तु न प्रतिपिपादयिषितब्रह्मानन्दपरमः पुच्छब्रह्मण एवात्र प्रतिपिपादयिषितत्वात् । "आनन्दं ब्रह्मणो विद्वानि"ति-षष्ठी त्वभेद एवेति व्यक्तमधस्तात् । "सत्यं ज्ञानमनन्तमि"ति त्रिविधपरिच्छेदराहित्यं प्रतिपादितं नान्यथोपपद्यते ॥

वस्तुतस्त्वनाद्यविद्याकल्पितसच्चिदानन्दभेदमादायैव शास्त्राणां प्रवृत्तत्वादखण्डस्यापि ब्रह्मणो भेदः कल्पितो वर्तते, इति न भेदेऽपि व्याघातः ॥

अत एव "यत्र हि द्वैतमिव भवति" "नेह नानाऽस्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यविद्याकल्पितभेदप्रतीतिदशायामेव व्यवहारः। अखण्डात्मना स्वरूपमात्रज्ञाने तु न शास्ता, शास्यो वा, इति "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येदि"ति मुक्तौ सर्वभेदनिवृत्तिप्रतिपादनं चोपपद्यते॥

अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

"यत्र हि द्वैतमिवे"ति श्रुतेः सविशेषवादे स्वारस्यम्

यदिदमुक्तम्—"यत्र हि द्वैतमिव भवति," "नेह नानाऽस्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्" इति भेदनिषेधो बहुधा दृश्यते—इति, तत् कृत्स्नस्य जगतो ब्रह्मकार्यतया, तदन्तर्यामिकतया च तदात्मकत्वेनैक्यात्, तत्प्रत्यनीकनानात्वं प्रतिषिद्ध्यते, न पुनः "बहु स्यां प्रजायेये"ति बहुभवनसंकल्पपूर्वकं ब्रह्मणो नानात्वं श्रुतिसिद्धं प्रतिषिध्यत इति परिहृतम्॥

नानात्वनिषेधादियमपरमार्थविषयेति चेत्, न; प्रत्यक्षादिसकलप्रमाणानवगतं नानात्वं दुरारोहं ब्रह्मणः प्रतिपाद्य, तदेव बाध्यत इत्युपहास्यमिदम्॥

अत्राद्वैतिनां महासिद्धान्तः

"यत्र हि द्वैतमिवे"ति श्रुतिस्वारस्यमद्वैतवाद एव

कृत्स्नस्य जगतो ब्रह्मकार्यत्वम्, तदन्तर्यामिकत्वं चानयोर्भेदं विना नोपपद्यते। स च भेदो यदि कल्पितः, तर्हि व्यक्तमैक्यम्। न हि मृद्घटयोरपि कार्य-कारणभावेऽपि सर्वात्मनैक्यम्। तत्र विवर्तवादे कारणव्यतिरेकेण कार्याभाव एवैक्यं नाम। अत एव 'सदेवेद"मित्यादावद्वितीयत्वस्याप्युपदेशः, इति व्यक्तमक्षरविचैकवाक्यतया। अनेनैव "बहु स्यां प्रजायेय" इति श्रुतिसिद्धो भेदोऽपि व्याख्यातः; तत्रापि कल्पितभेदेन निर्वाहात्, बहुभवनसङ्कल्पपूर्वकं ब्रह्मणो नानात्वं तु मायोपहितस्यैव, नाद्वितीयस्य, निर्विशेषस्य वा संविन्मात्रस्य, इति तत्र तत्र श्रुतावपि नानात्वव्यपदेशो नाद्वैतवादं विहन्ति। श्रुतिसिद्धस्यापि नाना-

त्वस्य श्रुत्यैव बाधः "किमिव वचनं न कुर्याद् नास्ति वचनस्यातिभारः" इति न्यायाद् न पर्यनुयोगमर्हति; अध्यारोपापवादन्यायेन श्रुतिद्वयस्याप्युपपत्तेः ॥

अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

"यदा ह्येवैष" इति श्रुतेः सविशेषवादो विषयः

"यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति" इति ब्रह्मणि नानात्वं पश्यतो भयप्राप्तिरिति यदुक्तम्, तदसत्; "सर्वं खल्विदं ब्रह्म तज्जलानि"ति शान्त उपासीत" इति तन्नानात्वानुसन्धानेनात्र शान्तिहेतुत्वोपदेशात् ॥

तथा हि—सर्वस्य जगतस्तदुत्पत्ति-स्थिति-लयकर्मतया तदात्मकत्वानुसन्धानेनात्र शान्तिर्विधीयते । अतो यथावस्थितदेव-तिर्यङ्मनुष्य-स्थावरादिभेदभिन्नं जगद् ब्रह्मात्मकमित्यनुसन्धानस्य शान्तिहेतुतयाऽभयप्राप्तिहेतुत्वेन न भयहेतुत्वप्रसङ्गः ॥

एवं तर्हि "अथ तस्य भयं भवती"ति किमुच्यते ? इदमुच्यते—"यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति" इत्यभयप्राप्तिहेतुत्वेन ब्रह्मणि या प्रतिष्ठाऽभिहिता, तस्या विच्छेदे भयं भवतीति । यथोक्तं महर्षिभिः—

"यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते ॥
सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया ॥"

इत्यादि । ब्रह्मणि प्रतिष्ठाया अन्तरः = अवकाशो विच्छेद एव ॥

अत्राद्वैतिनां महासिद्धान्तः

"यदा ह्येवैषः" इति श्रुतेरद्वैत एवाऽऽञ्जस्यम्

अत एव "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवती"ति श्रुतिः स्वल्पमपि ब्रह्मणो भेदं न सहते । "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते"ति तु कारणभावमापन्नं सखण्डमेव ब्रह्मणो रूपं प्रतिपादयति । न च तेन जीवस्य, अन्येषां वा नानात्वमद्वैति-

नोऽपि विरुध्यते। ब्रह्मणि नानात्वादयः सगुणब्रह्माभिप्रायाः। "उदरमन्तरं कुरुते। अथ तस्य भयं भवती"ति तु निर्विशेषचैतन्याभिप्रायम्॥

अत एव—"यदा ह्येवैष एतस्मिन्नदृश्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवती"ति निर्विशेषब्रह्मणि प्रतिष्ठायाः "अवस्थितेरिति काशकृत्स्नः" "तन्निष्ठस्य मोक्षोपदेशात्" इति न्यायसिद्धाया ब्रह्मात्मनाऽवस्थितेरेवाभयप्राप्तिहेतुत्वं निष्कृष्यते। प्रतिष्ठा ह्यत्र प्रतिपाद्यमाना न सगुणब्रह्मणो ध्यानम्, ध्रुवानुस्मृतिर्वा; अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने" इत्यादीनामनन्वयात्॥

"यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते॥
सा हानिः सा महच्छिद्रं सा भ्रान्तिः सा च विक्रिया॥"

इति वचनं तु सगुणोपासनायाः स्तुतिपरं न निर्विशेषब्रह्मवादमौपनिषदं बाधितुं क्षमते। अतो निर्विशेषमेव सर्ववेदान्तमुख्यतात्पर्यविषयः॥

### श्रीभाष्यकाराणां महापूर्वपक्षः

#### ब्रह्मसूत्रस्य सविशेषवादाविरोधः

> यदुक्तम्—न "स्थानतोऽपि" इति सर्वविशेषरहितं ब्रह्मेति वक्ष्यति—इति, तन्न; सविशेषं ब्रह्मेत्येव हि तत्र वक्ष्यति॥
>
> "मायामात्रं तु" इति च स्वाप्नानामर्थानां जागरितावस्थानुभूतपदार्थवैधर्म्येण मायामात्रत्वमुच्यत इति जागरितावस्थानुभूतानामिव पारमार्थिकत्वमेव वक्ष्यति॥

### अद्वैतिनां महासिद्धान्तः

#### ब्रह्मसूत्रस्याद्वैत एव स्वारस्यम्

अत एव सूत्रम्—"न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" इति, "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इति। एतच्चाद्वैतमार्तण्ड-वेदान्तरत्नामण्यद्वैततत्त्वशुद्धि-शतभूषण्यादौ व्यक्तम्। इयमेव गतिः स्मृति-पुराणयोरपि। तत्र स्मृतिशब्देन भगवद्गीता प्राधान्येन, पुराणशब्देन विष्णुपुराणं च विवक्ष्यते। भगवद्गीता हि निर्विशेषमेव तत्त्वम्, तज्ज्ञानादेव मोक्षः, अन्यत्तु न परमार्थमिति विशदयति। व्यक्तं चैतद् गीतातरङ्गिण्याम्॥

अत्र श्रीभाष्यकाराणां महापूर्वपक्षः ।

गीतायाः सविशेषवाद एव स्वारस्यम्

स्मृति-पुराणयोरपि निर्विशेषज्ञानमात्रमेव परमार्थः, अन्यदपारमार्थिकमिति प्रतीयत इति यदभिहितम्, तदसत्;

"मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥"
"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥"
"मत्तः परतरं नान्यत् किंचिदस्ति धनञ्जय ॥
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥"
"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥"
"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

इति गीता हि सविशेषब्रह्मवादमेवोपबृंहयति ॥

अत्राद्वैतिनां महासिद्धान्तः

गीताया निर्विशेषवाद एव स्वारस्यम्

भगवद्गीता हि—
"मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ।
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥"
इति—
मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ॥"

इत्यस्यानन्तरं प्रवृत्ता सदात्मना ब्रह्मणो विवर्तोपादानस्यानुवृत्तिम्, सर्वभूतानां मत्स्थत्वं मदधिष्ठानत्वेनेति च "सदेव सोम्येदमिति" वाक्यार्थं "मत्स्थानी"त्यध्यारोपेण प्रतिपाद्य, अध्यारोपोऽप्ययं परस्पराध्यासेऽप्यधिष्ठानस्य न स्वरूपतोऽध्यासो भूतानामिव, किन्तु तस्य संसर्गाध्यासमात्रमिति "न चाहं तेष्ववस्थितः" इति निष्कृष्य, "न च मत्स्थानि भूतानि"

इत्ये"कमेवाद्वितीयमि"ति वाक्यार्थं संगृह्णाना, वस्तुतो निर्विशेषस्यापि मम मायोपधानेन जगत्कारणस्वरूपमैश्वरं रूपं योगमात्रेण = घटनमात्रेणाऽऽरोपितानां भूतानामधिष्ठानत्वमात्रेणेति वा बोधयन्ती चाऽऽत्मनः परमार्थतो निर्विशेषत्वमेवोपसंहरति ॥

श्रीभाष्यकारास्तु—अव्यक्तरूपेणाप्रकाशितेन रूपेण मयाऽन्तर्यामिणा ततिम्, अस्य जगतो धारणार्थं, नियमनार्थं च शेषित्वेन व्याप्तिम्, "मत्स्थानि सर्वभूतानी"ति स्वस्मिन्नन्तर्यामिणि स्थितिम्, "न चाहं तेष्ववस्थितः" इति स्वस्य भूताधीनस्थितिकत्वाभावम्, सर्वस्य स्वसङ्कल्पमात्राधीनत्वं च प्रतिपाद्यत इति—व्याचक्षते ॥

तत्र सगुणस्य मायोपहितस्यान्तर्यामित्वे, "यस्य पृथिवी शरीरमि"-त्यादौ शरीरपदस्योपाधिपरत्वे च नाद्वैतिनामपि विसंवादः। तत्र श्रीभाष्याभिमतं शरीरत्वम्, नियम्यत्वं वाऽऽदायाऽन्तर्यामित्वम्, शेषित्वं वा न सम्प्रतिपन्नम्। विस्तरस्त्वस्याद्वैततत्त्वशुद्धितोऽवगन्तव्यः। सर्वथा त्वप्रकाशितरूपेणात्मनो व्याप्तिमात्रे न विवादः। सा त्वधिष्ठानतया वा, तदतिरिक्तान्तर्यामितया वेति त्वन्यदेतत् ॥

तत्र श्रीभाष्याभिमतान्तर्यामितयैव व्याप्तौ "मत्स्थानी"ति वितथम्, "न चाहं तेष्ववस्थित" इति त्वप्रसक्तप्रतिषेधः। "न च मत्स्थानी" त्यत्रापि स एव। अन्तर्यामिणो नियामकत्वं स्वशक्तिमात्रेण वा, सङ्कल्पविशेषेण वा विना न सम्भवति, इति वितथमिदम्—"मत्स्थानि सर्वभूतानि"—इत्यादि "पश्य मे योगमैश्वरम्" इत्यन्तम्। अयमेव न्यायः—

"भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥"

इत्यत्रापि, इति "मत्स्थानी"त्यद्वैतमत एव स्वरसम्; अध्यारोपापवादनयेन प्रवृत्तत्वात् ॥

"यो मामजमनादिं च वेत्ति लोकमहेश्वरम्।"

इत्यत्राप्ययमेव न्यायः; तत्रापि भक्तियोगविषयसगुणरूपस्यापि लोकमहेश्वरत्वम्, तुरीयत्वम्, अज्ञान-तत्कार्यविवर्तित्वमेवार्थः, इति परमार्थतो निर्विशेष एव तस्यापि तात्पर्यम्। अत्रानादित्वमजत्वे हेतुः स्वरूपकथनार्थमेव। न च सादिः कोऽप्यजो नाम। न हि जीवः, ब्रह्म, मुक्तो वाऽदिमान्; अन्यथाऽऽदिमतोऽसत्त्वनियमाद् जीवाद्यनित्यत्वमापद्येत ॥

'लोकमहेश्वरमि'त्यत्र महत्त्वविशेषणं लोकेश्वरस्य नियामकस्य सगुणस्याप्यधिष्ठानं तुरीयमित्यभिप्रेत्यैव; संविन्मात्रस्य निर्विशेषस्य

सर्वनियामकेश्वरस्याप्यधिष्ठानत्वात् । तथा च श्रुतिः—"यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ।" इत्यत्तुरीश्वरस्याधिष्ठानं संविन्मात्रमात्मतत्त्वमित्याम्नायते ॥

"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥
मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ॥
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥"

इति तु सत्यम्, जगत्कारणत्वं परमात्मनः प्रतिपादयति, परन्तु यत्र परमात्मा स्वस्योपादानत्वं वर्णयति, तत्र तस्य प्रभवत्वम्, प्रलयत्वं वा स्वतो विवर्तवादं विना नोपपद्यते; तस्य स्वतः परिणाम्युपादनतया प्रकृतित्वस्य प्रकृत्यधिकरणे श्रीभाष्येऽपि निरासात्, तस्य चाद्वैतवाद एव स्वारस्याच्च । आधुनिकास्तु केचन श्रीभाष्यमतेऽपि ब्रह्मणः परिणामित्वमेवेति प्रतिपादयन्ति, यत्तु श्रीभाष्यानुयायिभिरेव बहुभिर्निरस्यते ॥

"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥"

इत्यत्र—

"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥"

इत्यत्र च सर्वनियामकम्, सर्वाधिष्ठानं वा सविशेषं ब्रह्मोपलक्षितं क्षराक्षराभ्यामन्यत्वेन गीयते । स च यदि भगवानेव, तर्हि "उत्तमः पुरुषोऽहं हि" इत्येव गेयं स्यात् । अतो ज्ञायते—क्षराक्षरातीत उत्तमः पुरुषः सर्वाधिष्ठानम्, वस्तुगत्या निर्विशेषमेव । गीताचार्यस्याप्युत्तमपुरुषत्वं क्षराक्षरातीतत्वेनेति पृथग् वचनेनावगम्यते । अत उत्तमपुरुषत्वं मुक्तात्मैक्येनैव, न तु तमोविविक्तत्वमात्रेण ॥

श्रीभाष्यमते तु प्रथमश्लोकोपात्तः कूटस्थो मुक्तात्मा । न च स ब्रह्मभावमापन्न एकः, किन्त्वनेके मुक्तात्मानः । अतो ज्ञायते—"क्षरः सर्वाणि भूतानी"ति बहुवचननिर्दिष्टभूतापेक्षया तदुपादानं मायैव कूटस्थपदार्थः । अतो ज्ञायतेऽज्ञान-तत्प्रयुक्तसर्वनिवृत्त्युपलक्षितं स्वरूपमेवोत्तमः पुरुषः—इति ॥

"अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः" इति हि श्रुतिर्मुक्तात्मन एवोत्तमपुरुषत्वमाम्नाति, इति तत्र मतद्वयेऽपि मुक्तात्मस्वरूमन्यदिति त्वन्यदेतत् । तत्र

यद्युत्तमः पुरुषो मुक्तात्मा, तर्हि प्रकृतेऽक्षरशब्दार्थो न मुक्तात्मा भवति, किन्तूत्तमः ततोऽन्यः पुरुषः। सति चैवं मुक्तात्मन एव, लोकत्रयमाविश्य नियामकत्वम् , तत्रैवेश्वरस्याप्यधिष्ठितत्वम् , "क इत्था वेद यत्र स" इत्युक्तरीत्या भवितुमर्हति, इति तत्त्वमस्यादिमहावाक्यार्थ एवोत्तमः पुरुष इत्यनेन विवक्ष्यते ॥

तस्य सर्वाधिष्ठानत्वम् , क्षराक्षरातीतत्वम् , तत एव परमात्मत्वम् , गीताचार्यस्यापि पुरुषोत्तमत्वं च तत एवेति—

"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥"

इत्युपदेशश्चोपपन्नो भवति, इति "मुक्तः प्रतिज्ञानात्" "आत्मा प्रकरणादि"ति सूत्रस्वारस्यम् , "स उत्तमः पुरुषः" इति श्रौतोपसंहारश्चोपपद्यते। न चात्र कर्मरूपाविद्याया निवृत्तिमात्रेण मुक्तिः, किन्तु तस्याप्युपादानमूलाविद्यानिवृत्त्यैव। व्यक्तीकरिष्यते च "अविद्या-कर्मसंज्ञाऽन्या" इति विष्णुपुराणं पूर्वोत्तरपर्यालोचनया न कर्ममात्राविद्यायां प्रमाणमिति। तत्र यद्यपि विष्णुपुराणं षष्ठांशे—

"विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथा परा ॥
अविद्या-कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ॥"

इति—श्रावयति; तथापि "अविद्या-कर्मसंज्ञाऽन्ये"त्यत्राविद्याकर्मशब्दयोर्द्वन्द्वसमासः, संज्ञापदस्य चोभाभ्यामपि सम्बन्धः। अत्र प्रधाना ऽविद्या, मूलाविद्या, कर्म तु तदधीनत्वादविद्याकार्यकारि। अत एव द्वितीयांशे—

"अविद्यासञ्चितं कर्म तत्राशेषेपु जन्तुषु ॥"
इत्यविद्याकार्यत्वं कर्मणां प्रतिपाद्यते ॥
"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन ॥"

इत्यप्यज्ञाननाशप्रयुक्तं नाशमेव कर्मणां जीवन्मुक्तानां विषये प्रतिपादयति। अत एवात्र प्रारब्धकर्मवर्जमिति व्याख्या। अयमेव न्यायो विष्णुपुराणेऽपि ॥

### श्रीभाष्यकाराणां महापूर्वपक्षः

#### विष्णुपुराणस्य श्रीभाष्यमत एव स्वारस्यम्

स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः।
अतीतसर्वावरणोऽखिलात्मा तेनाऽऽस्तृतं यद् भुवनान्तराले ॥

समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाद्धृतभूतसर्गः ।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥
तेजोबलैश्वर्य-महावबोध-सुवीर्य-शक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥
स ईश्वरो व्यष्टि-समष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः ।
सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ॥
संज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम् ।
संदृश्यते वाऽप्यधिगम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम् ॥

"शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते ।"
मैत्रेय भगवच्छब्दः सर्वकारणकारणे ॥
संभर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः ।
नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ॥
ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञान-वैराग्ययोश्चैव षण्णां भग इतीरणा ॥
वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि ।
स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः ॥
"ज्ञान-शक्ति-बलैश्वर्य-वीर्य-तेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥"
"एवमेष महाशब्दो मैत्रेय भगवानिति ।
परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥
तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः ॥"
"समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥
समस्तशक्तिरूपाणि तत् करोति जनेश्वर ।
देव-तिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया ॥
जगतामुपकाराय न सा कर्मनिमित्तजा ।
चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहताऽऽत्मिका ॥"
"एवंप्रकारममलं नित्यं व्यापकमक्षयम् ।"
समस्तहेयरहितं विष्णवाख्यं परमं पदम् ॥"

"परः पराणां परमः परमात्माऽऽत्मसंस्थितः" ।
रूप-वर्णादिनिर्देश-विशेषणविवर्जितः ॥

अपक्षय-विनाशाभ्यां परिणामर्द्धि-जन्मभिः ।
वर्जितः शक्यते वक्तुं यः सदाऽस्तीति केवलम् ॥

सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥"

"तद् ब्रह्म परमं नित्यमजमक्षरमव्ययम् ।
एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥

तदेव सर्वमेवैतद् व्यक्ताव्यक्तस्वरूपवत् ।
तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥"

"प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥

परमात्मा च सर्वेषामाधारः परमेश्वरः ।
विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥"

'द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च ।
क्षराक्षरस्वरूपे ते सर्वभूतेषु च स्थिते ॥

अक्षरं तत् परं ब्रह्म क्षरं सर्वमिदं जगत् ।
एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा ॥
परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ॥
विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा ।
अविद्या-कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ॥

यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा ।
संसारतापानखिलानवाप्नोत्यतसन्ततान् ॥
तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ।
सर्वभूतेषु भूपाल तारतम्येन वर्तते ॥

"प्रधानं च पुमांश्चैव सर्वभूतात्मभूतया ।
विष्णुशक्त्या महाबुद्धे वृतौ संश्रयधर्मिणौ ॥
तयोः सैव पृथग्भावकारणं संश्रयस्य च ॥

यथाऽसक्तं जले वातो बिभर्ति कणिकाशतम् ।
शक्तिः साऽपि तथा विष्णोः प्रधान-पुरुषात्मनः ॥"

"तदेतदक्षयं नित्यं जगद् मुनिवराखिलम् ।
आविर्भाव-तिरोभाव-जन्म-नाशविकल्पवत् ॥"

इत्यादिना परं ब्रह्म स्वभावत एव निरस्तनिखिलदोषगन्धम्, समस्तकल्याणगुणात्मकम्, जगदुत्पत्ति-स्थिति-संहारान्तःप्रवेश-नियमनादिलीलं प्रतिपाद्य, कृत्स्नस्य चिदचिद्वस्तुनः सर्वावस्थावस्थितस्य पारमार्थिकस्यैव परस्य ब्रह्मणः शरीरतया रूपत्वं शरीर-रूप-तन्वंश-शक्ति-विभूत्यादिशब्दैः तत्तच्छब्दसामानाधिकरण्येन चाभिधाय, तद्विभूतिभूतस्य चिद्वस्तुनः स्वरूपेणावस्थितिम्, अचिन्मिश्रतया क्षेत्रज्ञरूपेण स्थितिं चोक्त्वा, क्षेत्रज्ञावस्थायां पुण्य-पापात्मककर्मरूपाविद्यावेष्टितत्वेन स्वाभाविकज्ञानरूपत्वाननुसन्धानम्, अचिद्रूपार्थाकारतयाऽनुसन्धानं च प्रतिपादितम्, इति परं ब्रह्म सविशेषम्, तद्विभूतिभूतं जगदपि पारमार्थिकमेवेति ज्ञायते ॥

## अद्वैतिनां महासिद्धान्तः

### विष्णुपुराणस्याद्वैत एव स्वारस्यम्

तत्र परमात्मनः सर्वभूतप्रकृतित्वे, "अविकाराय शुद्धाय" इत्युपक्रान्तेऽविकारत्वे, परमार्थतः सर्वावरणात्ययेऽखिलात्मत्वे, ब्रह्मणा सदात्मनाऽनावृतेन, आनन्दात्मनाऽवृतेन च रूपेण सर्वत्रानुवर्तमानत्वेन व्याप्तौ, सविशेषत्वे, तेन रूपेण जगत्सृष्टि-स्थिति-लयादिकर्तृत्वे, स्वेच्छागृहीतरामकृष्णावतारभेदे, उपाधेः प्रतिबिम्बपक्षपातित्वात् तावताऽपि बिम्बरूपस्य तस्यौपाधिकसर्वदोषराहित्ये, स्वतः समस्तकल्याणगुणाकरत्वे, सर्वेश्वरत्वे, तस्यैव सर्वभासकत्वे च नैव विप्रतिपत्तिः ॥

विप्रतिपत्तिस्तु—तत्स्वरूपसाक्षात्कारेण तदाश्रयविषयकाविद्यानिवृत्त्या निरस्तसमस्तधर्मत्वेनाद्वितीयत्वे, निर्विशेषसंविन्मात्रत्वे च । तत्र भगवच्छब्दवाच्यत्वं सगुणस्यैव तत्तद्गुणसम्बन्धेन मुख्यम्, अन्यत्र पराशरादौ तु गौणमेवेति सम्प्रतिपन्नम् । एवमेव जगतामुपकारायैव स्वेच्छयैव तत्तदवतारविशेषाः, न ते कर्मजा इत्याद्यपि, परन्तु न सविशेषत्वं तस्य पारमार्थिकम् ॥ यतः—

"परः पराणां परमः परमात्माऽऽत्मसंस्थितः ॥
रूप-वर्णादिनिर्देश-विशेषणविवर्जितः, ॥
अपक्षय-विनाशाभ्यां परिणामर्धि-जन्मभिः ॥
वर्जितः शक्यते वक्तुं यः सदाऽस्तीति केवलम् ॥"

इति केवलं सदात्मनैव व्यवहारदशायां भानम्, न त्वावृतानावृतरूप-भेदशून्याखण्डात्मनेति वचनात् केवलमधिष्ठानविधया विवर्तोपादानमेव परमात्मेत्यवगमात् सर्वविशेषवत्त्वं परमात्मनोऽध्यारोपविधयैवेति प्रतीयते ॥

वासुदेवपदमपि तत्र तत्र श्रूयमाणं न वसुदेवपुत्रपरम्, किन्तु,

"वासानाद्वासुदेवस्य वासितं ते जगत्त्रयम्।
सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ॥"
"सर्वत्रासौ समस्तं च वसत्यत्रे च वै यतः ॥
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥
तद् ब्रह्म परमं नित्यमजमक्षय्यमव्ययम् ॥
एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥
तदेव सर्वमेवैतद् व्यक्ताव्यक्तस्वरूपवद् ॥"

इति वचनात् सर्वोपादानमायोपहितस्वरूपपरम्, यदेव "सदेव सोम्येदमि"ति वाक्येनानूद्यते। तत्र "सदेवेदमि"तीदन्तादात्म्य-माम्नायमानं सार्वदिकाव्यक्ततादात्म्येन; "तमेव विदित्वाऽतिमृत्यु-मेती"ति परमात्मनि लयस्य परमात्मव्यतिरेकेणानादेरवगमात्। अत एवात्र विष्णुपुराणम्—

"प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥
परमात्मा च सर्वेषामाधारः परमेश्वरः।
विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥"

इति व्यक्ताव्यक्तात्मकप्रकृति-तत्कार्याणां परमात्मव्यतिरेकेणाभावं गमयदद्वैतमेवोपष्टम्भयति ॥

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥"

"तदेतदक्षयं नित्यं जगद् मुनिवराखिलम् ।
आविर्भाव-तिरोभाव-जन्म-नाशविकल्पवत् ॥"

इत्यादिना परं ब्रह्म स्वभावत एव निरस्तनिखिलदोषगन्धम् , समस्तकल्याणगुणात्मकम् , जगदुत्पत्ति-स्थिति-संहारान्तःप्रवेश-नियमनादिलीलं प्रतिपाद्य, कृत्स्नस्य चिदचिद्वस्तुनः सर्वावस्थावस्थितस्य पारमार्थिकस्यैव परस्य ब्रह्मणः शरीरतया रूपत्वं शरीर-रूप-तन्वंश-शक्ति-विभूत्यादिशब्दैः तत्तच्छब्दसामानाधिकरण्येन चाभिधाय, तद्विभूतिभूतस्य चिद्वस्तुनः स्वरूपेणावस्थितिम् , अचिन्मिश्रतया क्षेत्रज्ञरूपेण स्थितिं चोक्त्वा, क्षेत्रज्ञावस्थायां पुण्य-पापात्मककर्मरूपाविद्यावेष्टितत्वेन स्वाभाविकज्ञानरूपत्वाननुसन्धानम् , अचिद्रूपार्थाकारतयाऽनुसन्धानं च प्रतिपादितम् , इति परं ब्रह्म सविशेषम् , तद्विभूतिभूतं जगदपि पारमार्थिकमेवेति ज्ञायते ॥

### अद्वैतिनां महासिद्धान्तः

#### विष्णुपुराणस्याद्वैत एव स्वारस्यम्

तत्र परमात्मनः सर्वभूतप्रकृतित्वे, "अविकाराय शुद्धाय" इत्युपक्रान्तेऽविकारत्वे, परमार्थतः सर्वावरणात्ययेऽखिलात्मत्वे, ब्रह्मणा सदात्मनाऽनावृतेन, आनन्दात्मनाऽवृतेन च रूपेण सर्वत्रानुवर्तमानत्वेन व्याप्तौ, सविशेषत्वे, तेन रूपेण जगत्सृष्टि-स्थिति-लयादिकर्तृत्वे, स्वेच्छागृहीतरामकृष्णावतारभेदे, उपाधेः प्रतिबिम्बपक्षपातित्वात् तावताऽपि बिम्बरूपस्य तस्यौपाधिकसर्वदोषराहित्ये, स्वतः समस्तकल्याणगुणाकरत्वे, सर्वेश्वरत्वे, तस्यैव सर्वभासकत्वे च नैव विप्रतिपत्तिः ॥

विप्रतिपत्तिस्तु—तत्स्वरूपसाक्षात्कारेण तदाश्रयविषयकाविद्यानिवृत्त्या निरस्तसमस्तधर्मत्वेनाद्वितीयत्वे, निर्विशेषसंविन्मात्रत्वे च । तत्र भगवच्छब्दवाच्यत्वं सगुणस्यैव तत्तद्गुणसम्बन्धेन मुख्यम् , अन्यत्र पराशरादौ तु गौणमेवेति सम्प्रतिपन्नम् । एवमेव जगतामुपकारायैव स्वेच्छयैव तत्तदवतारविशेषाः, न ते कर्मजा इत्याद्यपि, परन्तु न सविशेषत्वं तस्य पारमार्थिकम् ॥ यतः—

"परः पराणां परमः परमात्माऽऽत्मसंस्थितः ॥
रूप-वर्णादिनिर्देश-विशेषणविवर्जितः, ॥
अपक्षय-विनाशाभ्यां परिणामर्धि-जन्मभिः ॥
वर्जितः शक्यते वक्तुं यः सदाऽस्तीति केवलम् ॥"

इति केवलं सदात्मनैव व्यवहारदशायां भानम्, न त्वावृतानावृतरूप-भेदशून्याखण्डात्मनेति वचनात् केवलमधिष्ठानविधया विवर्तोपादानमेव परमात्मेत्यवगमात् सर्वविशेषवत्त्वं परमात्मनोऽध्यारोपविधयैवेति प्रतीयते ॥

वासुदेवपदमपि तत्र तत्र श्रूयमाणं न वसुदेवपुत्रपरम्, किन्तु,

"वासानाद्वासुदेवस्य वासितं ते जगत्त्रयम् ।
सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ॥"
"सर्वत्रासौ समस्तं च वसत्यत्रे च वै यतः ॥
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥
तद् ब्रह्म परमं नित्यमजमक्षय्यमव्ययम् ॥
एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥
तदेव सर्वमेवैतद् व्यक्ताव्यक्तस्वरूपवद् ॥"

इति वचनात् सर्वोपादानमायोपहितस्वरूपपरम्, यदेव "सदेव सोम्येदमि"ति वाक्येनानूद्यते । तत्र "सदेवेदमि"तीदन्तादात्म्य-माम्नायमानं सार्वदिकाव्यक्ततादात्म्येन; "तमेव विदित्वाऽतिमृत्यु-मेती"ति परमात्मनि लयस्य परमात्मव्यतिरेकेणानादेरवगमात् । अत एवात्र विष्णुपुराणम्—

"प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥
परमात्मा च सर्वेषामाधारः परमेश्वरः ।
विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥"

इति व्यक्ताव्यक्तात्मकप्रकृति-तत्कार्याणां परमात्मव्यतिरेकेणाभावं गमयदद्वैतमेवोपष्टम्भयति ॥

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥"

इति श्लोकौ क्षराक्षरपुरुषातीतत्वं पुरुषोत्तमस्य प्रतिपादयन्तावनुपदो-दाहृतविष्णुपुराणमेवोपबृंहयतः—निर्विशेषब्रह्मण एव विष्णुपुराणमहाता-त्पर्यविवक्षयेत्यवगम्यते ॥

अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

"प्रत्यस्तमितमि"त्यादिवाक्यस्य मुक्तात्म-

परत्वम्, न तु प्रत्यगभिन्नब्रह्मपरत्वम्

"प्रत्यस्तमितभेदमि"त्यत्र देव-मनुष्यादिप्रकृतिपरि-णामविशेषसंसृष्टस्याप्यात्मनः स्वरूपं तद्गतभेदरहितत्वेन तद्भेदवाचिदेवादिशब्दागोचरं ज्ञानसत्तैकलक्षणं स्वसंवेद्यं योगयुङ्मनसो न गोचर इत्युच्यते, इत्यनेन न प्रपञ्चा-पलापः ॥

कथमिदमवगम्यत इति चेत्, तदुच्यते; अस्मिन् प्रकरणे संसारैकभेषजतया योगमभिधाय, योगावयवान् प्रत्याहारपर्यन्तांश्चोक्त्वा, धारणासिद्ध्यर्थं शुभाश्रयं वक्तुं परस्य ब्रह्मणो विष्णोः शक्तिशब्दाभिधेयं रूपद्वयं मूर्तामूर्त-विभागेन प्रतिपाद्य, तृतीयशक्तिरूपकर्माख्याविद्यावेष्टितम-चिद्विशिष्टं क्षेत्रज्ञं मूर्ताख्यविभागं भावनात्रयान्वयादशुभ-मित्युक्त्वा, द्वितीयस्य कर्माख्याविद्याविरहिणोऽचिद्वियु-क्तस्य ज्ञानैकाकारस्यामूर्ताख्यविभागस्य निष्पन्नयोगिध्येय-तया योगयुङ्मनसोऽनालम्बनतया स्वतः शुद्धिविरहाच्च शुभाश्रयत्वं प्रतिषिध्य, परशक्तिरूपमिदममूर्तम् परशक्तिरूपं क्षेत्रज्ञाख्यमूर्तं च परशक्तिरूपस्यात्मनः क्षेत्रज्ञतापत्तिहेतु-भूततृतीयशक्त्याख्यकर्मरूपाऽविद्या चेत्येतच्छक्तित्रयाश्रयो भगवदसाधारणम् "आदित्यवर्णमि"त्यादिवेदान्तसिद्धं मूर्तरूपं शुभाश्रय इत्युक्तम् ॥

अत्र परिशुद्धात्मस्वरूपस्य शुभाश्रयतानर्हतां वक्तुं "प्रत्यस्तमितभेदं यत्" इत्युच्यते : तथाहि—

"न तद्योगयुजा शक्यं नृप चिन्तयितुं यतः ।
द्वितीयं विष्णुसंज्ञस्य योगिध्येयं परं पदम् ॥
समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥"

इति च वदति। तथा चतुर्मुख-सनक-सनन्दनादीनां जगदन्तर्वर्तिनामविद्यावेष्टितत्वेन शुभाश्रयतानर्हतामुक्त्वा बद्धानामेव पश्चाद् योगेनोद्भूतबोधानां स्वस्वरूपापन्नानां च स्वतः शुद्धिविरहाद् भगवता शौनकेन शुभाश्रयता निषिद्धा—

"आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः।
प्राणिनः कर्मजनितसंसारवशवर्तिनः॥
यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः।
अविद्यान्तर्गताः सर्वे ते हि संसारगोचराः॥
पश्चादुद्भूतबोधाश्च ध्यानेनैवोपकारकाः।
नैसर्गिको न वै बोधस्तेषामप्यन्यतो यतः॥
तस्मात्तदमलं ब्रह्म निसर्गादेव बोधवत्॥"

इत्यादिना परस्य ब्रह्मणो विष्णोः स्वरूपं स्वासाधारणमेव शुभाश्रय इत्युक्तम्। अतोऽत्र न भेदापलापः प्रतीयते॥

## अद्वैतिनां महासिद्धान्तः

### "प्रत्यस्तमितभेदमि"त्यादेः प्रत्यगभिन्नपरमात्मपरत्वमेव

अयं भावः—परं ब्रह्म स्वभावत एव निरस्तसमस्तविशेषम्, औपाधिकजगदुपादानत्व-सत्यकामत्वादिसकलकल्याणगुणकं बाधायां सामानाधिकरण्येन कृत्स्नस्य प्रपञ्चस्य ब्रह्मोपादेयस्य ब्रह्मव्यतिरेकेणाभावं चाभिप्रेत्यैव—

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्॥
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्॥"

इति विष्णुपुराणं वदति। "इदं च मूर्तामूर्तपरापरभेदेन परामूर्तम्, अपरामूर्तम्, परमूर्तम्, परामूर्तमिति विभक्तचतुर्विधब्रह्मसु तुरीयं ब्रह्मैव निरूपयति, न तु देव-मनुष्यादिप्रकृतिपरिणामविशेषासंसृष्टस्यात्मनः स्वरूपं तद्गतभेदराहित्येन तद्भेदवाचिदेवादिशब्दागोचरम्, ज्ञानैकसत्त्वैकलक्षणम्, स्वसंवेद्यम्, योगयुङ्मनसोऽगोचरं च मुक्तात्मस्वरूपमात्रं श्रीभाष्याभिमतम्, यतो मुक्तात्मस्वरूपमपि परमात्मनियम्यं न परामूर्तब्रह्मस्वरूपम्, न वा ब्रह्मसत्तां तन्मतरीत्याऽर्हति। अद्वैतमते

तु मुक्तात्म-परमात्मनोरभेदात्तु सर्वं लगति। इदं च सर्वप्रपञ्चापलापनं तत्परमात्माभिन्नत्वं विना न संभवति। न चात्रापरमूर्तं ब्रह्म कर्ता क्षेत्रज्ञः; तस्य ब्रह्मत्वाभावात्, न वाऽचिद्वियुक्तज्ञानैकाकारं परामूर्तम्। अत एव न तुरीयं न परिशुद्धं मुक्तस्वरूपं विवद्यते; अन्यथाऽपरमूर्तरूपं ब्रह्म यदि क्षेत्रज्ञ एव, तर्हि परमूर्तस्य परशक्तिकर्माख्याविद्याशक्तित्रयाश्रयभगवदसाधारणस्योपपादनानन्तरं तस्यैव शक्तित्रयशून्यस्य निरूपणं कर्तव्यम्, इति प्रत्यगात्मनस्तुरीयतया परिगणनं नोपपद्यते, इति भेदापलापेनैव प्रकरणमिदं योजनीयम्, यतो ज्ञानस्वरूपत्वादिकं महावाक्यतात्पर्यविषयस्यैव, न तु शुद्धप्रत्यगात्ममात्रस्य॥

अत्र श्रीभाष्यकाराणां महापूर्वपक्षः
"ज्ञानस्वरूपमि"त्यादीनां निर्विशेष
वस्तुप्रतिपादनायोगः

"ज्ञानस्वरूपमि"त्यत्रापि ज्ञानव्यतिरिक्तस्यार्थजातस्य कृत्स्नस्य न मिथ्यात्वं प्रतिपाद्यते; ज्ञानस्वरूपस्यात्मनो देव-मनुष्याद्यर्थाकारेणावभासो भ्रान्तिरित्येतावन्मात्रवचनात्। न हि शुक्तिकाया रजततयाऽवभासो भ्रान्तिरित्युक्ते जगति कृत्स्नं रजतजातं मिथ्या भवति; जगद्-ब्रह्मणोः सामानाधिकरण्येनैक्यप्रतीतेः॥

ब्रह्मणो ज्ञानस्वरूपस्यार्थाकारता भ्रान्तिरित्युक्ते सत्यर्थजातस्य कृत्स्नस्य मिथ्यात्वमुक्तं स्यादिति चेत्, तदसत्; अस्मिन् शास्त्रे परस्य ब्रह्मणो विष्णोर्निरस्ताज्ञानादिनिखिलदोषगन्धस्य समस्तकल्याणगुणात्मकस्य महाविभूतेः प्रतिपन्नतया तस्य भ्रान्तिदर्शनासंभवात्। सामानाधिकरण्येनैक्यप्रतिपादनं च बाधासहम्, अविरुद्धं चेत्यनन्तरमेवोपपादयिष्यते। अतोऽयमपि श्लोको नार्थस्वरूपस्य बाधकः॥

तथाहि—"यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व। तद् ब्रह्म" इति जगज्जन्मादिकारणं ब्रह्मेत्यवसिते सति—

"इतिहास-पुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रतरिष्यति॥"

इति शास्त्रेणार्थस्येतिहास-पुराणाभ्यामुपबृंहणं कार्य-मिति विज्ञायते। उपबृंहणं नाम विदितसकलवेद-तदर्थानां स्वयोगमहिमसाक्षात्कृतवेदतत्त्वार्थानां वाक्यैः स्वावगत-वेदवाक्यार्थव्यक्तीकरणम्। सकलशाखागतस्य वाक्यार्थ-स्याल्पभागश्रवणाद् दुरवगमत्वेन तेन विना निश्चयायोगा-दुबृंहणं हि कार्यमेव॥

तत्र पुलस्त्य-वसिष्ठवरप्रदानलब्धपरदेवतापारमार्थ्य-ज्ञानवतो भगवतः पराशरात् स्वावगतवेदार्थोपबृंहणमि-च्छन् मैत्रेयः परिपप्रच्छ—

"सोऽहमिच्छामि धर्मज्ञ श्रोतुं त्वत्तो यथा जगत्।
बभूव भूयश्च यथा महाभाग भविष्यति॥
यन्मयं च जगद् ब्रह्मन् यतश्चैतच्चराचरम्।
लीनमासीद्यथा यत्र लयमेष्यति यत्र च॥"

इत्यादिना। अत्र ब्रह्मस्वरूपविशेष-तद्विभूतिभेदप्रकार-तदाराधनस्वरूप-फलविशेषाश्च पृष्टाः। ब्रह्मस्वरूपविशेष-प्रश्नेषु "यतश्चैतच्चराचरमि"ति निमित्तोपादानयोः पृष्टत्वात् "यन्मयमि" त्यनेन सृष्टि-स्थिति-लयकर्मभूतं जगत् किमात्मकमिति पृष्टम्। तस्य चोत्तरम् "जगच्च स" इति। इदं च तादात्म्यमन्तर्यामिरूपेणात्मतया व्याप्तिकृतम्, न तु व्याप्य-व्यापकयोर्वस्त्वैक्यकृतम्; "यन्मयमि"ति प्रश्नस्योत्तरत्वात्तु 'जगच्च सः' इति सामानाधिकरण्यस्य॥'

"यन्मयमि"ति मयडत्र न विकारार्थः; पृथक् प्रश्नवै-यर्थ्यात्। नापि प्राणमयादिवत् स्वार्थिकः; "जगच्च सः" इत्युत्तरानुपपत्तेः। तदा हि विष्णुरेवेत्युत्तरमभविष्यत्। अतः प्राचुर्यार्थ एव। "तत्प्रकृतवचने मयट्" इति मयट्। कृत्स्नं च जगत् तच्छरीरतया तत्प्रचुरमेव। तस्मात् "यन्म-यमि" त्यस्य प्रतिवचनम्—"जगच्च सः" इति सामानाधि करण्यं जगद्-ब्रह्मणोः शरीरात्मभावनिबन्धनमिति निश्ची-यते; अन्यथा निर्विशेषवस्तुप्रतिपादनपरे शास्त्रेऽभ्युपगम्य-माने सर्वाण्येतानि प्रश्न-प्रतिवचनानि न संगच्छन्ते, तद्वि-वरणरूपं कृत्स्नं च शास्त्रं न संगच्छते॥

तथाहि सति प्रपञ्चभ्रमस्य किमधिष्ठानमित्येवं-रूपस्यैकस्य प्रश्नस्य निर्विशेषज्ञानमात्रमित्येवंरूपमेवोत्तरं स्यात्। जगद्ब्रह्मणोरेकद्रव्यत्वपरे च सामानाधिकरण्ये सत्यसङ्कल्पत्वादिकल्याणगुणैकतानता, निखिलहेयप्रत्य-नीकता च बाध्येत, सर्वाशुभास्पदं च ब्रह्म भवेत्। आत्म-शरीरभाव एवेदं सामानाधिकरण्यं मुख्यवृत्तमिति स्थाप्यते। अतः—

विष्णोः सकाशादुद्भूतं जगत् तत्रैव च स्थितम्॥
स्थिति-संयम-कर्ताऽसौ जगतोऽस्य जगच्च सः॥

इति संग्रहेणोक्तमर्थं "परः पराणामि" त्यारभ्य विस्त-रेण वक्तुं परब्रह्मभूतं भगवन्तं विष्णुं स्वेनैव स्वरूपेणा-वस्थितम्, "अविकारायेति" श्लोकेन प्रथमं प्रणम्य, तमेव हिरण्यगर्भ-स्वावतार-शङ्कररूपत्रिमूर्ति-प्रधान-काल-क्षेत्रज्ञसमष्टिरूपेणावस्थितं च नमस्करोति। तत्र "ज्ञान-स्वरूपमि" त्ययं श्लोकः क्षेत्रज्ञव्यष्ट्यात्मनाऽवस्थितस्य परमात्मनः स्वभावमाह। तस्माद् न निर्विशेषवस्तु-प्रतीतिः॥

यदि निर्विशेषज्ञानरूपब्रह्माधिष्ठानभ्रमप्रतिपादनपरं शास्त्रम्, तर्हि—

"निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः।
कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते॥"
"शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः॥
भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता॥

इति चोद्यम् परिहारश्च न घटते। तथाहि सति — निर्गुणस्य ब्रह्मणः कथं सर्गादिकर्तृत्वम्? न ब्रह्मणः पारमार्थिकः सर्गः, अपि तु भ्रान्तिपरिकल्पितः, इति चोद्य-परिहारौ स्याताम्॥

उत्पत्त्यादिकार्यं सत्त्वादिगुणयुक्तापरिपूर्णकर्मवश्येषु दृष्टम्, इति सत्त्वादिगुणरहितस्य परिपूर्णस्याकर्मवश्यस्य कर्मसंबन्धानर्हस्य कथं सर्गादिकर्तृत्वमभ्युपगम्यत इति चोद्यम्, दृष्टसकलविसजातीयस्य ब्रह्मणो यथोदितस्वभाव-

स्यैव जलादिविसजातीयस्याग्न्यादेरौष्ण्यादिशक्तियोगवत् सर्वशक्तियोगो न विरुध्यत इति परिहारः ॥

"परमार्थस्त्वमेवैकः" इत्याद्यपि न कृत्स्नस्यापारमार्थ्यं वदति, अपि तु कृत्स्नस्य तदात्मकतया तद्व्यतिरेकेणावस्थितस्यापारमार्थ्यम् । तदेवोपपादयति—

"तवैष महिमा येन व्याप्तमेतच्चराचरम् ।"

इति ।

येन त्वयेदं चराचरं व्याप्तम, अतस्त्वदात्मकमेवेदं सर्वम्, इति त्वदन्यः कोऽपि नास्ति । अतः सर्वात्मतया त्वमेवैकः परमार्थः। अत इदमुच्यते—तवैष महिमा, या सर्वव्याप्तिः—इति; अन्यथा तवैषा भ्रान्तिरिति वक्तव्यम्, "जगतः पते त्वमि"त्यादीनां पदानां लक्षणा च स्यात्, लीलया महीमुद्धरतो भगवतो महावराहस्य स्तुतिप्रकरणविरोधश्च ॥

यतः कृत्स्नं जगत् ज्ञानात्मना त्वयाऽऽत्मतया व्याप्तत्वेन तव मूर्तम्, तस्मात् त्वदात्मकत्वानुभवसाधनयोगविरहिण एतत् केवलदेव-मनुष्यादिरूपमिति भ्रान्तिज्ञानेन पश्यन्तीत्याह—"यदेतद् दृश्यते" इति । न केवलं वस्तुतस्त्वदात्मकं जगत् देव-मनुष्याद्यात्मकमिति दर्शनमेव भ्रमः, ज्ञानाकाराणामात्मनां देव-मनुष्याद्यर्थाकारत्वदर्शनमपि भ्रमः इत्याह—"ज्ञानस्वरूपमखिलम्" इति ॥

ये पुनर्बुद्धिमन्तो ज्ञानस्वरूपात्मविदः, सर्वस्य भगवदात्मकत्वानुभवसाधनयोगयोग्यपरिशुद्धमनसश्च, ते देव-मनुष्यादिप्रकृतिपरिणामविशेषशरीररूपमिदमखिलं जगत् शरीरातिरिक्तज्ञानस्वरूपात्मकम, त्वच्छरीरं च पश्यन्तीत्याह—"ये तु ज्ञानविदः" इति; अन्यथा श्लोकानां पौनरुक्त्यम्, पदानां लक्षणा, अर्थविरोधः, प्रकरणविरोधः, शास्त्रतात्पर्यविरोधश्च ॥

"तस्यात्मपरदेहेषु सतोऽप्येकमयम" इत्यत्र सर्वेष्वात्मसु ज्ञानैकाकारतया समानेषु सत्सु देव-मनुष्यादिप्रकृतिपरिणामविशेषरूपपिण्डसंसर्गकृतमात्मसु देवाद्याका-

रेण द्वैतदर्शनमतथ्यमित्युच्यते। पिण्डगतमात्मगतमपि द्वैतं न प्रतिषिध्यते। देव-मनुष्यादिविविधविचित्रपिण्डेषु वर्तमानं सर्वमात्मवस्तु सममित्यर्थः। यथोक्तं भगवता—"शुनि चैव श्वपाके च पण्डिताः समदर्शिनः" "निर्दोषं हि समं ब्रह्म" इत्यादिषु; "तस्यात्म-परदेहेषु सतोऽपी"ति देहातिरिक्ते वस्तुनि स्वपरविभागस्योक्तत्वात्॥

"यद्यन्योऽस्ति परः कोऽपि" इत्यत्रापि नात्मैक्यं प्रतीयते; 'यदि मत्तः परः कोऽप्यन्यः' इत्येकस्मिन्नर्थे परशब्दान्यशब्दयोः प्रयोगायोगात्। तत्र परशब्दः स्वव्यतिरिक्तात्मवचनः। अन्यशब्दस्तस्यापि ज्ञानैकाकारत्वादन्याकारत्वप्रतिषेधार्थः॥

एतदुक्तं भवति—यदि मद्व्यतिरिक्तः कोऽप्यात्मा मदाकारभूतज्ञानाकारादन्याकारोऽस्ति, तदाऽहमेवमाकारः, अयं चान्यादृशाकार इति शक्यते व्यपदेष्टुम्। न चैवमस्ति; सर्वेषां ज्ञानैकाकारत्वेन समानत्वादेवेति॥

"वेणुरन्ध्रविभेदेन" इत्यत्राप्याकारवैषम्यमात्मनां न स्वरूपकृतम्, अपितु देवादिपिण्डप्रवेशकृतमित्युपदिश्यते, नात्मैक्यम्। दृष्टान्ते चानेकरन्ध्रवर्तिनां वाय्वंशानां न स्वरूपैक्यम्, अपि त्वाकारसाम्यमेव। तेषां वायुत्वेनैकाकाराणां रन्ध्रभेदनिष्क्रमणकृतो हि षड्जादिसंज्ञाभेदः। एवमात्मनां देवादिसंज्ञाभेदः। यथा तैजसाप्य-पार्थिवद्रव्यांशभूतानां पदार्थानां तत्तद्द्रव्यत्वेनैक्यमेव, न स्वरूपैक्यम्, तथा वायवीयानामंशानामपि स्वरूपभेदोऽवर्जनीयः॥

"सोऽहं स च त्वम्" इति सर्वात्मनां पूर्वोक्तं ज्ञानाकारत्वं तच्छब्देन परामृश्य तत्सामानाधिकरण्येना'हं' 'त्वमि'त्यादीनामर्थानां ज्ञानमेवाकार इत्युपसंहरन् देवाद्याकारभेदेनात्मसु भेदमोहं परित्यजेत्याह; अन्यथा देहातिरिक्तात्मोपदेश्यस्वरूपे 'अहं' 'त्वम' 'सर्वमेतदात्मस्वरूपमि'ति भेदनिर्देशो न घटते॥

'अहं त्वमा'दिशब्दानामुपलक्ष्येण सर्वमेतदात्मस्वरूपमित्यनेन सामानाधिकरण्यादुपलक्षणत्वमपि न संग-

च्छते। सोऽपि यथोपदेशमकरोदित्याह "तत्याज भेदं परमार्थदृष्टिः"—इति। कुतश्चैष निर्णय इति चेत्, देहात्मविवेकविषयत्वादुपदेशस्य। तच्च—

"पिण्डः पृथग् यतः पुंसः शिरःपाण्यादिलक्षणः।"

इति प्रक्रमात्।

"विभेदजनकेऽज्ञाने" इति च नात्मस्वरूपैक्यपरम्, नापि जीव-परयोरात्मस्वरूपैक्यमुक्तरीत्या निषिद्धम्। जीव-परयोरपि स्वरूपैक्यं देहात्मनोरिव न संभवति। तथाच श्रुतिः—"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति" "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये। छायाऽऽतपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः॥" "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इत्याद्याः। अस्मिन्नपि शास्त्रे—

"स सर्वभूतप्रकृतिं विकारान्
गुणादिदोषांश्च मुने व्यतीतः।
अतीतसर्वावरणोऽखिलात्मा
तेनास्तृतं यद् भुवनान्तराले॥
"समस्तकल्याणगुणात्मकोऽसौ
परः पराणां सकला न यत्र।
क्लेशादयः सन्ति परावरेशे"

"अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते॥
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा॥"

इति, "भेदव्यपदेशात्," "उभयेऽपि हि भेदेनैनमधीयते" "भेदव्यपदेशाच्चान्यः," "अधिकं तु भेदनिर्देशात्" इत्यादिसूत्रेषु च; "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति" "प्राज्ञेनाऽऽत्मना संपरिष्वक्तः," "प्राज्ञेनात्मनाऽन्वारूढः" इत्यादिभिरुभयोरन्योन्यप्रत्यनीकाकारेण स्वरूपनिर्णयात्॥

नापि साधनानुष्ठानेन निर्मुक्ताविद्यस्य परेण स्वरूपेणैक्यसंभवः; अविद्याश्रयत्वयोग्यस्य तदर्हत्वासंभवात् । यथोक्तम्—

"परमात्मात्मनोर्योगः परमार्थ इतीष्यते ।
मिथ्यैतदन्यद् द्रव्यं हि नैति तद्द्रव्यतां यतः ॥"

इति । मुक्तस्य तु तद्धर्मतापत्तिरेवेति भगवद्गीतासूक्तम्—

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥"

इति । इहापि—

"आत्मभावं नयत्येनं तद् ब्रह्म ध्यायिनं मुने ।
विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा ॥"

इति । आत्मभावम् = आत्मनः स्वभावम् । न ह्याकर्षकस्वरूपापत्तिराकृष्यमाणस्य । वक्ष्यति च—"जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" "भोगमात्रसाम्यलिङ्गाच्च" "मुक्तोपसृप्यव्यपदेशाच्च" इति । "वृत्तिरपि" "जगद्व्यापारवर्जं समानो ज्योतिषा" इति ॥

द्रमिडभाष्यकारश्च—"देवतासायुज्यादशरीरस्यापि देवतावत् सर्वार्थसिद्धिः स्यात्"—इत्याह । श्रुतयश्च—"य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति" "ब्रह्मविदाप्नोति परम्" "सोऽश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चिता" "एतमानन्दमयमात्मानमुपसंक्रम्य । इमान् लोकान् कामान्नी कामरूप्यनुसंचरन्" "स तत्र पर्येति" "रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" "यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नाम-रूपे विहाय । तथा विद्वान्नाम-रूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" "तदा विद्वान् पुण्य-पापे विधूय निरञ्जनः परमं साम्यमुपैति" इत्याद्याः ॥"

परविद्यासु सर्वासु सगुणमेव ब्रह्मोपास्यम्, फलं चैकरूपमेव, अतो विद्याविकल्प इति सूत्रकारेणैव "आन-

न्दादयः प्रधानस्य" "विकल्पोऽविशिष्टफलत्वात्" इत्यादिषूक्तम् ॥

वाक्यकारेण च सगुणस्यैवोपास्यत्वम्, विद्याविकल्पश्चोक्तः—"युक्तं तद्गुणकोपासनात्" इति। भाष्यकृता व्याख्यातं च "यद्यपि सच्चित्तः" इत्यादिना। "ब्रह्म वेद ब्रह्मैव भवती"त्यत्रापि' "नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" "निरञ्जनः परमं साम्यमुपैति" "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादिभिरैकार्थ्यात् प्राकृतनाम-रूपाभ्यां विनिर्मुक्तस्य, निरस्ततत्कृतभेदस्य ज्ञानैकाकारतया ब्रह्मप्रकारतोच्यते। प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव; यथा 'सेयं गौरि'ति। अत्रापि—

"विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव।
प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः ॥"

इति परब्रह्मध्यानादात्मा परब्रह्मवत् प्रक्षीणाशेषभावनः=कर्मभावना, ब्रह्मभावना, भयभावनेति भावनात्रयरहितः प्रापणीय इत्यभिधाय—

"क्षेत्रज्ञः करणी ज्ञानं करणं तस्य वै द्विज।
निष्पाद्य मुक्तिकार्यं हि कृतकृत्यं निवर्तयेत् ॥"

इति करणस्य परब्रह्मध्यानरूपस्य प्रक्षीणाशेषभावनात्मस्वरूपप्राप्त्या कृतकृत्यत्वेन निवृत्तिवचनाद् यावत्सिद्ध्यनुष्ठेयमित्युक्त्वा—

"तद्भावभावमापन्नस्तदाऽसौ परमात्मना।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥"

इति मुक्तस्य स्वरूपमाह। तद्भावः=ब्रह्मणो भावः =स्वभावः, न तु स्वरूपैक्यम्; तद्भावभावमापन्न इति द्वितीयभावशब्दानन्वयात्, पूर्वोक्तार्थविरोधाच्च। यद्ब्रह्मणः प्रक्षीणाशेषभावत्वम्, तदापत्तिः=तद्भावभावापत्तिः। यदैवमापन्नः, तदाऽसौ परमात्मनाऽभेदी भवति= भेदरहितो भवति। ज्ञानैकाकारतया परमात्मनैकप्रकारस्यास्य तस्माद् भेदः=देवादिरूपः, तदन्वयोऽस्य कर्मरूपाज्ञान-

मूलः, न स्वरूपकृतः। स तु देवादिभेदः परब्रह्मध्यानेन मूलभूताज्ञानरूपे कर्मणि विनष्टे हेत्वभावाद् निवर्तते, इत्यभेदी भवति ॥

यथोक्तम्—

"एकस्वरूपभेदस्तु बाह्यकर्मप्रवृत्तिजः।
देवादिभेदेऽपध्वस्ते नास्त्यऽनावरणो हि सः ॥"

इति। एतदेव विवृणोति—

"विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ॥
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥"

इति। विभेदः = विविधो भेदः = देव-तिर्यङ्मनुष्यस्थावरात्मकः। यथोक्तं शौनकेनापि—

"चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः ॥"

इति। आत्मनि ज्ञानरूपे देवादिरूपविविधभेदहेतुभूतकर्माख्याज्ञाने परब्रह्मध्यानेनात्यन्तिकनाशं गते सति हेत्वभावादसन्तं परस्मात् ब्रह्मण आत्मनो देवादिरूपभेदं कः करिष्यतीत्यर्थः। "अविद्या कर्मसंज्ञाऽन्या" इति ह्यत्रैवोक्तम् ॥

"क्षेत्रज्ञं चापि मां विद्धि" इत्यादिनाऽन्तर्यामिरूपेण सर्वस्यात्मतयैक्याभिधानम्; अन्यथा "क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः" इत्यादिभिर्विरोधः। अन्तर्यामिरूपेण सर्वेषामात्मत्वं तत्रैव भगवताऽभिहितम् "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।" इति, "सर्वस्य चाहं हृदि सन्निविष्टः" इति च। "अहमात्मा गुडाकेश सर्वभूताशयस्थितः" इति च तदेवोच्यते। भूतशब्दो ह्यात्मपर्यन्तदेहवचनः। यतः सर्वेषमात्माऽयमात्मा. तत एव सर्वेषां तच्छरीरतया पृथगवस्थानं प्रतिपाद्यते—"न तदस्ति विना यत् स्यादि"-ति। भगवद्विभूत्युपसंहारश्चार्यामिति तथैवाभ्युपगन्तव्यम्। तत इदमुच्यते—

"यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥"

"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥"

इति । अतः शास्त्रेषु न निर्विशेषवस्तुप्रतिपादनमस्ति, नाप्यर्थजातस्य भ्रान्तत्वप्रतिपादनम्, नापि चिदचिदीश्वराणां स्वरूपभेदनिषेधः ॥

अत्राद्वैतिनां महासिद्धान्तः

"ज्ञानस्वरूपमि"त्यादीनां निर्विशेष-
प्रपञ्चमिथ्यात्वादिपर्यवसानम्

विष्णुपुराणे हि ज्ञानस्वरूपत्वं तुरीयस्य वर्ण्यते । ज्ञानस्वरूपत्वं हि ज्ञानैकस्वरूपत्वं तस्य निर्विषयत्वं व्यञ्जयति । उपपादि च स्वरूपज्ञानस्य निर्विषयतैकस्वभावत्वम्, सविषयस्वभावत्वं च धर्मभूतज्ञानस्य ॥

तत्र परस्य ब्रह्मणः परमूर्तस्य गुणाश्रयत्वे, तद्दृष्ट्या भेदानपलापे च न विसंवादः, तुरीयदृष्ट्या तु भेदापलापोऽवर्जनीयः । तत्र शुक्तिकाया रजततयाऽवभासो भ्रान्तिः, इति तत्राध्यारोपितं रजतमात्रं मिथ्या, न तु शुक्तावनारोपितमन्यद्, व्यावहारिकमपि शुक्तिरजतवत् मिथ्या; सर्वेषां शुक्तावनारोपात् । तत्रानारोपितानामन्येषां रजतानां व्यवहारकालेऽबाधितानां सत्त्वादिति युक्तम्, संविन्मात्रस्य तु स्वव्यतिरिक्तकृत्स्नप्रपञ्चाधिष्ठानत्वात् तस्य देव-मनुष्याद्याकारेण, किं बहुना ? "सर्वं खल्विदं ब्रह्म"ेति तद्व्यतिरिक्तसर्वात्मनाऽवभासो भ्रान्तिरित्युक्तौ तद्व्यतिरेकेण सर्वापलापोऽवश्यमेव स्वीकर्तव्यः ॥

विष्णुपुराणं हि विष्णोर्निरस्ताज्ञानादिदोषगन्धवत्त्वम्, तत एवाज्ञानप्रयुक्तसदादिभेदशून्यत्वं च प्रतिपादयद् बाधायामेव सामानाधिकरण्यं जगद्-ब्रह्मणोरभिप्रैति, इति "प्रत्यस्तमितभेदं यत्" इति श्लोकोक्तभेदापलाप एव तदर्थः ॥

इदमनेन ज्ञायते—यत् "यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत् प्रयन्त्यभिसंविशन्ति" इति श्रुतिः ब्रह्मणोऽभिन्ननिमित्तोपादानताम्, तेन विवर्तविधया सर्वेषां भूतानां तत्प्रयोजकेनाज्ञानेन सह बाधं च बोधयति, इति तदेकवाक्यतया पूर्वोक्तविधया निरूपयत् सर्वप्रपञ्चापलापेन, निर्विशेषसन्मात्र एव "आनन्दो ब्रह्मेति व्यजानात्" इत्युपसंहारवशात् तात्पर्यं व्यञ्जयति, इति तदुपबृंहणमेव विष्णुपुराणस्य कृत्यम्, न व्याख्यानमात्रम् । अत एवार्थवादाधिकरणे विविच्यते—'इतिहास-पुराणानां तत्त्वान्वाख्याने तात्पर्यम्, नोपाख्यानांशे' इति ॥

सति चैवं "परमार्थस्त्वमेवैकः" इति परमात्मातिरिक्तस्य मिथ्यात्वं विष्णुपुराणे प्रतिपाद्यते। न चेदं कृत्स्नस्य जगतस्तदात्मकतया तद्व्यतिरेकेणावस्थितस्यैव पारमार्थ्यपरम्; अशब्दार्थत्वात्, क्लिष्टकल्पनाच्च॥

"तवैष महिमा येन व्याप्तमेतच्चराचरम्।"

इति त्वधिष्ठानविधया सर्वव्याप्तिरधिष्ठानस्वभावनिबन्धनेत्यवगमयति। सर्वात्मत्वं हि ब्रह्मणो नान्यथोपपद्यते। न ह्यधिष्ठानस्यापि स्वोपादानतादशायां न सर्वशेषित्वम्, येन "जगतः पते" इत्यादिभेदव्यपदेशो विरुध्येत; भेदापलापो ह्यखण्डाकारवृत्त्युपधानदशायामेव। इदमेवाभिप्रेत्य विष्णुपुराणम्—

"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥
परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते।
यदेतद् दृश्यते मूर्तमेतद् ज्ञानात्मनस्तव॥
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः।
ज्ञानस्वरूपमखिलं जगदेतद् न संशयः॥
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते जगतीतले।
ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत्॥
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर।
तस्यात्म-परदेहेषु सतोऽप्येकमयं हि तत्॥
विज्ञानं परमार्थं हि द्वैतिनोऽतथ्यदर्शिनः।
सोऽहं स च त्वं स च सर्वमेतदा-
त्मस्वरूपं त्यज भेदमोहम्।
इतीरितस्तेन स राजवर्य-
स्तत्याज भेदं परमार्थदृष्टिः॥
"विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥"
"यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम।
तदेवाहमयं चान्यो वक्तुमेवमपीष्यते॥"

इति। अत्र ज्ञानस्वरूपस्य पारमार्थ्यम्, तस्यैवार्थात्मनाऽविद्यावतां भ्रमः, अर्थानां स्वरूपतोऽभावः, सच्चिदात्मना दृश्यमात्रस्य भानम्, अबुद्धीनामज्ञानामेव 'सन् घटः' इत्यादिविकल्पात्मना प्रतीतिः, प्राप्ताख-

ण्डाकारसाक्षात्काराणां तु ज्ञानस्वरूपव्यतिरेकेण जगतोऽभावः, संविद एवात्मनोऽहमर्थात्मनौपाधिकेन भेदेन भेदप्रतीतावपि, स्वरूपतः सर्वोपाधिविगलितावस्थायामैक्यम्, तत्रात्मनः स्वरूपतोऽपि भेददर्शनस्य भ्रमत्वम्, अयम्, अहम्, त्वमित्यादिव्यवहारस्यासत्यत्वम्, सर्वस्यैकात्मस्वरूपव्यतिरेकेणाभावेन भेदज्ञानस्य मोहरूपत्वेन त्याज्यत्वम्, भेदप्रयोजकाज्ञाननाशे तत्प्रयोजकाभावाच्च तस्य सर्वथाऽसत्त्वमित्यादि प्रतिपाद्यमानमद्वैतमत एवोपपद्यते, इति निर्विशेषवस्तुप्रतिपादन एव शास्त्रस्य तात्पर्यम् ॥

तेन च जगद्-ब्रह्मणोर्बाधायां सामानाधिकरण्यम्, यावद्बाधं कल्याणगुणैकतानता च न विरुध्यते, इति यावद्बाधं सर्वा व्यवस्था सुलभा, इति ब्रह्मणः कल्याणगुणैकतानताबाधेऽपि नाशुभास्पदत्वापत्तिः; बाधदशायामशुभादीनां केषामप्यभावात्। न च जगद्-ब्रह्मणोः कार्यकारणभावे शरीर-शरीरिभावनिबन्धनं सामानाधिकरण्यं देहात्मनोः, मृद्-घटयोर्वा दृष्टचरम् ॥

शरीर-शरीरिभावो हि 'यस्य पृथिवी शरीरमि'त्यादिवाक्यसिद्धं पृथिव्याद्युपाध्युपहितत्वाभिप्रायमेव। अतोऽविकारब्रह्मविवर्तोपादानतामादायैव नमस्कार्यता परमात्मनो विवक्ष्यते, साचोपहितरूपेण ॥

न च व्यष्टिरूपेण, समष्टिरूपेण वा जीवोऽहमर्थ औपाधिकश्चिन्मात्रात्मा, येन क्षेत्रात्मनाऽवस्थितस्य परमात्मनः स्वभावः ज्ञानस्वरूपत्वमिति तदभिप्रायः स्यात्; निर्विशेषचैतन्यस्यैव जगदुपादानत्वात्, तदधिष्ठानत्वस्य चाविद्याविषयत्वनिबन्धनत्वात्, अविद्याया अप्युपादानत्वपक्षेऽप्युपहितस्यापि निर्गुणस्यावरणावस्थायामुपादानत्वस्वीकारात्, तन्निमित्तकारणत्वेऽपि निर्विशेषस्यैव विवर्तोपादानत्वाच्च। अतः—

"निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः।
कथं सृष्ट्यादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते ॥"

इति चोद्यम्,

"शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ॥
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥"

इति परिहारश्चाद्वैत एव घटते। श्रीभाष्यमते त्वप्रमेयस्य निर्गुणस्य ब्रह्मण एवाप्रसिद्धत्वात्, जगत्कारणत्वस्यापि चिदचिच्छरीरक-विशिष्ट

ब्रह्मण एव स्वीकारात्, केवलायाः सूक्ष्माया अचितः, केवलस्य ब्रह्मणो वोपादानत्वस्यास्वीकारात्, अचिन्मात्रकारणत्वे ब्रह्माभिन्ननिमित्तोपादानत्वस्य, विवर्तोपादानतायाश्चास्वीकारेण परिणामकारणताया एव स्वीकारे निर्विकारश्रुतिविरोधस्य, भास्करमतप्रवेशस्य चापत्तेश्च न चोद्यम्, उत्तरं वा जाघटीति, अद्वैतमते तु निर्गुणस्याप्रमेयस्यापि मायाश्रयविषयस्याधिष्ठानत्वेनोपादानत्वम्, अविकारत्वमुभयमुपपद्यते, इति चोद्य-परिहारयोर्नाऽसामञ्जस्यम् ॥

तत्र सर्गादिकर्तृत्वं निर्विशेषस्य वा, मायोपहितचैतन्यस्य वा। तच्च पारमार्थिकम्, व्यावहारिकं वेति त्वन्यदेतत्। सगुणत्वेऽपि कारणत्वं ब्रह्मणः श्रीभाष्यमतेऽपि नास्ति; सूक्ष्मायाश्चितः, अचितो वा कारणत्वं तु ब्रह्मणोऽपि नोपपादयितुं शक्यते; शरीर-शरीरिभावेन ब्रह्मसूक्ष्मचिदचितोरुभयोरपि कारणत्वेन ब्रह्मकारणत्वं त्वद्वैतमतेऽप्यौपाधिकस्य तस्य संभवात् समानम् ॥

तत्राद्वैताभिमतमुपादानत्वमविद्याविषयत्वमात्रमपेक्षते, न तु सगुणत्वम्, अन्यद्वा। अप्रमेयत्वं श्रीभाष्यमते ब्रह्मणो बाधितम्, अद्वैतमते स्वप्रकाशत्वादधिष्ठानतावस्थायामप्यप्रमेयत्वम्; अखण्डाकारवृत्तिदशायां घटादावपि प्रमेयत्वाभावेन, अननुभाव्यत्वेन वाऽप्रमेयत्वात् ॥

तत्र श्रीभाष्यमते ब्रह्मणः केवलस्य, विकारापत्त्या न परिणामशक्तिरपि, इति शक्तिवशात् स्रष्टृत्वमित्युत्तरासाङ्गत्यं तु दुष्परिहरं दूषणम् ॥

"परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते ॥"

इति तदतिरिक्तस्य कृत्स्नस्यैवाऽपारमार्थ्यं बोधयति। अत एव "नान्योऽस्ति" इति वाक्यशेषः। वस्तुतस्तु—कृत्स्नस्याप्यस्यापारमार्थ्यं तद्व्यतिरेकेणाभाव एव। स च मिथ्यात्वमेव। तत्तु तादात्म्येनावस्थितस्यैव तदपृथक्सिद्धत्वात् पृथग्रूपेणावस्थानाभावमात्रम्, "नान्योऽस्ती"ति स्वरूपत एव ह्यन्यस्याभावो बोध्यते। न च पृथक्सिद्धत्वे विशेषणस्य, शरीरस्य वा विशेष्येण शरीरिणां वाऽत्यन्तमभेदः ॥

तत्र जगद् वस्तुतो न ब्रह्मात्मकमिति सम्प्रतिपन्नम्। तत्र ब्रह्मात्मकत्वमध्यारोपनिबन्धनम्, न तु स्वत इत्यद्वैतसिद्धान्तः, श्रीभाष्यसिद्धान्तस्तु परमात्मात्मकस्य जगतो देव-मनुष्यात्मकस्य तत्तद्रूपेण दर्शनम्, एषां ज्ञानाऽऽकाराणामात्मनां देव-मनुष्याद्याकारतया दर्शनमेव च भ्रमः। देहादीनां परमात्मशरीरतया ज्ञानमेव तु परमात्मात्मकत्वमिति विवेकः, परन्तु देहा-

दीनामप्य'हमि'ति जीवात्मकतयैव प्रतीतिर्वर्तते, इति तदपृथक्सिद्धमिति संप्रतिपन्नम् । अपृथक्सिद्धिः, तादात्म्यमिति चानर्थान्तरम् , इति तत्रापि भेददर्शनं यदि भ्रमः, तर्हि न भेदसत्यता संभवति, भेदांशे भ्रमत्वे तु स मिथ्येति वक्तव्यम् ॥

तत्र शरीरभेदेनात्मनामपि भेद इति सिद्धान्ते विष्णुपुराणमात्मद्वैतवादं स्वरूपतः समूलघातमुपहन्ति । न चैक्यं साम्यं चेत्यनर्थान्तरम् , येन ज्ञानैकाकारतया साम्यमात्रमेकत्वं स्यात् । सत्यम् ,

"शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥"

इत्यत्र साम्यदर्शनमेव प्रस्तुतम् ; तथापि कथं साम्यमात्मनां स्वरूपतः सम्भवति ? इति तत्रापि न साम्यमैक्यम्=ज्ञानैकाकारतया, न तु स्वरूपतः संभवति ; अन्यथा बद्धावस्थायामपि सर्वेषां ज्ञानैकाकारत्वाविशेषात् कथं पण्डितापण्डितविवेकः ? धर्मभूतज्ञानैकाकारतया धर्मभूतज्ञानानां कथमैक्यम् ? यद्येकविषयाकारतया, तर्हि श्रीभाष्यमते सर्वेषामात्मनां भिन्नत्वात् कथमेकविषयाकारतया साम्यम् ? न हि घटाद्याकारज्ञानानामेकाकारतया घटानां साम्यम् , ऐक्यव्यपदेशो वा कुत्रापि । न हि स्वरूप-ज्ञानयोरेकाकारत्वम् ॥

एतेन—

"यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ।"

इति श्लोकोऽपि–व्याख्यातः; अत्र परः, अन्य इति च पदद्वयं श्रूयते । तेन चान्योऽस्ति, परन्तु स न मत्तोऽन्यः, किन्त्वहमेवेति प्रतीयते ॥ भेदस्तु स्वाधिष्ठानकोपाधिभेदप्रयुक्तिमात्रेण, कल्पितशरीरभेदमात्रनिबन्धनो वा ॥

परमार्थतस्तु न जीवेश्वरभेदः; "तत्त्वमसी"ति तदभेदोपदेशादिति बोधनार्थमत्र पदद्वयम् , इति सत्यपि कल्पिते भेद औपाधिके, वस्तुतो जीव-ब्रह्मैक्यमेव शरीरादि-तत्तदुपाधिनिवृत्तौ ॥

श्रीभाष्यमते तु यदि मद्व्यतिरिक्तः कोऽप्यात्मा मदाकारभूतज्ञानाकारादन्याकारोऽस्ति, तदाऽहमेवमाकारः, अयं चान्याकार इति शक्यते व्यपदेष्टुम् । न चैवमस्ति; सर्वेषां ज्ञानैकाकारतायाः समत्वात् , इति प्रकृतः श्लोको विक्रियते । तत्र "मत्तः परः" इत्यस्य मद्व्यतिरिक्त इत्यर्थे न विसंवादः । 'कोप्यन्योऽस्ति' इत्यत्र त्वद्वैतसिद्धान्ते यथाश्रुतोऽर्थः, श्रीभाष्यमते त्वन्यपदं तदाकारभूतज्ञानाकारातिरिक्तकारपरम् , इति तत्रान्यपदे क्लिष्टा कल्पना ॥

न च स्वरूपज्ञानात्मनामहमर्थानामहमहमित्याकारातिरिक्तः कोऽप्याकारः सम्भवति, येनाहमयम् , एषोऽहमित्याद्याकारभेदः स्यात् , इति सर्वेषामात्मनामहमाकारत्वात् यदि साम्यं विवक्ष्यते, तर्हि को वा विशेषो बद्धात्म-मुक्तात्मनाम् , इति मुक्त्यवस्थामादायैवात्मसमत्वमिति वा, आत्मैक्यमिति वा व्यवस्था न संभवति ॥

न च सर्वेषां बद्धानाम् , मुक्तात्मनां च साम्यम् ; बद्धानामपि वाऽहमाकाराणां परस्परमाकारसाम्येन समत्वव्यवहारः; अन्यथा सर्वत्रैकाकारेषु भिन्नेष्वप्यैक्यव्यपदेशापत्त्या जीवात्म-परमात्मनोरप्यहमाकारस्य "बहु स्यामि"त्यादिश्रुत्यनुसारेणावगमाद् जीवात्म-परमात्मैक्यव्यपदेशोऽपि स्वतः सिध्यति ॥

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥"

इत्युक्त्वा—

"यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ॥"
"सर्वभूतस्थितं यो मां भजत्येकत्वमाश्रितः ॥"

इत्युपदेशान्तरवैयर्थ्यमापाद्यते । धर्मभूतज्ञानाकारसाम्येन धर्मभूतज्ञानानां साम्यं स्यात् , न तु स्वरूपज्ञानानाम्, तद्द्वारा तद्विषयाणामिति व्यक्तमधस्तात् ॥

सर्वथा त्वाकारभेदेनौपाधिकेन संज्ञाभेदमात्रप्रयोजकेनोपहितानामात्मनामिव विगतोपाधिसम्बन्धानां परस्परम्, बद्ध-परमात्मनोरप्याकारसाम्येन साम्यापत्त्या—

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥"

इति ज्ञानाधीनभगवत्साधर्म्यवचनं विकसितावस्थज्ञानमुक्तमात्रविषयमसङ्गतं स्यात् । अवस्थाभेदस्तु मुक्तात्म-परमात्मनोर्यद्यपि समानः, परन्तु विकासस्यानित्यत्वापादकत्वाद् न तत्कल्पना संभवतीति व्यक्तमन्यत्र । अतो—

"विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ॥"

इत्यज्ञाननिवृत्तिप्रयुक्तनाशप्रतियोगित्वमात्मभेदस्य प्रतिपाद्यमानं नोपपद्यते । न चात्र भेददर्शनमात्रनिवृत्तिः

"आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥

इति भेदस्यैव बाधावगमात् ॥

अयमेव न्यायः—"तत्याज भेदं परमार्थदृष्टिः ।" इत्यत्रापि । तत्र—

"पिण्डः पृथग् मतः पुंसः शिरःपाण्यादिलक्षणः ॥"

इत्यात्मनः शरीरात् विवेकमात्रप्रक्रमस्तु देहात्माध्यासनिबन्धनतदैक्यज्ञानस्य भ्रमत्वं बोधयितुम्, भ्रमप्रयोजकविवेकाग्रहं निरसितुमेव वा ॥

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥" इति श्रुतिर्बद्धात्मनः, विविक्तप्रत्यगात्मनश्च भेदमादाय, न तु शुद्धप्रत्यगात्मनाम्, शोधिततत्त्वम्पदार्थयोर्वा, इति नेयं श्रुतिः—"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये । छायाऽऽतपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः ॥" "अन्तः प्रविष्टः शास्ता जनानाम् ॥" "यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा ।" "उभयेऽपि हि भेदेनैनमधीयते" "भेदव्यपदेशाच्चान्यः" "अधिकं तु भेदनिर्देशात्" "य आत्मनि तिष्ठन्नात्मनोऽन्तरः" "प्राज्ञेनात्मना सम्परिष्वक्तः" इत्यादिश्रुत्यादयश्च जीवानाम्, जीवेश्वरयोः, बद्ध-मुक्तजीवयो; शोधितत्वम्पदार्थाशोधिततत्पदार्थाशोधितत्वम्पदार्थशोधिततत्पदार्थभेदपरा अपि न शोधित-तत्त्वम्पदार्थैक्यवादं बाधन्ते । मुक्तात्म-परमात्मनोर्ह्यैक्यमद्वैतसिद्धान्ते । तदुक्तम्—

"परमात्मात्मनोर्योगः परमार्थ इतीष्यते ॥
मिथ्यैतदन्यद् द्रव्यं हि नैति तद्द्रव्यतां यतः ॥"

इति । अत्र योगशब्द ऐक्यपरः, इति जीवात्म-परमात्मनोरैक्यं परमार्थ इतीष्यते । अत्रेष्यत इति प्रयोगात् तस्य स्वाभिप्रेतत्वं सूच्यते । कथं द्वयोरैक्यमिति शङ्कायामुत्तरार्धम् । तेन यतः—अन्यद् द्रव्यं तद्द्रव्यतामेतीति न संभवति । मिथ्याशब्दोऽत्रापह्नववचनः । अन्यद् द्रव्यमपि, सत्यम्, तद्द्रव्यतामेति, तस्यैव तदन्यत्वस्यौपाधिकत्वे, अन्यथा त्वैक्यमिति तु निष्कर्षः । अनेन च भिन्नोपाधिकानाम्, औपाधिकानौपाधिकयोश्च नैक्यम्; औपाधिकयोरेवोपाधिविगमे त्वैक्यं प्रतिष्ठितम् ॥

निष्कर्षस्तु—जीवेश्वरस्वरूपैक्यमेव मुक्तिः, इति तत्र तत्र जीवानाम्, जीवेश्वरयोश्च भेदप्रतीतिर्नाद्वैतवादं विहन्ति ॥

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥"

इति श्लोके—इदं ज्ञानम् = सत्त्वादिगुणविषयं ज्ञानमिति श्रीभाष्याशयः, भगवत्पादास्तु—त्रयोदशाध्यायोक्तक्षेत्र-क्षेत्रज्ञज्ञानप्रयोजकं ज्ञानसाधनमिति—व्याचक्षते ॥

तत्र द्वितीये फलवादश्चायं स्तुत्यर्थ इति भाष्यम् , प्रथमे तु—

"परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ॥
यद् ज्ञात्वा मुनयः सर्वे परां सिद्धिमुपागताः ॥"

इति 'पूर्वश्लोक इष्टप्राप्तिरुक्ता, अत्र त्वनिष्टनिवृत्तिरुच्यते, इति न पौनरुक्त्यम्' इति व्याचक्षाणा तात्पर्यचन्द्रिका 'साधर्म्यमागताः' इति साधर्म्यं पूर्वश्लोकोक्तपरसिद्धिः, तदनुवादेन "सर्गे तु नोपजायन्ते" इत्यनेनानिष्टनिवृत्तिं व्यनक्तीत्यभिप्रैति। उभयत्र साधर्म्यं भोगमात्रसाम्यम् , न तु "निरञ्जनः परमं साम्यमुपैति" इति श्रुत्युक्तं परमसाम्यम् , तत्त्वसाक्षात्कारजन्याज्ञाननिवृत्त्युपलक्षितब्रह्मभावो वा। उत्क्रान्त्यादिसापेक्षवैकुण्ठलोकावाप्त्युपहितभोगमात्रसाम्यरूपं मुख्यम् , गौणं वा मोक्षाख्यं फलम् ; ज्ञानसाधनप्रस्तावात् ॥

न च गुणतत्त्वज्ञानम् , ज्ञानसाधनं वा ब्रह्मज्ञानम् , येनात्र तत्फलं मुक्तिरेव स्यात् , इति नात्र मुक्तस्य तद्भावापत्तिरुच्यते। अद्वैतमते तु "जगद्व्यापारवर्जम्" इति सूत्रोपलक्षितगौणमुक्तेरेवोपासनासाध्याया भोगमात्रसाम्यरूपाया अत्र विवक्षणात् , तत्र च भेदगर्भाया मुक्तेः स्वीकाराच्च नेदं वचनं श्रुतप्रकाशिकोक्तज्ञानजन्यपराभिमतार्थप्रतिकूलम् ॥

अयमेव न्यायः—

"आत्मभावं नयत्येनं तद् ब्रह्म ध्यायिनं मुने।
विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा ॥"

"जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च" "भोगमात्रसाम्यलिङ्गाच्च "जगद्व्यापारवर्जं समानो ज्योतिषा" "देवतासायुज्यादशरीरस्यापि देवतावत् सर्वार्थसिद्धिः स्यात्" "इहात्मानमनुप्रविश्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति" "एतमानन्दमयमात्मानमुपसंक्रम्य। इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्" इत्यादिषु सर्वत्र सगुणोपासनातत्फलनिरूपणपरेषु, अन्येषु च; गौणमुक्तेरेवात्र निर्देशेनोपासनाफले भेदगर्भब्रह्मभावस्याविरोधात् ॥

"मुक्तोपसृप्यव्यपदेशाच्च" "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नाम-रूपे विहाय, तथा विद्वान् नाम-रूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" "तथा विद्वान् पुण्य-पापे विधूय निरञ्जनः परमं साम्यमुपैति" "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते ॥"

"तद्भावभावमापन्नस्तदाऽसौ परमात्मना ।
भवत्यभेदी भेदश्च तदज्ञानकृतो भवेत् ॥
एकस्वरूपभेदस्तु बाह्यकर्मप्रवृत्तिजः ।
देवादिभेदेऽपध्वस्ते नास्त्यनावरणो हि सः ॥"
"विभेदजनकेऽज्ञाने नाशमात्यन्तकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥"

"क्षेत्रज्ञं चापि मां विद्धि" इत्यादिवचनानि त्वद्वैतसिद्धान्तमेवोपबृंहयन्तीति व्यक्तं तत्र तत्र ॥

तत्र ब्रह्मणो निर्विशेषत्वासम्भवे भेदगर्भत्वं मोक्षस्य; तत्सम्भवे त्वज्ञानकृतभेदनिवृत्तिमात्रं ब्रह्मप्राप्तिः, मुख्यं तु मोक्षस्वरूपम्—"ब्रह्मविद् ब्रह्मैव भवती"ति श्रुतिसिद्धो ब्रह्मभाव एव। अज्ञाननिबन्धनाप्राप्तत्वभ्रमनिवृत्तिमात्रं तत्र प्राप्तिपदार्थ इति तु निष्कर्षः। अत्र प्रकरणे श्रीभाष्योदाहृतानि—"ब्रह्मविद् ब्रह्मैव भवति" "भवत्यभेदी भेदश्च तदज्ञानकृतो भवेत्" "देवादिभेदेऽपध्वस्ते नास्त्यनावरणो हि सः" "विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति" "चतुर्विधो विभेदोऽपि मिथ्याज्ञाननिबन्धनः" इति वचनानि स्पष्टमज्ञानकृतत्वम्, अज्ञाननाशनिबन्धननाशत्वं भेदस्य, वस्तुगत्या ब्रह्मभावस्यैव मोक्षत्वं च विशदयन्ति ॥

परविद्यासु सगुणमेव ब्रह्म जिज्ञास्यम्, फलं चैकरूपमेवेति तु स्वमतोपक्षेपमात्रम्, तदपि ब्रह्मनिर्विशेषत्वासम्भवं सिद्धवत्कृत्य, वस्तुतस्तूपनिषदां मुख्यतात्पर्यविषयो निर्विशेषं ब्रह्मैवेति सगुण-निर्गुणवाक्यबलाबलपर्यालोचने विशदीकृतमधस्तात् ॥

"एकस्वरूपभेदस्तु बाह्यकर्मप्रवृत्तिजः ।
देवादिभेदेऽपध्वस्ते नास्त्यनावरणो हि सः ॥"

इति तु भेदासंभवोऽनाद्यावरणनिवृत्तिमात्रनिबन्धनः, ब्रह्मणोऽनावृतावस्थैव मुक्तिः—

निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ॥"

इति वचनसिद्धेति गमयति ॥

"अज्ञानजं कर्मे"ति विष्णुपुराण एव कर्मणो न मूलाविद्यात्वम्, किन्तु तत्प्रयुक्तत्वेनैवाविद्यात्वमिति व्यक्तमधस्तात्, इति "अविद्याकर्मसंज्ञाऽन्ये"ति वचनमपि नाद्वैतसिद्धान्तविरोधि ॥

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत !"

इति वचनं तु सर्वक्षेत्रविविक्तस्य तद्वियुक्तिनिबन्धनमेवैकत्वम्, तस्यैव ब्रह्मणैक्यं च बोधयदनेकात्मवादस्य जीव-ब्रह्मभेदवादस्य च परिपन्थि, इति जीवेश्वरनिर्विशेषपर्यवसानमेव वेदान्तमुख्यतात्पर्यविषयः। तस्य सविशेषत्वं तु तदाश्रितविषयकाज्ञानकृततत्तदुपाधिकृतम्, निवृत्ते त्वज्ञाने स्वयं तदुपाधीनामपि निवृत्तत्वाद् निर्विशेषत्वे पर्यवस्यति। यथाच—

"सोऽहमिच्छामि धर्मज्ञ त्वत्तो जातं यथा जगत्।
बभूव भूयश्च यथा महाभाग भविष्यति॥
यन्मयं च जगद् ब्रह्मन् यतश्चैतच्चराचरम्।
लीनमासीद्यथा यत्र लयमेष्यति यत्र च।"

इत्यादिप्रश्नोत्तराणाम्, 'यन्मयमि'ति मयटश्च स्वारस्यमद्वैतवाद एव। अधिकं वेदान्तरक्षामणितोऽवगन्तव्यम्॥ किं बहुना? आदित आन्तं विष्णुपुराणमद्वैतानुगुणमेव।

तथाहि—विष्णुपुराणस्य षडंशाः। तत्र प्रथमेंऽशे मैत्रेयप्रश्नोत्तरे अद्वैत एव स्वरसे। ततस्तु परविद्याप्रतिपाद्यं प्रकृत्युपहितं ब्रह्मस्वरूपं प्रस्तुत्य, तस्य सत्त्वरजस्तमःप्रधानमायोपधानेन ब्रह्म-विष्णु-रुद्रात्मता प्रतिपादिता। तथाच त्रिमूर्त्यतिरिक्तो मायोपहितस्तटस्थलक्षणविधया भूतयोनिः, परमार्थतस्तु प्रधान-पुरुष-ब्रह्मणां त्रयाणामनादीनां प्रक्रमात्— "अक्षरात् परतः परः" इति निर्दिष्टं प्रधानानुपहितमेव मुख्यं तत्त्वमिति निर्धार्यते॥

तत्र—

"तन्निबोध यथा सर्गं भगवान् संप्रवर्तते।
नारायणाख्यो भगवान् ब्रह्मा लोकपितामहः॥"

इति सर्गावस्थं ब्रह्माणं नारायण-विष्ण्वादिपदैरनुकृष्य—

ब्रह्मस्वरूपी भगवाननादिः सर्वसंभवः।
अत्र चोदाहरन्तीमं श्लोकं नारायणं प्रति॥
"आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः॥"

इति नारायणपदार्थत्वमुपसंह्रियते। इदं चोपलक्षणम्—स्थिति-संहारावस्थस्य विष्णुरूपिणो, रुद्ररूपिणश्च, इति नारायणपदमुख्यार्थत्वमात्रेण न

त्रिमूर्त्यन्तर्गतस्य विष्णोरेवात्र पुराणे विष्णुपदार्थत्वम्, किन्तु मूर्तित्रितय-मूलतत्त्वस्य मायोपहितस्य, तस्यापि मूलतत्त्वस्य वा निर्विशेषब्रह्मण एव ब्रह्मपदेन विशिष्य प्रस्तूयमानस्य। ततश्च स्थित्यवस्थायां नारायणं विष्णुपदेनानुकृष्य तस्यैव लक्ष्मीः पत्नीति प्रतिपादनेन तयो-रुभयोरपि सर्वान्तर्यामित्वेन स्थितिनियामकत्वं स्त्रीपुरुषान्यतररूपेणा-वस्थेति विवृतम्। तथाच सर्वेषां नारायणपदमुख्यार्थत्वेऽपि स्थितिमतो विशिष्टमुपासने स्थानं मूर्तित्रये, परन्तु मुख्यं ब्रह्म मूर्तित्रयातीतं तुरीय-मेव। नारायणपदयौगिकार्थस्तु मुख्यो लोकपितामहो ब्रह्मैव॥

ततोऽसंप्रज्ञातसमाधिद्वारा प्रत्यगात्मावलम्बनम्, तत्पदार्थावलम्बनं च ज्ञानमनुक्रम्य,

"उभयोस्त्वविभागेन साध्य-साधनयोर्हि तत्।
विज्ञानमद्वैतमयं तद्भागोऽन्यो मयेरितः॥
ज्ञानं न यस्य वै तस्य विशेषो यो महामुने।
तन्निराकरणद्वारा दर्शितात्मस्वरूपवत्॥
निर्व्यापारमनाख्येयं व्याप्तिमात्रमनुत्तमम्।
आत्मसंयोगविषयं सत्तामात्रमलक्षणम्॥
प्रशान्तमभयं शुद्धं दुर्विभाव्यमसंश्रयम्।
विष्णोर्ज्ञानं तु यस्योक्तं तज्ज्ञानं ब्रह्मसंज्ञितम्॥"

इत्यादिना स्थितिकर्तुः प्रस्तुतस्य ज्ञानमयस्यापि मूलतत्त्वं सन्मात्रमद्वैतं निर्विशेषं ब्रह्मशब्दितमवतारितम्, यदेव—"अक्षरं तत् परं ब्रह्मे"ति चोपसंहृतम्॥

तच्चामूर्तस्य परस्य, मूर्तस्य तु परस्य हरि-विष्ण्वादिपदैरुपदेशस्तत्र तत्र दरीदृश्यते। ततोऽन्ते—

"आत्मानमस्य जगतो निर्लेपमगुणालयम्।
बिभर्ति कौस्तुभमणिं स्वरूपं भगवान् हरिः॥"

इत्यादिना कौस्तुभ-श्रीवत्स-गदा-शङ्ख-शार्ङ्ग-चक्र-वैजयन्ती-शरासि-कोश-रूपेण चिदचिदात्मकजीवात्म-प्रकृति-बुद्ध्यहङ्कार-मनः-पञ्चतन्मात्र-दशे-न्द्रिय-विद्याऽविद्यारूपेण निरूप्य—

"अस्त्र-भूषणसंस्थानं स्वरूपं रूपवर्जितम्।
बिभर्ति मायारूपोऽसौ श्रेयसे प्राणिनां हरिः॥"

इति वस्तुगत्या मूर्तस्यापि सविशेषस्य ब्रह्मणो विशेषा मायामयाः, इति प्रतिपाद्यते। तेन च पूर्वोदाहृतषष्ठांशवचनानुसारेण क्रमेण तत्तद्रूपराहित्येनानुसन्धानमेव मोक्षसाधनमिति प्रथमांश-षष्ठांशोपसंहाराभ्याम-वगम्यते ॥

द्वितीयांशेऽपि—

"स च विष्णुः परं ब्रह्म यतः सर्वमिदं जगत् ।
जगल्लयो यत्र चेदं लयमेष्यति सर्वशः ॥
तद् ब्रह्म परमं धाम सदसत्परमं पदम् ।
यस्य सर्वमभेदेन यतश्चैतच्चराचरम् ॥
स एव मूलप्रकृतिः व्यक्तरूपो जगच्च सः ।"

इति प्रथमांशोपक्रमक्रमेण सर्वोपादानं ब्रह्म प्रस्तुत्य, तस्य मूलप्रकृतित्वं व्यक्तरूपेण जगद्रूपत्वं चानुसन्दधानः कार्य-कारणभावनिबन्धनम् "जगच्च सः" इति वचनं विशदीकुर्वन् पराशरोऽन्तेऽहमर्थम्—

"एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः ।
जन्म-वृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः ॥
यस्यात्म-परदेहेषु सतोऽप्येकमयं हि यत् ।
विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः ॥
वेणुरन्ध्रप्रभेदेन भेदः षड्जादिसंज्ञितः ।
अभेदो व्यापिनो वायोस्तस्यैवं परमात्मनः ॥"

इत्येकत्व-सर्वगतत्वौपाधिकभेदभिन्नत्वादिभेदेनोपदिश्य निर्विशेष-चिन्मात्रं जीवात्मस्वरूपं परमार्थस्वरूपमिति विविनक्ति ॥

तृतीय-तुरीयांशौ मन्वन्तर-वंशानुचरितयोर्विस्तरेणोपपादनप्रसङ्गेन वर्णाश्रमधर्मादीन् विवेचयतः ॥

पञ्चमांशस्तु भगवतः श्रीकृष्णस्य जन्मादि-वैकुण्ठलोकप्राप्त्यन्तचरित-वर्णनप्रसङ्गेन भगवतो निर्विशेषमेव मुख्यं तत्त्वमिति प्रतिपादयतीति, तत्राक्रूरस्तुतिसमालोचने व्यक्तम् ॥

अत्रापि परापरविद्याया विस्तरेणादौ समाकलनं निर्विशेषस्य, विश्वरूपस्य वा, तदपि धारणार्थं कल्पितमेवेत्यक्रूरस्तुतिप्रसङ्गेन परमात्मनोऽवाच्यत्वादिकं व्यवस्थापितम्। अत्रापरविद्यायाः शब्दब्रह्मरूपेण पृथक्-करणाद् तयोः परस्परसम्बन्धाभावः, परविद्यार्थस्याशब्दगोचरत्वं च

विशदीक्रियते । "प्रकृतेः परः" इति "अक्षरात् परतः परः" इति च प्रकृतिसम्बन्धविनिर्मोको निष्कृष्यते ॥

किं बहुना ? द्वितीयांशोपसंहारे—ऋभु-निदाघसंवादे—

"तदेतदुपदिष्टं ते संक्षेपेण महामतम् ।
परमार्थं सारभूतं यदद्वैतमशेषतः ॥
एवमुक्तो ययौ विद्वान्निदाघं स ऋभुर्गुरुः ।
निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत् ॥
सर्वभूतान्यभेदेन ददृशे स तदात्मनः ।
एवं ब्रह्मपरो मुक्तिमवाप परमां द्विजः ॥
सित-नीलादिभेदेन यथैकं दृश्यते नभः ।
भ्रान्तिदृष्टिभिरात्मापि तथैकः सन् पृथक् पृथक् ।"

"सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥"

इति न केवलं परमात्मा, किंतु जीवात्माऽपि संविन्मात्रम् , च नाना, किन्तूपाधिभेदाद् भिन्न इव भातीति डिण्डिमयति । सर्वेषामेतेषां वचनानामद्वैतपरतैवाऽऽदित आन्तं प्रवृत्तानामपि न केवलाद्वैते तात्पर्यम् , किन्तु विशिष्टाद्वैत एवेति वादो घटस्य पटीकरणमेव, यदागमानां सहस्राणामपि दुःशकम् ॥

सर्वथा तु विष्णुपुराणं बहुषु स्थलेषु जगतां भ्रान्तिदर्शनत एव स्थितम्—

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।
वचसामप्यसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ।"

इति निर्विशेषे संविन्मात्रे ब्रह्मशब्दं संकेतयदज्ञानकल्पितं जगद् ब्रह्मणीति विवेचयति ॥

सर्वथा तु निर्विशेषे स्वयंप्रकाशे वस्तुनि दोषकल्पितेश्वरे मिथ्याभूतानन्तविकल्पे जगदारोपेणैव ब्रह्मणः सगुणत्वम । दोषश्च तत्र स्वरूपतिरोधान-विविधविचित्रविक्षेपकरी, सदसदनिर्वचनीया, अनाद्यविद्या । सा चावश्यमभ्युपगमनीया; "अनृतेन हि प्रत्यूढाः" इत्यादिश्रुतिभिः, "तत्त्वमसी"त्यादिवाक्यावगतजीव-ब्रह्मैक्यानुपपत्त्या च ॥

सा हि न सती, भ्रान्ति-बाधयोरयोगात् , नाप्यसती; ख्याति-बाधयोरयोगात् । अतः कोटिद्वयविनिर्मुक्ताऽनिर्वचनीयेति तत्त्वविद इति व्यवस्थाऽत्राऽनुसन्धेया ॥

## अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

### अविद्याऽऽश्रयानुपपत्तिः

यदप्युच्यते—निर्विशेषे स्वयंप्रकाशे वस्तुनि दोषपरिकल्पितमीशेशितव्याद्यनन्तविकल्पं सर्वं जगत्। दोषश्च स्वरूपतिरोधान-विविधविचित्रविक्षेपकरी सदसदनिर्वचनीयाऽनाद्यविद्या। सा चावश्याभ्युपगमनीया; "अनृतेन हि प्रत्यूढाः" इत्यादिभिः श्रुतिभिः, ब्रह्मणस्तत्त्वमस्यादिवाक्यसामानाधिकरण्यावगतजीवैक्यानुपपत्त्या च। सा तु न सती, भ्रान्ति-बाधयोरयोगात्। नाप्यसती; ख्याति-बाधयोश्चायोगात्। अतः कोटिद्वयविनिर्मुक्तेयमविद्येति तत्त्वविदः—इति, तदयुक्तम्; सा हि किमाश्रित्य भ्रमं जनयति? न तावद् जीवमाश्रित्य; अविद्यापरिकल्पितत्वाद् जीवभावस्य, नापि ब्रह्माश्रित्य; तस्य स्वयंप्रकाशज्ञानस्वरूपत्वेनाविद्याविरोधित्वात्। सा हि ज्ञानवाध्याऽभिमता॥

"ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम्।
अज्ञानं चेत् तिरस्कुर्यात् कः प्रभुस्तन्निवर्तने॥
ज्ञानं ब्रह्मेति चेत् ज्ञानमज्ञानस्य निवर्तकम्।
ब्रह्मवत् तत्प्रकाशत्वात् तदपि ह्यनिवर्तकम्॥
ज्ञानं ब्रह्मेति विज्ञानमस्ति चेत् स्यात् प्रमेयता।
ब्रह्मणोऽननुभूतित्वं त्वदुक्त्यैव प्रसज्यते॥"

इति। "ज्ञानस्वरूपं ब्रह्मे"ति ज्ञानं तस्या अविद्याया बाधकम्, न स्वरूपभूतं ज्ञानमिति चेत्, न; उभयोरपि ब्रह्मस्वरूपप्रकाशत्वे सत्यन्यतरस्याविद्याविरोधित्वम्, अन्यतरस्य नेति विशेषानवगमात्॥

एतदुक्तं भवति—'ज्ञानस्वरूपं ब्रह्मे'त्यनेन ज्ञानेन ब्रह्मणि यः स्वभावोऽवगम्यते, स ब्रह्मणः स्वयम्प्रकाशत्वेन स्वयमेव प्रकाशते, इत्यविद्याविरोधित्वे न कश्चिद् विशेषः स्वरूप-तद्विषयज्ञानयोः—इति॥

किं चानुभवस्वरूपस्य ब्रह्मणोऽनुभावान्तरानुभाव्यत्वेन भवतो न तद्विषयं ज्ञानमस्ति। अतो ज्ञान-

मज्ञानविरोधि चेत् , स्वयमेव विरोधि भवति, इति नास्या ब्रह्माश्रयत्वसंभवः; शुक्त्यादयस्तु स्वयाथात्म्यप्रकाशे स्वयमसमर्थाः स्वाज्ञानाविरोधिनस्तन्निवर्तने च ज्ञानान्तरमपेक्षन्ते, ब्रह्म तु स्वानुभवसिद्धस्वयाथात्म्यम् , इति स्वाज्ञानविरोध्येव। तत एव निवर्तकान्तरं च नापेक्षते ॥

अथोच्येत—ब्रह्मव्यतिरिक्तस्य मिथ्यात्वज्ञानमज्ञानविरोधि—इति, न; इदं ब्रह्मव्यतिरिक्तमिथ्यात्वज्ञानं किं ब्रह्मयाथात्म्याज्ञानविरोधि ? उत प्रपञ्चसत्यत्वरूपाज्ञानविरोधीति विवेचनीयम् । न तावद् ब्रह्मयाथात्म्याज्ञानविरोधि; अतद्विषयत्वात् । ज्ञानाज्ञानयोरेकविषयत्वेन हि विरोधः ॥

प्रपञ्चमिथ्यात्वज्ञानं तत्सत्यत्वरूपाज्ञानेन विरुध्यते । तेन प्रपञ्चसत्यत्वरूपाज्ञानमेव बाधितम् , इति ब्रह्मस्वरूपाज्ञानं तिष्ठत्येव ॥

ब्रह्मस्वरूपाज्ञानं नाम तस्य सद्वितीयत्वमेव, तत्तु तद्व्यतिरिक्तस्य मिथ्यात्वज्ञानेन निवृत्तम् , स्वरूपं तु स्वानुभवसिद्धमिति चेत् , न; ब्रह्मणोऽद्वितीयत्वं स्वरूपं स्वानुभवसिद्धम् , इति तद्विरोधिसद्वितीयत्वरूपाज्ञानम् , तद्बाधश्च न स्याताम् ॥

अद्वितीयत्वं धर्म इति चेत् , न; अनुभवस्वरूपस्य ब्रह्मणोऽनुभाव्यधर्मविरहस्य भवतैव प्रतिपादितत्वात् । अतो ज्ञानस्वरूपस्य ब्रह्मणो विरोधादेव नाज्ञानाश्रयत्वम् ॥

### अविद्याया ब्रह्मावरकत्वानुपपत्तिः

किंचाविद्यया प्रकाशैकस्वरूपं ब्रह्म तिरोहितमिति वदता स्वरूपनाश एवोक्तः स्यात् । प्रकाशतिरोधानं नाम प्रकाशोत्पत्तिप्रतिबन्धः, विद्यमानस्य विनाशो वा । प्रकाशस्यानुत्पाद्यत्वाभ्युपगमेन प्रकाशतिरोधानं प्रकाशनाश एव ॥

## अत्राद्वैतिनां महासिद्धान्तः

### अविद्याया जीव-ब्रह्मान्यतराश्रयत्वोपपत्तिः

अविद्येयं जीवाश्रया । न चान्योन्याश्रयः; अनादित्वादविद्या-जीव-तत्सम्बन्धानाम् , अथवा ब्रह्मसिद्धिकारोक्तरीत्याऽविद्याश्रयत्वं जीवस्य तदुपाधि-

कत्वप्रयुक्तम्, न तु तद्विशेषणत्वप्रयुक्तम्, तदुपहिततत्वेन हि जीवस्य साक्षित्वम्, विशिष्टत्वेन तु जीवत्वम्, इत्यनादिसम्बन्धमात्रमेव जीवाश्रयत्वम्, न तु तद्विशिष्टत्वेन। तद्विशिष्टत्वेन हि जीवस्योपाधिकार्यदोषभाक्त्वम्। उपाधित्वे तु न तथा, इति—न जीवे सिद्धेऽविद्यासिद्धिः, अविद्यासिद्धौ जीवसिद्धिः—इत्यन्योन्याश्रय इति भामतीप्रस्थानम्, यत्र जीवाश्रयतावाद एवमेव ॥

विवरणप्रस्थाने त्वविद्या ब्रह्माश्रया। सा हि स्वरूपज्ञानोपाधिः, तदविरोधिनी च। तस्या ज्ञानबाध्यत्वं त्वावरणभङ्गमात्रार्था वृत्तिरिति मते वृत्तिव्याप्यत्वेन; वृत्तेरेवाज्ञानविरोधित्वात्। अतो नाज्ञाने मृषात्मके ज्ञाननिवर्त्यत्वस्य, ज्ञानरूपब्रह्मतिरस्कर्तृत्वस्य च विरोधः ॥

'तत्र ब्रह्म ज्ञानमि'ति ज्ञानं नाज्ञानस्य निवर्तकम्, किन्त्वखण्डाकारवृत्तिरेव। तत्र 'ब्रह्म ज्ञानमि'ति ज्ञानं वृत्तिरूपमपि नाज्ञानस्य निर्वतकम्; तस्यानखण्डाकारत्वात्। सच्चिदंशयोः स्वप्रकाशत्वेनैवानावृतत्वेनानन्दांशस्यैवावृतत्वेनावृतांशस्य विना तदाकारवृत्तिं निवृत्त्यसंभवात् ॥

तत्र ब्रह्मप्रकाशत्वं ज्ञानस्य नाखण्डात्मना वर्तते, इति ब्रह्मणो ज्ञानविशेषाया वृत्तेरपि निवर्तकत्वायोगः। यथा च 'ब्रह्म ज्ञानमि'ति ज्ञानसत्त्वेऽपि ब्रह्मणो वृत्तिव्याप्यत्वमात्रम्, न फलव्याप्यत्वम्, तथा व्यक्तमधस्तात्, इति न ब्रह्मणो घटादेरिव प्रमेयता, न वाऽननुभूतित्वमद्वैतसिद्धान्ते ॥

तत्र स्वरूपज्ञानं न प्रमाणजन्यम्, किन्तु स्वप्रकाशतया स्वतः सिद्धम्, इति न तदज्ञानस्य विरोधि, तेन तस्याज्ञानाश्रयत्वम्, तद्विषयत्वं च। न च वृत्तिज्ञानं तथा, इति प्रकाशत्वाविशेषेऽपि स्वरूपज्ञानं न निवर्तकम्, वृत्तिज्ञानं तु प्रमाणजन्यं तन्निवर्तकमिति विशेषः। तत्र स्वरूपज्ञानं स्वप्रकाशम्, यत्रांशे नाऽऽवरणम्, आवृतांशे तु स्वप्रकाशमपि तदविशदमवभासते ॥

तत्रानुभवस्वरूपस्यापि ब्रह्मणः स्वातिरिक्तचिदनपेक्षप्रकाशत्वाभावेऽपि प्रमाणजन्यवृत्तिविषयत्वं न व्याहतम्। अतः स्वरूपज्ञानस्य ब्रह्मणो नाज्ञानाश्रयत्वं विरुद्धम्। 'इदं रजतमि'त्यादौ, 'अयं घटः' इत्यादौ वा शुक्त्यादीनाम्, घटादीनां वाऽप्रकाशो न स्वरूपेण, किन्त्वावृतस्वावच्छिन्नचैतन्यावरणेनैव, इति तत्रापि स्वयंप्रकाशचैतन्यप्रकाशार्थं तत्तद्विषयाज्ञाननिरासार्थमेव वृत्तेरपेक्षा ॥

इयान् विशेषः—स्वरूपज्ञानेऽज्ञाननिवृत्त्या साक्षात् तस्य प्रकाशः, शुक्त्यादिस्थले तु वृत्त्यभिव्यक्तचैतन्यावच्छेदकतयाऽभेदाभिव्यक्त्यर्थम्, चिदुपरागार्थं वा वृत्तेरपेक्षा। अत एव त्रीणि प्रयोजनानि वृत्तिनिर्गमस्य —आवरणाभिभवार्था, अभेदाभिव्यक्त्यर्था, चिदुपरागार्था वा वृत्तिः— इति। अतो न स्वरूपज्ञानमज्ञानस्य विरोधि ॥

तत्र ब्रह्मव्यतिरिक्तस्य मिथ्यात्वज्ञानमखण्डाकारवृत्त्याऽज्ञाननिवृत्तेः फलमात्रम्, न तु मिथ्यात्वज्ञानमज्ञानस्य विरोधि। अत एव ज्ञानाज्ञानयोः समानविषयकत्वनिर्वाहः; वृत्त्यज्ञानयोरेकावृतांशविषयकत्वेनैव विरोध-स्वीकारात्, इति न ब्रह्माज्ञानस्याबाधितस्यावस्थानप्रसङ्गः, इति ब्रह्मव्य-तिरिक्तमिथ्यात्वज्ञानं किं तत्सत्यत्वज्ञानविरोधीत्यादिशङ्का-परिहारौ निरा-लम्बौ; तथाऽद्वैतसिद्धान्तेऽस्वीकारात्, इति ज्ञानस्वरूपस्य ब्रह्मणोऽज्ञाना-श्रयत्वे न कोऽपि व्याघात इति ॥

अविद्यया ब्रह्माऽऽवरणोपपत्तिः

तत्राविद्यया प्रकाशैकस्वरूपं ब्रह्मावृतमिति वादः स्वरूपज्ञानस्य तस्य तेनाविरोधादेव। न चैतावता स्वरूपनाशः। आवरणं हि प्रकाशप्रतिबन्धः। ज्ञानेन तु तत्प्रतिबन्धकमात्रनिवृत्तिः, न तु स्वरूपस्यापि। यथा ह्यावृतस्य दीपस्य घटेनाऽऽवरणे दण्डपातादिनाऽऽवरणमात्रनिवृत्तिः, न तु दीपस्यापि, इयमेव नीतिरत्रापि। नित्यं हि स्वरूपज्ञानमनादिसिद्धं नोत्पाद्यम्, येना-खण्डाकारवृत्त्या तदुत्पत्तिरपेक्षिता स्यात्; 'अविद्यानिवृत्तिमात्रपरत्वा-च्छास्त्रस्ये'ति हि भाष्यम्, इत्यविद्ययाऽऽवरणद्वारा ब्रह्मणोऽप्रकाशः = अविद्यारूपदोषेण प्रकाशप्रतिबन्ध एव ॥

अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

ब्रह्माश्रितदोषापारमार्थ्यायोगः

अपि च निर्विषया, निराश्रया स्वप्रकाशेयमनुभूतिः स्वाश्रयदोषवशादनन्ताश्रयमनन्तविषयमात्मानमनुभवती – त्यत्र किमयं स्वाश्रयदोषः परमार्थभूतः? उतापरमार्थभूत इति विवेचनीयम् ॥

न तावत् परमार्थः; अनभ्युपगमात्। नाप्यपरमार्थः; तथा सति हि द्रष्टृत्वेन वा, दृश्यत्वेन वा, दृशित्वेन वा-ऽभ्युपगमनीयः। न तावद् दृशिः; दृशिस्वरूपभेदानभ्युपग-

भात्, भ्रमाधिष्ठानभूतायास्तु साक्षिदृशेर्माध्यमिकपक्षप्रसङ्गेनाप्यपारमार्थ्यानभ्युपगमाच्च। द्रष्टृ-दृश्ययोस्तदवच्छिन्नाया दृशेश्च काल्पनिकत्वेन मूलदोषान्तरापेक्षयाऽनवस्था स्यात् ॥

अथैतत्परिजिहीर्षया परमार्थसत्यनुभूतिरेव ब्रह्मरूपा दोष इति चेत्, ब्रह्मैव चेद् दोषः, प्रपञ्चदर्शनस्यैव तदेव मूलं स्यात्, किं प्रपञ्चतुल्याविद्यान्तरपरिकल्पनेन ? ब्रह्मणो दोषत्वे सति तस्य नित्यत्वेनानिर्मोक्षश्च स्यात्। अतो यावद् ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमः, न तावद् भ्रान्तिरुपपादिता भवति ॥

## अद्वैतिनां महासिद्धान्तः

### ब्रह्माश्रितदोषापारमार्थ्यम्

तत्रानुभूतिर्निर्विषया, अनाश्रया च; वृत्तेरेव सविषयत्वात्, साक्षात् परम्परया चान्तःकरणाहमर्थाश्रयत्वात्। न च सा स्वयमनुभवति, किन्तु सोपाधिका। न च सोपाधिकाऽविद्याश्रयः, तद्विषयो वा। निर्विशेषसंविन्मात्रमेव हि तदाश्रयः, तद्विषयश्च। तदाश्रयो दोषस्त्वविद्यैव ॥

न च सा परमार्था; अखण्डाकारसाक्षात्कारनिवर्त्यत्वात्। न चाविद्याश्रयत्वम्, तद्विषयत्वं वा द्रष्टृत्वस्य प्रयोजकम्; औपाधिकधर्मत्वाद् द्रष्टृत्वस्य, न वा दृशित्वस्य; दृशित्वं हि तस्या निर्विषयायाः। न च दृशिरूपेण दृशेर्भेदलेशोऽपि। एकमेव हि संविद्रूपमविद्यया तिरोहितं सर्वेषां तद्व्यतिरिक्तानामधिष्ठानं तदुपादानकदृश्यभेदेन तत्तदवच्छिन्नरूपेणानेकम्, न तु स्वरूपेण, इति नानेकाधिष्ठानप्रसङ्गः, अपारमार्थ्यं वा दृङ्मात्रस्य ॥

तत्र द्रष्टृस्वरूपं काल्पनिकदृश्योपाधिकत्वेनौपाधिकम्, न तु स्वरूपेणाविद्यायाः कार्यम्, प्रयोज्यं वा; स्वरूपतो दृष्टेः तदवच्छिन्नायाश्चितेश्चाकाल्पनिकत्वात्। न ह्यत्र दोषान्तरानवस्था, न वा दृशिरेव दोषः, येन प्रपञ्चदर्शनस्यापि दोषत्वापत्त्या तदतिरिक्तदोषान्तरकल्पनवैयर्थ्यम्, न वा ब्रह्मणो नित्यत्वेनानिवर्त्यत्वेन चानिर्मोक्षश्च स्यात्, इति ब्रह्मव्यतिरिक्ततदाश्रयाविद्यारूपदोषवशात् तत्प्रयुक्तविकल्पानां च सर्वेषामनिर्वचनीयत्वाद् नाद्वैतासिद्धिः ॥

## श्रीभाष्यकाराणां महापूर्वपक्षः

### अविद्याऽनिर्वचनीयत्वानुपपत्तिः

अनिर्वचनीयत्वं च किमभिप्रेतम्? सदसद्विलक्षणत्वमिति चेत्, तथाविधस्य वस्तुनः प्रमाणशून्यत्वेनानिर्वचनीयतैव न स्यात्॥

एतदुक्तं भवति—सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यम्। सर्वा च प्रतीतिः सदसदाकारा। सदसदाकारायास्तु प्रतीतेः सदसद्विलक्षणं विषय इत्यभ्युपगम्यमाने सर्वं सर्वप्रतीतेर्विषयः स्यात्—इति॥

## अत्राद्वैतिनां महासिद्धान्तः

### अविद्याऽनिर्वचनीयत्वोपपत्तिः

तत्र सदसद्विलक्षणत्वमनिर्वचनीयत्वम्। न च प्रमाणाभावः; सच्चेत्, न बाध्येत, असच्चेत्, न प्रतीयेतेत्यर्थापत्तिप्रमाणसिद्धत्वात्, सदसद्विलक्षणत्वस्य। न च सदसदाकारा क्वापि प्रतीतिर्दृष्टचरी। निरस्ता हि सदसद्रूपाख्यातिर्मीमांसकाद्यभिमता भामत्यामध्यासभाष्ये। अधिकं तु तत एवावगन्तव्यम्॥

न चाविद्या सदसदाकारा सर्वकार्योपादानम्; सदसदाकारप्रतीतिविषयत्वे ख्याति-बाधानुपपत्तेः, इति ख्याति-बाधानुपपत्तिरेवानिर्वचनीयाविद्यायां प्रमाणम्; तस्यां वस्तुस्वरूपतिरोधानकर्याम्, त्रिविधाध्यासपरिणाम्युपादानभूतायाम्, अविद्याऽज्ञानादिपदवाच्यायाम्, वस्तुयाथात्म्यज्ञाननिवर्त्यायाम्, ज्ञानप्रागभावव्यतिरिक्तायाम्, भावरूपायां च प्रत्यक्षप्रमाणसिद्धायां सत्याम्, तदुपादानकत्वेन सर्वस्यापि तत्प्रयुक्तस्यानिर्वचनीयत्वमर्थसिद्धम्। प्रत्यक्षमपि च प्रमाणं सदसद्विलक्षणत्वेऽनिर्वचनीयत्वे। न ह्यनिर्वचनीयाज्ञानावरणं विना ब्रह्मणो जगदुपादानत्वम्, सर्वप्रपञ्चाधिष्ठानत्वं वा निर्वहति॥

तद्धि न ज्ञानप्रागभावरूपम्; श्रीभाष्यमते स्वरूपज्ञानस्य, धर्मभूतज्ञानस्य वा नित्यस्य प्रागभावासंभवात्, दर्शनान्तरप्रसिद्धस्यापि तस्य षष्ठप्रमाणगोचरत्वेन प्रत्यक्षगम्यत्वाभावात्, अस्य च प्रत्यक्षत्वाच्च। ज्ञानात्यन्ताभावस्तु तस्य प्रत्यक्षत्वाभ्युपगमेऽप्यनुभववेलायां तदाश्रय-प्रतियोगिज्ञानसत्त्वाद् न विषयतामर्हति। अज्ञानभावरूपत्वे तु न तदनुभव-

विरोधः। तदाश्रया हि संविदात्मा, साक्षी वा न तस्य विरोधी, इति प्रत्यक्षं भावरूपानिर्वचनीयाज्ञाने प्रमाणम् ॥

एवं प्रमाणज्ञानम्, स्वप्रागभावव्यतिरिक्त-स्वविषयावरण-स्वनिवर्त्य-स्व-देशगत-वस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वात्; अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत्। तमसोऽपि भावरूपद्रव्यान्तरत्वाद् न दृष्टान्तासिद्धिः, इति प्रत्यक्षानुमानसिद्ध-भावरूप-ज्ञाननिवर्त्य-सदसद्विलक्षणाविद्याप्रयुक्तत्वाद् ब्रह्मव्यतिरिक्तस्य सर्वस्य सदसद्विलक्षणत्वादिकमनिर्वचनीयत्वमर्थसिद्धम् ॥

### अत्राद्वैतिनां सिद्धान्तसंग्रहः

#### भावरूपाविद्यायां प्रत्यक्षादिप्रमाणोपपत्तिः

अथ स्यात्—वस्तुस्वरूपतिरोधानकरबाह्यरूपविविधाध्यासोपादानं सदसदनिर्वचनीयमविद्याऽज्ञानादिपदवाच्यं वस्तुयाथात्म्यज्ञाननिवर्त्यं ज्ञानप्रागभावातिरेकेण भावरूपमेव किंचिद्वस्तु प्रत्यक्षानुमानाभ्यां प्रतीयते। तदुपहितब्रह्मोपादानश्चाविकारे स्वप्रकाशचिन्मात्रवपुषि तेनैव तिरोहितस्वरूपे प्रत्यगात्मन्यहङ्कार-ज्ञान-ज्ञेयविभागरूपोऽध्यासः। तस्यैवावस्थाविशेषेणाध्यासरूपे जगति ज्ञानबाध्यसर्परजतादिवत् तत्तज्ज्ञानरूपाध्यासोऽपि जायते। कृत्स्नस्य मिथ्यारूपस्य तदुपादानत्वं च मिथ्याभूतस्यार्थस्य मिथ्याभूतमेव कारणं भवितुमर्हतीति हेतुबलादवगम्यते ॥

कारणाज्ञानविषयं प्रत्यक्षं तावत्—"अहमज्ञः" 'मामन्यं' च न जानामि" इत्यपरोक्षावभासः। अयं तु न ज्ञानप्रागभावविषयः। स हि षष्ठप्रमाणगोचरः। अयं तु न ज्ञानप्रागभावविषयः—'अहं सुखी'तिवदपरोक्षः। अभावस्य प्रत्यक्षत्वाभ्युपगमेऽप्ययमनुभवो नात्मज्ञानाभावविषयः; अनुभववेलायामपि ज्ञानस्य विद्यमानत्वात्; अविद्यमानत्वे ज्ञानाभावप्रतीत्यनुपपत्तेश्च ॥

एतदुक्तं भवति—'अहमज्ञः' इत्यस्मिन्ननुभवे 'अहमि'-त्यात्मनोऽभावधर्मितया, ज्ञानस्य च प्रतियोगितयाऽवग-

तिरस्ति वा, न वा ? अस्ति चेत्, विरोधादेव न ज्ञानाभावानुभवसंभवः। नो चेत्, धर्मि-प्रतियोगिज्ञानसव्यपेक्षो ज्ञानाभावानुभवः सुतरां न संभवति ॥

ज्ञानाभावस्यानुमेयत्वे, अभावाख्यप्रमाणविषयत्वे चेयमनुपपत्तिः समाना। अस्याज्ञानस्य भावरूपत्वे धर्मि-प्रतियोगिज्ञानसद्भावेऽपि विरोधाभावादयमनुभवो भाव-रूपाज्ञानविषय एवाभ्युपगन्तव्यः—इति ॥

ननु च भावरूपमप्यज्ञानं वस्तुयाथात्म्यावभास-रूपेण साक्षिचैतन्येन विरुध्यते, मैवम्; साक्षिचैतन्यं न वस्तुयाथात्म्यविषयम्, अपि त्वज्ञानविषयम्; अन्यथा मिथ्यार्थावभासानुपपत्तेः। न ह्यज्ञानविषयेण ज्ञानेनाज्ञानं निवर्त्यते, इति न विरोधः ॥

ननु चेदं भावरूपमज्ञानं विषयविशेषव्यावृत्तमेव साक्षिचैतन्यस्य विषयो भवति। स विषयः प्रमाणाधीन-सिद्धिः, इति कथमिव साक्षिचैतन्येनास्मदर्थव्यावृत्तमज्ञानं विषयीक्रियते ? नैष दोषः; सर्वमेव वस्तुजातं ज्ञाततया, अज्ञाततः या वा साक्षिचैतन्यस्य विषयभूतम्। तत्र जडत्वेन ज्ञाततया सिध्यत एव प्रमाणव्यवधानापेक्षा, अजडस्य तु प्रत्यग्वस्तुनः स्वयं सिध्यतो न प्रमाणव्यवधानापेक्षा, इति सदैव ज्ञानस्य व्यावर्तकत्वेनावभासो युज्यते। तस्माद् न्यायोपबृंहितेन प्रत्यक्षेण भावरूपमेवाज्ञानं प्रयीयते ॥

तदिदं भावरूपमज्ञानमनुमानेनापि सिध्यति—विवादध्यासितं प्रमाणज्ञानम्, स्वप्रागभावव्यतिरिक्त-स्व-विषयावरण-स्वनिवर्त्य-स्वदेशगत-वस्त्वन्तरपूर्वकम्, अप्रका-शितार्थप्रकाशकत्वात्; अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत् —इति ॥

आलोकाभावमात्रं वा, रूपदर्शनाभावमात्रं वा तमः, न द्रव्यान्तरम्। तत् कथं भावरूपाज्ञानसाधने निदर्शनतयोप-न्यस्यत इति ? उच्यते; बहुलत्व-विरलत्वाद्यवस्थायोगेन रूपवत्तया चोपलब्धेर्द्रव्यान्तरमेव तमः, इति निरवद्यम्—इति ॥

## अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

### भावरूपाज्ञाने प्रत्यक्षप्रमाणानुपपत्तिः

अत्रोच्यते—'अहमज्ञः' 'मामन्यं च न जानामी'-त्यत्रोपपत्तिसहितेन, केवलेन च प्रत्यक्षेण न भावरूपमज्ञानं प्रतीयते। यस्तु ज्ञानप्रागभावविषयत्वे विरोध उक्तः, स हि भावरूपाज्ञानेऽपि तुल्यः ॥

विषयत्वेन, आश्रयत्वेन चाज्ञनस्य व्यावर्तकतया प्रत्यगर्थः प्रतिपन्नो वा, अप्रतिपन्नो बा? प्रतिपन्नश्चेत्, तत्स्वरूपज्ञाननिवर्त्यं तदज्ञानं तस्मिन् प्रतिपन्ने कथमिव तिष्ठति? अप्रतिपन्नश्चेत्, व्यावर्तकाश्रय-विषयज्ञानशून्य-मज्ञानं कथमनुभूयेत?

अथ—विशदस्वरूपावभासोऽज्ञानविरोधी, अविशद-स्वरूपं तु प्रतीयते, इत्याश्रय-विषयज्ञाने सत्यपि नाज्ञाना-नुभवविरोधः—इति, हन्त!

तर्हि ज्ञानप्रागभावोऽपि विशदस्वरूपविषयः, आश्रय-प्रतियोगज्ञानं त्वविशदस्वरूपविषयम्, इति न कश्चिद् विशेषः; अन्यत्राभिनिवेशात्। भावरूपस्याज्ञान-स्यापि ह्यज्ञानमिति सिध्यतः प्रागभावसिद्धाविव सापेक्ष-त्वमस्त्येव ॥

तथा हि—'अज्ञानमि'ति ज्ञानाभावः, तदन्यः, तद्वि-रोधी वा। त्रयाणामपि तत्स्वरूपज्ञानापेक्षाऽवश्याश्रणीया ॥

यद्यपि तमस्स्वरूपप्रतिपत्तौ प्रकाशापेक्षा न विद्यते; तथाऽपि प्रकाशविरोधीत्यनेनाकारेण प्रतिपत्तौ प्रकाशप्रति-पत्त्यपेक्षाऽस्त्येव ॥

भवदभिमताज्ञानं न कदाचित् स्वरूपेण सिध्यति, अपि त्वज्ञानमित्येव। तथा सति ज्ञानाभाववत् तदपेक्षत्वं समानम्। ज्ञानप्रागभावस्तु भवताऽप्यभ्युपगम्यते, प्रती-यते च, इत्युभयाभ्युपेतो ज्ञानप्रागभाव एव 'अहमज्ञः' 'मामन्यं च न जानामी'त्यनुभूयत इत्यभ्युपगन्तव्यम् ॥

नित्य-मुक्त-स्वप्रकाशचैतन्यैकस्वरूपस्य ब्रह्मणो-ऽज्ञानानुभवश्च न संभवति; स्वानुभवस्वरूपत्वात् ॥

स्वानुभवस्वरूपमपि तिरोहितस्वरूपमज्ञानमनुभवतीति चेत्, किमिदं तिरोहितस्वरूपत्वम्? अप्रकाशितस्वरूपत्वमिति चेत्, स्वानुभवस्वरूपस्य कथमप्रकाशितस्वरूपत्वम्?

स्वानुभवस्वरूपस्याप्यन्यतोऽप्रकाशितस्वरूपत्वमापद्यत इति चेत्, एवं तर्हि प्रकाशाख्यधर्मानभ्युपगमेन प्रकाशस्यैव स्वरूपत्वादन्यतः स्वरूपनाश एव स्यादिति पूर्वमेवोक्तम् ॥

किंच ब्रह्मस्वरूपतिरोधानहेतुभूतमेतदज्ञानं स्वयमनुभूतं सत् ब्रह्म तिरस्करोति, ब्रह्म तिरस्कृत्य स्वयं तदनुभवविषयो भवतीत्यन्योन्याश्रयणम् ॥

अनुभूतमेव तिरस्करोतीति चेत्, यद्यतिरोहितस्वरूपमेव ब्रह्माज्ञानमनुभवति, तदा तिरोधानकल्पना निष्प्रयोजना स्यात्, अज्ञानस्वरूपकल्पना च; ब्रह्मणोऽज्ञानदर्शनवदज्ञानकार्यतयाऽभिमतप्रपञ्चदर्शनस्यापि संभवात् ॥

किंच ब्रह्मणोऽज्ञानानुभवः किं स्वतः, अन्यतो वा? स्वतश्चेत्, अज्ञानानुभवस्यस्वरूपप्रयुक्तत्वेनानिर्मोक्षः स्यात्। अनुभूतिस्वरूपस्य ब्रह्मणोऽज्ञानानुभवरूपत्वेन मिथ्यारजतबाधकज्ञानेन रजतानुभवस्यापि निवृत्तिवद् निवर्तकज्ञानेनाज्ञानानुभूतिरूपब्रह्मस्वरूपनिवृत्तिर्वा ॥

अन्यतश्चेत्, किं तदन्यत्? अज्ञानान्तरमिति चेत्, अनवस्था स्यात् ॥

ब्रह्म तिरस्कृत्यैव स्वयमनुभवविषयो भवतीति चेत्, तथा सतीदमज्ञानं काचादिवत् स्वसत्तया ब्रह्म तिरस्करोति, इति ज्ञानबाध्यत्वमज्ञानस्य न स्यात् ॥

अथ—इदमज्ञानं स्वयमनादि, ब्रह्मणः स्वसाक्षित्वम्, ब्रह्मस्वरूपतिरस्कृतिं च युगपदेव करोति, अतो नानवस्थादयो दोषाः—इति, नैतत्; स्वानुभवस्वरूपस्य ब्रह्मणः स्वरूपतिरस्कृतिमन्तरेण साक्षित्वापादनायोगात् ॥

हेत्वन्तरेण तिरस्कृतमिति चेत् , तर्ह्यस्यानादित्वमपास्तम् , अनवस्था च पूर्वोक्ता । अतिरस्कृतस्वरूपस्यैव साक्षित्वापादने ब्रह्मणः स्वानुभवैकतानता च न स्यात् ॥

अपिचाविद्यया ब्रह्मणि तिरोहिते तद् ब्रह्म न किंचिदपि प्रकाशते ? उत किंचित् प्रकाशते ? पूर्वस्मिन् कल्पे प्रकाशमात्रस्वरूपस्य ब्रह्मणोऽप्रकाशे तुच्छतापत्तिरसकृदुक्ता । उत्तरस्मिन् कल्पे सच्चिदानन्दैकरसे ब्रह्मणि कोऽयमंशस्तिरस्क्रियते ? को वा प्रकाशते ? निरंशे निर्विशेषे प्रकाशमात्रे वस्तुन्याकारद्वयासंभवेन तिरस्कारः, प्रकाशश्च युगपद् न संगच्छेते ॥

अथ—सच्चिदानन्दैकरसं ब्रह्माऽविद्यया तिरोहितस्वरूपमविशदमिव लक्ष्यते—इति, प्रकाशमात्रस्वरूपस्य विशदता, अविशदता वा किंरूपा ?

एतदुक्तं भवति—यः सांशः सविशेषः, तस्य सकलावभासो विशदावभासः, कतिपयविशेषरहितावभासश्चाविशदावभासः । तत्र य आकारोऽप्रतिपन्नः, तस्मिन्नंशे प्रकाशाभावादेव प्रकाशावैशद्यं न विद्यते । यश्चांशः प्रतिपन्नः, तस्मिन्नंशे तद्विषयप्रकाशो विशद एव । अतः सर्वत्र प्रकाशांशेऽवैशद्यं न संभवति ! विषयेऽपि स्वरूपे प्रतीयमाने तद्गतकतिपयविशेषाप्रतीतिरेवावैशद्यम् । तस्माद् विषये निर्विशेषे प्रकाशमात्रे ब्रह्मणि स्वरूपे प्रकाशमाने तद्गतकतिपयविशेषाप्रतीतिरूपावैशद्यं नामाज्ञानकार्यं न संभवति ॥

अपि चेदमविद्याकार्यमवैशद्यं तत्त्वज्ञानोदयाद् निवर्तते, न वा ? अनिवृत्तावपवर्गाभावः, निवृत्तौ च वस्तु किंरूपमिति विवेचनीयम् ॥

विशदस्वरूपमिति चेत् , तद् विशदस्वरूपं प्रागस्ति, न वा ? अस्ति चेत् , अविद्याकार्यमवैशद्यम् , तन्निवृत्तिश्च न स्याताम् । नो चेत् , मोक्षस्य कार्यतयाऽनित्यता स्यात् । अस्याज्ञानस्याश्रयानिरूपणादेवासंभवः पूर्वमेवोक्तः ॥

अपिचापरमार्थदोषमूलभ्रमवादिना निरधिष्ठान-भ्रमासंभवोऽपि दुरुपपादः; भ्रमहेतुभूतदोषाश्रयत्ववद-धिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेः। ततश्च सर्वशून्यत्व-मेव स्यात् ॥

## अद्वैतिनां महासिद्धान्तः

### भावरूपाज्ञाने प्रत्यक्षप्रमाणोपपत्तिः

न च भावरूपत्वेऽप्यज्ञानस्या'हमज्ञ' इत्यादिप्रतीतौ विरोधः। तत्र यद्यपि भावरूपत्वेऽप्यज्ञानस्याश्रयतया, विषयतया च प्रत्यगात्मनो ज्ञान-मपेक्ष्यते; तथापि प्रत्यगात्मनः स्वप्रकाशस्याज्ञानाविरोधित्वात्, वृत्ति-रूपज्ञानस्यैव तद्विरोधित्वाच्च नाश्रय-विषयज्ञानायोगः। स्वरूपज्ञानं हि नात्मविरोधीत्याश्रय-विषयोपपत्तिप्रकरणे विवेचितम् ॥

तत्र प्रागभावज्ञानस्य प्रतियोग्याश्रयज्ञानापेक्षा नियता, भावरूपस्या-ज्ञानस्य त्वज्ञानपदवाच्यस्य ज्ञानविरोधित्वेनैवाज्ञानत्वम्। तच्च न स्वरूप-ज्ञानेन, साक्षिज्ञानेन वाऽज्ञानस्यास्ति, किन्तु वृत्तिज्ञानेन, इति कथं प्रत्य-गात्मस्वरूपज्ञानमज्ञानस्य विरोधि? येन प्रकाशमाने तस्मिन्नज्ञानं न ज्ञायेत। अज्ञानपदं हि ज्ञानविरोधित्वेनैवाज्ञानपदवाच्यम्, इति यद्विरोधित्वेना-ज्ञानता, तेन सह भानं बाधितम्। न चात्र विरोधिज्ञानं किमप्य'हमज्ञः' इति प्रतीतौ भासते ॥

तत्रा'हमज्ञः' इत्यज्ञानानुभवो न स्वयम्प्रकाशस्य संविन्मात्रस्य, किन्त्व-हमर्थस्य चिदचिद्ग्रन्थिरूपस्य, संविन्मात्रप्रतिबिम्बस्याज्ञस्य जीवस्य। तस्य च जीवस्वरूपसिद्ध्युपजीव्यस्य कथं जीवात्मना विरोधः?

संविन्मात्रं तिरोहितस्वरूपमेवाज्ञानमनुभवति, न त्वनावृतस्वरूपम्। तिरोधानं तु तस्याज्ञाननिबन्धनम्, तेन तस्याप्रकाशः संसारावस्थायाम्। न चैतावता स्वरूपनाश इति तु पूर्वमेवोक्तम् ॥

तत्राज्ञानं स्वाधिष्ठान-स्वप्रकाशस्वरूपज्ञानप्रकाश्यं सदेव स्वरूपज्ञान-मावृणोति, इत्यनुभूयमानमेव स्वरूपज्ञानमावृणोति, नाननुभूयमानम्। अनुभवस्तु तत्र तदाश्रयतादात्म्यापन्नस्य साक्षिण एव, न संविन्मात्रस्य। साक्षित्वं तु संविन्मात्रस्याविद्योपधानेनैव न स्वरूपतः, इति नाज्ञानकल्प-ना वितथा। न चैतावताऽज्ञानकार्यप्रपञ्चस्यापि ब्रह्मण इवाप्रकाशः स्यात्। न हि ब्रह्मेव तत्कार्यस्य सर्वदा विनाऽप्यन्तःकरणवृत्तिनिर्गमम्, विना च

विषयावच्छिन्नचैतन्याभेदं साक्षिणोपरागः, येन साक्षिस्वरूपज्ञानमात्रेण तत्प्रकाशः स्यात्। तत्र स्वरूपज्ञानमपि यद्यपि साक्षिवत् स्वप्रकाशम्; तथापि न साक्षिवद् विशदावभासम् ॥

तच्च वैशद्यम्, अवैशद्यं वा यद्यपि यत्र सविशेषः सांशो विषयः, तत्र सकलावभासेन, कतिपयांशावभासेन च भवति। निर्विशेषे तु निरंशे नाज्ञानं कतिपयांशस्य संभवति; तथापि चानादित्वादज्ञानावरणस्याज्ञानेनानादिना सच्चिदादिरूपेण ब्रह्मणो निर्विशेषस्याप्यनादिभेदकल्पनेन कल्पितं सांशत्वमादाय सांशत्वम्, अविशदावभासत्वं च निर्वोढुं पार्यते। न चैतावताऽद्वैतहानिः; यावदज्ञानसत्त्वं सद्वितीयत्वस्येष्टत्वात्। तत्राज्ञाननाशानन्तरं तु नाज्ञानम्, न चाऽऽवरणादिकथा, न वा तत्प्रयुक्तं सांशत्वम्, अवैशद्यं वा ज्ञानस्य ॥

अयमत्र निष्कर्षः—यावदखण्डाकारसाक्षात्कारमावृतानावृतरूपद्वयवत्तया ब्रह्म स्वयं प्रकाशते। न हि तदाऽऽवृतानावृतस्वरूपभेदशून्यमखण्डं स्वरूपज्ञानमात्रं स्वप्रकाशमवतिष्ठते, किन्त्वज्ञानोपहितं ब्रह्मस्वरूपमात्रम्, मुक्तौ त्वज्ञाननिवृत्त्युपलक्षितं स्वरूपम् ॥

तदुक्तम्—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।"

इति। तत्र वैशद्यं पूर्वमपि यद्यपि वर्तते; तथापि सांशत्वस्य कल्पितत्वाद् न तदस्तीव, परन्तु विद्यमानमपि तदनाद्यविद्याकल्पितत्वादखण्डरूपेण न प्रकाशते, अविद्यानिवृत्तौ तु प्रकाशते ॥

तत्रेयमविद्याऽपरमार्थैव दोषविधया प्रपञ्चोपादानम्। तदुपादानत्वं च तद्विषयत्वप्रयुक्तब्रह्माधिष्ठानतयाऽपि साकमेव, इति न निरधिष्ठानाश्रयत्वमद्वैतवादे। तत्राधिष्ठानत्वं ब्रह्मणः स्वाधिष्ठानकप्रपञ्चबाधकज्ञानविषयत्वेन। तच्च दोषवदधिष्ठानं परमार्थं विना नोपपद्यते; अधिष्ठानारोप्यभावे तयोरधिष्ठानस्यारोपिताधिकसत्ताकत्वं विना बाधकज्ञानविषयत्वादर्शनात्। शून्यवादे तु तस्य चतुष्कोटिविनिर्मुक्तस्यैव सत्यत्वेऽप्यधिष्ठानत्वस्यास्वीकारात्, तत्तद्वासनामात्रनिबन्धनस्य व्यवहारस्य विनाऽधिष्ठानारोप्यभावस्वीकारं निर्वाहाङ्गीकाराच्च नाद्वैतमते सर्वशून्यत्वमापद्यते ॥

वस्तुतस्तु—शून्यवादिभिः शून्यव्यतिरिक्तस्यापह्नवमात्रं क्रियते, न त्वनिर्वचनीयत्वम्, साधिष्ठानकत्वं वा, तत्त्वन्तु तत्र शून्यं सत्यमपि नाधिष्ठानम्, मुक्तिस्तु तत्र योगादिना वासनामात्रनिरोधः, न तु तदभावादिः,

शून्यज्ञाननिवर्त्यत्वं वा सर्वस्य, इति न सर्वशून्यताऽद्वैतवादे। सर्वथा भावरूपेऽज्ञाने प्रत्यक्षप्रमाणनिरासस्तु नैव सम्भवति ॥

द्वैतविशिष्टाद्वैतानुयायिनस्तु केचन तत्त्वसुधायाम्, अद्वैततत्त्वसुधाखण्डने, अन्यत्र च किञ्चित्साम्यमात्रेणाद्वैत-सौगतसिद्धान्तयोरैक्यं वदन्ति, तत्तु निरालम्बम्, सौगतनिबन्धविरोधि च। किं बहुना ? न केवलं प्रत्यक्षम्, किन्त्वनुमानाद्यपि तत्र प्रमाणम् ॥

परमार्थतस्तु श्रीभाष्यमतेऽप्यज्ञानमावरणशक्तिमद् भावस्वरूपमेव, इत्य'हमज्ञः' इति प्रत्यक्षस्य प्रागभावविषयत्वव्यवस्था स्वमतमपि विहन्तीति तु तत्त्वम्। सा च कर्मरूपा वा, अन्या वेति त्वन्यदेतत् ॥

### श्रीभाष्यकाराणां महापूर्वपक्षः

#### भावरूपेऽज्ञानेऽनुमानप्रमाणायोगः

यदुक्तम्—अनुमानेनापि भावरूपमज्ञानं सिध्यति—इति, तदयुक्तम्; अनुमानासंभवात् ॥

ननूक्तमनुमानम्? सत्यमुक्तम्, दुरुक्तं तु तत्; अज्ञानेऽप्यनभिमताज्ञानान्तरसाधनेन विरुद्धत्वाद् हेतोः। तत्राज्ञानान्तरासाधने हेतोरनैकान्त्यम्। साधने च तदज्ञानमज्ञानसाक्षित्वं निवारयति। ततश्चाज्ञानकल्पना निष्फला स्यात् ॥

दृष्टान्तश्च साधनविकलः; दीपप्रभायामप्रकाशितार्थप्रकाशकत्वाभावात्। सर्वत्र ज्ञानस्यैव हि प्रकाशकत्वम्; सत्यपि दीपे ज्ञानेन विना विषयप्रकाशाभावात्। इन्द्रियाणामपि ज्ञानोत्पत्तिहेतुत्वमेव; न प्रकाशकत्वम् ॥

प्रदीपप्रभायास्तु चक्षुरिन्द्रियस्य ज्ञानमुत्पादयतो विरोधितमोनिरसनद्वारेणोपकारकत्वमात्रमेव। प्रकाशकज्ञानोत्पत्तौ व्याप्रियमाणचक्षुरिन्द्रियोपकारकहेतुत्वमपेक्ष्य दीपस्य प्रकाशकत्वव्यवहारः ॥

नास्माभिर्ज्ञानतुल्यप्रकाशकत्वाभ्युपगमेन दीपप्रभा निदर्शिता, अपि तु ज्ञानस्येव स्वविषयावरणनिरसनपूर्वकप्रकाशकत्वमज्ञानस्येति चेत्, न; न हि विरोधिनिरसनमात्रं प्रकाशकत्वम्, अपि त्वर्थपरिच्छेदः; व्यवहारयोग्यतापादनमिति यावत्, तत्तु ज्ञानस्यैव ॥

यद्युपकारकाणामप्यप्रकाशितार्थप्रकाशकत्वमङ्गीकृतम् , तर्हीन्द्रियाणामुपकारकतमत्वेनाप्रकाशितार्थप्रकाशकत्वमङ्गीकरणीयम् । तथा सति तेषां स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावाद् हेतोरनैकान्त्यमित्यलमनेन ॥

प्रतिप्रयोगाश्च—विवादाध्यासितमज्ञानम् , न ज्ञानमात्रब्रह्माश्रयम् ; अज्ञानत्वात् ; शुक्तिकाद्यज्ञानवत् , ज्ञात्राश्रयं हि तत् ॥

( २ ) विवादाध्यासितमज्ञानम् , न ज्ञानमात्रब्रह्मावरणम् ,अज्ञानत्वात् ; शुक्तिकाद्यज्ञानवत् , विषयावरणं हि तत् ॥

( ३ ) विवादाध्यासितज्ञानम , न ज्ञाननिवर्त्यम् , ज्ञानविषयानावरणत्वात् ; यत् ज्ञाननिवर्त्यमज्ञानंम , तद् ज्ञानविषयावरणम् ; यथा शुक्तिकाद्यज्ञानम् ॥

( ४ ) ब्रह्म, नाज्ञानास्पदम, ज्ञातृत्वविरहात् ; घटादिवत् ॥

( ५ )ब्रह्म, नाज्ञानावरणम् , ज्ञानाविषयत्वात् ; यदज्ञानावरणम , तद् ज्ञानविषयभूतम् ; तथा शुक्तिकादि ॥

( ६ )ब्रह्म, न ज्ञाननिवर्त्याज्ञानम , ज्ञानाविषयत्वात् ; यत् ज्ञाननिवर्त्याज्ञानम् , तद् ज्ञानविषयभूतम् ; यथा शुक्तिकादि ॥

( ७ ) विवादाध्यासितं प्रमाणज्ञानम्, स्वप्रागभावातिरिक्ताज्ञानपूर्वकं न भवति, प्रमाणज्ञानत्वात् ; भवदभिमताज्ञानसाधनप्रमाणज्ञानवत् ॥

( ८ ) ज्ञानम् , न वस्तुनो विनाशकम् , शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वात् ; यद् वस्तुनो विनाशकम् , तच्छक्तिविशेषोपबृंहितं ज्ञानम् , अज्ञानं च दृष्टम् ; यथायोगिप्रभृतिज्ञानम् , यथा च मुद्गरादि ॥

( ९ ) भावरूपमज्ञानम् , न ज्ञानविनाश्यम् , भावरूपत्वात् ; घटादिवदिति ॥

अथोच्येत—बाधकज्ञानेन पूर्वज्ञानोत्पन्नानां भयादीनां विनाशो दृश्यते—इति, नैवम् ; न हि ज्ञानेन तेषां विनाशः; क्षणिकत्वेन तेषां स्वयमेव विनाशात्, कारणनिवृत्त्या च पश्चादनुत्पत्तेः। क्षणिकत्वं च तेषां ज्ञानवदुत्पत्तिकारणसन्निधान एवोपलब्धेः, अन्यथाऽनुपलब्धेश्चावगम्यते। अक्षणिकत्वे च भयादीनां भयादिहेतुभूतज्ञानसंततावविशेषेण सर्वेषां ज्ञानानां भयाद्युत्पत्तिहेतुत्वेनानेकभयोपलब्धिप्रसङ्गाच्च। 'स्वप्रागभावव्यतिरिक्तवस्त्वन्तरपूर्वकमि'ति व्यर्थविशेषणोपादानेन प्रयोगकुशलता चाविष्कृता। अतोऽनुमानेनापि न भावरूपाज्ञानसिद्धिः॥

अत्राद्वैतिनां महासिद्धान्तः

अज्ञानेऽनुमानप्रमाणोपपत्तिः

'प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्ते'त्यनुमाने पक्षकोटौ प्रमाणपदप्रयोगादज्ञानस्य साक्षिभास्यत्वेन प्रमाणज्ञानाविषयत्वात् नाज्ञानान्तरस्यानभिमतस्य साधनम्, किन्तु तस्य प्रागभावव्यतिरिक्तत्वमेव प्रकृतानुमानसाध्यम्। अप्रकाशितार्थसाधकत्वमप्यस्याभावव्यतिरिक्तत्वप्रकाशकत्वेन, इति नात्र व्यभिचारः; हेतु-साध्ययोरुभयोरप्यसत्त्वात्, इत्यज्ञानसाधनत्वमादाय प्रसञ्जितानां दूषणानां नात्रावसरः॥

न चात्र दृष्टान्तः साधनविकलः; प्रकाशकत्वं हि विषयावरणनिवर्तकत्वमात्रेण ; आवृतार्थगतावरणनिवर्तकत्वस्यैवाप्रकाशितार्थप्रकाशकत्वपदार्थत्वात्। प्रमाणज्ञानमप्यखण्डाकारज्ञानमविद्यानिवृत्तिमात्रपरत्वाच्छास्त्रस्यैवंरूपमेव, इति सत्यपि दोषे विना ज्ञानेन विषयप्रकाशाभावेऽपि न क्षतिः॥

वस्तुतस्तु—स्वप्रकाशत्वविचारावसरे प्रभाद्वारा दीपस्य प्रकाशकत्वम्, धर्मभूतज्ञानस्थानीयत्वं च प्रभायाः श्रीभाष्येणैव स्वीकृतम्, इति दीपस्याप्रकाशकत्ववादो न विकल्पसहः। तत्र यदि तमोनाशनिबन्धनावरणनिवर्तकत्वमात्रेणैव दीपस्यापि प्रकाशकत्वं स्वीकर्तव्यम् ; अन्यथा ज्ञानद्वारमात्रेण प्रदीपस्य प्रकाशकत्वे धर्मभूतज्ञानस्थानीयत्वं कथम्? विरोधिनिरासमात्रेण प्रकाशकत्वाङ्गीकारमात्रम्, प्रभाद्वारा दीपस्य प्रकाशकत्वं च कथमुपपद्यते? तत्र यदि दीपस्य विरोधिनिरासमात्रेण प्रकाशकत्वम्;

तर्हि प्रकृतेऽप्यज्ञाननिवृत्तिमात्रं प्रमाणजन्यस्य ज्ञानस्य कृत्यम् , प्रकाशस्तु स्वतः सिद्धः, इति तावन्मात्रमेव हेतुकोटौ विवक्ष्यते, इति न साधनविकलो दृष्टान्तः ॥

न चात्र प्रदीपप्रकाशस्थल इव प्रमाणज्ञानस्य व्यवहारयोग्यताऽऽपादनं लक्ष्यम् ; अखण्डाकारवृत्तेः सर्वव्यवहारपरिपन्थित्वेनावरणनिरासमात्रफलकत्वात् । दृष्टान्त-दार्ष्टान्तिकसाधारणं प्रकाशकत्वमावरणनिवर्तकत्वमात्रम्, इति न चक्षुरादीन्द्रियाणामुपकारकतमत्वमात्रेण हेतोस्तत्रानैकान्त्यकथा ॥

तत्र ( १ ) विवादास्पदमज्ञानम् , न ज्ञानमात्रब्रह्माश्रयम् , अज्ञानत्वात् ; शुक्तिकाद्यज्ञानवत् ( २ ) विवादाध्यासितमज्ञानम् , न ज्ञानावरणम् ; अज्ञानत्वात् ; शुक्तिकाद्यज्ञानवत् , विषयावरणं हि तत् ( ३ ) विवादास्पदमज्ञानम् , न ज्ञाननिवर्त्यम् , ज्ञानविषयानावरणत्वात् , यद् ज्ञाननिवर्त्यमज्ञानम् , तद् ज्ञानविषयावरणम् ;यथा शुक्तिकाद्यज्ञानम् (४) ब्रह्म, नाज्ञानास्पदम् , ज्ञातृत्वविरहात् ; घटादिवत् ( ५ ) ब्रह्म, नाज्ञानावरणम् , ज्ञानाविषयत्वात् , यदज्ञानावरणम् , तद् ज्ञानविषयभूतम् , यथा शुक्तिकादि, ( ६ ) ब्रह्म, न ज्ञाननिवर्त्याज्ञानम् , ज्ञानाविषयत्वात् ; यद् ज्ञाननिवर्त्याज्ञानम् , तद् ज्ञानविषयभूतम् , यथा शुक्तिकादि, (७) विवादाध्यासितमज्ञानम् , स्वप्रागभावव्यतिरिक्ताज्ञानपूर्वकं न भवति, प्रमाणज्ञानत्वात् , पराभिमताज्ञानसाधनानुमानवत् (८) ज्ञानम् , न वस्तुनो नाशकम् , शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वात् , यद् वस्तुनो नाशकम् , तच्छक्तिविशेषोपबृंहितं ज्ञानम् , अज्ञानं च दृष्टम् , यथा योगिप्रभृतिज्ञानम् , यथा च मुद्गरादि (९) भावरूपमज्ञानम् , न ज्ञाननाश्यम् , भावरूपत्वात् ; घटादिवदिति प्रतिप्रयोगास्तु नात्र प्रसरन्ति ॥

तत्र (१) प्रथमे प्रयोगे तूलाज्ञानत्वमुपाधिः; स्वरूपज्ञानस्याज्ञानाविरोधित्वस्य साधनादप्रयोजकत्वम् , वृत्तिरूपज्ञानाश्रयत्वानङ्गीकारात् , सिद्धसाधनं च ॥

(२)अयमेव न्यायो द्वितीये प्रयोगेऽपि; स्वरूपज्ञानाज्ञानयोरविरोधात् , वृत्तिज्ञानस्य तदाश्रयत्व-विषयत्वयोरनङ्गीकारेण सिद्धसाधनात् , शुक्त्यज्ञानस्यापि शुक्त्यवच्छिन्नचैतन्यानाश्रयत्वेन शुक्त्यनाश्रयविषयत्वात् तज्ज्ञानानावरणत्वेन दृष्टान्ते साध्यवैकल्यम् । न हि शुक्त्यज्ञानमपि विषयावरणम् , तूलाज्ञानत्वोपाधिस्तु विषयावरणत्वेऽपि दुष्परिहरः ॥

(३) तृतीयप्रयोगस्तु पूर्वोक्तरीत्या ज्ञानाज्ञानयोर्दृष्टान्तेऽपि विषयावरणत्वाभावात् तूलाज्ञानेन सोपाधिकत्वात् , ज्ञानपदेन स्वरूपज्ञानविवक्षायां सिद्धसाधनत्वात् , वृत्तिज्ञानविवक्षायामद्वैतमते तत्रावरणास्वीकारेण बाधाच्च नोत्तिष्ठति ॥

(४,५) तुरीय-पञ्चमप्रयोगयोस्तु ज्ञातृत्वं यदि वृत्तिरूपज्ञानाश्रयत्वेन, तर्हि तस्यैवाज्ञानविषयत्वप्रयोजकत्वात् ज्ञातृत्वविरहस्याज्ञानाश्रयत्वविषयत्वाप्रयोजकत्वात् , घटादीनामज्ञानानास्पदत्वात् , जडत्वस्यैव प्रयोजकत्वाच्चाप्रयोजकत्वम् , जडत्वेन सोपाधिकत्वं च । रजतस्थलेऽपि पूर्वोक्तरीत्या शुक्तिकावच्छिन्नचैतन्यस्यैवाज्ञानविषयत्वम् , प्रमातुरेव चाज्ञानाश्रयत्वम् , तदपि तूलाज्ञानविषय एव, इति तूलाज्ञानत्वेन सोपाधिकत्वमपि ॥

(६) अयमेव न्यायः षष्ठे प्रयोगेऽपि । तूलाज्ञानविषयो हि न्यायो न मूलाज्ञाने प्रवर्तते । तत्र ब्रह्मणो ज्ञानाविषयत्वं प्रमेयत्वाभावेनैव, न तु वृत्तिव्याप्यत्वाभावेन, इति ज्ञानाविषयत्वरूपहेत्वसिद्धिः । वृत्तिज्ञानमात्रनिवर्त्यत्वाच्च मूलाज्ञानस्य शुक्त्यादिज्ञानानिवर्त्यत्वाच्च ब्रह्मज्ञाने बाधोऽपि; शुक्त्यवच्छिन्नचैतन्यविषयत्वात् तूलाज्ञानस्य, मूलाज्ञानस्य चानवच्छिन्नचैतन्यविषयत्वादवच्छिन्नचैतन्यत्वेन, चैतन्यावच्छेदकत्वेन वा सोपाधिकत्वम् ॥

(७) सप्तमानुमाने तु प्रमाणज्ञानस्य साक्षिसिद्धाज्ञाने प्रागभावव्यतिरिक्तत्वसाधन एव तात्पर्यात् दृष्टान्तासिद्धिः । तत्र तद्विषयावरण-स्वप्रागभावव्यतिरिक्ताज्ञानपूर्वकत्वस्यैव विद्यमानत्वात् ॥

(८) अष्टमेऽनुमाने ज्ञानस्य शुक्तिरूप्यादिस्थले यदुपादानं तूलाज्ञानम् , तत्प्रयुक्त-रजतशुक्त्यज्ञान-तत्सम्बन्धानां नाशकत्वदर्शनात् शुक्तिज्ञाने व्यभिचारः; तत्रापि शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वस्य सत्त्वात् ॥

(९) नवमेऽनुमानेऽज्ञानस्य भावाभावविलक्षणतृतीयप्रकारत्वस्य ब्रह्मसिद्धि-तत्त्वप्रदीपिकादौ निरूपितत्वात् , प्रकृतानुमानेऽपि स्वप्रागभावव्यतिरिक्तत्वस्यैव साधनाच्चाश्रयासिद्धिः, शुक्तिरूप्यादौ भावरूपस्य तूलाज्ञानस्येव शुक्त्यज्ञानसम्बन्धस्य, रजतादेश्च भावरूपस्यैव ज्ञाननिवर्त्यत्वस्य दृष्टत्वात् तत्र व्यभिचारः ॥

न केवलं शुक्त्यज्ञानसम्बन्धिरजतादेः, किन्तु भ्रमज्ञानप्रयुक्तभयादीनामपि वस्तूनां शुक्तिरजत-रज्जुसर्पादिस्थले ज्ञानेन निवृत्तिर्दृश्यते, इति क्षमत्यप्र । तत्र शुक्तिज्ञानस्य प्रमाणजन्यस्य तदज्ञानना शकत्वं तत्पूर्वक्षण-

वर्तित्वमात्रेण, इति तस्य क्षणिकत्वम् , स्वत एव नाशो वा भय-कम्पादि-नाशप्रयोजकत्वेऽकिञ्चित्करः ॥

प्रकृतानुमाने 'स्वप्रागभावव्यतिरिक्ते'तिविशेषणं तु स्वप्रागभाव-व्यतिरिक्तत्वस्य प्राधान्येन सिसाधयिषितत्वं सूचयितुम्। अत एव तस्य भावाभावविलक्षणत्वसिद्धान्तः। अतो नानेनानुमानेनाज्ञानसाधन-विरोधः ॥

अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

अनिर्वचनीयाज्ञाने श्रुत्यर्थापत्त्यादिप्रमाणाभावः

श्रुति-तदर्थापत्तिभ्यामज्ञानासिद्धिरनन्तरमेव वक्ष्यते। मिथ्यार्थस्य हि मिथ्यैवोपादानं भवितुमर्हतीत्येतदपि "न विलक्षणत्वादि"त्यधिकरणन्यायेन परिहियते। अतोऽनिर्वचनीयाज्ञानविषया न काचिदपि प्रतीतिरस्ति।

प्रतीति-भ्रान्ति-बाधैरपि न तथाऽभ्युपगमनीयम्; प्रतीयमानमेव हि प्रतीति-भ्रान्ति-बाधविषयः। आभिः प्रतीतिभिः प्रतीत्यन्तरेण चानुपलब्धमासां विषय इति न युज्यते कल्पयितुम् ॥

अद्वैतिनां महासिद्धान्तः

अनिर्वचनीयतायां श्रुत्यर्थापत्त्यादिप्रमाणम्

न केवलं प्रत्यक्षानुमाने, किन्तु "अनृतेन प्रत्यूढाः' इत्याद्यागमोऽपि तत्र प्रमाणम्। एवं मिथ्यार्थस्य मिथ्यैवोपादानं भवितुमर्हति, मिथ्यात्वं तु ज्ञाननाश्यस्योपादानस्यापि ज्ञाननाश्यत्वं विना नोपपद्यते, इत्यर्थापत्तिरपि तत्र प्रमाणमेव। कार्य-कारणभावे वैलक्षण्यमकिञ्चित्करम्; सलक्षणयोरेव कार्य-कारणभाव इति न नियम इत्येवावगमयति 'न विलक्षणत्वाधि-करणम्'; 'न हि दृष्टेऽनुपपन्नं नामेति'न्यायात् ॥

"मायां तु प्रकृतिं विद्यादि"ति वचनेन मायाकार्यत्वस्य प्रपञ्च उपगमात् , तस्याः, तत्प्रयुक्तानां च ज्ञाननिवर्त्यत्वस्य श्रवणात् , "सर्वं खल्विदं ब्रह्मे"ति बाधायां सामानाधिकरण्याच्च शुक्तिरजतादौ ज्ञाननिवर्त्य-त्वस्य ज्ञाननिवर्त्याज्ञाननाशप्रयुक्तनाशत्वस्यापि सिद्धत्वात् , उभयोरप्य-निर्वचनीयत्वमेव स्वीक्रियत इति सिद्धवत्कृत्यैव परैरपि शुक्त्यज्ञानादि-दृष्टान्तस्यात्रोदाहरणाच्च तेन न्यायेन प्रपञ्च-तदुपादानयोरप्यनिर्वचनीयत्वं स्वीकर्तव्यम् ॥

## अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

### भ्रमस्थलेऽनिर्वचनीयवादायोगः, यथार्थख्यातेरेव योगश्च

शुक्त्यादिषु रजतादिप्रतीतेः, प्रतीतिकालेऽपि तन्नास्तीति बाधेन चान्यस्यान्यथाभानायोगाच्च सदसदनिर्वचनीयमपूर्वमेवेदं रजतं दोषवशात् प्रतीयत इति कल्पनीयमिति चेत्, न; तत्कल्पनायामप्यन्यथा भानस्यावर्जनीयत्वात्, अन्यथाभानाभ्युपगमादेव ख्याति-प्रवृत्ति-बाध-भ्रमत्वानामुपपत्तेरत्यन्तापरिदृष्टकारणकवस्तुकल्पनायोगात् ॥

कल्प्यमानं हीदमनिर्वचनीयं न तावद'निर्वचनीयमि'ति प्रतीयते, अपितु परमार्थरजतमित्येव। अनिर्वचनीयमित्येव प्रतीतं चेत्, भ्रान्ति-बाधयोः, प्रवृत्तेरप्यसंभवः। अतोऽन्यस्यान्यथाभानविरहे प्रतीति-प्रवृत्ति-बाध-भ्रमत्वानामनुपपत्तेः, तस्यापरिहार्यत्वाच्च शुक्त्यादिरेव रजताद्याकारेणावभासत इति भवताऽभ्युपगन्तव्यम् ॥

ख्यात्यन्तरवादिनां च सुदूरमपि गत्वाऽन्यथावभासोऽवश्याश्रयणीयः—असत्ख्यातिपक्षे सदात्मना, आत्मख्यातिपक्षेऽर्थात्मना, अख्यातिपक्षेऽप्यन्यविशेषणस्यान्यविशेषणत्वेन, ज्ञानद्वयस्यैकत्वेन च विषयासद्भावपक्षेऽपि विद्यमानत्वेन ॥

किंचानिर्वचनीयमपूर्वरजतमत्र जातमिति वदता तस्य जन्मकारणं वक्तव्यम्। न तावत् तत् प्रतीतितः; तस्यास्तद्विषयत्वेन तदुत्पत्तेः प्रागात्मलाभायोगात्। निर्विषया जाता तदुत्पाद्य तदेव विषयीकरोतीति महतामिदमुपपादनम् ॥

अथेन्द्रियादिगतो दोषः, तन्न; तस्य पुरुषाश्रयत्वेनार्थगतकार्यस्योत्पादकत्वायोगात्। नापीन्द्रियाणि; तेषां ज्ञानकारणत्वात्। नापि दुष्टानीन्द्रियाणि; तेषामपि स्वकार्यभूते ज्ञान एव हि विशेषकरत्वम्। अनादिमिथ्याज्ञानोपादानत्वं तु पूर्वमेव निरस्तम् ॥

किंचापूर्वमनिर्वचनीयमिदं वस्तुजातं रजतादिबुद्धि-शब्दाभ्यां कथमिव विषयीक्रियते, न घटादिबुद्धि-शब्दाभ्याम् ?

रजतादिसादृश्यादिति चेत् , तर्हि तत्सदृशमित्येव प्रतीति-शब्दौ स्याताम् ॥

रजतादिजातियोगादिति चेत् , सा किं परमार्थभूता ? अपरमार्थभूता वा ? न तावत् परमार्थभूता ; तस्या अपर-मार्थान्वयायोगात् । नाप्यपरमार्थभूता; परमार्थान्वयायो-गात् , अपरमार्थे परमार्थबुद्धि-शब्दयोर्निर्वाहकत्वायोगाच्चे-त्यलमपरिणतकुतर्कनिरसनेन । अथवा—

यथार्थं सर्वविज्ञानमिति वेदविदां मतम् ।
श्रुति-स्मृतिभ्यः सर्वस्य सर्वात्मत्वप्रतीतितः ॥
"बहु स्यामि"ति संकल्पपूर्वसृष्ट्याद्युपक्रमे ।
"तासां त्रिवृतमेकैकामि" ति श्रुत्यैव चोदितम् ॥

त्रिवृत्करणमेवं हि प्रत्यक्षेणोपलभ्यते ।
"यदग्ने रोहितं रूपं तेजसस्तदपामपि ॥

शुक्लं कृष्णं पृथिव्याश्चे" त्यग्नावेव त्रिरूपता ।
श्रुत्यैव दर्शिता तस्मात् सर्वे सर्वत्र संगताः ॥
पुराणे चैवमेवोक्तं वैष्णवे सृष्ट्युपक्रमे ।
"नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ॥
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ।
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ॥

महदाद्या विशेषान्ता ह्यण्डमि"त्यादिना ततः ।
सूत्रकारोऽपि भूतानां त्रिरूपत्वं तथाऽवदत् ॥
"त्र्यात्मकत्वात्तु भूयस्त्वादि" ति तेनाभिधाभिदा ।
सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम् ॥
सोमावयवसद्भावादिति न्यायविदो विदुः ।
व्रीह्यभावे च नीवारग्रहणं व्रीहिभावतः ॥
तदेव सदृशं तस्य यत्तद्द्रव्यैकदेशभाक् ।
शुक्त्यादौ रजतादेश्च भावः श्रुत्यैव बोधितः ॥

रूप्य-शुक्त्यादिनिर्देशभेदो भूयस्त्वहेतुकः ।
रूप्यादिसदृशश्चायं शुक्त्यादिरुपलभ्यते ॥
अतस्तस्यात्र सद्भावः प्रतीतेरपि निश्चितः ।
कदाचिच्चक्षुरादेस्तु दोषाच्छुक्त्यंशवर्जितः ॥
रजतांशो गृहीतोऽतो रजतार्थी प्रवर्तते ।
दोषहानौ तु शुक्त्यंशे गृहीते तन्निवर्तते ॥
अतो यथार्थं रूप्यादिविज्ञानं शुक्तिकादिषु ।
बाध्य-बाधकभावोऽपि भूयस्त्वेनोपपद्यते ॥
शुक्तिभूयस्त्ववैकल्य-साकल्यग्रहरूपतः ।
नातो मिथ्यार्थ-सत्यार्थविषयत्वनिबन्धनः ॥
एवं सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः ।

### अत्राद्वैतिनां महासिद्धान्तः

#### भ्रमस्थलेऽनिर्वचनीयख्यातिसमर्थनम् , ख्यात्यन्तरनिरासश्च

'अहमज्ञः' इति प्रत्यक्षस्य, पूर्वोक्तानुमानादेः "अनृतेन प्रत्यूढाः" इत्यादिश्रुतिजन्यप्रतीतेश्च प्रागभावव्यतिरिक्त-स्वविषयावरण-भावरूप-ज्ञाननिवर्त्याज्ञानविषयकस्य सत्त्वाद'निर्वचनीयाज्ञानविषया न काऽपि प्रतीतिरि'ति वचनं कथामात्रम् ॥

अतो भ्रान्ति-बाधौ नानिर्वचनीयभावरूपाज्ञानस्वीकारं विनोपपद्येते । अतः शुक्त्यादिरजतादिप्रतीतेर्व्यवहारकालेऽपि 'तन्नास्ती'ति बाधेन, अन्यस्यान्यथाभानाच्चानिर्वचनीयमपूर्वमेवेदं रजतमिति दोषवशात् कल्पनीयम् ॥

तथा सति हीदन्तादात्म्येनैव रजतस्योत्पत्तेरसत्ख्याति-प्रवृत्तिबाधानां नोपपत्तिः । सत्ख्यातिवादे, अन्यथाख्यातिवादे वा रजतस्मरणात् 'इदं रजतमि'ति ख्यापनाच्च नेदङ्काराऽभिमुखी प्रवृत्तिः संभवेत् । अतः पूर्वदृष्टसदृशमज्ञानोपादानकमपूर्वं रजतं तत्रोत्पद्यत इति स्वीकर्तव्यम् ॥

तत्र भ्रमदशायां प्रतीयमानं वस्तुगत्याऽनिर्वचनीयमिति बाधवशाद् निर्णीयते; न त्व'निर्वचनीयमि'ति तदनिर्वचनीयत्वनिर्णयात्, इति भ्रम-बाधान्यथानुपपत्त्या यावद्बाधं भ्रमत्वस्य तद्विषयानिर्वचनीयत्वस्य वाऽनिर्णयाच्च, तस्यैवानिर्वचनीयत्वेन प्रतीतिर्न सम्भवति; अन्यथा भ्रान्ति-रजतबाधवैयर्थ्यात् । 'इदं रजतमि'ति प्रतीतिकाले रजतार्थिनो बाधानन्तरमिव

प्रवृत्त्यनुपपत्तेश्च, इति भ्रमकाले नान्यस्यान्यथा भानम्, बाधानन्तरमपि शुक्तिव्यतिरेकेण रजताभावाद् नान्यस्यान्यथाभानम्, येनानिर्वचनीयख्यातिवादिनामप्यन्यस्यान्यथाभानमवर्जनीयं स्यात् ॥

तत्र यत्राप्यसत्ख्यातिपक्षेऽसतः सदात्मना, आत्मख्यातिपक्षे चार्थात्मना, ज्ञानद्वयस्य विवेकाग्रहेणैकत्वेन विषयासद्भावपक्षेऽपि विद्यमानत्वेन च प्रतीतिव्यवस्थाऽन्यत्रान्यथा भानमिति कृत्वैवात्राप्यनिर्वचनीयख्यातिरुररीक्रियते ॥

तस्यानिर्वचनीयस्योपादानकारणं स्वतः प्रमातृचैतन्याश्रिता, पुरोवर्त्याकारवृत्तिनिर्गमप्रयुक्तेनाभेदेन पुरोवर्त्यवच्छिन्नचैतन्याभिन्नप्रमातृचैतन्याश्रिता च तूलाविद्या, न तु प्रतीतिरेव, येन तद्विषयायाः प्रतीतेस्तदुत्पत्तेः प्रागात्मलाभायोगः। तत्र चेन्द्रियादिगतदोषः सहकारिकारणम्। इन्द्रियगतस्यापि दोषस्येन्द्रियसंयुक्तविषयावच्छिन्नचैतन्याभिन्नप्रमातृचैतन्याश्रयत्वेनार्थगतकार्योत्पादकत्वोपपत्तिः, इति तूलाज्ञानोपादानत्वमेव स्वीक्रियते ॥

अनिर्वचनीयं रजतमिदन्तादात्म्येन रजतविशिष्टरूपेणैवोत्पादाद् रजतादि-बुद्धिशब्दाभ्यां व्यपदिश्यते, न घटादिबुद्धि-शब्दाभ्याम्। तत्र दोष इव रजतादिसादृश्यज्ञानमपि कारणम्, इति तत्संस्कारसध्रीचीनया तूलाविद्यया रजतस्य विशिष्टस्यैवानिर्वचनीयस्योत्पत्तिः, न तु तत्सादृश्यमात्रम्, येन भ्रमकाले तत्सदृशमेव प्रतीयेत। तत्र प्रतीयमानं रजतमप्यनिर्वचनीयरजतत्वविशिष्टमेव प्रतीयते; तथापि रजतत्वस्य प्रातिभासिक-व्यावहारिकसाधारणस्यैवोत्पत्तेः, प्राचामाचार्याणामसन्निकृष्टव्यावहारिकरजततादात्म्यस्यापि प्रतीतेर्वा, नापरमार्थस्य प्रातिभासिकस्य, व्यावहारिकस्य वा स्वीकारो विरुध्यते। परमार्थतस्तु तद् नास्त्येव, इति न तत्रापरमार्थे परमार्थबुद्धि-शब्दप्रयोगः, परमार्थे वाऽपरमार्थबुद्धि-शब्दप्रयोगः। सर्वथा तु न परमार्थख्यातिर्युक्ता ॥

"यथार्थं सर्वविज्ञानमिति वेदविदां मतम्" इति श्रीभाष्यप्रस्तुता यथार्थख्यातिरसाधारणी भ्रम-बाधानुपपत्त्या तत्र प्रतीयमानस्य रजतस्य रजतार्थक्रियाकारित्वापत्त्या, न्यायसुधोक्तरीत्या मातृ-मतङ्ग-मदिरासु भार्यात्वादिबुद्ध्या क्रियमाणस्य व्यवहारस्य साधुत्वापत्त्या च न समादरमर्हति ॥

न हि श्रुति-स्मृतयः सर्वस्य सर्वात्मत्वं बोधयन्ति, किन्तु कारणस्य कार्यात्मत्वम्। न च स्वयं शुक्तिः रजतस्योपादानम्, येन तयोरभेदः पारमार्थिकः स्यात्। "तासां त्रिवृतं त्रिवृतमि"ति त्रिवृत्करणविधया, पञ्चीकरणविधया च सूक्ष्मभूतानाम्, सत्यम्, तत्तदंशभूयस्त्वाल्पत्वाभ्यां सर्वांशत्वं बोधयति, परन्तु "वैशेष्यात्तु तद्वादस्तद्वादः" इति तत्र तत्र तत्तच्छब्दव्यवहारो वैशेष्यनिबन्धन एव, नान्यथेति व्यवस्थाप्यते॥

न च सर्वत्र सङ्गता इत्येतावन्मात्रेण सर्वस्य सर्वात्मत्वम्, सर्वशब्दोपपत्तिश्च; अन्यथा व्रीहि-यव-दधि-पयो-घृत-सोमादीनां सर्वेषां सर्वशब्दवाच्यत्वात् कर्मसु तत्तद्द्रव्यनियमो बाधितः स्यात्, सोमविधिना पूतीकस्यापि विधानात् तस्यापि मुख्यत्वात्, किं बहुना? सर्वेषामपि द्रव्याणां विहितानाम्, अविहितानां च समानत्वात्, मुख्यत्वाच्च "यदि सोमं न विन्देत पूतीकानभिषिणुयादि"ति प्रतिनिधिविधानम्, तत्रापि पूतीकस्यैव विधानमसङ्गतं स्यात्; भूयस्त्वाल्पत्वाभ्यां मुख्य-प्रतिनिधिभावे पूतीकांशस्य मुख्यकार्यकारित्वे 'इदं रजतमि'त्यत्र मुख्यरजतावयवाभावेऽपि प्रतिनिधिनापि तत्कार्यकारित्वोपपत्तिः॥

न चात्र मुख्यावयवसद्भावमात्रेण मुख्यकार्यकारित्वम्; मातृमतङ्गमदिराणामपि भार्या-ब्राह्मण-दुग्धावयवसद्भावात् भार्यादिकार्यकारित्वं न दोषाय स्यात्, श्रुतिचोदितावयवसद्भाव एव यदि कार्यकारिता, तर्हि शुक्तौ कथं रङ्ग-रजतादिबहुविधभ्रमनिर्वाहः?

यदि शुक्त्यादौ रजतावयवः श्रुत्यैव बोधितः, यदि च रूप्य-शुक्त्यादिनिर्देशभेदो भूयस्त्वहेतुकः, तत एव रूप्यादिसदृशं शुक्त्यादिरूपं लभ्यते, अत एव च तस्यात्र सद्भावप्रतीतिरपि निश्चिता, तर्हि कथं तत्र रङ्गादिबुद्धिर्यथार्था स्यात्? रज्जौ सर्प-भूरन्ध्रादिश्च यथार्थः स्यात्? कथं च शुक्तिरजतज्ञानेन रजतार्थिनां प्रवृत्तिः, तद्बाधो वा? यदि दोषवशात् रजतस्य प्रतीत्यादिः, दोषनाशेन शुक्त्यंशे गृहीते ततो निवर्तते, तर्हि कथं दोषवतामपि रजतार्थिनां स्वल्परजतांशकार्यमपि न तेन संभवति इति? यथार्थैव ख्यातिरियमिति न विकल्पसहा। अयमेव न्यायः स्वप्नादावपि॥

श्रीभाष्यकाराणां महापूर्वपक्षः

स्वप्नेऽपि यथार्थख्यातिरेव, नानिर्वचनीयख्यातिः

स्वप्ने च प्राणिनां पुण्य-पापानुगुणं भगवतैव तत्तत्पुरुषमात्रानुभाव्याः, तत्तत्कालावसानाः, तथाभूताश्चार्थाः

सृज्यन्ते। तथा हि श्रुतिः स्वप्नविषया—"न तत्र रथा न रथयोगा न पन्थानो भवन्ति, अथ रथान् रथयोगान् पथः सृजते न तत्राऽऽनन्दा मुदः प्रमुदो भवन्ति, अथानन्दान् मुदः प्रमुदः सृजते, न तत्र वेशन्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति, अथ वेशन्ताः पुष्करिण्यः स्रवन्त्यः सृजते, स हि कर्ता" इति ॥

यद्यपि सकलेतरपुरुषानुभाव्यतया तदानीं न भवन्ति; तथाऽपि तत्तत्पुरुषमात्रानुभाव्यतया तथाविधानर्थानीश्वरः सृजति। स हि कर्ता=तस्य सत्यसङ्कल्पस्याश्चर्यशक्तेस्तथाविधं कर्तृत्वं संभवतीत्यर्थः। "य एषु सुप्तेषु जागर्ति कामं पुरुषो निर्मिमाणः। तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते। तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इति च ॥

सूत्रकारोऽपि—"सन्ध्ये सृष्टिराह हि" "निर्मातारं चैके पुत्रादयश्च" इति सूत्रद्वयेन स्वाप्नेष्वर्थेषु जीवस्य न स्रष्टृत्वमुपपद्यते; जीवस्य स्वाभाविकसत्यसङ्कल्पत्वादेः कृत्स्नस्य संसारदशायामनभिव्यक्तस्वरूपत्वात्, ईश्वरस्यैव तत्तत्पुरुषमात्रानुभाव्यतया आश्चर्यभूता सृष्टिरियम्; "तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चने"ति परमात्मैव तत्र स्रष्टेत्यवगम्यते—इति परिहरति ॥

अपवरकादिषु शयानस्य स्वप्नदृशः स्वदेहेनैव देशान्तरगमन-राज्याभिषेक-शिरश्छेदादयश्च पुण्य-पापफलभूताः शयानदेहसरूपसंस्थानदेहान्तरसृष्ट्योपपद्यन्ते ॥

### अद्वैतिनां महासिद्धान्तः

#### स्वाप्नेऽप्यनिर्वचनीयख्यातिरेव, न यथार्थख्यातिः

तत्र स्वप्ने यदि प्राणिनां पुण्य-पापानुगुणं भगवतैवार्थाः सृज्यन्ते, तर्हि जागरेऽपि प्राणिनां पुण्य-पापानुगुणं भगवतैव सृष्टत्वात्, तत्तत्पुरुषमात्रानुभाव्यानां कथं भगवत्सृष्टिरपि विनैव तत्तदवान्तरोपादानादिकारणं कुत्र वा दृष्चरी? अन्यथा जागरेऽपि तत्तत्प्राणिनां पुण्य-पापानुगुणं विनैव दारादिकं सर्वानुभाव्या अर्थाः कथं न सृज्यन्ते?

तस्य सत्यसङ्कल्पस्याश्चर्यशक्तेश्च तथाविधकर्तृत्वसम्भवाद् व्यर्थो मायादिकारणतावादस्तत्कार्यजातेषु ॥

यदि सत्यसंकल्पत्वात्, तर्हि मुक्तात्मनामपि सत्यसङ्कल्पत्वात् सर्वपुरुषानुभाव्यतत्तत्स्रष्टृत्वसम्भवात् किमीश्वरेण? यदि श्रुतिवशादीश्वरकर्तृत्वमेव सर्वत्र, तर्हि मुक्तात्मनामपीश्वरसृष्टेरेव कार्यनिर्वाहात् स्वप्न इव तत्तत्पुरुषमात्रानुभाव्यार्थसृष्ट्युपपत्तेर्मुक्तात्मनां सत्यसङ्कल्पानामपि तत्तन्मात्रानुभाव्यसुखानन्दानार्थसृष्टिः किमर्थमुपन्यस्ता। यदि श्रुतिर्नियोगं नार्हति, तर्हि मुक्तात्मनाम्, ईश्वरस्य चाश्चर्यशक्तियोगेनैव स्रष्टृत्वसंभवात् किं वा कृत्यं सत्यसंकल्पत्वस्य, इति कार्त्स्न्येनानभिव्यक्तस्वरूपत्वहेतूपन्यासेन जीवकर्तृत्वनिरासः कथमुपपद्यते?

स्वाप्नानां मायामात्रत्वोपन्यासेनेश्वरस्यैव जगत्कारणत्वस्य श्रुताववगमात्, तत्कर्तृत्वस्य च श्रौतस्य नियोगपर्यनुयोगानर्हत्वाद् मायामात्रोल्लेखः किमर्थः? जीवकर्तृत्वे तु जीवस्य शुक्तिरजतादिस्थल इव स्वाश्रिततूलाविद्योपादानकत्वेन, विनैव जागरिकस्थल इव तत्तदवान्तरकारणापेक्षां स्वाप्नकर्तृत्वमुपपादयितुं मायामात्रपदम्, मायाशब्दस्यानेकार्थत्वेऽपि प्रकृते मायापदं जीवाश्रिताविद्यापरमिति मन्तव्यम् ॥

शुक्तिरजतादिस्थलेऽप्ययमेव न्यायः। न हि तत्रापि तत्तत्पुरुषमात्रानुभाव्याः तत्तत्कालावसाना अर्था ईश्वरसृष्टा इति यथार्थख्यातिवादिनोऽपि वक्तुमीशते। तत्तत्सदृशानां प्रतिनिधीनां सर्वानुभाव्यत्वात् तत्तत्प्रतीतिकालमात्रस्वभावत्वात्, शुक्तिरजतादीनां च तद्विपरीतत्वाच्च तत्र सत्यसंकल्पस्य भगवतः आश्चर्यशक्त्या विचिन्त्य तत्तत्कार्यस्रष्टृत्वं जागराणामपि स्वीक्रियते चेत्, यदि च न तत्र मायाख्या प्रकृतिः, तर्हि तत्रोपादानकारणमीश्वर इत्येव वक्तव्यम्; अन्यथा तस्य स्वाप्नानामिव निमित्तोपादानत्वानुपपत्तेः? इति यदीश्वरस्य स्वशक्तिमात्रेणोपादानत्वम्, तर्हि स्वशक्तिमात्रेणेश्वरः परिणामिकारणमिति वदतो भास्करस्यैव सिद्धान्तोऽयमिति स्यात्, तत्र च शुद्ध-बुद्धब्रह्मविकारित्वप्रसङ्गः। अधिकन्त्ववसरे व्यक्तीकरिष्यते ॥

श्रीभाष्यकाराणां महापूर्वपक्षः

पीतशङ्खादिभ्रमे यथार्थख्यातिरेव, नानिर्वचनीयख्यातिः

पीतशङ्खादौ तु नयनवर्तिपित्तद्रव्यसंभिन्ना नायनररश्मयः शङ्खादिभिः संयुज्यन्ते। तत्र पित्तगतपीतिमाभिभूतः

शङ्खगतशुक्लिमा न गृह्यते। अतः सुवर्णानुलिप्तशङ्खवत् 'पीतः शङ्खः' इति प्रतीयते। पित्तद्रव्यं तद्गतपीतिमा चातिसौक्ष्म्यात्, पार्श्वस्थैर्न गृह्यते। पित्तोपहतेन तु स्वनयननिष्क्रान्ततयाऽतिसामीप्यात् सूक्ष्ममपि गृह्यते। तद्ग्रहणजनितसंस्कारसचिवनायनरश्मिभिर्दूरस्थमपि गृह्यते॥

जपाकुसुमसमीपवर्तिस्फटिकमणिरपि तत्प्रभाभिभूततया रक्त इति गृह्यते। जपाकुसुमप्रभाऽपि स्वच्छद्रव्यसंयुक्ततया स्फुटतरमुपलभ्यत इत्युपलब्धिव्यवस्थाप्यमिदम्॥

मरीचिकाजलज्ञानेऽपि तेजःपृथिव्योरप्यम्बुनो विद्यमानत्वादिन्द्रियदोषेण तेजःपृथिव्योरग्रहणाददृष्टवशाच्चाम्बुनो ग्रहणाद् यथार्थत्वम्॥

अलातचक्रेऽप्यलातस्य द्रुततरगमनेन सर्वदेशसंयोगादन्तरालाग्रहणात्तथा प्रतीतिरुपपद्यते। चक्रप्रतीतावप्यन्तरालाग्रहणपूर्वकतत्तद्देशसंयुक्ततत्तद्वस्तुग्रहणमेव। क्वचिदन्तरालाभावादन्तरालाग्रहणम्, क्वचिच्छैघ्र्याद्ग्रहणमिति विशेषः। अतस्तदपि यथार्थम्॥

दर्पणादिषु निजमुखादिप्रतीतिरपि यथार्था। दर्पणादिप्रतिहतगतयो हि नायनरश्मयो दर्पणादिदेशाग्रहणपूर्वकं निजमुखादि गृह्णाति। तत्राप्यतिशैघ्र्यादन्तरालाग्रहणात् तथा प्रतीतिः॥

दिङ्मोहेऽपि दिगन्तरस्यास्यां दिशि विद्यमानत्वाददृष्टवशेनैतद्दिगंशवियुक्तो दिगन्तरांशो गृह्यते। अतो दिगन्तरप्रतीतिर्यथार्थैव॥

द्विचन्द्रज्ञानादावपि अङ्गुल्यवष्टम्भ-तिमिरादिभिर्नायनतेजोगतिभेदेन सामग्रीभेदात् सामग्रीद्वयमन्योन्यनिरपेक्षं चन्द्रग्रहणद्वयहेतुर्भवति। तत्रैका सामग्री स्वदेशविशिष्टं चन्द्रं गृह्णाति, द्वितीया तु किञ्चिद्वक्रगतिश्चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णाति। अतः सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणे, ग्रहणभेदेन ग्राह्याकारभेदात्, एकत्वग्रहणाभावाच्च द्वौ चन्द्राविति भवति

प्रतीतिविशेषः। देशान्तरस्य तद्विशेषणत्वम्, देशान्तरस्य गृहीतस्वदेशचन्द्रस्य च निरन्तरग्रहणेन भवति। तत्र सामग्रीद्वित्वं पारमार्थिकम्। तेन देशद्वयविशिष्टचन्द्रग्रहणद्वयं च पारमार्थिकम्। ग्रहणद्वित्वेन चन्द्रस्यैव ग्राह्याकारद्वित्वं च पारमार्थिकम्॥

तत्र विशेषणद्वयविशिष्टचन्द्रग्रहणद्वयस्यैक एव चन्द्रो ग्राह्य इति ग्रहणे प्रत्यभिज्ञानवत् केवलचक्षुषः सामर्थ्याभावाच्चाक्षुषज्ञानं तथैवावतिष्ठते। द्वयोश्चक्षुषोरेकसामग्र्यन्तर्भावेऽपि तिमिरादिदोषभिन्नं चाक्षुषं तेजः सामग्रीद्वयं भवतीति कार्यकल्प्यम्। अपगते तु दोषे स्वदेशविशिष्टस्य चन्द्रस्यैकग्रहणवेद्यत्वादेकश्चन्द्र इति भवति प्रत्ययः। सामग्रीदोषकृतं तु द्वित्वमिति निरवद्यम् अतः सर्वं विज्ञानजातं यथार्थमिति सिद्धम्॥

ख्यात्यन्तराणां दूषणानि तैस्तैर्वादिभिरेव प्रपञ्चितानि, इति न तत्र यत्नः क्रियते। अथवा किमनेन बहुनोपपादनप्रकारेण?

प्रत्यक्षानुमानागमाख्यं प्रमाणजातम्। आगमगम्यं च निरस्तनिखिलदोषगन्धम्, अनवधिकातिशयासङ्ख्येयकल्याणगुणगणम्, सर्वज्ञम्, सत्यसङ्कल्पम्, परं ब्रह्माभ्युपगच्छतां किं न सेत्स्यति? किं नोपपद्यते?

भगवता हि परेण ब्रह्मणा क्षेत्रज्ञपुण्य-पापानुगुणं तद्भोग्यत्वायाखिलं जगत् सृजता सुख-दुःखोपेक्षाफलानुभवानुभाव्याः पदार्थाः सर्वसाधारणानुभवविषयाः, केचन तत्तत्पुरुषमात्रानुभवविषयाः, तत्तत्कालावसानाः तथा तथाऽनुभाव्याः सृज्यन्ते। तत्र बाध्य-बाधकभावः सर्वानुभवविषयतया, तद्रहिततया चोपपद्यते, इति सर्वं समञ्जसम्॥

अद्वैतिनां महासिद्धान्तः

पीतशङ्खादिस्थलेऽपि न यथार्थख्यातिः,

किन्तूपाधिसंनिकर्षेऽन्यथाख्यातिः

पीतशङ्खभ्रमे तु तत्तत्पुरुषमात्रानुभाव्यत्वे तत्तत्पुरुषमात्राश्रितपीतादिदोषनिबन्धनं तत्तत्पुरुषपुण्य-पापानुगुणं न भगवत एव स्वाप्नस्थल इव

स्रष्टृत्वम् ; यतो जीवस्यैव तत्र भ्रमाश्रयत्वात् कर्तृत्वम् , इति तत्तत्पुरुषमात्राश्रितदोषनिबन्धनज्ञानानां तत्तत्पुरुषमात्रानुभाव्यत्वेन न तत्रेश्वरीयैश्वर्यशक्तिः कारणमिति स्वीकर्तव्यम् , अन्यथा स्वाप्नभ्रमादाविवेश्वरस्यैव तत्तदर्थानुभवितृत्वापत्त्या स्वाप्नावस्था, न जीवस्य, किन्त्वीश्वरस्यैवेति स्यात् , पीतशङ्खादिभ्रमाणां तदाश्रितकारणविशेषनिबन्धनानामिव, इति जीवाश्रितदोषवशादेव स्वाप्नादिसृष्टिः, तस्यैव भ्रान्तत्वमपीति सम्यग् लगति ॥

तत्र यदि पीतशङ्खभ्रमादौ सोपाधिकभ्रमत्वात् तत्र चान्यथाख्यातेरेव स्वीकाराद् न तत्रापि पीतिमादीनामनिर्वचनीयत्वम् , संसर्गमात्रस्याध्यासात् , तर्हि यत्र संसर्गमात्रस्य तत्तत्पुरुषगतदोषवशेनैव तत्तत्पुरुषमात्रानुभाव्यत्वम् , तत्रैवेश्वरस्य स्रष्टृत्वम् , न तु शुक्तिरजतादौ, यत्रोभयोरपि तत्तत्पुरुषमात्रानुभाव्यत्वम् , तत्र तेन न्यायेन तत्तज्जीवानामेव तत्तन्मात्राश्रितदोषवशादेव तत्तत्संसर्गादीनां कारणत्वम् , तदाश्रितश्च दोषः स्वाप्नात्मना परिणममानाज्ञानमेवावरण-विक्षेपशक्तिमत्तूलाज्ञानं नाम शुक्तिरजतादिस्थल इव, इति न तत्रानिर्वचनीयख्यातिं विनोपपत्तिः ॥

पीतशङ्खभ्रमन्याय इव लोहितस्फटिक-मरुमरीचिकाः-प्रतिबिम्बादि-दिङ्मोह-द्विचन्द्रादिभ्रमेऽपि, यत्रान्यथाख्यातिरेव सन्निकृष्टभ्रमस्थले ॥

सारांशस्तु—तत्तत्ख्यातिविशेषाणां तत्तद्वादिसंमतानां ख्यात्यन्तरवादिभिः समर्थनम् , वाद्यन्तरसम्मतख्यातिवादानां सर्वेषां निरासश्च तत्तन्निबन्धेषु दृश्यत इति हि विचारसरणिः, इति वाद्यन्तरैर्वाद्यन्तराणां सर्वेषां निरासवदनिर्वचनीयख्यातिवादिभिरपि स्वसिद्धान्तानुगुणं ख्यात्यन्तरवादाः निरस्यन्ते, स्वीयानिर्वचनीयख्यातिश्च यथासंभवमावापोद्वापाभ्यां समर्थ्यते च। सर्वोऽपि स्वीयः सिद्धान्तः प्रत्यक्षानुमानागमादिप्रमाणपरीक्षणेनैवापरैरिवाद्वैतिभिरपि समर्थ्यते, इत्यावापोद्वापाभ्यां शास्त्रतत्त्वे विमृश्यमाने ब्रह्मैकमेव सत्यम्. तदतिरिक्तं त्वज्ञानप्रयुक्तं भेदजातं मिथ्येति निश्चीयते ॥

तत्र च मिथ्यात्वमनिर्वचनीयत्वापरपर्यायं श्रुतिसिद्धं सदसद्विलक्षणत्वम् ॥

अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

मायाद्यनिर्वचनीयत्वायोगः

यत् पुनः—सदसदनिर्वचनीयमज्ञानं श्रुतिसिद्धम् —इति, तदसत् ; "अनृतेन हि प्रत्यूढाः" इत्यादिष्वनृत-

शब्दस्यानिर्वचनीयानभिधायित्वात् । ऋतेतरविषयो ह्यनृतशब्दः । ऋतमिति कर्मवाचि; "ऋतं पिबन्ताविश्"ति वचनात् । ऋतं कर्म फलाभिसन्धिरहितं परमपुरुषाराधनवेषं तत्प्राप्तिफलम् । अत्र तद्व्यतिरिक्तं सांसारिकफलं कर्मानृतं ब्रह्मप्राप्तिविरोधि; "एतं ब्रह्मलोकं न विन्दन्ति । अनृतेन हि प्रत्यूढाः" इति वचनात् ॥

"नासदासीन्नो सदासीत्" इत्यत्रापि सदसच्छब्दौ चिदचिद्व्यष्टिविषयौ; उत्पत्तिवेलायां सत्त्यच्छब्दाभिहितयोश्चिदचिद्व्यष्टिभूतयोर्वस्तुनोरप्ययकालेऽचित्समष्टिभूते तमश्शब्दाभिधेये वस्तुनि प्रलयप्रतिपादनपरत्वादस्य वाक्यस्य । नात्र कस्यचित् सदसदनिर्वचनीयतोच्यते; सदसतोः कालविशेषेऽसद्भावमात्रवचनात् ॥

अत्र तमश्शब्दाभिहितस्याचित्समष्टित्वं श्रुत्यन्तरादवगम्यते—"अव्यक्तमक्षरे लीयते," "अक्षरं तमसि लीयते" इति । सत्यम्, तमश्शब्देनाचित्समष्टिरूपायाः प्रकृतेः सूक्ष्मावस्थोच्यते ॥

तस्यास्तु "मायां तु प्रकृतिं विद्यादि"ति मायाशब्देनाभिधानादनिर्वचनीयत्वमिति चेत्, नैतदेवम्; मायाशब्दस्यानिर्वचनीयवाचित्वं न दृष्टमिति ॥

मायाशब्दस्य मिथ्यापर्यायत्वेनानिर्वचनीयवाचित्वमिति चेत्, तदपि नास्ति । न हि सर्वत्र मायाशब्दो मिथ्याविषयः; आसुर-राक्षसादिषु सत्येष्वेव मायाशब्दप्रयोगात् । यथोक्तम्—

"तेन मायासहस्रं तच्छम्बरस्याशुगामिना ।
बालस्य रक्षता देहमैकैकश्येन सूदितम् ॥"

इति । अतो मायाशब्दो विचित्रार्थसर्गकराभिधायी ॥

प्रकृतेश्च मायाशब्दाभिधानं विचित्रार्थसर्गकरत्वादेव । "अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः" इति मायाशब्दवाच्यायाः प्रकृतेर्विचित्रार्थसर्गकरत्वं दर्शयति । परमपुरुषस्य च तद्वत्तामात्रेण मायि-

त्वमुच्यते; नाज्ञत्वेन। जीवस्यैव हि मायया निरोधः श्रूयते—"तस्मिंश्चान्यो मायया सन्निरुद्धः" इति, "अनादि-मायया सुप्तो यदा जीवः प्रबुध्यते" इति च। "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यत्रापि विचित्राः शक्तयोऽभि-धीयन्ते ॥

अत एव हि "भूरि त्वष्टेव राजति" इत्युच्यते। न हि मिथ्याभिभूतः कश्चिद्विराजते। "मम माया दुर-त्यया" इत्यत्रापि गुणमयीति वचनात्। सैव त्रिगुणात्मिका प्रकृतिरुच्यते, इति न श्रुतिभिः सदसदनिर्वचनीयाज्ञान-प्रतिपादनम् ॥

नाप्यैक्योपदेशानुपपत्त्या। न हि "तत्त्वमसी"ति जीव-परयोरैक्योपदेशे सति, सर्वज्ञे, सत्यसङ्कल्पे, सकल-जगत्सर्ग-स्थिति-विनाशहेतुभूते, तच्छब्दावगते, प्रकृते ब्रह्मणि विरुद्धाज्ञानपरिकल्पनाहेतुभूता काचिदप्यनुपपत्ति-र्दृश्यते ॥

ऐक्योपदेशस्तु त्वंशब्देनापि जीवशरीरकस्य ब्रह्मण एवाभिधानादुपपन्नतरः। "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नाम-रूपे व्याकरवाणी"ति सर्वस्य वस्तुनः परमात्मपर्यन्त-स्यैव हि नाम-रूपभाक्त्वमुक्तम्। अतो न ब्रह्माज्ञानपरि-कल्पनम् ॥

### अद्वैतिनां महासिद्धान्तः

#### मायाद्यनिर्वचनीयत्वसमर्थनम्

"अनृतेन प्रत्यूढाः" इति श्रुतिरनृतपदेनानिर्वचनीयमज्ञानमेव श्रावयति; ऋतपदस्य सत्यपरत्वात्, तद्विपरीतपरत्वाच्चानृतपदस्य। "ऋतं पिबन्तावि"त्यत्र तु पिबन्ताविति पदसमभिव्याहारात् ऋतपदं कर्मफलपरम्, अत्र तु ऋतपदं प्रत्यूढपदसमभिव्याहारादावावरणशक्ति-मदविद्यापरम्, व्यक्तञ्चाधस्तात् कर्मणोऽविद्यात्वमविद्याप्रयुक्तत्वेनौपचा-रिकमिति विष्णुपुराणानुसारेण। अधिकमद्वैततत्त्वशुद्धौ। ऐक्योपदेशोपप-त्त्यादिकमद्वैतवादेऽप्युपपद्यत इति व्यक्तं शतभूषण्यादौ। व्यक्तीकरिष्यते चेदमुपरिष्टात् ॥

### अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

#### इतिहास-पुराणयोरप्यनिर्वचनीयाज्ञानवादाभावः

इतिहास-पुराणयोरपि न ब्रह्माज्ञानवादः क्वचिदपि दृश्यते ॥

#### अत्राद्वैतिनां शङ्का

ननु "ज्योतींषि विष्णुः" इति ब्रह्मैकमेव तत्त्वमिति-प्रतिज्ञाय "ज्ञानस्वरूपो भगवान् यतोऽसौ" इति शैलाब्धि-धरादिभेदभिन्नस्य जगतो ज्ञानैकस्वरूपब्रह्माज्ञान-विजृम्भितत्वमभिधाय, "यदा तु शुद्धं निजरूपि" इति ज्ञानस्वरूपस्यैव ब्रह्मणः स्वस्वरूपावस्थितिवेलायां वस्तु-भेदाभावदर्शनेनाज्ञानविजृम्भितत्वमेव स्थिरीकृत्य "वस्त्वस्ति किम्" "मही घटत्वम्" इति श्लोकद्वयेन जगदुप-लब्धिप्रकारेणापि वस्तुभेदानामसत्यत्वमुपपाद्य "तस्मान्न विज्ञानमृते" इति प्रतिज्ञातं ब्रह्मव्यतिरिक्तस्यासत्यत्वमुप-संहृत्य, "विज्ञानमेकम्" इति ज्ञानस्वरूपे ब्रह्मणि भेद-दर्शननिमित्ताज्ञानमूलं निजकर्मैवेति स्फुटीकृत्य" "ज्ञानं विशुद्धम्" इति ज्ञानस्वरूपस्य ब्रह्मणः स्वरूपं विशोध्य, "सद्भाव एवं भवतो मयोक्तः" इति ज्ञानस्वरूपस्य ब्रह्मण एव सत्यत्वम् , अन्यस्य चासत्यत्वमेव; तस्य भुवनादेः सत्यत्वं व्यावहारिकमिति तत्त्वं तवोपदिष्टमिति ह्युपदेशो दृश्यते ॥

#### अत्र श्रीभाष्यकाराणां समाधानम्

नैतदेवम् ; अत्र भुवनकोशस्य विस्तीर्णं स्वरूपमुक्त्वा, पूर्वमनुक्तं रूपान्तरं संक्षेपतः "श्रूयताम्" इत्यारभ्याभि-धीयते। चिदचिन्मिश्रे जगति चिदंशो वाङ्मनसागो-चरस्वसंवेद्यस्वरूपभेदः, ज्ञानैकाकारतयाऽस्पृष्टप्राकृतभेदः, अविनाशित्वेनास्तिशब्दवाच्यः, अचिदंशस्तु चिदंशकर्म-निमित्तपरिणामभेदो विनाशी, इति नास्तिशब्दाभिधेयः। उभयं तु परब्रह्मभूतवासुदेवशरीरतया तदात्मकमित्येतद्रूपं संक्षेपेणात्राभिहितम्। तथाहि—

"यदम्बु वैष्णवः कायस्ततो विप्र वसुन्धरा ॥
पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता ॥"

इत्यम्बुनो विष्णोः शरीरत्वेनाम्बुपरिणामभूतं ब्रह्माण्डमपि विष्णोः कायः, तस्य च विष्णुरात्मेति सकलश्रुतिगत-तादात्म्योपदेशोपबृंहणरूपस्य सामानाधिकरण्यस्य "ज्योतींषि विष्णुः" इत्यारभ्य वक्ष्यमाणस्य शरीरात्मभाव-एव निबन्धनमित्याह ॥

अस्मिन् शास्त्रे पूर्वमप्येतदसकृदुक्तम्—"तानि सर्वाणि तद्वपुः" "तत् सर्वं वै हरेस्तनुः" "स एव सर्व-भूतात्मा विश्वरूपो यतोऽव्ययः" इति ॥

तदिदं शरीरात्मभावायत्तं तादात्म्यं सामानाधिकर-ण्येन व्यपदिश्यते—"ज्योतींषि विष्णुरि"ति। अत्रास्त्यात्म-कम् , नास्त्यात्मकं च जगदन्तर्गतं वस्तु विष्णोः कायतया विष्ण्वात्मकमित्युक्तम्—इदमस्त्यात्मकम् , इदं नास्त्यात्म-कम्—इति । अस्य च नास्त्यात्मकत्वे हेतुरयमित्याह—"ज्ञानस्वरूपो भगवान् यतोऽसौ" इति ॥

अशेषक्षेत्रज्ञात्मनाऽवस्थितस्य भगवतो ज्ञानमेव स्वाभाविकं रूपम्, न देव-मनुष्यादिवस्तुरूपम्। यत एवम्, तत एव चिदचिद्रूपदेव-मनुष्य-शैलाब्धिधरादयश्च तद्विज्ञानविजृम्भिताः तस्य ज्ञानैकाकारस्य सतो देवाद्या-कारेण स्वात्मवैविध्यानुसन्धानमूला देवाद्याकारानुसन्धान-मूलकर्ममूला इत्यर्थः। यतश्चाचिद्वस्तु क्षेत्रज्ञकर्मानु-गुणपरिणामास्पदम् , ततस्तन्नास्तिशब्दाभिधेयम् , इतरद-स्तिशब्दाभिधेयमित्यर्थादुक्तं भवति ॥

तदेव विवृणोति—"यदा तु शुद्धं निजरूपी"ति। यदै-तत् ज्ञानैकाकारमात्मवस्तु देवाद्याकारेण स्वात्मनि वैवि-ध्यानुसन्धानमूलसर्वकर्मक्षयाद् निर्दोषं परिशुद्धं निजरूपि भवति, तदा देवाद्याकारेणैकीकृत्यात्मकल्पनामूलकर्मफल-भूताः तद्भोगार्था वस्तुपु वस्तुभेदा न भवन्ति; ये देवादिपु वस्तुष्वात्मतयाऽभिमतेपु भोग्यभूता देव-मनुष्य-शैलाब्धि-धरादिवस्तुभेदाः, ते तन्मूलभूतकर्मसु विनष्टेषु न भवन्ति,

इत्यचिद्वस्तुनः कादाचित्कावस्थाविशेषयोगितया नास्ति-शब्दाभिधेयत्वम् , इतरस्य सर्वदा निजसिद्धज्ञानैकाकार-त्वेनास्तिशब्दाभिधेयत्वमित्यर्थः । प्रतिक्षणमन्यथाभूत-तया कादाचित्कावस्थायोगिनोऽचिद्वस्तुनो नास्तिशब्दा-भिधेयत्वमेवेत्याह।"वस्त्वस्ति किमि"ति ॥

अस्तिशब्दाभिधेयो ह्यादि-मध्य-पर्यन्तहीनः सततैक-रूपः पदार्थः; तस्य कदाचिदपि नास्तिबुद्ध्यनर्हत्वात् । अचिद्वस्तु किंचित् क्वचिदपि तथाभूतं न दृष्टचरम् । ततः किमिति ? अत्राह—"यच्चान्यथात्वमि"ति । यद् वस्तु प्रति-क्षणमन्यथात्वं याति, तदुत्तरोत्तरावस्थाप्राप्त्या पूर्वपूर्वाव-स्थां जहाति, इति तस्य पूर्वावस्थस्योत्तरावस्थायां न प्रति-सन्धानमस्ति । अतः सर्वदा तस्य नास्तिशब्दाभिधेयत्व-मेव । तथा ह्युपलभ्यत इत्याह—"मही घटत्वमि"ति । स्वकर्मणा देव-मनुष्यादिभावेन स्तिमितात्मनिश्चयैः स्व-भोग्यभूतमचिद्वस्तु प्रतिक्षणमन्यथाभूतमालक्ष्यते = अनु-भूयत इत्यर्थः ॥

एवं सति किमप्यचिद्वस्त्वस्तिशब्दार्हमादि-मध्य-पर्य-न्तहीनं सततैकरूपमालक्षितमस्ति किम् ? न ह्यस्तीत्यभि-प्रायः । यस्मादेवम् , तस्माद् ज्ञानस्वरूपात्मव्यतिरिक्त-मचिद्वस्तु कदाचित् क्वचित् केवलास्तिशब्दवाच्यं न भवतीत्याह—"तस्मान्न विज्ञानमृते" इति ॥

आत्मा तु सर्वत्र ज्ञानैकाकारतया देवादिभेदप्रत्य-नीकस्वरूपोऽपि देवादिशरीरप्रवेशहेतुभूतस्वकृतविविध-कर्ममूलदेवादिभेदभिन्नात्मबुद्धिभिस्तेन तेन रूपेण बहुधा-ऽनुसंहितः, इति तद्भेदानुसन्धानं नात्मस्वरूपप्रयुक्तमित्याह—"विज्ञानमेकमि"ति ॥

आत्मस्वरूपं तु कर्मरहितम् , तत एव मलरूपप्रकृति-स्पर्शरहितम् , ततश्च तत्प्रयुक्तशोक-मोह-लोभाद्यशेषहेयगु-णासङ्गि, उपचयापचयानर्हतयैकम् , तत एव सदैकरूपम् , तच्च वासुदेवशरीरम् , इति तदात्मकम्; अतदात्मकस्य कस्यचिदप्यभावादित्याह—"ज्ञानं विशुद्धमि"ति । चिदंशः

सदैकरूपतया सर्वदाऽस्तिशब्दवाच्यः, अचिदंशस्तु क्षणपरिणामित्वेन सर्वदा नाशगर्भः, इति सर्वदा नास्तिशब्दाभिधेयः। एवंरूपचिदचिदात्मकं जगद् वासुदेवशरीरं तदात्मकमिति जगद्याथात्म्यं सम्यगुक्तमित्याह—"सद्भाव एवमि"ति ॥

अत्र सत्यम्, असत्यमिति, यदस्ति, यन्नास्तीति प्रक्रान्तस्योपसंहारः। एतत् ज्ञानैकाकारतया समम्, अशब्दगोचरस्वरूपभेदमेवाचिन्मिश्रम् भुवनाश्रितम्, देवमनुष्यादिरूपेण सम्यग्व्यवहारार्हभेदं यद् वर्तते, तत्र हेतुः कर्मैवेत्युक्तमित्याह—"एतत्तु यदि"ति। तदेव विवृणोति—"यज्ञः पशुरि"ति। जगद्याथात्म्यज्ञानप्रयोजनं मोक्षोपायायतनमित्याह—"यच्चैतदि"ति ॥

अत्र निर्विशेषे परे ब्रह्मणि तदाश्रये सदसदनिर्वचनीये चाज्ञाने, जगतस्तत्कल्पितत्वे वाऽनुगुणं किञ्चदपि पदं न दृश्यते। अस्ति-नास्तिशब्दाभिधेयं चिदचिदात्मकं कृत्स्नं जगत् परमस्य परेशस्य परस्य ब्रह्मणो विष्णोः कायत्वेन तदात्मकम्; ज्ञानैकाकारस्यात्मनो देवादिविविधाकारानुभवे, अचित्परिणामे च हेतुर्वस्तुयाथात्म्यज्ञानविरोधि क्षेत्रज्ञानां कर्मैवेति प्रतिपादनात्, अस्ति-नास्तिसत्यासत्यशब्दानां च सदसदनिर्वचनीयवस्त्वभिधानासामर्थ्याच्च। नास्त्यसत्यशब्दावस्ति-सत्यशब्दविरोधिनौ। अतश्च ताभ्यामसत्त्वं हि प्रतीयते, नानिर्वचनीयत्वम् ॥

अत्र चाचिद्वस्तुनि नास्त्यसत्यशब्दौ न तुच्छत्वमिथ्यात्वपरौ प्रयुक्तौ, अपि तु विनाशित्वपरौ। "वस्त्वस्ति किम्" "मही घटत्वमि"त्यत्रापि विनाशित्वमेव ह्युपपादितम्, न निष्प्रमाणकत्वम्, ज्ञानबाध्यत्वं वा; एकेनाकारेणैकस्मिन् कालेऽनुभूतस्य कालान्तरे परिणामविशेषेणान्यथोपलब्ध्या नास्तित्वोपपादनात् ॥

तुच्छत्वं हि प्रमाणसंबन्धानर्हत्वम्, बाधोऽपि यद्देशकालादिसंबन्धितया यदस्तीत्युपलब्धम्, न तु कालान्तरे-

ऽनुभूतस्य कालान्तरे परिणामादिना नास्तीत्युपलब्धिः; कालभेदेन विरोधाभावात्। अतो न मिथ्यात्वम् ॥

एतदुक्तं भवति—ज्ञानरूपमात्मवस्त्वादि-मध्य-पर्यन्तहीनं सततैकस्वरूपमिति स्वत एव सदाऽस्तिशब्द-वाच्यम्, अचेतनं तु क्षेत्रज्ञभोग्यभूतं तत्कर्मानुगुणपरि-णामि, विनाशीति सर्वदा नास्त्यर्थगर्भम्, इति नास्त्य-सत्यशब्दाभिधेयम्–इति। यथोक्तम्—

"यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ॥
परिणामादिसंभूतां तद्वस्तु नृप तच्च किम् ॥
अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ॥
तत्तु नास्ति न संदेहो नाशिद्रव्योपपादितम् ॥"

इति। देश-काल-कर्मविशेषापेक्षयाऽस्तित्व-नास्तित्वयोगिनि वस्तुनि केवलास्तिबुद्धिबोध्यत्वमपरमार्थ इत्युक्तम्। आत्मन एव केवलास्तिबुद्धिबोध्यत्वम्, इति स परमार्थ इत्युक्तम्। श्रोतुश्च मैत्रेयस्य—

"विष्णवाधारं यथा चैतत् त्रैलोक्यं समवस्थितम्।
परमार्थश्च मे प्रोक्तो यथा ज्ञानं प्रधानतः ॥"

इत्यनुभाषणाच्च, "ज्योतींषि विष्णुरि"त्यादिसामानाधिक-रण्यस्यात्मशरीरभाव एव निबन्धनम्; चिदचिद्वस्तुनोश्चा-स्ति-नास्तिशब्दप्रयोगनिबन्धनं ज्ञानस्याकर्मनिमित्तस्वाभा-विकरूपत्वेन प्राधान्यम्, अचिद्वस्तुनश्च तत्कर्मनिमित्त-परिणामित्वेनाप्राधान्यमिति प्रतीयते ॥

## अत्राद्वैतिनां महासिद्धान्तः

### स्मृति-पुराणादीनामनिर्वचनीयाविद्यायां प्रामाण्यम्

सत्यम्, अत्र भुवनकोशस्य विस्तीर्णस्वरूपमुक्त्वा पूर्वमनुक्तं रूपान्तरं "संक्षेपतः श्रूयताम्" इत्यारभ्योपदिश्यते। वस्तुतस्तन्निमित्तादि संविन्मा-त्रमखण्डमेवाविनाशि; तथापि जगत्कारणं तदज्ञानोपहितं सदात्मनाऽना-वृतम्, अस्तिपदवाच्यम्, तदुपासनं ज्ञानम्, तत्प्रयुक्तसदादिभेदसर्व-कार्यजातं तु नास्तिपदवाच्यम्, यद्यस्तिपदं त्रिकालाबाध्यपरम्, नास्तिपदं च मिथ्यापरम्। इदं चाद्वैतमत एव स्वरसम्, श्रीभाष्यमते तु यत्राचित्पदं-

नास्तिपरम्, तत्र सूक्ष्माऽचितोऽपि नास्तित्वेन, विशिष्टमप्यसत्यम्, नास्तिपदबोध्यं च स्यात् ॥

तत्राविद्या, तत्प्रयुक्तं च सर्वं तदुपाधित्वात् तच्छरीरमिति व्यपदिश्यते—"यस्य पृथिवी शरीरमि"त्यादौ शरीरपदस्येव—

"यदम्बु वैष्णवः कायस्ततो विप्र वसुन्धरा ॥"

इत्यत्र कायपदस्याप्युपाधिपरत्वात्। तत्रोपाधिः परिणाम्युपादानं स्वरूपेण वा, तत्तदवान्तरमृदादिरूपेण वा, इति वसुन्धरोत्पत्तिरबाधा ॥

तत्र विष्णोरात्मत्वमपि तत्तदुपाध्युपहितसंविन्मात्रत्वेन। तत्तदवच्छिन्न चैतन्यं हि सर्वस्य सत्तादात्म्यादिना प्रकाशमानत्वादुपाधिवशात् जडमपि। प्रत्यक्षत्वं तु तद्योग्यानां तत्तत्प्रमातृचैतन्याभेदेनेति त्वन्यदेतत् ॥

अतः सर्वत्र "ज्योतींषि विष्णुरि"त्यादौ सामानाधिकरण्यं कार्य-कारणभावप्रयुक्तेन सत्तादात्म्येनैव। शरीर-शरीरिभावनिबन्धनसामानाधिकरण्यमप्युपाध्युपहितयोः परस्पराध्यासनिबन्धनं तादात्म्यमादायैव। "हरेस्तनुः" "विष्णोः कायः" इत्यादिनिर्देशोऽपि मायोपहितकार्यत्वं सर्वस्य कार्यस्याभिप्रेत्यैव ॥

अयमेव न्यायः—"स एव सर्वभूतात्मा" इत्यादावपि, इत्यस्त्यात्मकं संविद्रूपम्, नास्त्यात्मकं तु तदुपाधिभूतमविद्यादि, यतस्तेषां न स्वतः सद्रूपत्वं संविन्मात्रस्येव, किन्तु तत्तादात्म्येनैव, इति कार्य-कारणभावनिबन्धनमेव सामानाधिकरण्यम्, परस्पराध्यासलक्षणं शरीर-शरीरभावनिबन्धनं वा सामानाधिकरण्यमिति गीयते; अन्यथा कार्य-कारणभावाभावेऽपि शरीरात्मनोः सामानाधिकरण्यमपरं केवलं नियम्य-नियामकभावमात्रेण, मृद्घटादौ तु कार्य-कारणभावप्रयुक्तं सामानाधिकरण्यमित्यादि बहूपपाद्यम् ॥

अत एवंरूपमेव सामानाधिकरण्यं परस्पराध्यासनिबन्धनं स्वीकर्तव्यम्। 'मृद् घटः' इत्यादावपि मृदवच्छिन्नचैतन्यविवर्तस्यैव घटादेरुपहितचैतन्यतादात्म्यं 'सन् घटः' इत्यादिप्रतीत्या, इति मृन्मात्रतादात्म्यापेक्षयैव 'मृद् घटः' इति व्यपदेशः, 'सन् घटः' इति तु सत्तादात्म्यव्यपदेशस्तूपहितचैतन्यतादात्म्याभिप्रायेण। ततश्च संविद्रूपमेव परमार्थम्, यस्य संविद्रूपत्वं स्वाभाविकम्, तदाश्रितविषयकाज्ञानविजृम्भिताः शैलाब्धि-धरादयः, तत्तद्देव-मनुष्यादिशरीराणि, तत्तादात्म्यमात्रेण देव-मनुष्यादिभेदाश्च। सर्वं चेदं "यदा तु शुद्धं निजरूपि" इत्यादिना श्राव्यते ॥

यदा त्वज्ञानोपहितं संविन्मात्रमखण्डाकारवृत्त्याऽज्ञाननिवृत्तौ, ततः स्वयं वृत्तेरपि निवृत्तावखण्डं स्वप्रकाशं चैतन्यमात्रं प्रकाशैकस्वभावं भवति, तदा सर्वोपाधिनिवृत्तौ—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।"

इत्युक्तरीत्या संविन्मात्रपरिशेषात्, विज्ञानस्वरूपव्यतिरेकेण कस्याप्यभावाद् ज्ञातव्यं न किञ्चिदवशिष्यते, इति कृत्वैवैकविज्ञानेन सर्वविज्ञानम्। "ज्योतींषि विष्णुरि"त्यादितादात्म्यव्यपदेशस्तु बाधायां सामानाधिकरण्येनैव, नान्यथेति तु फलति। इदमेवाभिप्रेत्य—"तस्मान्न विज्ञानमृतेऽस्ति किञ्चिदि"त्यादि ॥

न चात्रापृथक्सिद्धिपरत्वमुपादानोपदेयभावार्थसिद्धम्; पृथग् निरूपणस्यानपेक्षत्वात्। न च श्रीभाष्यमते, यत्र चिदचिद्विशिष्टमेवाभिन्ननिमित्तोपादानम्, तत्र विज्ञानैकरसब्रह्ममात्रमुपादानमपि। अत एव—

"विज्ञानमेकं निजकर्मभेदं विभिन्नचित्तैर्बहुधाऽभ्युपेतम्।
ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसिद्धम् ॥
एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति।
सद्भाव एवं भवतो मयोक्तं ज्ञानं यथा सत्यमसत्यमन्यत् ॥"

इति वाक्यशेष उपपद्यते ॥

तत्र यद्यपि मायोपहिते वासुदेवे सविशेषेऽप्युपाधेः प्रतिबिम्बपक्षपातित्वादविद्योपाधिसम्बन्धप्रयुक्तशोक-मोहाद्यशेषहेयगुणासिद्धिः; उपचयापचयादिराहित्यं चाद्वैतिनामपि सम्प्रतिपन्नम्, तेन रूपेणोपाधेरप्येकत्वात् सदैकत्वं च अत्र सदैकत्वपदेनोपहितस्य संविन्मात्रस्य व्यवहारदशायामपि न परमार्थदशायामिवाविद्याप्रयुक्तसर्वभेदशून्यत्वम्, न वौपाधिकमेकत्वं सार्वदिकम्; उपाधेः सदातनत्वाभावेन यावदुपाधिसत्वमेवैकत्वम्, इत्येकद्विरुक्त्युपपत्तिः ॥

तेन चाचिदंशस्य मायाया अपि तत्प्रयुक्तानामिवानादेरपि नाश एव, न तस्य सदातनत्वमिति सूच्यते, इति नाचित्कार्यमात्रमनश्वरत्वेन नास्तिशब्दाभिधेयम्, किन्तु सर्पपरिणामकारणमविद्याऽपि नास्तिशब्दाभिधेया। अत एव ज्ञानं सत्यम्, अन्यदसत्यमिति सत्यासत्यपदप्रयोगः। तत्र सत्यमस्तीति वाक्यं विवक्षितम्; अस्तीत्युपक्रम्योपसंह्रियमाणत्वात्, इत्यस्ति-नास्तीति सद्रूपत्वासद्रूपत्वाभिप्रायमेवेत्युपक्रमोपसंहारैकवाक्यताऽपि ॥

तत्रासत्यशब्दार्थो नासत् शशशृङ्गादि, किन्तु सत्तादात्म्यमात्रेण सदिति प्रतीयमानं व्यावहारिकमेव। अत एव वाक्यशेषः—

"एतत्तु यत् संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥"

इति। अत्र भुवनपदेन देव-मनुष्यादिभेदप्रयोजकाविद्याप्रयुक्तोपाधय एव विवक्ष्यन्ते। अविद्या तु नात्र कर्ममात्रम्, किन्त्वावरण-विक्षेपशक्तिमदज्ञानमेव, यस्य निर्विशेषचिन्मात्रैकत्वविज्ञानेन निवृत्तिम् "न पुनर्मृत्यवे तदेकं पश्यति" "न पश्यो मृत्युं पश्यति" "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति" "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" "ब्रह्म वेद ब्रह्मैव भवति" "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" "मोहो वै मृत्युः संमतो यः कवीनाम्" "प्रमादं वा मृत्युमहं ब्रवीमि। सदाऽप्रमादममृतत्वमेती"त्यादिश्रुति-स्मृतीतीहासेभ्योऽवगम्यते ॥

यत्तु—"जगद्याथात्म्यज्ञानं मोक्षोपायायतनमि"ति श्रावणम्, तेन जगतो ब्रह्मव्यतिरेकेणाभावज्ञानमेव विवक्ष्यते, न तु जगत्प्रत्यक्षज्ञानम्, जगद्-ब्रह्मणोः शरीर-शरीरिभावज्ञानं वा। अतो निर्विशेषे परे ब्रह्मणि, तदाश्रयानिर्वचनीय-सदसद्विलक्षणाविद्याप्रयुक्तस्य जगतः कल्पितत्व एव मुख्यं प्रामाण्यं वेदान्तानाम्, अवान्तरं तु प्रामाण्यं सगुणे। "सर्वं खल्विदम्" इत्यादिसामानाधिकरण्यं तु—"तस्मान्न विज्ञानमृतेऽस्ति किञ्चिदि"ति वचनानुपपत्त्या बाधायामेव, न शरीर-शरीरिभावप्रयुक्तमिति व्यक्तमधस्तात् ॥

सति चैवं अस्ति-नास्ति-सत्यासत्यपदयोरैकार्थ्यात्, सदसद्विलक्षणस्य जगतोऽसत्यत्वं सदसद्विलक्षणत्वरूपानिर्वचनीयत्वलक्षणं मिथ्यात्वमेव ॥

नास्त्यसत्यशब्दौ हि मिथ्यात्वपरावेव, न विनाशित्वमात्रपरौ ॥

"अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते।
यत्तु नास्ति न सन्देहो नाशिद्रव्योपपादितम् ॥"

इति वचनं तु "प्राज्ञैरि"ति वाक्यशेषोऽप्यधिष्ठानसाक्षात्कारानाश्यत्वं पारमार्थिकत्वम्, तन्नाश्यत्वे तु मिथ्यात्वापरपर्यायमपारमार्थिकत्वमित्येव गमयति ॥

प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं हि मिथ्यात्वम्, न तु कालविशेषावच्छिन्नस्वाधिष्ठाननिष्ठाभावप्रतियोगित्वम्, इत्यात्मनोऽमिथ्यात्वम्, परमार्थत्वं वा न जगतो दृश्यस्य ॥

"विष्ण्वाधारं यथा चैतत् त्रैलोक्यं समवस्थितम् ।
परमार्थं च मे प्रोक्तं यथा ज्ञानं प्रधानतः ॥"

इति मैत्रेयेण पराशरं प्रतिवचनं तु यथा सविशेषं ब्रह्म सर्वजगदधिष्ठानं मह्यं प्रोक्तम् , तथा ज्ञानं यथा परमार्थम् , तथा प्राधान्येन मे प्रोक्तमिति ज्ञानमात्रस्याधिष्ठानस्यैव वेदान्तेषु प्राधान्यम् , सर्वजगदुपादानं सविशेषं ब्रह्म त्वप्रधानमिति ज्ञापयति ॥

अत एव ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं मिथ्यात्वमेव सर्वेषामविद्यादीनामिति पूर्वोक्तानि वचनानि प्रतिपादयन्ति । तत्र निवर्त्यत्वं निर्विशेषतत्त्वज्ञानादेव, न तूपासनेन ॥

श्रीभाष्यकाराणां महापूर्वपक्षः

निर्विशेषज्ञानेनाविद्यानिवृत्त्यनुपपत्तिः

यदुक्तम्—निर्विशेषब्रह्मविज्ञानादेवाविद्यानिवृत्तिं वदन्ति श्रुतयः—इति, तदसत् ; "वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात्" "तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय" "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" "न तस्येशे कश्चन" "तस्य नाम महद्यशः" "य एनं विदुरमृतास्ते भवन्ति" इत्याद्यनेकवाक्यविरोधात् । ब्रह्मणः सविशेषत्वादेव सर्वाण्यपि वाक्यानि सविशेषज्ञानादेव मोक्षं वदन्ति । शोधकवाक्यान्यपि सविशेषमेव ब्रह्म प्रतिपादयन्तीत्युक्तम् ॥

अद्वैतिनां महासिद्धान्तः

अविद्याया निर्विशेषतत्त्वज्ञाननिवर्त्यत्वोपपत्तिः

तत्र "वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात्" इत्यत्र ज्ञेयस्य महत्त्वं सविशेषम् तत्पदवाच्यार्थमभिप्रेत्यैव, अनुवादमात्रेण वा, लक्ष्यं त्वतीताविद्यादि स्वप्रकाशचिन्मात्रमेव । अत एव "आदित्यवर्णं तमसः परस्तादि"ति वाक्यशेषः । "तमसः परस्तादि" दित्यविद्यानिवृत्त्युपलक्षितत्वाभिप्रायेण । आदित्यवर्णत्वं तु स्वप्रकाशसंविन्मात्रत्वेन ।

अयमेव न्यायः—"तमेवं विद्वानमृत इह भवती"त्यादावपि । अत्र "अमृत इह भवती"तीहपदम् , अमृतपदं च विनोत्क्रमणममृतत्वबोधनात्

"अत्र ब्रह्म समश्नुते" "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिवाक्यैकवाक्यतयोत्क्रान्तिनिरपेक्षां साक्षात्कारफलं मुक्तिमत्रापि दर्शितां सूचयति। "तमसः परस्तादि"ति तमोऽतीतत्वोक्तिस्तु चिदचिच्छरीरकताम्, सविशेषब्रह्मवादमात्रपर्यवसानं च विष्णुपुराणस्य दण्डेन वारयति। अतो "ज्योतींषि विष्णुरि"त्यादौ "सर्वं खल्विदं ब्रह्मे"त्यादौ च बाधायां सामानाधिकरण्यम्, "तत्त्वमसी"त्यादौ त्वभेदे तदिति निष्कर्षः॥

अत्र श्रीभाष्यकाराणां महापूर्वपक्षः

तत्त्वमस्यादिवाक्येष्वभेदे सामानाधिकरण्यानुपपत्तिः

तत्त्वमस्यादिवाक्येषु सामानाधिकरण्यं न निर्विशेषवस्त्वैक्यपरम्; तत्त्वम्पदयोः सविशेषब्रह्माभिधायित्वात्। तत्पदं हि सर्वज्ञम्, सत्यसङ्कल्पम्, जगत्कारणं ब्रह्म परामृशति; "तदैक्षत बहु स्यामि"त्यादिषु तस्यैव प्रकृतत्वात्। तत्समानाधिकरणं त्वम्पदं चाचिद्विशिष्टजीवशरीरकं ब्रह्म प्रतिपादयति; प्रकारद्वयावस्थितैकवस्तुपरत्वात् सामानाधिकरण्यस्य। प्रकारद्वयपरित्यागे प्रवृत्तिनिमित्तभेदासंभवेन सामानाधिकरण्यमेव परित्यक्तं स्यात्, द्वयोः पदयोर्लक्षणा च॥

'सोऽयं देवदत्तः' इत्यत्रापि न लक्षणा; भूत-वर्तमानकालसंबन्धितयैक्यप्रतीत्यविरोधात्। देशभेदविरोधश्च कालभेदेन परिहृतः, "तदैक्षत बहु स्यामि"त्युपक्रमविरोधश्च। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं च न घटते। ज्ञानस्वरूपस्य, निरस्तनिखिलदोषस्य, सर्वज्ञस्य, समस्तकल्याणगुणात्मकस्याज्ञानं तत्कार्यानन्तपुरुषार्थाश्रयत्वं च भवति। बाधार्थत्वे च सामानाधिकरण्यस्य त्वं-तत्पदयोरधिष्ठानलक्षणा चेति लक्षणादयस्त एव दोषाः॥

इयांस्तु विशेषः—'नेदं रजतमि'तिवदप्रतिपन्नस्यैव बाधस्यागत्या परिकल्पनम्, तत्पदेनाधिष्ठानातिरेकिधर्मानुपस्थापनेन बाधानुपपत्तिश्च॥

अधिष्ठानं तु प्राक् तिरोहितमतिरोहितस्वरूपं तत्पदेनोपस्थाप्यत इति चेत् , न; प्रागधिष्ठानाप्रकाशे तदाश्रयभ्रम-बाधयोरसंभवात् ॥

भ्रमाश्रयमधिष्ठानमतिरोहितमिति चेत् , तदेवाधिष्ठानस्वरूपं भ्रमविरोधि, इति तत्प्रकाशे सुतरां न तदाश्रयभ्रम-बाधौ । अतोऽधिष्ठानातिरेकि-पारमार्थिकधर्मतत्तिरोधानानभ्युपगमे भ्रान्ति-बाधौ दुरुपपादौ ॥

अधिष्ठाने हि पुरुषमात्राकारे प्रतीयमाने तदतिरेकिणि पारमार्थिके राजत्वे तिरोहिते सत्येव व्याधत्वभ्रमः , राजत्वोपदेशेन च तन्निवृत्तिर्भवति, नाधिष्ठानमात्रोपदेशेन; तस्य प्रकाशमानत्वेनानुपदेश्यत्वात् , भ्रमानुपमर्दित्वाच्च ॥

जीवशरीरकजगत्कारणब्रह्मपरत्वे मुख्यवृत्तं पदद्वयम् , प्रकारद्वयविशिष्टैकवस्तुप्रतिपादनेन सामानाधिकरण्यं च सिद्धम् , निरस्तनिखिलदोषस्य समस्तकल्याणगुणात्मकस्य ब्रह्मणो जीवान्तर्यामित्वमप्यैश्वर्यमपरं प्रतिपादितं भवति, उपक्रमानुकूलता च, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिश्च; सूक्ष्मचिदचिद्वस्तुशरीरस्यैव ब्रह्मणः स्थूलचिदचिद्वस्तुशरीरत्वेन कार्यत्वात् , "तमीश्वराणां परमं महेश्वरम्" "पराऽस्य शक्तिर्विविधैव श्रूयते" "अपहतपाप्मा ......... सत्यकामः सत्यसङ्कल्पः" इत्यादिश्रुत्यन्तराविरोधश्च ॥

"तत्त्वमसी"त्यत्रोद्देश्योपादेयविभागः कथमिति चेत् , नात्र किंचिदुद्दिश्य किमपि विधीयते; "ऐतदात्म्यमिदं सर्वमि"त्यनेनैव प्राप्तत्वात् । अप्राप्ते हि शास्त्रमर्थवत् । "इदं सर्वमि"ति सजीवं जगन्निर्दिश्य 'ऐतदात्म्यमि'ति "तस्यैष आत्मे"ति तत्र प्रतिपादितम् । तत्र च हेतुरुक्तः—"सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इति—"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्तः" इतिवत् ॥

तथा श्रुत्यन्तराणि च ब्रह्मणस्तद्व्यतिरिक्तस्य चिद्-चिद्वस्तुनश्च शरीरात्मभावमेव तादात्म्यं वदन्ति— "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त आत्माऽन्तर्याम्य-मृतः" "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मा-ऽन्तर्याम्यमृतः" "यः पृथिवीमन्तरे संचरन्नि"त्यारभ्य "यस्य मृत्युः शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्मा-ऽपहतपाप्मा दिव्यो देव एको नारायणः" "तत्सृष्ट्वा, तदेवानुप्राविशत्" "तदनुप्रविश्य। सच्च त्यच्चाभवत्" इत्यादीनि ॥

अत्रापि "अनेन जीवेनात्मनाऽनुप्रविश्य नाम-रूपे व्याकरवाणी"ति ब्रह्मात्मकजीवानुप्रवेशेनैव सर्वेषां वस्तुत्वं शब्दवाच्यत्वं च प्रतिपादितम् । "तदनुप्रविश्य। सच्च त्यच्चाभवत्" इत्यनेनैकार्थ्याद् जीवस्यापि ब्रह्मात्मकत्वं ब्रह्मानुप्रवेशादेवेत्यवगम्यते । अतश्चिदचिदात्मकस्य सर्वस्य वस्तुजातस्य ब्रह्मतादात्म्यमात्मशरीरभावादेवेत्यव-गम्यते ॥

तस्मात् ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य तच्छरीरत्वेनैव वस्तुत्वात् तस्य प्रतिपादकोऽपि शब्दस्तत्पर्यन्तमेव स्वार्थ-मभिदधाति। अतः सर्वशब्दानां लोकव्युत्पत्त्यवगत-तत्तत्पदार्थविशिष्टब्रह्माभिधायित्वं सिद्धम्, इति "ऐत-दात्म्यमिदं सर्वमि"ति प्रतिज्ञातार्थस्य "तत्त्वमसी"ति सामानाधिकरण्येन विशेष उपसंहारः ॥

अतो निर्विशेषवस्त्वैक्यवादिनः, भेदाभेदवादिनः, केवलभेदवादिनश्च वैयधिकरण्येन, सामानाधिकरण्येन च ब्रह्मात्मभावोपदेशाः सर्वे परित्यक्ताः स्युः ॥

एकस्मिन् वस्तुनि कस्य तादात्म्यमुपदिश्यते ? तस्यै-वेति चेत्, तत्स्ववाक्येनैवावगतम्, इति न तादात्म्योप-देशावसेयमस्ति किंचित् ॥

कल्पितभेदनिरसनमिति चेत्, तत्तु न सामानाधिकरण्य-तादात्म्योपदेशावसेयमित्युक्तम् ॥

सामानाधिकरण्यं तु ब्रह्मणि प्रकारद्वयप्रतिपादनेन विरोधमेवावहेत्, भेदाभेदवादे तु ब्रह्मण्येवोपाधिसंसर्गात् तत्प्रयुक्ता जीवगता दोषा ब्रह्मण्येव प्रादुःष्यन्ति। निरस्तनिखिलदोष-कल्याणगुणात्मकब्रह्मात्मभावोपदेशा हि विरोधादेव परित्यक्ताः स्युः ॥

स्वाभाविकभेदाभेदवादेऽपि ब्रह्मणः स्वत एव जीवभावाभ्युपगमात् गुणवद् दोषाश्च स्वाभाविका भवेयुः, इति निर्दोषब्रह्मतादात्म्योपदेशो विरुद्ध एव ॥

केवलभेदवादिनां चात्यन्तभिन्नयोः केनापि प्रकारेणैक्यासंभवादेव ब्रह्मात्मभावोपदेशा न संभवन्ति, इति सर्ववेदान्तपरित्यागः स्यात् ॥

निखिलोपनिषत्प्रसिद्धं कृत्स्नस्य ब्रह्मशरीरभावमातिष्ठमानैः कृत्स्नस्य ब्रह्मात्मभावोपदेशाः सर्वे सम्यगुपपादिता भवन्ति ॥

जाति-गुणयोरिव द्रव्याणामपि शरीरभावेन, विशेषणत्वेन 'गौरश्वो मनुष्यो देवो जातः पुरुषः कर्मभिः' इति सामानाधिकरण्यं लोक-वेदयोर्मुख्यमेव दृष्टचरम् ॥

जाति-गुणयोरपि द्रव्यप्रकारत्वमेव 'मुण्डो गौः' 'शुक्लः पटः' इति सामानाधिकरण्यनिबन्धनम्। मनुष्यत्वादिविशिष्टपिण्डानामप्यात्मनः प्रकारतयैव पदार्थत्वात् 'मनुष्यः पुरुषः षण्ढो योषिदात्मा जातः' इति सामानाधिकरण्यं सर्वत्रानुगतम्, इति प्रकारत्वमेव सामानाधिकरण्यनिबन्धनम्, न परस्परव्यावृत्ता जात्यादयः। स्वनिष्ठानामेव हि द्रव्याणां कदाचित् कचिद् द्रव्यविशेषणत्वे मत्वर्थीयप्रत्ययो दृष्टः—'दण्डी' 'कुण्डली' इति, न पृथक् प्रतिपत्तिस्थित्यनर्हाणां द्रव्याणाम्। तेषां विशेषणत्वं सामानाधिकरण्यावसेयमेव ॥

यदि 'गौरश्वो मनुष्यो देवः पुरुषो योषित् षण्ढ आत्मा कर्मभिर्जातः' इत्यत्र 'मुण्डो गौः' 'शुक्लः पटः'

'कृष्णः पटः' इति जाति-गुणवदात्मप्रकारत्वं मनुष्यादिशरीराणामिष्यते, तर्हि जाति-व्यक्त्योरिव प्रकार-प्रकारिणोः शरीरात्मनोरपि नियमेन सह प्रतिपत्तिः स्यात्। न चैवं दृश्यते। न हि नियमेन गोत्वादिवदात्माश्रयतयैवात्मना सह मनुष्यादिशरीरं पश्यन्ति। अतो 'मनुष्य आत्मे'ति सामानाधिकरण्यं लाक्षणिकमेव, नैतदेवम्; मनुष्यादिशरीराणामप्यात्मैकाश्रयत्वम्, तदेकप्रयोजनत्वम्, तत्प्रकारत्वं च जात्यादितुल्यम्॥

आत्मैकाश्रयत्वमात्मविश्लेषे शरीरविनाशादवगम्यते। आत्मैकप्रयोजनत्वं च तत्कर्मफलभोगार्थतयैव सद्भावात्। तत्प्रकारत्वमपि 'देवो मनुष्यः' इत्यात्मविशेषणतयैव प्रतीतेः। एतदेव हि गवादिशब्दानां व्यक्तिपर्यन्तत्वे हेतुः॥

एतत्स्वभावविरहादेव दण्ड-कुण्डलादीनां विशेषणत्वे 'दण्डी' 'कुण्डली'ति मत्वर्थीयप्रत्ययः॥

देव-मनुष्यादिपिण्डानामात्मैकाश्रयत्व-तदेकप्रयोजनत्व-तत्प्रकारत्वस्वभावात् 'देवो मनुष्य आत्मा' इति लोकवेदयोः सामानाधिकरण्येन व्यवहारः। जाति-व्यक्त्योर्नियमेन सहप्रतीतिरुभयोश्चाक्षुषत्वात्। आत्मनस्त्वचाक्षुषत्वात् चक्षुषा शरीरग्रहणवेलायामात्मा न गृह्यते॥

पृथग्ग्रहणयोग्यस्य प्रकारतैकस्वरूपत्वं दुर्घटमिति मा वोचः; जात्यादिवत् तदेकाश्रयत्व-तदेकप्रयोजनत्वतद्विशेषणत्वैः शरीरस्यापि तत्प्रकारतैकस्वभावत्वावगमात्॥

सहोपलम्भनियमस्त्वेकसामग्रीवेद्यत्वनिबन्धन इत्युक्तम्। यथा चक्षुषा पृथिव्या गन्ध-रसादिसंबन्धित्वं स्वाभाविकमपि न गृह्यते, एवं चक्षुषा गृह्यमाणं शरीरमात्मप्रकारतैकस्वभावमपि न तथा गृह्यते; आत्मग्रहणे चक्षुषः सामर्थ्याभावात्॥

नैतावता शरीरस्य तत्प्रकारत्वस्वभावविरहः। तत्प्रकारतैकस्वभावत्वमेव सामानाधिकरण्यनिबन्धनम्। आत्म-

प्रकारतया प्रतिपादनसमर्थस्तु शब्दः सहैव प्रकारतया प्रतिपादयति ॥

ननु च शाब्देऽपि व्यवहारे शरीरशब्देन शरीरमात्रं गृह्यते, इति नात्मपर्यन्तता शरीरशब्दस्य, नैवम्; आत्मप्रकारभूतस्यैव शरीरस्य पदार्थविवेकप्रदर्शनाय निरूपणाद् निष्कर्षकशब्दोऽयम्—यथा गोत्वम्, शुक्लत्वम्, आकृतिः, गुण इत्यादिशब्दाः ॥

अतो गवादिशब्दवद् देव-मनुष्यादिशब्दा आत्मपर्यन्ताः। एवं देव-मनुष्यादिपिण्डविशिष्टानां जीवानां परमात्मशरीरतया तत्प्रकारत्वाद् जीवात्मवाचिनः शब्दाः परमात्मपर्यन्ताः। अतः परस्य ब्रह्मणः प्रकारतयैव चिदचिद्वस्तुनः पदार्थत्वम्, इति तत्सामानाधिकरण्येन प्रयोगः। अयमर्थो वेदार्थसंग्रहे समर्थितः। इदमेव शरीरात्मभावलक्षणं तादात्म्यम्—"आत्मेति तूपगच्छन्ति ग्राहयन्ति चे"ति वक्ष्यति। "आत्मेत्येव तु गृह्णीयादि"ति च वाक्यकारः ॥

अत्रेदं तत्त्वम्—अचिद्वस्तुनः, चिद्वस्तुनः, परस्य च ब्रह्मणो भोग्यत्वेन, भोक्तृत्वेन च स्वरूपविवेकमाहुः काश्चन श्रुतयः—"अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः" "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः"। अमृताक्षरं हर इति भोक्ता निर्दिश्यते = प्रधानमात्मनो भोग्यत्वेन हरतीति हरः। "स कारणं करणाधिपाधिपो न चास्य कश्चिद् जनिता न चाधिपः" "प्रधान-क्षेत्रज्ञ-पतिर्गुणेशः" "पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम्" "ज्ञाज्ञौ द्वावजावीशानीशौ" "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" "भोक्ता भोग्यं प्रेरितारं च मत्वा" "तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति" "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" "अजामेकां लोहित-शुक्ल-कृष्णां बह्वीं प्रजां जनयन्तीं सरू-

षाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" ।। इत्याद्याः ।।

स्मृतावपि—

"अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ।।"
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।।"
जीवभूतां महाबाहो ययेदं धार्यते जगत् ।"
"सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।।"
"प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ।।"
"मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद् विपरिवर्तते ।।"
'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।"
"मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ।।"

इति । जगद्योनिभूतं महत् ब्रह्म मदीयं प्रकृत्याख्यं भूतसूक्ष्ममचिद्वस्तु यत् तस्मिंश्चेतनाख्यं गर्भं यत् संयोजयामि, ततो मत्कृताच्चिदचित्संसर्गाद् देवादिस्थावरान्तानामचिन्मिश्राणां संभवो भवतीत्यर्थः ।।

एवं भोग्यरूपेणावस्थितयोः सर्वावस्थावस्थितयोश्चिदचितोः परमपुरुषशरीरतया तन्नियम्यत्वेन तदपृथक्स्थितिम्, परमपुरुषस्य चात्मत्वमाहुः काश्चन श्रुतयः—"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति" इत्यारभ्य "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इति । तथा 'यः पृथिवीमन्तरे सञ्चरन् ।"यस्य पृथवी शरीरं यं पृथिवी न वेद" इत्यारभ्य "योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद" "यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं यं मृत्युर्न वेद"

एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः ।" अत्र मृत्युशब्देन तमःशब्दवाच्यं सूक्ष्मावस्थमचिद्वस्त्वभिधीयते; अस्यामेवोपनिषदि "अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते" इति वचनात्, "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इति च ॥

एवं सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुष एव कार्यावस्थ-कारणावस्थजगद्रूपेणावस्थित इति । इममर्थं ज्ञापयितुं काश्चन श्रुतयः कार्यावस्थं कारणावस्थं च जगत् स एवेत्याहुः—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इत्यारभ्य "सन्मूलाः सोम्येमाः सर्वा प्रजाः सदायतनाः सत्प्रतिष्ठाः" ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इति । "सोऽकामयत बहु स्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत" इत्यारभ्य "सत्यं चानृतं च सत्यमभवत्" इत्याद्याः ॥

अत्रापि श्रुत्यन्तरसिद्धश्चिदचितोः, परमपुरुषस्य च स्वरूपविवेकः स्मारितः—"हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नाम-रूपे व्याकरवाणी"ति "तत् सृष्ट्वा, तदेवानुप्राविशत्, तदनुप्रविश्य, सच्च त्यच्चाभवत्"..."विज्ञानं चाविज्ञानं च सत्यं चानृतं च सत्यमभवदि" ति च ॥

"अनेन जीवेनात्मनाऽनुप्रविश्ये"ति जीवस्य ब्रह्मात्मकत्वम्, "तदनुप्रविश्य, सच्च त्यच्चाभवत्...विज्ञानं चाविज्ञानं चेत्यनेनैकार्थ्याद् आत्मशरीरभावनिबन्धनमिति विज्ञायते ॥

एवंभूतमेव नाम-रूपव्याकरणं "तद्धेदं तर्ह्यव्याकृतमासीत्, तन्नाम-रूपाभ्यां व्याक्रियत" इत्यत्राप्युक्तम् । अतः कार्यावस्थः कारणावस्थश्च स्थूल-सूक्ष्मचिदचिद्वस्तुशरीरः परमपुरुष एव, इति कारणात् कार्यस्यानन्यत्वेन कारणविज्ञानेन कार्यस्य ज्ञाततयैकविज्ञानेन सर्वविज्ञानं समीहितमुपपन्नतरम् ॥

"अहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नाम-रूपे व्याकरवाणी"ति "तिस्रो देवता" इति सर्वमचिद्वस्तु निर्दिश्य, तत्र स्वात्मकजीवानुप्रवेशेन नाम-रूपव्याकरणवचनात्, सर्वे वाचकाः शब्दा अचिद्विशिष्टजीवविशिष्टपरमात्मन एव वाचकाः, इति कारणावस्थपरमात्मवाचिना शब्देन कार्यवाचिनः शब्दस्य सामानाधिकरण्यं मुख्यवृत्तम्। अतः स्थूल-सूक्ष्मचिदचित्प्रकारं ब्रह्मैव कार्यम्, कारणं च' इति ब्रह्मोपादानं जगत्, सूक्ष्मचिदचिद्वस्तु शरीरकं ब्रह्मैव कारणमिति ॥

ब्रह्मोपादानत्वेऽपि सङ्घातस्योपादानत्वेन चिदचितोर्ब्रह्मणश्च स्वभावासङ्करोऽप्युपपन्नतरः। यथा शुक्ल-कृष्णरक्ततन्तुसङ्घातोपादानत्वेऽपि चित्रपटस्य तत्तत्तन्तुप्रदेश एव शौक्ल्यादिसंबन्धः, इति कार्यावस्थायामपि न सर्वत्र वर्णसङ्करः, तथा चिदचिदीश्वरसङ्घातोपादानत्वेऽपि जगतः कार्यावस्थायामपि भोक्तृत्व-भोग्यत्व-नियन्तृत्वाद्यसङ्करः ॥

तन्तूनां पृथक्स्थितियोग्यानामेव पुरुषेच्छया कदाचित् संहतानां कारणत्वम्, कार्यत्वं च, इह तु चिदचितोः सर्वावस्थयोः परमपुरुषशरीरत्वेन तत्प्रकारतयैव पदार्थत्वाद् तत्प्रकारः परमपुरुषः सर्वदा सर्वशब्दवाच्य इति विशेषः ॥

एवं च सति परस्य ब्रह्मणः कार्यानुप्रवेशेऽपि स्वरूपान्यथाभावाभावादविकृतत्वमुपपन्नतरम्। स्थूलावस्थस्य नाम-रूपविभागविभक्तस्य चिदचिद्वस्तुन आत्मतयाऽवस्थानात् कार्यत्वमप्युपपन्नतरम्। अवस्थान्तरापत्तिरेव हि कार्यता ॥

निर्गुणवादाश्च परस्य ब्रह्मण हेयगुणासंबन्धादुपपद्यन्ते। "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः" इति हेयगुणान् प्रतिषिध्य, "सत्यकामः सत्यसङ्कल्पः" इति कल्याणगुणान् विदधती, इयं श्रुतिरेवान्यत्र सामान्येनावगतं गुणनिषेधं हेयगुणविषयं व्यवस्थापयति ॥

ज्ञानस्वरूपं ब्रह्मेति वादश्च सर्वज्ञस्य, सर्वशक्तेः, निखिलहेयप्रत्यनीककल्याणगुणाकरस्य ब्रह्मणः स्वरूपं ज्ञानैकनिरूपणीयम्, स्वयंप्रकाशतया ज्ञानस्वरूपं चेत्यभ्युपगमादुपपन्नतरः ॥

"यः सर्वज्ञः सर्ववित्" "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञान-बल-क्रिया च" "विज्ञातारमरे केन विजानीयादि"त्यादिका ज्ञातृत्वमावेदयन्ति । "सत्यं ज्ञानमि"त्यादिकाश्च ज्ञानैकनिरूपणीयतया, स्वप्रकाशतया च ज्ञानस्वरूपताम् ॥

"सोऽकामयत बहु स्याम्" "तदैक्षत बहु स्याम्" "तन्नाम-रूपाभ्यां व्याक्रियते"ति ब्रह्मैव स्वसङ्कल्पाद् विचित्र-स्थिरसरूपतया नानाप्रकारमवस्थितम्, इति तत्प्रत्यनीकाब्रह्मात्मकवस्तुनानात्वमतत्त्वम्, इति तत् प्रतिषिध्यते— "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "नेह नानाऽस्ति किञ्चन" "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति । यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं विजानीयादि"त्यादिना, न पुनः—"बहु स्यां प्रजायेये"त्यादिश्रुतिसिद्धं स्वसङ्कल्पकृतं ब्रह्मणो नानानाम-रूपभाक्त्वेन नानाप्रकारत्वमपि निषिध्यते, "यत्र त्वस्य सर्वमात्मैवाभूदि"त्यादिनिषेधवाक्यादौ च तत् स्थापितम्—"सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" "तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः" इत्यादिना ॥

एवं चिदचिदीश्वराणां स्वभावभेदम्, स्वरूपभेदं च वदन्तीनां कार्य-कारणभावम्, कार्य-कारणयोरनन्यत्वं च वदन्तीनां सर्वासां श्रुतीनामविरोधः—चिदचितोः, परमात्मनश्च सर्वदा शरीरात्मभावं शरीरभूतयोः कारणदशायां नाम-रूपविभागानर्हसूक्ष्मदशापत्तिम्, कार्यदशायां च तदर्हस्थूलदशापत्तिं वदन्तीभिः श्रुतिभिरेव ज्ञायते, इति ब्रह्माज्ञानवादस्य, औपाधिकब्रह्मभेदवादस्य, अन्यस्याप्यपन्यायमूलस्य सकलश्रुतिविरुद्धस्य न कथञ्चिदप्यवकाशो दृश्यते ॥

चिदचिदीश्वराणां पृथक्स्वभावतया तत्तच्छ्रुतिसिद्धानां शरीरात्मभावेन, प्रकार-प्रकारितया श्रुतिभिरेव प्रतिपन्नानां श्रुत्यन्तरेण कार्य-कारणभावप्रतिपादनम्, कार्य-कारणयोरैक्यप्रतिपादनं च ह्यविरुद्धम् ॥

यथा—आग्नेयादीन् षड्यागानुत्पत्तिवाक्यैः पृथगुत्पन्नान् समुदायानुवादिवाक्यद्वयेन समुदायद्वयत्वमापन्नान् "दर्श-पूर्णमासाभ्यामि"त्यधिकारवाक्यं कामिनः कर्तव्यतया विदधाति, तथा चिदचिदीश्वरान् विविक्तस्वरूप-स्वभावान् "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः" "पतिं विश्वस्यात्मेश्वरम्" "आत्मा नारायणः परः" इत्यादिवाक्यैः पृथक् प्रतिपाद्य, "यस्य पृथिवी शरीरम्" "यस्याऽऽत्मा शरीरम्" "यस्याव्यक्तं शरीरम्," "यस्याक्षरं शरीरम्," "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादिभिर्वाक्यैश्चिदचितोः सर्वावस्थावस्थितयोः परमात्मशरीरतां परमात्मनस्तदात्मतां च प्रतिपाद्य, शरीरिभूतपरमात्माभिधायिभिः सद्ब्रह्मात्मादिशब्दैः कारणावस्थः, कार्यावस्थश्च परमात्मैक एवेति पृथक्प्रतिपन्नं वस्तुत्रितयम् "सदेव सोम्येदमग्र आसीत्" "ऐतदात्म्यमिदं सर्वम्" "सर्वं खल्विदं ब्रह्म" इत्यादिवाक्यं प्रतिपादयति। चिदचिद्वस्तुशरीरिणः परमात्मनः परमात्मशब्देनाभिधाने हि नास्ति विरोधः; यथा मनुष्यपिण्डशरीरकस्यात्मविशेषस्य 'अयमात्मा सुखी'त्यात्मशब्देनाभिधान इत्यलमतिविस्तरेण ॥

### अद्वैतिनां महासिद्धान्तः

#### तत्त्वमस्यादिवाक्यानामखण्डार्थत्वोपपत्तिः

वेदान्तेषु तत्र तत्र यद्यपि सगुणं ब्रह्मापि बोध्यते; तथापि तत्रावान्तरतात्पर्यमेव, महातात्पर्यं तु निर्विशेष एव। अत एव शोधकवाक्यानि "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादीनि चरितार्थानि। अत एव "तत्त्वमसीत्या"दीनि महावाक्यानि तत्र तत्र समानाधिकरणानि, व्यधिकरणानि च दृश्यन्ते ॥

तत्र व्यधिकरणं वाक्यम्—"क इत्था वेद यत्र सः" इति तत्पदार्थाधिष्ठानतया संविन्मात्रोपदेशः, "स यश्चायं पुरुषे। यश्चासावादित्ये। स एक" इत्यादीनि च, समानाधिकरणानि तु "तत्त्वमसी"त्यादीनि ॥

तत्र "तत्त्वमसी"त्यादीनि समानाधिकरणानि "सदेवे"ति प्रक्रान्तम्, अद्वितीयत्वेनोपसंहृतं च शोधितं तत्पदार्थं निर्विशेषमभिप्रेत्यैव। न च तत् चिदचिच्छरीरकम्; "सदेवे"ति वाक्येऽचिदुपहितस्यैव प्रक्रमात् "तदैक्षते" त्यादिना तस्यैव जगत्कारणत्वोपन्यासाच्च न तत् चिच्छरीरकमपि ॥

अत एवाचेतनानामेव तत्र सृष्ट्याम्नानम्। न च "तत्त्वमसी"त्यत्र वाक्येऽपि तस्योल्लेखः, इति प्रक्रमे, उपसंहारे च चिदचिच्छरीरस्यापरामर्शात् न सूक्ष्मचिदचिद्विशिष्टपरं त्वम्पदम्, तत्पदं वा। तत्र त्वम्पदस्याचिद्विशिष्टजीवपरत्वं मुक्त्यवस्थायां शुद्धप्रत्यगात्मशरीरकत्वस्यैव श्रीभाष्यमते विवक्षणेनाऽचिच्छरीरजीवविवक्षणायोगात्, त्वम्पदस्य लक्षणायां स्थूलसूक्ष्म-प्रकारसम्बन्धपरित्यागस्यैव विवक्षणस्याऽऽवश्यकत्वाद् संविन्मात्रपरत्व एव पर्यवस्यति, इति न चिदचिद्विशिष्टजीवशरीरकत्वेन सामानाधिकरण्यम् ॥

अयमेव न्यायस्तत्पदेऽपि। न च चिद्विशिष्टाचिद्विशिष्टयोः सामानाधिकरण्यमत्र वाक्यार्थः, किन्तु चिदचिदुभयवैशिष्ट्यं ब्रह्मणः; । तत्र च त्वम्पदस्यापि विशिष्टपरत्वे 'त्वमसी'ति मध्यमपुरुषायोगस्त्वपरो दोषः। त्वमर्थोद्देश्यकत्व एवासिपदौचित्यात्। उद्देश्य-विधेयभावाविवक्षायामपि त्वम्पदेन स्थूलचिदचिद्विशिष्टस्यैव विवक्षणात् तच्छरीरकस्य परमात्मसामानाधिकरण्यमनुपपन्नम् ॥

न च प्रकारद्वयावस्थितैकवस्तुपरत्वमत्र; परमात्मनः स्थूलशरीरकत्वायोगात्; अन्यथा संसारितापत्तेः। त्वम्पदस्य चिद्विशिष्टपरत्वेऽपि कथमसिपदोपपत्तिः? अतोऽगत्या प्रकारद्वयपरित्यागः कर्तव्यः सामानाधिकरण्यमपि तदभिप्रेत्यैव। यथा च लक्षणायामपि भिन्नप्रवृत्तिनिमित्तकत्वप्रयुक्तं सामानाधिकरण्यमबाधम्, तथा व्यक्तमधस्तात्, इत्यभेद एव सामानाधिकरण्येऽत्र विवक्षणीये पदद्वये लक्षणा फलमुखत्वाद् न दोषाय॥

स्वरूपमात्रप्रश्नोत्तरे "सोऽयं देवदत्तः" इति वाक्ये लोकेऽपि स्वरूपमात्रपरत्वं लक्षणयैव। न च तत्र भूत-वर्तमानकालसम्बन्धितयैक्यप्रतीतिः संभवति; तत्र प्रकारद्वयावस्थितैकवस्तुपरत्वायोगात्। न चात्र

विशिष्टाकारे विशेषणान्वयः संभवति इत्यगत्या विशेष्यमात्रविवक्षैव कर्तव्या। तत्र च कालद्वयस्य प्रकारस्य सम्बन्धो व्याहत एव। न चात्र कालद्वयसम्बन्धो देशभेदेनाप्यविरुद्धः, किन्तु स्वरूपप्रश्नोत्तरत्वात् तत्र वाक्येऽविवक्षामात्रमेव तस्य, इति तद्वाक्यार्थनिर्वाहो न विना लक्षणां संभवति ॥

"तदैक्षत" इत्युत्युपक्रमोऽप्यारोपविषयः; "तत् सत्यमि"ति सन्मात्रसत्यत्वोपदेशात्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपरोधाच्चेति व्यक्तमधस्तात्। न चात्र विशिष्टयोरैक्यं वाक्यार्थः, किन्तूपाधिभेदप्रयुक्तोपहितभेदनिवृत्तिमात्रम्, इति न ज्ञानस्वरूपस्य निरस्तसमस्तदोषस्य समस्तकल्याणगुणाऽऽकरस्य ज्ञानम् तत्कालान्तरपुरुषार्थाश्रयत्वं च विवक्षितम्, येन व्याघातः स्यात्, इत्यभेद एवात्र सामानाधिकरण्यम्; भेदनिवृत्तिमात्रस्यैककालिकत्वात् ॥

बाधायां सामानाधिकरण्यं तु "सर्वं खल्विदं ब्रह्मे"त्यादौ, नात्र। तत्रापि शरीर-शरीरिभावेन सामानाधिकरण्यस्य विलक्षणायोगात्, फलमुखत्वाच्च लक्षणादयो न दोषाः—यथा "इदं रजतमि"त्यादौ। तत्र शुक्तितत्त्वज्ञानेन रजतस्य बाधः, एवं "भिद्यते हृदयग्रन्थिरि"त्यादिपूर्वोक्तवचनैर्भेदमात्रस्याज्ञानकृतस्यात्मतत्त्वसाक्षात्कारेण बाधावगमः समानः। प्राक् तिरोहितम्, अतिरोहितं चाधिष्ठानमेव तत्पदेनात्र विवक्ष्यते, यद् वस्तुतो निर्विशेषम्, विशेषप्रयोजकाविद्याया निवृत्तौ ॥

अधिष्ठानत्वं हि किञ्चिद्रूपेण ज्ञातस्य किञ्चिद्रूपेणाज्ञातस्यैव, इति सच्चिदात्मनाऽनाद्यविद्याकल्पितेन भेदेन प्रकाशात्, आनन्दात्मना तिरोधानाच्च सखण्डात्मना प्रकाशेऽपि संविन्मात्रस्य ब्रह्मणस्तदाश्रयविषयभ्रमः, अखण्डात्मना विरोधेन बाधश्च नानुपपन्नः। न चाधिष्ठानप्रकाशः सच्चिदंशमात्रेण भ्रमविरोधी; अखण्डात्मना प्रकाशस्यैव तद्विरोधित्वात्। तत्राधिष्ठानस्य संविद्रूपस्य सदाद्यात्मना भेदः, अन्ये च धर्मा अनाद्यविद्याप्रयुक्ता अपारमार्थिका एव, न तु पारमार्थिकाः, इति न भ्रम-बाधानुपपत्तिः, इत्यखण्डाकारवृत्त्याऽनाद्यविद्यायाः, तत्प्रयुक्तानां सादीनाम्, अनादीनां च धर्माणां बाधाद् जगत्कारणत्वस्यापि तत एव बाधाद् न मुख्यवृत्तं सामानाधिकरण्यम् ॥

तत्र सूक्ष्मचिदचिद्विशिष्टस्यैव ब्रह्मणः स्थूल-चिदचिद्विशिष्टब्रह्मकारणत्वं तु सूक्ष्मचिदचितोश्चिन्मात्रस्यैव मुख्यं कारणत्वमादाय न संभवति। तत्र

पक्षद्वयेऽपि परिणामिनो विकारित्वे बाधापत्त्या विशिष्टस्यैव कार्यत्वम्, तस्यानित्यत्वम्, शुद्धप्रत्यगात्मसिद्ध्यसम्भवापत्त्या विशेषणांशमात्र-कारणत्वेन, कार्यत्वेन च निर्वाहे विशेषणांशमात्रबाधेनैव सामानाधिकरण्यं वक्तव्यम्, इत्यगत्या निर्विशेषवाद एव पर्यवसानमिति बोध्यम्।

विशिष्टस्यैव कार्य-कारणभावे कार्य-कारणयोर्वैलक्षण्यशङ्काया असम्भवात्, तत्रेक्षत्याद्यधिकरणेषु साङ्ख्यसिद्धान्तानुसारिणां शङ्का नोत्तिष्ठति, इति तान्यधिकरणानि वितथानि। तत्र परकालमठीयकृतिर्ब्रह्मण एव परिणामित्वं स्वीकरोति, शतदूषणी तु विशेषणमात्रस्योपादानत्वम्, अन्ये विशिष्टस्यैव कारणत्वम्। सर्वत्र यस्य परिणामादि स्वीक्रियते, तस्य विकारित्वम्, विनाशो वा दुर्वारः, इति कथं सत्यकारणस्वरूपसिद्धिः? इति "सत्यकामः सत्यसंकल्पः" इत्यादिश्रुतयोऽनुपपन्नार्थाः, इत्यवान्तरतात्पर्य-विषयत्वमेव सत्यकामादिश्रुतीनामूरीकर्तव्यम्॥

'तत्त्वमसी''त्यादौ हि श्रीभाष्यमतेऽपि श्रुतप्रकाशिकोक्तरीत्या चिदचि-दुभयविशिष्टपरमात्मवाचिनस्त्वंपदस्योद्देश्यैकदेशविषयत्वेन मध्यमपुरुषो-पपत्तौ तु त्वम्पदस्य लक्षणैव। इयान् विशेषः—अद्वैतमते विशेषणांशपरि-त्यागेन विशेष्यमात्रपरत्वम्, श्रीभाष्यमते तु विशेषणपरत्वम्॥

तत्र श्रीभाष्यमते त्वमर्थस्य परमात्मनाऽन्वयो न शरीर-शरीरिभावेन सामानाधिकरण्येनोपपद्यते; त्वमर्थस्य विशेषणमात्रपरत्वात्, इति न सामानाधिकरण्यम्॥

अयमेव न्यायस्तत्पदार्थेऽपि; तत्रापि यदि तत्पदार्थस्य विशिष्टपर-त्वम्, तर्हि त्वम्पदार्थैकदेशमात्रस्यान्वयस्तत्पदेनापि, इति स्वरूपमात्रस्य लक्ष्यतया संविन्मात्रेणाभेदो वक्तव्यः। संवित्पदार्थस्तु त्वम्पदार्थोऽहमर्थः श्रीभाष्यमते, अद्वैते तु विशेषणांशाविवक्षयाऽनहमर्थः, इति विशेषोऽप्य-त्रानुसन्धेयः॥

त्वम्पदेन सूक्ष्मचिदचिद्विशिष्टस्याविवक्षणात्तु न विशिष्टयोरभेद-प्रतीतिः। अत एव "ऐतदात्म्यमिदं सर्वमि"त्यनेन सिद्धार्थस्यैवात्र नानु-वादोऽपि; अन्यथा "तत्त्वमसी"ति वाक्यवैयर्थ्यापत्तिः, इति "तत्त्वमसी" त्यत्र पदद्वयलक्षणा तत्रापि समाना॥

"ऐतदात्म्यमि"ति सामानाधिकरण्यं यदि शरीर-शरीरिभावेन, तर्हि शरीरवाचकानां शरीरिपर्यन्तपरत्वेनाभेदे, विशेषणविशेष्यभाव एव वा

सामानाधिकरण्यम्, इदंपदेन तद्विशिष्टविवक्षायाम्, विशेष्यांशमात्रविवक्षा तु तत्रापि विशिष्टैकदेशपरत्वेनैव निर्वहणीया ॥

अन्तर्यामिब्राह्मणं यद्यपि शरीर-शरीरिभावं श्रावयति, परन्तु निष्कर्ष-करीत्या शरीर-शरीरिणोरुभयोरपि पृथगुल्लेखेनैव, न तु सामानाधिकरण्येन। तत्र शरीरलक्षणं चतुर्विधं श्रीभाष्याभिमतं न निर्वक्तुमलम्, इति शरीरपदमुपाधिमात्रपरमित्यांद्यद्वैततत्त्वशुद्धौ व्यक्तम्। अधिकं तु विशिष्टाद्वैतभञ्जनतोऽवगन्तव्यम् ॥

शरीरवाचकानां शरीरिपर्यन्तत्वं त्वप्रामाणिकम्। तत्र नामशब्दानां न नामविशिष्टपरत्वम्; अन्यथा संज्ञा-संज्ञिसम्बन्धोपपादके, ब्रह्मादिनाम-विशिष्टपरत्वापत्तिः; कृत्स्नोपादानस्य ब्रह्मणो नाममात्रोपादनत्वाभावात् रूपविशिष्टवत् नामविशिष्टत्वमात्रं स्यात्, न तु नाम्नां स्वविशिष्टपरत्वमपि। अतश्चिदचिदात्मकस्य जगतो ब्रह्मण्यध्यारोपाद् ब्रह्मतादात्म्येऽपि तयोः शरीर-शरीरभावे प्रमाणाभावादुपादानोपादेयभावेनापि तादात्म्य-निर्वाहेऽपि "तत्त्वमसी"त्यत्र शरीरविशिष्टपरत्वस्वीकारेण तस्य परित्यक्तत्वाच्च न "तत्त्वमसी"त्यादौ शरीर-शरीरिभावनिबन्धनं सामानाधिकरण्यम् ॥

"सर्वं खल्विदं ब्रह्मे"त्यादावचितो ब्रह्मणः सामानाधिकरण्यं बाधायाम्, सत्यकामादिवाक्ये विशेष्य-विशेषणभावेन, "तत्त्वमसी"त्यादौ तु न शरीर-शरीरिभावनिबन्धनम्, किन्त्वभेद एव सामानाधिकरण्यमिति व्यवस्थाऽत्रानुसन्धेया। न च सामानाधिकरण्यं "तत्त्वमसी"त्यादौ प्रकारद्वयप्रतिपादनेन, किन्तु तत्त्यागेनैव भेदनिवृत्तिप्रयुक्तेन, न शरीर-शरीरिभावेन ॥

न हि सामानाधिकरण्यं सर्वत्र शरीर-शरीरिभावेनैव; 'शुक्लः पटः' 'खण्डो गौः' 'दण्डी देवदत्तः' इत्यादावपि तदापत्तेः। तत्र जाति-व्यक्त्योः, गुण-गुणिनोश्च सामानाधिकरण्यं न शरीर-शरीरिभावेन; तत्र चतुर्विध-शरीरलक्षणाभावात्, किन्तु तत्रानुवृत्ताकारदर्शनात् तादात्म्येन, विशेषण-विशेष्यभावेन वा शरीर-शरीरिभावनिरपेक्षेण। अयमेव न्यायो 'गौरश्वो मनुष्यो देवो जातः कर्मभिरि'त्यादावपि; तत्राप्यनुवृत्ताकारदर्शनात्। तत्रानुवृत्ताकारदर्शनं न शरीर-शरीरिभावेन; शरीर-शरीरिणोरेकाकारस्यादर्शनात् ॥

तत्र जाति-व्यक्त्योरिव शरीर-शरीरिणोर्न सहोपलम्भनियम इति समानम्। न चैवं दृश्यते। न हि मनुष्यादेः शरीरमात्माश्रयतयैवात्मना नियमेन

सहोपलभ्यते । अतो 'मनुष्य आत्मे'ति सामानाधिकरण्यं लाक्षणिकमेव । आत्मैकाश्रयत्वं जाति-व्यक्त्योरिव वर्तत एव, इति सहोपलम्भनियमो न सम्भवति ; अन्यथा जाति-व्यक्त्योरिवाहम्प्रतीतावुभयोरपि चाक्षुषत्वापत्तिः । सत्यम् , न शरीरात्मनोरुभयत्राप्यचाक्षुषत्वम् , किमेतेन ? सहोपलम्भस्तु बाधित एव ॥

तत्र मनुष्यादिशरीराणि जातिरिव नानुगतमेकम् , येन तत्तदात्मनां तत्तच्छरीरित्वेन सहोपलम्भः । एकस्यैवात्मनोऽनेकैः शरीरैः सहोपलम्भे तु तत्तच्छरीराणामेकेनात्मना सहोपलम्भः स्यात् ॥

एतेन—आत्मैकाश्रयत्वम् , तदेकप्रयोजनत्वादिकमपि—व्याख्यातम् ; आत्मैक्येऽपि शरीरभेदाद् नैकात्माश्रयत्वं सर्वदा सर्वेषां शरीराणाम् , न वा तत्तच्छरीरस्य सर्वभोगार्थतयैकप्रयोजनत्वम् , अन्यथैकस्यैवात्मन एकशरीरेणैव सर्वभोग आपद्येत; शरीरभेदेऽप्यात्मैकत्वदर्शनात् , एकात्मना सर्वशरीराणां सहानुपलम्भात् , इति न शरीर-शरीरिभावनिबन्धनं सामानाधिकरण्यम् , मुख्यं तु सामानाधिकरण्यं शरीरात्मनोरध्यारोपनिबन्धनमेव। अत एव—"यस्य पृथिवी शरीरमि"त्यादौ यस्यपदेनात्मनो ग्रहणम् ; अन्यथा तत्राप्यात्मपर्यन्ततायाम् "यस्ये"ति पृथगात्मनो निर्देशो नोपपद्यते, 'यस्य''शरीर'पदयोः शरीर-शरीरिणोर्विवेकप्रदर्शनार्थं निष्कर्षकशब्देनोपादानमेवावगम्यते, इति न शरीर-शरीरिणोः सहोपलम्भनियमः—इति ॥

तत्र जाति-गुणयोः, सत्यम् , सहोपलम्भनियमस्तयोर्व्यक्त्येकाश्रयत्वेनैव । न च तयोरैक्यम् ; जाति-व्यक्त्योः स्वरूपतो भेदात् । भिन्नस्यापि जात्यादेर्द्रव्यप्रकारतैकस्वभावत्वरूपं पारतन्त्र्यमविवक्षितम् । अतः शुक्लत्वम् , गोत्वमिति व्यपदेशो न विरुध्यते ॥

न चायं न्यायः शरीरात्मनोः; जाग्रदाद्यवस्थायां विना तत्तच्छरीरमात्मस्वरूपमात्रावगमात् । मुक्तौ प्राकृतकर्मनिबन्धनशरीरविलय आत्मैकप्रकारतैकस्वभावपारतन्त्र्यं तु न संभवति । अतो गवादिशब्दवद् मनुष्यादिशब्दा नात्मपर्यन्ताः—"आत्मेति तूपगच्छन्ति ग्राहयन्ति चे"त्यादीनि प्रमाणानि त्वहंग्रहोपासनमेव विविञ्चति, न तु स्वशरीरित्वेन परमात्मन उपासनम् । न ह्युपासनकालेऽचिद्विशिष्टस्वात्मशरीरकत्वं स्वस्मिन् जीवति स्वशरीरांशपरित्यागेन संभवति ॥

अतः शरीर-शरीरिभावो न नियतसहोपलम्भः, इति तत्र तत्र परमात्मनः सद्ब्रह्मणश्चिदात्मकस्य, अचिदात्मकस्य च सामानाधिकरण्यं न शरीर-शरीरिभावनिबन्धनम् ॥

न च शरीरात्मनोः सहोपलम्भो नियमेन; अन्यथा अचिद्वस्तुनः, चिद्वस्तुनः, परस्य च ब्रह्मणो भोग्यत्वेन, भोक्तृत्वेन, ईशितृत्वेन च पृथक्तयाऽऽम्नानमसङ्गतं स्यात्। तत्र "मायां तु प्रकृतिं विद्याद् मायिनं तु महेश्वरम्" "क्षरं प्रधानममृताक्षरं हरः। क्षरात्मानावीशते देव एकः" स कारणं कारणाधिपाधिपो न चास्य कश्चिद् जनिता न चाधिपः।" "पृथगात्मानं प्रेरितारं च मत्वा" इत्यादीनि वाक्यानि हि शरीरात्मभावं प्रकृति-ब्रह्मणोः, जीव-ब्रह्मणोश्च वारयन्ति ॥

तत्र "तस्मान्मायी"ति मत्वर्थीयाच्प्रयोगात् 'मायामि'ति व्यधिकरणनिर्देशात् "पृथगात्मानमि"ति पृथक्प्रत्ययाच्च सूक्ष्माचितः, जीवेशित्रादीनां च नापृथक्सिद्धिसम्बन्ध इति ज्ञायते, इति न शरीर-शरीरिणोः सहोपलम्भनियमः, इति न मुख्यं तयोः सामानाधिकरण्यम्। न हि दण्ड-कमण्डल्वादिशब्दानां विशेष्यपर्यन्ताभिधानं दृष्टम्, इत्यद्रव्यत्वे सतीति विशेषणम्, जाति-गुणयोरन्यतरत्वे सतीति विशेषणं वा न मत्वर्थीयाज्निरपेक्षसामानाधिकरण्यप्रयोजकम्, इति तत्रेवात्रापि न माया-ब्रह्मणोः सामानाधिकरण्यं तन्निबन्धनम्, शरीर-शरीरिभावो वाऽबाधितः; अन्यथा मायीति कथं मत्वर्थीयाच् प्रत्ययः ?

"सोऽकामयत बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा। इदं सर्वमसृजत" इत्यारभ्य "सत्यं चानृतं च सत्यमभवत्" इत्याद्याः श्रुतयस्तूपादानोपादेयभावं जगद्-ब्रह्मणोः प्रतिपादयन्त्यो न मात्रयापि शरीर-शरीरिभावमत्रावेदयन्ति। तत्र "सत्यं चानृतं च सत्यमभवदि"ति वाक्यं सद्रूपस्य ब्रह्मणः सत्यानृततादात्म्यं बोधयत्, अनृतस्य सद्रूपशरीरत्वाभावात् शरीर-शरीरिभावनिबन्धनं सामानाधिकरण्यं कार्य-कारणयोर्बाधते ॥

वस्तुतस्तु—विशिष्टयोरेव कार्य-कारणभाव इति श्रीभाष्यसिद्धान्ते ब्रह्म-तद्विशेषणयोरेव शरीर-शरीरिभावो विवक्ष्यते, कार्य-कारणयोस्तु विशिष्टयोर्न शरीर-शरीरिभावप्रयुक्तं सामानाधिकरण्यं संभवति। न च कार्य-कारणभावं विना कुत्रापि जगद्-ब्रह्मणोः सामानाधिकरण्यम् ॥

तत्रा"नेन जीवेनाऽऽत्मनाऽनुप्रविश्ये"ति वाक्यं जीवस्य स्वात्मत्व-मनुवदत् परमात्मन एव जीवशरीरत्वमुद्बोधयितुं शक्नोति; न तु जीवस्य परमात्मशरीरत्वम्। तत्र यदि जीवः स्वस्वरूपं मन्यते, तर्हि कथं तस्य शरीरत्वम्? स्वस्य सर्वत्र प्रवेशो नाम सर्वत्राभिव्यक्तत्वं सदात्मनः एवानुवर्तमानत्वेन। अत एव "सच्च त्यच्चाभवदि"ति वाक्यशेषः, चिदचिद्विशिष्टब्रह्मकारणता स्वात्मनोऽनुप्रविश्येति चिदात्मन एवा-नुप्रवेशवचनस्य विरुद्धा, इति जीव-ब्रह्माभेदवादमादायैव सद्विद्या-प्रकरणम्, इति न केवलमद्वितीयमिति सन्मात्रस्य ब्रह्मण एवाद्वितीय-त्वम्, किन्त्वौपाधिकस्य ब्रह्मस्वरूपस्यापि तदिति ज्ञाप्यते। अत एव निर्गुणश्रुतयोऽपि यथार्थाः॥

तत्र निर्गुणत्वं यदि हेयगुणराहित्येन, तर्हि किं वा हेयत्वं गुणस्य? कथं वा तत्र श्रौते ब्रह्मणि सत्यकामत्वातिरिक्तानां हेयानां प्रसक्तिरपि? येन नाप्रसक्तप्रतिषेधापत्तिः? सति चैवं चिदचिदीश्वराणां स्वरूपभेदः, स्वभावभेदः, कार्य-कारणभावः, कार्य-कारणयोरनन्यत्वं च तत्तच्छ्रुतिसिद्धं चिदचिदीश्वराणामत्यन्तं पृथक्तयाऽऽम्नानात् जगद्-ब्रह्मणोः शरीर-शरीरिभावमपृथक्सिद्धिप्रयुक्तं बाधते। भगवद्गीता हि—"ज्ञानी त्वा-त्मैव मे मतम्" इति परमात्मानं ज्ञानिनः शरीरं गायति, इत्यन्तर्यामिणः परमात्मन आत्मत्वाम्नानं तद्व्यतिरेकेण सर्वाभावपरम्, सर्वेषां तदुपा-धीनां मिथ्यात्वादित्यभिप्रायमेवान्तर्यामिब्राह्मणम्॥

तत्र चिदचिदीश्वराणां पृथक्स्वभावतया तच्छ्रुतिसिद्धत्वम्, शरीरात्म-भावेन प्रकार-प्रकारितया श्रुतिभिः प्रतिपादनं च व्याहतम्। विविक्तस्व-भावानामपृथक्सिद्धिर्हि कथं न मम माता वन्ध्या?

विष्णुपुराणे तु शरीर-शरीरिभावश्चिदचितोर्न कुत्रापि प्रतिपाद्यते। केवलं सामानाधिकरण्यं "ज्योतींषि विष्णु"रित्यादौ श्रूयते। क्वचित्तु मूर्तामूर्ते इति मूर्तादिपदम्। तत्र शरीर-शरीरिभावविवक्षायां मूर्तपदं वितथम्। सामानाधिकरण्यं तु 'मृद् घटः' 'इदं रजतम्' इत्यादाविव कार्य-कारणभावेऽप्युपपद्यते। अन्यत्तु सर्वमद्वैतमतेऽप्युपपद्यते। धर्म-भूतज्ञानकथाऽपि विष्णुपुराणे नास्ति, न वा जीवाणुत्ववादः। अपरः कोऽपि विशिष्टाद्वैतासाधारणप्रक्रियाविशेषः प्रतितन्त्रसिद्धान्तो नात्र दृश्यते, इति विशिष्टाद्वैतसिद्धान्त एव विष्णुपुराणस्वारस्ये न किमपि

प्रमाणम् । किं बहुना ? विष्णुरपि परमात्मरूपेण योऽत्र प्रतिपाद्यते, तत्सिद्धान्तविरुद्धमेवात्र दृश्यत इत्यनुपदमेवोपपादितम् ॥

परमार्थतस्तु—अन्तर्यामिब्राह्मणस्य सर्वान्तरत्वं सर्वोपाधिकत्वेन, न तु स्वरूपत इत्येवमर्थ एव तात्पर्यं स्वीकर्तव्यम् । अन्यथा—"एष त आत्माऽन्तर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ता नान्यदतोऽस्ति विज्ञातैष त आत्माऽन्तर्याम्यमृतोऽतोऽन्यदार्तमि"ति तदितरस्यार्तत्वाम्नानमुपरुध्यते । अत्राऽन्तर्यामिणोऽन्यस्यार्तत्वं बोध्यते । तत्रान्यत्वं कस्य सर्वशरीरकस्यैवाऽत्रान्तर्यामिपदेन विवक्षायाम् ? न चात्रोपसंहारेऽन्तर्यामी शरीरित्वेनाम्नातः, येन तस्य शरीरित्वं मुख्यतात्पर्यविषयः स्यात् । सर्वत्र तत्तच्छरीरान्तरत्वेन सर्वान्तरत्वं बोध्यमानं "यत् साक्षादपरोक्षाद् ब्रह्म स आत्मा सर्वान्तरः" इत्याम्नातं सर्वान्तरं प्रत्यभिज्ञापयत् तस्यैवान्तर्यामित्वं ज्ञापयति ॥

किं बहुना ? स्मृति-पुराणागमेष्वपि नियम्यत्वमात्रेण शरीरत्वव्यपदेश औपचारिक एव, न तूक्त-वक्ष्यमाणहेतुभिर्मुख्यं शरीरत्वम् । निषिद्धं चेश्वरस्य सर्वश्रुतिषु शरीरित्वम् ; ईशावास्ये—"स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धमि"त्यत्र 'अकायमि'ति शरीरसामान्यस्य, 'अव्रणमस्नाविरमि'ति स्थूलशरीरस्य च निषिद्धत्वात् । न च स्वकर्मारब्धस्यैव निषेधः; संकोचे मानाभावात्, 'अपापविद्धमि'त्यनेन कर्म-तत्कृतदेहोपभोगानां निषिद्धत्वाच्च ॥

नच—अन्ते "यत्ते रूपं कल्याणतमं तत्ते पश्यामी"ति शरीरित्वमुक्तमिति—वाच्यम्; तत्रादित्यस्य प्रकृतस्य 'तत्ते' इत्यनेनोक्तत्वाद् रूपशब्दस्य स्वरूपपरत्वात्, शरीरे रूपत्वाभावाच्च, अग्रे च "योऽसावसौ पुरुषः सोऽहमस्मी"ति पुरुषात्मनोरैक्यस्योक्तत्वात्, अहम्पदस्य मच्छरीरीत्यर्थपरत्वेऽस्मीत्युत्तमपुरुषानुपपत्तेः, पुरुषशरीरमहमित्यर्थे पुरुषशब्दस्य शरीरलक्षणापत्तेश्च ॥

तलवकारशाखोपनिषदि च – "केनेषितं पतति प्रेषितं मनः" इति प्रेषितं प्रेरितमित्युक्ते देहादिसापेक्षत्वेन प्रेरकत्वप्रसक्तौ तद्व्युदासायेषितमिति विशेषणादिच्छामात्रेणैव प्रेरकत्वम्, न तु वाक्कायाभ्याम्, इत्यशरीरत्वमेवोपक्रम्य 'श्रोत्रस्य श्रोत्रमि'त्यादिना 'न तत्र चक्षुर्गच्छति, न वाग् गच्छति' इति च वागगोचरीभूतमशरीरत्वमेवोक्तम् । अत एवाग्रे देवानामि-

न्द्रियगोचरे प्रादुर्भूतं यक्षरूपमीश्वरस्य न वास्तवम्, किन्तु मिथ्याभूतमिति विद्युद्दृष्टान्तोक्तिः ॥

कठवल्ल्याम्—"अशरीरं शरीरेष्वनवस्थेष्ववस्थितमि"ति शरीरसामान्यनिषेधेन देव-मनुष्यादिशरीरेषु तत्प्रति शरीरत्वापन्नेऽवस्थावत्त्वेऽपि ब्रह्मणस्तेषां च शरीर-शरीरिभावाभावस्योक्त्वात् "अशब्दमस्पर्शमिति" च स्वरूपतः, विशिष्टरूपेण वा रूपादिराहित्योक्त्या, "रूपं रूपं प्रतिरूपो बभूव" इति देवादिकृतरूपवत्त्वोक्त्या वास्तवाशरीरत्वकथनाच्च न ब्रह्मणः शरीरित्वम् ॥

प्रश्नोपनिषदि च—चतुर्थे गार्ग्यप्रश्ने—"अच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते" इति ब्रह्मणः शरीरमात्रनिषेधात्, पञ्चमे—सत्यकामप्रश्ने "परात् परं पुरिशयं पुरुषमीक्षते" इति पुरिशयनत्वमात्रोक्त्या भ्रान्तिप्राप्तस्य शरीरस्य निरासायाग्रे—"शान्तमजरममृतम्" इति जराख्यशरीरधर्मसंबन्धनिषेधाच्च ब्रह्म न नियमेन सशरीरम् ;

षष्ठे प्रश्ने षोडशकलं पुरुषं प्रकृत्य "स एषोऽकलोऽमतो भवती"ति मुक्तावशरीरब्रह्मैक्यस्योपसंहारात्, "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपाद"मिति स्थूल-सूक्ष्मशरीरद्वयनिषेधात्, अग्रे च—"दिव्यो ह्यमूर्तः पुरुषः," "अप्राणो ह्यमनाः शुभ्रः" इति तन्निषेधाच्च ॥"

मुण्डके यद्यपि—"अग्निर्मूर्धे"त्यादिना विराड्रूपमुक्तम् ; तथापि तस्य न पराभिप्रेतशरीरसाधकत्वम्। यस्य "सर्वाणि भूतानि शरीरमि"त्यादिना सर्वस्य साक्षाच्छरीरत्वादिनावयवत्त्वासंभवात् अवयववाचकानां वागादिशब्दानां शरीरिपर्यन्तत्वासंप्रतिपत्तेः, अग्रे "निष्कलं निष्क्रियमि"ति तन्निषेधाच्च ॥

माण्डूक्ये च—"अदृश्यमव्यवहार्यमि"त्यादिना तन्निषेधः, प्रपञ्चोपशममिति साक्षान्निषेधश्च ॥

तैत्तिरीयके तु—भूरादिव्याहृत्यात्मनोपास्यस्याकाशवत् सूक्ष्मस्वरूपत्वात्, आकाशशरीरमित्युक्तं भवतु भवदुक्तरीत्यभिप्रायेण, परं तु तत्रापि शरीरपदं वितथम् ॥

ऐतरेयके च—सूक्ष्म-स्थूलदेहसृष्ट्यनन्तरं 'कथं न्विदं मदृते स्यादिति अथ कोऽहमिति च प्राणादिव्यापाराणां निरधिष्ठातृकत्वमात्रं 'स एतमेव सीमानं विदार्यैतया द्वारेति प्रतिपाद्य, तत्रेश्वरस्यैव प्रवेशमुक्त्वा, स्थितस्य प्रविष्टस्य तिस्रोऽवस्था इति जाग्रदादिस्था उक्त्वा, "स

जातो भूतान्यभिव्यख्यत" इति तस्यैव देहाद्यभिमानित्वेन ब्रह्मणोऽशरीरित्वकथनात् ॥

छान्दोग्ये तु—"अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति "न ह वै सशरीरस्ये"ति चान्वय-व्यतिरेकाभ्यां शरीरसामान्यनिषेधः ॥

बृहदारण्यके—अन्तर्यामिब्राह्मणोक्तं शरीरान्तरं विना साक्षात् प्रेर्यत्वरूपगुणयोगादौपचारिकं शरीरपदम् ; "यस्य पृथिवी शरीरमि"ति शृण्वतो भ्रान्त्या प्राप्तं मुख्यशरीरत्वं निराकर्तुं तदुत्तरगार्ग्यप्रश्नेऽक्षरविद्यायाम- "चक्षुषमश्रोत्रमित्याद्यमुखमि"त्यन्तेन स्थूल-सूक्ष्मशरीरनिषेधात् , "न तदश्नात्यस्थूलमित्या"दिना तद्धर्म-क्रिया-गुणनिषेधात् , "अकामयमान" इत्युपक्रम्य—"अथायमशरीर" इति मुक्तजीवस्य ब्रह्मैक्याभिप्रायेण शरीरमात्रनिषेधाच्च न ब्रह्म सशरीरम् ॥

तत्र शरीर-शरीरिभावो विशेष्य-विशेषणयोः, कार्य-कारणभावस्तु विशेष्ययोः, विशेषणयोः, विशिष्टयोर्वा, इति शरीर-शरीरिभावस्य, कार्यकारणभावस्य च न कोऽपि सम्बन्धः ॥

एकविज्ञानेन सर्वविज्ञानं हि ब्रह्मण एकस्य विज्ञानेन तद्व्यतिरिक्तद्वितीयपरिशेषाभावेनाद्वितीयत्वं विना न घटते । न चाज्ञानं कर्ममात्रम् , किन्तु तस्यापि मूलकारणमावरण-विक्षेपशक्तिमदनिर्वचनीयाज्ञानमेव, यस्य ब्रह्मात्मैकताविज्ञानेनैव निवृत्तिः । तयाच तत्प्रयुक्तानामपि ब्रह्मव्यतिरिक्तानां निवृत्तिर्ब्रह्ममात्रपरिशेषेण । तदुक्तम्—

'यद् ज्ञात्वा नेह भूयोऽन्यत् ज्ञातव्यमवशिष्यते ।'

इति ॥

### श्रीभाष्यकाराणां महापूर्वपक्षः

#### ब्रह्मात्मैकत्वविज्ञानस्याज्ञाननिवर्तकत्वानुपपत्तिः

यत् पुनरिदमुक्तम्—ब्रह्मात्मैकत्वविज्ञानेनैवाविद्यानिवृत्तिर्युक्ता—इति, तदयुक्तम् ; बन्धस्य पारमार्थिकत्वेन ज्ञाननिवर्त्यत्वाभावात् । पुण्यापुण्यरूपकर्मनिमित्तदेवादिशरीरप्रवेश-तत्प्रयुक्तसुख-दुःखानुभवरूपस्य बन्धस्य मिथ्यात्वं कथमिव शक्यते वक्तुम् ? एवंरूपबन्धनिवृत्तिर्भक्तिरूपापन्नोपासनप्रीतपरमपुरुषप्रसादलभ्येति पूर्वमेवोक्तम् । भवदभिमतस्यैक्यज्ञानस्य यथावस्थितवस्तुविपरीतविषयस्य मिथ्यारूपत्वेन बन्धविवृद्धिरेव फलं भवति;

"मिथ्यैतदन्यद् द्रव्यं हि नैति तद्द्रव्यतां यतः।"
इति शास्त्रात्, "उत्तमः पुरुषस्त्वन्यः" "पृथगात्मानं प्रेरितारं च मत्वा" इति जीवात्मविसजातीयस्य तदन्तर्यामिणो ब्रह्मणो ज्ञानं परमपुरुषार्थलक्षणमोक्षसाधनमित्युपदेशाच्च ॥

तत्त्वज्ञानस्याविद्यानिवर्तकस्य
निवृत्त्यनुपपत्त्याऽद्वैतहानिः

अपिच भवदभिमतस्यापि निवर्तकज्ञानस्य मिथ्यारूपत्वात् तस्य निवर्तकान्तरं मृग्यम्। निवर्तकज्ञानमिदं स्वविरोधि सर्वं भेदजातं निवर्त्य क्षणिकत्वात् स्वयमेव नश्यतीति चेत्, न; तत्स्वरूप-तदुत्पत्ति-विनाशानां काल्पनिकत्वेन विनाश-तत्कल्पना-कल्पकरूपाविद्याया निवर्तकान्तरमन्वेषणीयम्। तद्विनाशो ब्रह्मस्वरूपमेवेति चेत्, तथा सति निवर्तकज्ञानोत्पत्तिरेव न स्यात्, तद्विनाशे तिष्ठति तदुत्पत्त्यसंभवात् ॥

अत्राद्वैतिनां महासिद्धान्तः

ब्रह्मात्मैकत्वज्ञानस्याविद्यानिवर्तकत्वोपपत्तिः

तत्र ब्रह्मात्मैकत्वविज्ञानेनाविद्यादिबन्धनिवृत्तिर्यदि तेषां पारमार्थिकत्वात्, तर्हि कथं वा श्रीभाष्यमतेऽपि बन्धस्य निवृत्तिः? यद्युपासनामात्रेण, तर्हि तेन निवर्तितस्य तस्य परमार्थिकत्वे का वा राजाज्ञा? यदि निवृत्त्यनन्तरमपि सत्त्वेन, तर्हि संसार-मुक्त्योः को विशेषः? यद्यबन्धकत्वमात्रं निवृत्तस्य, तर्हि का नाम सा निवृत्तिः? कथं च सा ॥

इदमत्र विविच्यताम्—रज्जुसर्पादिस्थले ज्ञानेन सर्पादिनिवृत्तिरपि दृश्यमाना किं परमार्थस्यैव निवृत्तिविवक्षया? यद्योम्, तर्हि का वा बाधा तत्र? "तमेव विदित्वाऽतिमृत्युमेति" इति ज्ञानमात्रेणाविद्या-तत्प्रयुक्तानां निवृत्तिर्भवति, तदपारमार्थिकत्वमपि "नेह नानाऽस्ति किञ्चनेत्या"दिः प्रतिपादयति, इति न तत्पारमार्थिकत्वं प्रामाणिकम्। तत्र निवृत्तिर्बन्धस्य तन्मूलकारणेनाऽविद्यया सह नाशाद् बाधः स्वरूपवतः, पारमार्थिकत्वेन वा, इति तद् बन्धमिथ्यात्वं विना नोपपद्यते, इति ब्रह्मात्मैक्यज्ञाननिवर्त्यत्वाद् बन्धमिथ्यात्व एव तस्यापि पर्यवसानम् ॥

ऐक्यज्ञानमविद्यानिवृत्त्युपलक्षिताखण्डसन्मात्रम्। न च तन्मिथ्या; तद्बाधकस्यापरस्याभावात्, सर्पादिवत् साधिष्ठानकत्वाभावाच्च। अधि-

ष्ठानज्ञानं रज्जुसर्पादौ बाधकं दृश्यते । न च ब्रह्मणोऽधिष्ठानं किमपि प्रमाणतः सिद्धम् ॥

"मिथ्यैतदन्यद् द्रव्यं हि नैति तद्द्रव्यतां यतः ॥"

इति तु बन्धमिथ्यात्वोपपादकतया व्याख्यानमेवार्हतीति विवेचितमधस्तात् । "पृथगात्मानं प्रेरितारं च मत्वा" इत्यपि जीवम्, ईश्वरं च तत्तदुपाध्युपहितमुपाधितो विविच्य सन्मात्रेण ज्ञानेनैव मुक्तिं प्रतिपादयति, न तु जीवेश्वरभेदविज्ञानेन । न चैवं श्रीभाष्यसिद्धान्तेऽप्यपृथक्सिद्धयोरेव तयोर्ज्ञानं मुक्तिसाधनम् । तन्मते हि जीवेश्वरपृथक्त्वं प्रत्यक्षादिप्रमाणसिद्धं नौपनिषदतामर्हति । तत्रापृथक्सिद्धयोः पृथक्त्वं स्वमातृवन्ध्यात्वमिति त्वन्यदेतत् । उत्तमः पुरुषस्त्वन्य औपनिषदः । अत्र वक्तव्यमपि पूर्वमेवोक्तम् ॥

निवर्तकज्ञानस्य स्वयमेव निवृत्तिः

तत्र निवर्तकज्ञाननिवृत्तिरपि तस्याप्यन्तःकरणपरिणामस्याविद्याप्रयुक्तत्वादविद्यादीनामिव तेनैव, इति नाद्वैतहानिः । अतो निवर्तकं ज्ञानमपि स्वयमेव निवर्तते; तस्याप्यनाद्यज्ञानप्रयुक्तान्तःकरणपरिणामत्वात्, अविद्याप्रयुक्तत्वेऽप्यविद्यानाशक्षणानन्तरमेवान्तःकरणादेरिव नाशाद् न तद् निवर्तकान्तरमपेक्षते । तस्य मिथ्यात्वं तु स्वरूपतो बाधमात्रेणाविरुद्धम् । न चैतावता विषयतोऽपि तस्य मिथ्यात्वम्; विषयस्याखण्डस्य ब्रह्मणोऽविद्याऽप्रयुक्तत्वात् । अविद्याप्रयुक्तविषयकत्वेन हि विषयतो ज्ञानस्य मिथ्यात्वम् । निवर्तकज्ञानं चेदं स्वविरोधि सर्वं भेदजातं निवर्त्याऽविद्याप्रयुक्तत्वादपरं भेदजातमिव स्वमहिम्नाऽऽत्मानमपि निवर्तयतीति निष्कर्षः । तत्र निवर्तकज्ञानमखण्डाकारान्तःकरणवृत्तित्वाद् न ब्रह्मस्वरूपम्, किन्तु तद्व्यतिरिक्तमेव ॥

अयमेव न्यायस्तन्नाशेऽपि । तत्राविद्यानिवृत्तिर्यदि पञ्चमप्रकारा, तर्हि न ब्रह्मस्वरूपम् ॥

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।"

इति सिद्धान्ते तु ब्रह्मस्वरूपमेव, अथवा ब्रह्मव्यतिरिक्तम् । तत्रान्तिमेन तस्यापि नाशे स्वयं वृत्तेरिवाज्ञानप्रयुक्तत्वादज्ञाननिवर्तकेन नाशः । न चात्राप्यविद्यान्तर-तन्नाशकल्पनापत्तिः । विनाशो हि यदा पदार्थानां स्वकारणात्मनाऽवस्थानम् । कारणस्य हि नाशमात्रं बाधः ॥

इयान् विशेष:—कार्यनाश: प्रयोजकात्मा भवति, न तु कारणस्यापर आत्मा कश्चन। तत्र घटादेरिव नाधिष्ठानस्यापि विनाशकत्वापत्तिः, इति तत्र यदा घटादिनाशस्य घटोपादानाज्ञानात्मता न विरुद्धा, तदानीमविद्यायाः सत्त्वात्। तत्राविद्यानाशे घटादीनां बाधो नाम, यदा स्वरूपतोऽप्यभावः। अविद्यानाशस्तु तदुपादानाविद्यान्तरनाशाभावाद् स्वरूपतो बाध एव, न निवृत्तिमात्रं घटादिनिवृत्तिरिव, इति स्वरूपतो निवृत्तिमात्रस्य तत्र बाधरूपत्वादन्येषामिव तस्यापि ब्रह्मव्यतिरेकेणाभाव एव, इति तत्प्रयुक्तत्वादिकथा नोत्तिष्ठति॥

स्वप्ने तु स्वाप्नपदार्थस्वरूप-तदुत्पत्ति-स्थितीनां तूलाविद्योपादानकत्वात् स्वाप्नपदार्थस्वरूपाणामनिर्वचनीयत्वम्, तन्नाशस्त्वविद्यानाशाद् बाधो घटादेरिव। तत्र तूलाविद्यानाशस्वरूपं तु तूलाविद्याया मूलाविद्यावस्थाविशेषरूपत्वाद् मूलाविद्यात्मता, तन्नाशस्तु पूर्वोक्तरीत्याऽविद्याकारणस्यान्यस्याऽसम्भवात् बाध एवेति तु निष्कर्षः॥

तत्राविद्याविनाशस्य ब्रह्मस्वरूपत्वं वृत्त्युपलक्षितसंविन्मात्रत्वम्, न त्वावृतानावृतानाद्यविद्याप्रयुक्तसदादिभेदवद्ब्रह्मस्वरूपता, इति न निवर्तकज्ञानोत्पत्त्यनुपपत्तिः; यावन्निवर्तकज्ञानं वृत्त्युपलक्षितात्मस्वरूपस्यैवाभावात्॥

निवर्तकज्ञानोत्पत्तौ स्वज्ञानप्रयुक्तोपाध्युपहिताज्ञानस्वरूपादिसर्वबाधाद् न ज्ञाता, ज्ञेयम्, अन्यद्वा किमपि; अनावृतब्रह्मस्वरूपातिरेकिणः सर्वस्य बाधात्ः, अविद्यानिवृत्तौ तत्प्रयुक्ताध्यासस्यापि बाधाच्च। तथाच श्रुतिः—"यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येदि"ति। निर्विशेषचिन्मात्रमेवानावृतमखण्डात्मना स्वप्रकाशमवतिष्ठते। तदा हि मायानुपहितत्वाद् न ज्ञाता, इति नात्राध्यासादिशङ्कोत्तिष्ठति, इति नात्र निवर्तकज्ञानान्तरकल्पनाऽऽपत्त्याऽनवस्थादोषादिः॥

तत्र निवर्तकज्ञानं स्वोपाध्यन्तःकरणपरिणामवृत्तिरूपं स्वोत्पत्तिकालपर्यन्तमुपाधेरनाशादन्तःकरणस्यापि विद्यमानत्वाद् – व्यवहारदशायां घटादिज्ञानमिवाहमर्थस्याध्यस्तस्य जीवस्यैव। स हि स्वोपाधिनिवर्तकज्ञानार्थमेव यतते, न तु स्वरूपनाशार्थमिति स्पष्टं विवेचितम्—"अहमर्थविनाशश्चेदि"त्यादिश्रीभाष्यपरीक्षावसरे॥

स्वोपाधिनाशार्थं हि सोपाधिकस्यात्मनः श्रवणादौ प्रवृत्तिः। तत्रोपाधिनिवृत्तिरेव पुरुषार्थः, न तु स्वरूपनिवृत्तिः। सति चैवमज्ञानतत्प्रयुक्तसर्वोपाधि- तत्प्रयुक्तभेदनिरासेनानावृतस्वरूपात्मनाऽवस्थानस्यैव मोक्षपदार्थत्वात्, तस्य चाद्वितीयात्मविषयकप्रमाणजन्यज्ञानं विनाऽनुप-

पत्तेः, तत्र चोपासना-कर्मणां पूर्वोक्तप्रकारेण सहभावासंभवात्, कर्मणामल्पास्थिरफलत्वस्य ब्रह्ममीमांसागम्यस्य कर्ममीमांसानवसेयत्वात्, कर्मस्वरूपज्ञानमात्रस्य विना तदनुष्ठानं ब्रह्मजिज्ञासायामनुपकारकत्वात्, किं बहुना, ? पूर्वोत्तरमीमांसयोरैकशास्त्र्यवादस्य बाधितत्वात्, कर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेश्चः, साधनचतुष्टयसंपत्त्यनन्तरमेव ब्रह्मजिज्ञासा कर्तव्येति निष्कर्षः ॥

तत्र जिज्ञासाधिकरणे श्रीभाष्यकाराः स्वमतोष्टम्भनार्थम्—प्रथमं वेदेषु कार्यार्थतावादमवलम्ब्य पूर्वपक्षमुपक्षिपन्ति, यत्राद्वैतिनामपि न विप्रतिपत्तिः।

तत्र पूर्वपक्षः—व्यवहारस्य कार्यबुद्धिपूर्वकत्वेन कार्यार्थ एव शब्दस्य प्रामाण्यम्, इति कार्यरूप एव वेदार्थः। अतो न वेदान्ताः परिनिष्पन्ने परे ब्रह्मणि प्रमाणभावमश्नुवन्ति; कार्यबुद्धि-प्रवृत्तिव्याप्तिबलेनैव शब्दस्य प्रवर्तककार्यावबोधित्वमवगतम्, इति सर्वपदानां कार्यपरत्वेन, सर्वैः पदैः कार्यस्यैव विशिष्टस्य प्रतिपादनाद् न स्वार्थमात्रे पदशक्तिः। इष्टसाधनताबुद्धिस्तु कार्यबुद्धिद्वारेण प्रवृत्तिहेतुः, न स्वरूपेण। अतो नेष्टसाधनतामात्रबोधकत्वं पदानाम्। न केवलमिष्टसाधनतामात्रेण कृतिसाध्यत्वज्ञानं विना कोऽपि प्रवर्तते। अतः परिनिष्पन्नब्रह्मप्राप्तिलक्षणब्रह्मविचारारम्भो न युक्त इति प्राभाकरमतानुयायी पूर्वपक्षः। अयं पूर्वपक्षो ब्रह्मसिद्धौ नियोगकाण्डनिरस्यार्थसंग्रहमात्रम्॥

अत्र प्रतिपत्तिविधिविषयतया ब्रह्म विवक्ष्यते, ब्रह्म तु स्वरूपतो न कार्यपदार्थोऽपूर्वं नियोगो वा, आख्यातार्थो वा। यत्र लिङादि नास्ति, तत्र विधिकल्पनेनैव प्रामाण्यमङ्गीकर्तव्यम्। मन्त्रार्थवादानामपि विधिपरतयैव प्रामाण्यम्। तत्र नियोगः, कार्यं वाऽपूर्वं वा यद्यपि न लौकिकम्; तथापि—अपौरुषेयवेदावगम्यं तत् प्रामाणिकम्। लौकिकानां तु वाक्यानामलौकिकापूर्वबोधकत्वाभावेऽपि न दोषः; यतस्तैर्लौकिकशब्दस्य प्रामाण्यमेव नोरीक्रियत इति प्राभाकराणामाशयः॥

तत्र लौकिकालौकिकसाधारणक्रियापरतयैव वाक्यानां प्रामाण्यम्: लौकिकवाक्यानामपि प्रमाणत्वात्—इति भाट्टाः। अतो लौकिकालौकिकसाधारणक्रियान्वितमात्रे शब्दानां प्रामाण्याद् वेदान्ताः परिनिष्पन्नं परं ब्रह्म, तदुपासनं च परिमितफलं बोधयन्ति, इति तन्निर्णयफलो ब्रह्मविचारः कर्तव्य इति सिद्धान्तः। अत्र तूपास्यत्वेऽपि शास्त्रप्रामाण्याद् ब्रह्मापि सत्यं वर्तत इति पूर्वोत्तरपक्षविशेषः॥

अथवा कार्यार्थपरत्वेऽपि वेदस्य ब्रह्मविचारः कर्तव्यः। "स्वर्गकामो यजेत" इत्यादिवत् "आत्मा वा अरे द्रष्टव्यः" इत्यादावप्यलौकिकफलसाधनस्य निदिध्यासनस्य विधानात्, उपासनाविषयकार्याधिकृतफलत्वेन "ब्रह्मविदाप्नोति पर'मित्यादिभिर्ब्रह्मस्वरूप-तद्विशेषणानां कार्योपयोगितयैव सिद्धेः, क्षणभङ्गिकर्मातिरेकि-स्वर्गसाधनापूर्वाख्यकार्यसम्बन्धितयैव वेदान्तानामपि प्रामाण्याद् लौकिक-वैदिकसर्वशब्दानामपि कार्यार्थतया प्रामाण्यमव्याहतम्। कार्यं तु लौकिक-वैदिकसाधारण्येन नैकरूपम्, किन्तु क्रियासाम्यमलौकिकमपूर्वम्, लौकिकक्रियामात्रं त्वेतिन्यदेतत्। सर्वथा तु कार्यपरतयैव वेदान्ता अपि प्रमाणमेवेति सिद्धान्तः॥

उभयथापि सिद्धब्रह्मबोधकत्वमात्रेण वेदान्तानां नाप्रामाण्यम्; सविशेषब्रह्मपरत्वेनैव तत्प्रामाण्याद् निर्विशेषे ब्रह्मणि वेदान्तानामप्रमाण्यमिति तु निष्कर्षः॥

प्राभाकरसम्मतपूर्वपक्षात्, सिद्धान्तसम्मतस्य पक्षस्य फलभेदस्तु अपूर्वस्यैव फलसाधनत्वं प्राधान्येन। ततश्च "धर्मं जैमिनिरत एव" इति सूत्रार्थनिष्कर्षः पूर्वपक्षे, यत्रोपास्यस्य सविशेषस्य ब्रह्मणः प्रसादद्वारा न फलसाधनत्वमिति। सिद्धान्तोपष्टम्भकं तु "पुराषार्थोऽतः शब्दादिति बादरायणः" इति सूत्रम्। अत्र सगुणवाक्यानामपि सगुणे ब्रह्मणि, तदुपासने च सफलेऽवान्तरतात्पर्यात् तावदंशमात्रे नाद्वैतिनामपि विसंवादः॥

पूर्वोत्तरपक्षाभिमता निर्विशेषे वेदान्तानामप्रामाण्यकथा तु—सर्वेषां वेदान्तानामद्वितीये ब्रह्मण्येव महातात्पर्यमित्यद्वैतसिद्धान्तपरिपन्थित्वाद् न पूर्वोत्तरपक्षावुभावप्यद्वैतवादिनां सम्मतौ। अद्वैतसिद्धान्ते हि निर्विशेषेऽपि ब्रह्मणि वेदान्तानां प्रामाण्यमिति श्रीभाष्यमहापूर्वपक्षनिरासेन निर्विशेषे ब्रह्मण्येव परमं तात्पर्यमिति महता विस्तरेण व्यवस्थापितम्॥

तत्र श्रीभाष्यकाराणां परमं लक्ष्यं निर्विशेषब्रह्मवादनिरासः। अद्वैतसिद्धान्तस्तु यदि सिद्धेऽप्यर्थे ब्रह्मण्यपि (सविशेषे, निर्विशेषे वेत्यन्यदेतत्) प्रामाण्यम्, तर्हि विना विधिं ज्ञेयनिर्विशेषब्रह्मण्यपि वेदान्तानां कथं न प्रामाण्यमिति? अन्यथा सविशेषमपि ब्रह्म श्रीभाष्यमतेऽपि न सिद्ध्येत्॥

"अथातो ब्रह्मजिज्ञासे"ति सूत्रविवरणप्रसङ्गेन सर्वे चेमे पूर्वपक्षसिद्धान्ता श्रीभाष्यदृष्ट्या पूर्वपक्षमुखेनाद्वैतम, सिद्धान्तमुखेन तु विशिष्टाद्वैतं चावलम्ब्य प्रवृत्ताः, पीठिका त्रियं तद्विपरीतम्। एवं पूर्वोत्तरपक्षविधया परीक्षिता विषयास्तु प्रधानाः—स्वस्वमत एव सूत्राणां स्वारस्यम्, भावरूपा-

विद्या, प्रपञ्चमिथ्यात्वम् , 'अथातो ब्रह्मजिज्ञासा' इत्यत्राथशब्दार्थः, ब्रह्मपदार्थः, जीवन्मुक्तिश्च ॥

तत्राविद्यामधिकृत्य सप्त प्रकरणानि—सप्तानुपपत्त्युपपत्तिविषयाणि, कर्माधीनाधिकरादिविषयाणि त्रयोदश प्रकरणानि, 'अथ'शब्दार्थमधिकृत्यैकशास्त्र्यवादादिविषयाणि चत्वारि प्रकरणानि, ब्रह्मशब्दार्थविवरणप्रसङ्गेन तत्त्वमसिमहावाक्यार्थस्य प्रत्यगभिन्नसंविन्मात्रस्य ब्रह्मपदार्थत्वात् त्वम्पदार्थमधिकृत्य दश प्रकरणानि, तत्पदार्थमधिकृत्य षोडश प्रकरणानि, महावाक्यार्थमधिकृत्य षट् प्रकरणानि, जीवन्मुक्तिमधिकृत्य द्वे प्रकरणे, प्रपञ्चमिथ्यात्वमधिकृत्य चत्वारि प्रकरणानि च शतदूषणी-शतभूषण्योः परीक्षितानि ॥

तत्र शतभूषण्यादिखण्डनात्मकमभिनवदेशिकादिबिरुदाङ्कितश्रीमदुत्तमूर वीरराघवार्यमहोदयेन परमार्थभूषणाख्यो निबन्धः कश्चन निबद्धः, यः पूज्यपाद-श्रीमदहोबिलमठपण्डितसभया, श्रीमता भाष्यव्यङ्गारमहाशयेन च प्रशंसितः, १९५९ तमे वत्सरे प्रकाशितश्च, इति तत्परीक्षणार्थमयमद्वैततत्त्वसुधाया द्वितीयो भागः ॥

तत्र प्रथमो भागो न्यायसुधापरीक्षात्मकः पूर्वं प्रकाशितः, तत्परिशिष्टं तु किञ्चिन् न्यायसुधामण्डन-न्यायसुधापरीक्षादिविमर्शात्मकमत्रैवादौ निवेश्यते। सुधाशब्दप्रयोगो ह्यत्र परकालमठप्रोत्साहिततदास्थानपण्डितप्रकाशिततत्त्वसुधामुपलक्ष्य,याऽप्यत्रैव समालोचयिष्यते, प्रधानं लक्ष्यं तु निबन्धस्यास्य परमार्थभूषणपरीक्षणमेव ॥

तत्र परमार्थभूषणम् , तत्त्वसुधा, न्यायसुधामण्डनम् , शतभूषणी समीक्षा च वैयक्तिकनिन्दाभूयिष्ठानि तेनांशेन बहु विस्तृतानि। अयं तु निबन्धस्तदीयं साग्रहं वैयक्तिकनिन्दांशं सर्वथा दूरीकृत्य प्रकृतविषयमात्रमवलम्बते, यतस्तत्रैव प्रियपाठकमहोदया उदारहृदयाः प्रोत्सहन्ते ॥

अयं हि निबन्धोऽद्वैतदर्शनमनादिसम्प्रदायसिद्धं नाप्रामाणिकम् , दर्शनान्तराण्यपि यथासम्भवमधिकारभेदेन, भूमिकाभेदेन वा प्रमाणानीति दृष्ट्यैव निबद्ध्यते, इति संप्रति पीठिकामात्रमुपह्रियते। भूमिकात्वत्र वक्तव्यमवशिष्टं किञ्चन विवेचयिष्यति। साम्प्रतं तु संकल्पिते भूषणादिपरीक्षणे लेखिनी व्याप्रियते ॥

ॐ

# अद्वैततत्त्वसुधायाः

## द्वितीयो भागः

मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

### ब्रह्मसूत्राणामद्वैत एव स्वारस्यम्

### वेदैकमूलस्याद्वैतस्याविरोधेन सर्वदर्शनप्रामाण्यम्

नारायण-पद्मभू-वसिष्ठ-शक्ति-पराशर-व्यास-शुक-गौडपाद-गोविन्दभगवत्पाद-शङ्करभगवत्पाद - पद्मपाद-हस्तामलक-त्रोटक-वार्तिककार- विमुक्तात्म-ज्ञानघन--वाचस्पत्यानन्दबोध--चित्सुखानन्दगिर्यादिपरम्परयाऽनादिसम्प्रदायसिद्धमद्वैतदर्शनाख्यं वेदान्तदर्शनमेव सर्वेषु दर्शनेषु दर्शनीयम् ॥

"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥"

इति महाभारतपरामृष्टेषु साङ्ख्यादिदर्शनेषु प्रधानतमं वैदिकं पाञ्चरात्र-तन्मूलादिव्यतिरिक्तमद्वैतदर्शनम्, इति तदविरोधेनैवापरेषां सर्वेषां दर्शनानां प्रामाण्यम्, वैदिकाद्वैतदर्शनाविरोधे तु तेषां तदविरुद्धांशमात्रे प्रामाण्यम्, विरुद्धांशे तु न प्रामाण्यमित्यभिप्रेत्यैव भगवान् बादरायणः शास्त्रयोनित्वसूत्रेण वैदिकदर्शनस्यैव प्रामाण्यं प्रतिज्ञाय, वेदस्यापि परतः प्रामाण्यवादिनां वैशेषिक-न्याय-साङ्ख्य-योगदर्शनानाम्, वेदसमानयोगक्षेमं प्रामाण्यं पाशुपतस्य, पाञ्चरात्रस्य वेति वादिनां च महाभारतस्येव साक्षात् सदाशिव-नारायणादिप्रोक्तत्वेन पौरुषेयत्वेऽपि गौणमेव वेदत्वमिति वेदविरुद्धांशेऽप्रामाण्यमेव, तत्र बादरायणः पाशुपतदृष्ट्या पाञ्चरात्रस्य, पाञ्चरात्र-

दृष्ट्या पाशुपतस्य, वैदिकाद्वैतदर्शनदृष्ट्या तु तत्तद्विरुद्धानां तेषां तेषामप्रामाण्यमित्यविरोधाध्याये वेदेतरसर्वदर्शनस्य ब्रह्ममीमांसायामसूत्र- यदिति भगवत्पादीया व्यवस्था ॥

### वैदिकस्याद्वैतदर्शनस्य योगवासिष्ठ-स्मृति-पुराण-गौडपादागमादिसिद्धस्यादरणीयत्वम्

तच्च वैदिकमद्वैतदर्शनं विशदमुपनिषत्सु प्रतिपादितम् , सूत्रकारेणात एव सन्दिग्धवाक्यमात्रविचारार्थं प्रवृत्तेनाऽद्वैतपरतयाऽसन्दिग्धानि तत्त्वम- स्यादिमहावाक्यानि यथाश्रुतमद्वैतपरतया निर्णीतानि न विचारितानि। अद्वैतसिद्धान्ताश्चौपनिषदा योगवासिष्ठादौ श्रीमद्भागवत-विष्णुपुराणादौ च बहुभिराख्यानैर्विशदमुपपादिताः, श्रीगौडपादाचार्यैरागमप्रकरणादिभिः सुचारु व्यवस्थापिताश्च ॥

### गौडपादीयाऽऽगमप्रकरणस्याद्वैतसम्प्रदायैकलक्ष्यस्य भगवत्पादैरिव श्रीभाष्यकारैरविवरणम्

तत्रागमप्रकरणस्य गौडपादकृतत्वे, वेदत्वे वा विप्रतिपत्तावपि तत्प्रामाण्ये न विवादलेशोऽपि, इति तस्य विना संकोचम् , अन्यथानयनं वाऽद्वैतमत एव पर्यवसानं भगवत्पादैः स्वयं विवरणेन व्यक्तीकृतम् । न चागमप्रकरणमिदं श्रीविशिष्टाद्वैतसंप्रदायाचार्याः प्राचीनाः केऽपि, छान्दोग्योपनिषदादेरिव माण्डूक्योपनिषदः, तदीयागमप्रकरणस्य वा स्वयं व्याख्यानेन विशिष्टाद्वैतसिद्धान्तपर्यवसानप्रकारं विवेचयन्ति ॥

### भगवत्पादानामवतारपुरुषाणां न मात्रयाऽपि सम्प्रदायान्तरेऽभ्यसूया, विद्वेषो वा

तत्र भगवत्पादादीनां श्रुत्येकशरणानाम् , सदाशिवावताररूपाणां न सिद्धान्तविशेषेऽभ्यसूया, न वा सिद्धान्तविशेषक्षोभणाय प्रवृत्तिः। आधि- कारिकेषु, जीवन्मुक्तेषु, स्थितप्रज्ञेषु, गुणातीतेषु वा तेषु हि न मात्रया ऽपि संभावनाऽभ्यसूयायाः ॥

### भगवत्पादभाष्यस्य मण्डनादिभिः प्रचारितस्य लघु-महापूर्वपक्षतया श्रीभाष्य उपक्षेपः

अत एव सर्वतन्त्रस्वतन्त्रा मण्डन-सुरेश्वर-वाचस्पतिमिश्रप्रभृतयः प्रसन्नगम्भीरं भगवत्पादानां प्रस्थानत्रयभाष्यार्थं प्रसन्नगम्भीरैः स्वीयैर्निबन्धै- र्भाष्यादिव्याख्यानमिषेण विशदीकृत्यात्मानं पवित्रयन्ति स्म। तदुक्तम्—

"आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम् ।
रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति ॥"

इति ॥

भगवत्पादभाष्यस्य लघु-महापूर्वपक्षमुखेनोपक्षिप्य श्रीभाष्येण निरासः, तस्यैव संकलनं शतदूषण्या, यस्याः परीक्षणं शतभूषण्या च

सत्यप्येवं भगवत्पादाशयं लघु-पूर्वपक्षविधया, महापूर्वपक्षविधया च संकलय्य बहुभिरेवानुक्तोपालम्भनादिभिः श्रीभाष्ये दूषितमुपबृंहयितुं कवितार्किकसिंह-श्रीवेङ्कटनाथार्याः श्रीमद्वेदान्तदेशिकाः प्रणिन्युः शतदूषणीं नाम निबन्धम्, यस्याः परीक्षणदृष्ट्या शतभूषणी नाम निबन्धो निबद्धः, प्रकाशितश्चः ॥

शतभूषण्यां विशकलिततत्तद्विषयाणां संकलनमात्रम्, न तु काऽपि कल्पना

तत्र श्रीभाष्य-शतदूषणीसंगृहीतानि दूषणानि बहूनि पूर्वपक्षरूपेण तत्र तत्र निर्दिष्टानि, यानि समाहितान्यपि तैस्तैराचार्यैः, इति शतभूषण्यामेव व्यक्तम् । शतभूषणीनिबन्धोऽयं शतदूषणीसमालोचनात्मकः साधुरसाधुर्वेति विमर्शनार्थं प्रियसुहृदः परमार्थभूषणकारस्य प्रवृत्तिरिति विज्ञाय महान्तमानन्दं शतभूषण्यनुभवति । अद्वैतनिबन्धेषु तत्र तत्र विशकलिततया दृश्यमाना अद्वैतसिद्धान्ताः केवलं शतभूषण्यां संगृहीताः, येनाद्वैतपण्डिता बहवः सन्तुष्टाः, अद्वैतसंप्रदायाचार्या अपीति वस्तुस्थितिः ॥

शतभूषणीप्रकाश उपकृतत्वतामाधमर्ण्यस्मरणम्

अद्वैतिभिः कैश्चन शतभूषणीनिबन्धः प्राकाश्यं नीतो विशिष्टस्य साहाय्यस्य प्रदानेन । अवसरमुपलभ्येदमपि निवेद्यते—न केवलं कैश्चनाद्वैतिभिः, किन्तु विशिष्टाद्वैतपक्षपातिभिः श्रीवैष्णवैरपि शतभूषणीकारस्य प्रियमित्रैः केवलं शास्त्रप्रचारकृतदीक्षैर्विशिष्टं साहाय्यं शतभूषणीप्रकाशनार्थे सप्रेम वितीर्णम्, विचारविनिमयदृष्टिमात्रेण शतभूषणीनिबन्धोऽयं शतभूषणीकारेण निबद्ध इत्यादि तदीयभूमिकायामेव व्यक्तम् ॥

शतभूषणीनिबन्धोऽयं व्यर्थविस्तरः, व्याघातजटिलः, अव्युत्पत्तिदर्पण इति विशिष्टाद्वैतपण्डिताः समकण्ठमाहुरिति लिखत् परमार्थभूषणं साधु, असाधु वा भवतु, स्वसंप्रदायश्रद्धा विशिष्टाद्वैतपण्डितानां न सांप्रतमपि विलुलोप, इति, सत्यम्, यदेव शतभूषण्यपि वाञ्छति ॥

तत्र शतदूषण्यां शतं वादाः प्राक् स्थिता वा, न वा, साम्प्रतं तु चतुःषष्टि-र्वादा एव दृश्यन्ते। तत्र शतभूषणीति निबन्धस्य नाम शतदूषणीतिनाम-प्रतिद्वन्दितामात्रेण। अत एव शतदूषण्यामिव शतभूषण्यामपि न शतं वादा वर्तन्ते; तथापि शतपदमुपलक्षणं बहूनां दूषणानाम्, भूषणानां वोभयत्र ॥

स्यान्नाम शतदूषण्यां केचन वादाः संप्रदायसिद्धा अपि विच्छिन्ना इत्यादिग्रन्थविस्तरकथा, सर्वथा तु केनापि केनापि प्रकारेण शतभूषणीना-मापि परमार्थभूषणं समर्थयति ॥

अद्वैतस्य गीताध्यानश्लोकेन प्रशंसा

तत्र—

"पार्थाय प्रतिबोधितां भगवता नारायणेन स्वयं
व्यासेन ग्रथितां पुराणमुनिना मध्येमहाभारतम्।
अद्वैतामृतवर्षिणीं भगवतीमष्टादशाध्यायिनी-
मम्ब ! त्वामनुसन्दधामि भगवद्गीते भवद्वेषिणीम् ॥"

इति साम्प्रदायिकगीताध्यानश्लोको हि—'अद्वैतामृतवर्षिणीमि'ति वदन् अद्वैततत्त्वमेव भगवत्तत्त्वमिति विशदयति। विष्णुपुराणादिकमपि तत्रैव स्वरसमित्युत्तरत्र विशदीभविष्यति ॥

परमार्थभूषणपरीक्षाप्रस्तावः

तत्र शतभूषणी कस्मिन्नंशे विशिष्टाद्वैतमन्यथाऽनूद्य दूषयतीति नैताव-ताऽपि परमार्थभूषणं निर्दिशति। ब्रह्मोपादनत्वादौ शतभूषणी विशिष्टाद्वैत-सिद्धान्तमेव यथावदनुवदतीति शतदूषणी-वादावली-श्रुतप्रकाशिकाद्यनुसा-रेणात्र सुष्ठु समर्थयिष्यते। परमार्थभूषणं त्वद्वैतसम्प्रदायं नवीनं कल्पना-वतारयतीति निबन्धमध्ये यल्लिखति, तत्राद्वैतसिद्धान्ततत्त्वं विस्तरेण विश-दीकरिष्यते ॥

तत्र शतभूषण्यामन्तिमभागस्य प्रथमतः परीक्षायां कारणं शतभूषण्या-मेव व्यक्तम्; सूत्रस्वारस्यवादे परमार्थभूषणं किं किं भूषयति, दूषयति वेति तत्रैव यथावसरं परीक्षिष्यते ॥

द्वादशलक्षण्यर्थानुषङ्गेण देवतामीमांसायाः
कर्मोपासनाकाण्डयोः पर्यवसानम्

अत्र शतभूषणी—"अथातो धर्मजिज्ञासे"ति धर्ममात्रस्य जिज्ञासावि-वक्षयोपास्यतया ब्रह्मसिद्धावपि, न तत्सत्यतायां प्रमाणमिति श्रीभाष्यमते

ऽपि भगवत्पादमत इव जैमिनीयः पक्षो भर्तृमित्रसंमतः समन्वयसूत्रे पूर्वपक्षतया गृहीतः, खण्डितश्च; तावतैव जैमिनीयं मतं भर्तृमित्रदृष्ट्या धर्ममीमांसावगम्यमन्यत्, यत्र ब्रह्म सत्यं नास्तीति, ततः संकर्षकाण्डम्, यत्र देवानामुपास्यानां कर्माराध्यानां वा निरूपणम्, तथा—"स विष्णुराह हि स विष्णुराह हि। तद् ब्रह्मेत्याचक्षते" इत्युपसंहारः। तेन च कर्मानुषङ्गेण सगुणं ब्रह्मापि समर्थितम्, यदेव प्रतिपत्तिविधिविषय इति श्रीभाष्येण समर्थ्यत इति विवेचयति॥

काण्डद्वयार्थानुषङ्गेण ब्रह्ममीमांसाया
निर्विशेषपराया अवतारः

ततः—"अथातो ब्रह्मजिज्ञासे"ति। तेन कर्म-सगुणब्रह्माऽनुषङ्गेण संकर्षकाण्डनिरस्तं निर्विशेषं ब्रह्म विचार्यतया प्रतिज्ञायते। तत्र यदि "अथातो ब्रह्मजिज्ञासे"त्यत्रापि सगुणं विष्ण्वाख्यं ब्रह्मैव विजिज्ञास्यम्, तर्हि ब्रह्मजिज्ञासाप्रतिज्ञा-शास्त्रयोनित्व-समन्वयादिसाधनं वितथम्। अतो ब्रह्मजिज्ञासायाः प्रधानं लक्ष्यं निर्विशेषब्रह्मजिज्ञासा, इति सविशेषब्रह्मजिज्ञासामात्रविवक्षायां 'अथातो ब्रह्मजिज्ञासे'ति पृथक् प्रतिज्ञानं न घटते॥

ऐकशास्त्र्यवादस्य सविशेषानुषङ्गेण निर्विशेष-
प्रतिज्ञायाश्च न सङ्गतिः

अत्र परमार्थभूषणं लिखति—तावता किमुक्तं भवति? किं सविशेषब्रह्मस्वीकारेणैकशास्त्र्यवादो वा त्याज्यः, ऐकशास्त्र्यस्वीकारेण निर्विशेषब्रह्मप्रतिज्ञेति वा स्वीकर्तव्यमिति। उभयथाऽपि नाद्वैतपक्षसिद्धिः। ब्रह्मसविशेषत्वस्य, ऐकशास्त्र्यस्य चोभयस्य तत्र त्यक्तत्वात्—इति॥

सविशेषब्रह्मैकपरत्वमैकशास्त्र्यवादे, निर्विशेषप्रतिज्ञाया अपि
विवक्षायामैकशास्त्र्यभङ्गः; फल-जिज्ञास्यभेदात्, तेन च
पृथग् धर्मब्रह्मजिज्ञासाशास्त्रभेदः

अयमत्र शतभूषण्याशयः—ऐकशास्त्र्यवादः सविशेषब्रह्मजिज्ञासामात्रं ब्रह्मजिज्ञासाया लक्ष्यं मत्वा, निर्विशेषब्रह्मजिज्ञासावादे तु नैकशास्त्र्यम्; फल-जिज्ञास्यभेदात्, चोदनाप्रवृत्तिभेदाच्चेति। अतो निर्विशेषब्रह्मजिज्ञासाया एवात्र प्राधान्यात् सविशेषब्रह्मजिज्ञासाया देवतामीमांसयैव सिद्धत्वेन तत्प्रतिज्ञाया अनपेक्षितत्वेन तद्वैयर्थ्यादगत्या निर्विशेषब्रह्म-

जिज्ञासाप्राधान्यस्यैवात्र स्वीकर्तव्यत्वे नैकशास्त्र्यवादः स्वीकर्तुं शक्यते, इति स त्यक्तव्यः—इति ॥

### ब्रह्मसविशेषतामात्रार्थत्वे तु देवतामीमांसयैव गतार्थत्वात् ब्रह्मजिज्ञासाप्रतिज्ञादिवैयर्थ्यम्

न चाद्वैतिनो निर्विशेषब्रह्मजिज्ञासाप्राधान्यवादिनोऽपि सविशेषब्रह्मजिज्ञासां सर्वात्मना त्यजन्ति । व्यक्तीकृतं चेदं शतभूषण्यां भगवत्पादभाष्योद्धारपूर्वकं सविशेषब्रह्मविचारोऽपि निर्विशेषब्रह्मप्राधान्येऽपि नात्रासङ्गतः; अत एव सगुणवाक्यानामप्यत्र विचारः—इति । अतः कथमत्र नाद्वैतपक्षसिद्धिः ? ब्रह्मसविशेषताया अनुषङ्गेणैव निर्विशेषब्रह्मजिज्ञासाया अत्र प्रक्रमाद् निर्विशेषब्रह्मप्राधान्यमादायैवैकशास्त्र्यस्य त्यागेन, ब्रह्मसविशेषत्वस्य चाविरोधेनैव ब्रह्मनिर्विशेषत्वस्वीकारात् , तावन्मात्रेणैकशास्त्र्यस्य त्यागाच्च ॥

### भामत्यादीनामैकशास्त्र्ये तात्पर्याभावः

यत्तु—भामत्यादौ निर्विशेषप्राधान्येऽप्यैकशास्त्र्यं स्वीकृतम्—इति, तदिदं भामत्याशयविरुद्धमिति शतभूषण्यादौ व्यक्तम् । विशिष्य चैकशास्त्र्यमीमांसापरीक्षायाम् , वेदान्तरक्षामण्यादौ च । न हि संकर्षकाण्डविरुद्धो निर्विशेषब्रह्मविचारः, येन तयोर्विरोधान्नैकार्थ्यम् । व्यक्तीकृतं ह्यनुपदमेव संकर्षकाण्डार्थस्य सविशेषस्य निर्विशेषं ब्रह्माश्रित्य फलोपकारित्वमिति । संकर्षकाण्डब्रह्मजिज्ञासयोरैकार्थ्याभावो हि जिज्ञास्यस्वरूपभेदात् , तत्फलभेदात् , तत्परचोदनाप्रवृत्तिभेदाच्चेति ह्यनुपदमेवोक्तम् ॥

### "अथातो ब्रह्मजिज्ञासे"त्यत्राब्रह्मजिज्ञासाया अपि प्रतिज्ञा धर्मजिज्ञासासूत्र इव

यत्तु—"अथातो ब्रह्मजिज्ञासे"त्यत्राकारप्रश्लेषेणाब्रह्मणोऽपि केषाञ्चनमतेनोपपादनम् , तदिदमभ्युच्चयमात्रम् , ब्रह्मपदेनैवोभयविवक्षा हि भाष्यारूढेति व्यक्तं शतभूषण्यामेव ॥

अत्र च दृष्टान्तः—"अथातो धर्मजिज्ञासे"ति सूत्रम् । अत्र ह्यधर्मोऽपि जिज्ञास्यः परिहारायेति शास्त्रदीपिका-तद्व्याख्या-कुतूहलवृत्तयो विशदमधर्मजिज्ञासे"त्यपि विभागेन समाद्रियन्ते, तत्तु भाष्यमूलमेव ॥

### ब्रह्ममीमांसायाः संकर्षेणाविरोधः

यत्तु—सविशेषस्य ब्रह्मणः संकर्ष एवोक्ततया पुनः सविशेषप्रतिज्ञा न घटत इति चेत् , तद्विरुद्धनिर्विशेषप्रतिज्ञाऽपि कथं घटते—इति, तदिदं धर्मजिज्ञासायामविषयस्य सविशेषस्य देवतामीमांसायामिव, सविशेषजिज्ञासायामविषयस्य निर्विशेषस्य ब्रह्मजिज्ञासायां प्रतिज्ञाया अविरोधान्नोपपद्यते। पूर्व-पूर्वसिद्धान्तस्यांशतोऽनुषङ्गेण पूर्वपूर्वानभिमततत्त्वव्यवस्थापनपूर्वकमुत्तरोत्तरपक्षस्य समर्थनं ह्यत्र विवक्षितम्। अतो नात्र संकर्षेण विरोधलेशोऽपि निर्विशेषजिज्ञासायाः ॥

### जैमिनि-काशकृत्स्नादीनां भूमिका-भेदेन स्वस्वशास्त्ररचनम्

तत्र संकर्षकाण्डो जैमिनिकृतो वा, काशकृत्स्नकृतो वा, जयतीर्थोक्तरीत्या शेषादिकृतो वेति त्वन्यदेतत्। तत्र काशकृत्स्नकृतत्वेऽपि काशकृत्स्नस्यापि वस्तुगत्या निर्विशेषसिद्धान्तवाद एव तात्पर्येऽपि 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' इत्यत्र ब्रह्मवादस्य जैमिन्यभिमतत्वेऽपि यथाऽधिकारिभेददृष्ट्या कर्ममीमांसायां ब्रह्मासत्यतासिद्धान्तः, एवं काशकृत्स्नस्याप्यधिकारिभेददृष्ट्या सविशेषविष्णुमात्रब्रह्मतोपदेशो न विरुध्यते। परमार्थतो जैमिनि-काशकृत्स्न-बादरायणानां भूमिकाभेदमात्रमादाय, तत्तत्तत्त्वोपदेशाद् न कोऽपि विरोधः ॥

### अथातो ब्रह्मजिज्ञासेति पृथक् प्रतिज्ञया शास्त्रभेदः

सर्वथा संकर्षकाण्डस्य 'स विष्णुराह हि' इत्युपसंहारमहिम्ना सविशेषमात्रपरत्वमेव, न निर्विशेषपरत्वम्। तत्तु बादरायणस्यैव मुख्यः पक्षः। परंतु जैमिनि-काशकृत्स्नसिद्धान्तानामपि भूमिकाभेदेनोपयोगे न बादरायणस्यापि विप्रतिपत्तिः। "अवस्थितेरिति काशकृत्स्नः" इत्यत्र हि यथाऽद्वैत एव तात्पर्यम्, तथा भाष्ये व्यक्तम्। तदेवम्—"स विष्णुराह हि। स विष्णुराह हि तद् ब्रह्मेत्याचक्षते" इति सविशेषविष्णुब्रह्मतावादे जैमिनिना, काशकृत्स्नेन वोपसंहृते बादरायणस्य "अथातो ब्रह्मजिज्ञासे"ति पृथक् प्रतिज्ञा शास्त्रभेदात् , तत्रापि निर्विशेषब्रह्मप्राधान्यं च विशदयति, इति प्रथमसूत्रस्वारस्यमद्वैतवाद एव। श्रीभाष्यसिद्धान्ते तु परमार्थभूषणाद्यभिमते तत् सूत्रं वितथमिति सिद्धम् ॥

### भूषणस्य "स विष्णुराहही"त्यस्य प्रामाण्यायोगः तस्य तु द्वैतिविषयत्वमिति निर्देशः

संकर्षकाण्डे "स विष्णुराह हि तद् ब्रह्मेत्याचक्षते" इति केषांचन तत्त्वविदां माध्वानां संप्रदायमनुसृत्यैव, नेमानि वाक्यानि श्रीभाष्यसंमतानीति लिखत् ( १४१६ पृष्ठे ) परमार्थभूषणं शतदूषणीमत्रांशे भूषयति वा, दूषयति वेति स्वयमेवाऽलोचयतु ॥

### देवतामीमांसाभेदो जयतीर्थशतदूषणीदृष्ट्या पाठभेदात् , कर्तृभेदाच्च

तत्र देवतामीमांसायाः, संकर्षकाण्डस्य वा काशकृत्स्नकृतत्वमिति तत्त्वरत्नकारानुसारेण तत्त्वटीका वदति, श्रीमाध्वास्तु शेष-पैल्वकृता देवतामीमांसेति। उभयत्र पाठभेदस्तु वर्तते—तत्र "हरौ तद्दर्शनात् तद् ब्रह्मेत्याचक्षते" इति जयतीर्थः, निगमान्तदेशिकस्तु काशकृत्स्नकृतिर्देवतामीमांसेति वदति। तत्र तु 'स विष्णुराह हि' इति पाठभेदः। अत उभयस ता देवतामीमांसा, सा चैका, भिन्ना वेत्यन्यदेतत्। निगमान्तदेशिकसंमता काशकृत्स्नकृताऽपि देवतामीमांसाऽप्येकाऽस्त्येव। तत्र किं श्रीभाष्यसिद्धान्तोऽतत्त्वम्? द्वैतसिद्धान्त एव तत्त्वम्। शतदूषण्यपि स्पष्टमिदं वाक्यं पठति—सत्यप्येवमाचार्याणां न नैर्भर्यं तत्र। अत एव तत्त्वविदां संप्रदाय इति शतदूषण्यामुक्तिः। तत्र "तद् ब्रह्मेत्याचक्षते' इति तत्त्ववृद्धाः" इत्युक्तिरपि श्रीमध्वसंप्रदायमभिप्रेत्येति भूषणं निर्मूलम्। अधिकमुत्तरत्र ॥

### देवतामीमांसादृष्ट्या परमात्माराधनरूपतयैव कर्मणां कर्मयोगत्वम्

कर्मणामपि परमपुरुषाराधनार्थतयैव साफल्यमिति कर्मयोगस्वरूपविवेचनपरश्रीभाष्यसिद्धान्ते देवतानां परमात्मस्वरूपातिरिक्ततयेन्द्रादिरूपेण कर्मशेषत्वम्, कर्मयोगत्वं तु परमात्मस्वरूपतया तासामनुसन्धानेन। तत्र तु तेन रूपेण देवतानां फलप्रदातृत्वम्, इन्द्रादीनामङ्गत्वमिन्द्रादिरूपेण, न परमात्मरूपेण। अत एव 'धर्मं जैमिनिरत एव' "फलमत उपपत्तेः" इति सूत्रे। अतः संकर्षकाण्डस्य विष्णुप्राधान्येऽतात्पर्यकल्पना नासमुचिता। अङ्गत्वमिन्द्रादिरूपेण, परमात्मरूपेण फलदातृत्वम्। अतो नाङ्गत्व-फलदातृत्वयोर्विरोधः। अधिकमैकशास्त्र्यभङ्गवादे व्यक्तीभविष्यति ॥

### जन्मादिसूत्रलक्ष्यमद्वैतपरत्वमेव

"जन्माद्यस्य यतः" इति सूत्रमपि सविशेषब्रह्ममात्रपरत्वे ब्रह्मजिज्ञासायाः, तस्य विष्णोरेव ब्रह्मपदार्थत्वस्य पूर्वत्र निर्णीतत्वाद् वितथम्। अद्वैतमते तु तस्यापि परमं तात्पर्यं निर्विशेषब्रह्मण्येवेति निरूपणार्थं तदधिकरणम्; ब्रह्मण एव जगत्कारणस्य जन्मादिवाक्ये प्रतिपादनात्। तत्र च 'स विष्णुराह हि' इति विष्णुरूपतायाः संकर्षान्तेनैव निर्णीतत्वाद् जीवपरत्वशङ्कैव नोदेति, यदि जीव-ब्रह्मभेदस्तत्र प्रामाणिकः। अतोऽवगम्यते—जीवब्रह्माभेदवादं श्रुतिसिद्धमादाय ब्रह्मधर्माणां जीवेऽपि संभवाद् जीवपूर्वपक्षस्योत्थितिः। अत एव भामतीकाराणां जीवकारणत्वपक्षभ्रमः केषाञ्चन न युक्त इति कल्पतरुर्वदति॥

> "जीवाज्ञानाद् जगत् सर्वं सकारणमिति ब्रुवन्।
> क्षिपन् समन्वयं जीवे न लेजे वाक्पतिः कथम्॥"

इति॥

> "समारोप्यस्य रूपेण विषयो रूपवान् भवेत्।
> विषयस्य तु रूपेण समारोपो न रूपवान्॥"

इति तु 'सर्वत्रप्रसिद्धाधिकरणे भामती। अतो जन्माधिकरणपूर्वोत्तरपक्षयोरद्वैत एव स्वारस्यम्। अत एव द्वैतवादेऽद्वैतवादमादाय जीवपूर्वपक्षः। न च तत्रापि 'स विष्णुराह हि' इति सूत्रानन्तरं जीवपूर्वपक्षस्योत्थितिः॥

### ब्रह्मजिज्ञासायां ब्रह्मपदस्य प्रत्यगभिन्नब्रह्मपरत्वम्

एतेन—सविशेषमेव ब्रह्मेति संकर्ष उपक्षिप्य तस्य सविशेषस्य ब्रह्मत्वं दुर्वचमित्याक्षेपे प्रतिविधानं शारीरक इति—प्रत्युक्तम्; 'स विष्णुराह हि, स विष्णुराह ही''ति साभ्यासं विष्णुं सविशेषमुपदिश्य तस्य ब्रह्मत्वेऽवधारिते तत्र तस्य ब्रह्मत्वं दुर्वचमिति शङ्काया नोत्थितिः। न च जन्मादिवाक्येन ब्रह्मकारणत्वे प्रतिपादितेऽपि संशयः पुनरपि, यदि सविशेषं ब्रह्मैव प्रतिपिपादयिषितम्। अतोऽवगम्यते 'ब्रह्मजिज्ञासायां ब्रह्मशब्देन प्रत्यगभिन्नं संविन्मात्रं प्राधान्येन प्रतिपादितं जीवब्रह्माभेदं पारमार्थिकमभिप्रेत्य॥

### श्रीभाष्यसिद्धान्ते ब्रह्मजिज्ञासाप्रतिज्ञावैयर्थ्यम्

अत एव जन्मादिसूत्रे जीवपूर्वपक्षस्योत्थितिः। तत्र चोपाधिभेदप्रयुक्तोपहितभेदाद् जीव-ब्रह्मभेदमभिप्रेत्य कारणता सविशेषस्य ब्रह्मण एव, न तु जीवस्येति शङ्का-समाधाने उभे अप्यद्वैतपरतायामेव सूत्राणां स्वरसे।

अत एव भगवत्पादानां भाष्यं जन्माधिकरणान्ते—अत एव नित्य-शुद्ध-बुद्ध-मुक्त-ब्रह्मस्वरूपकारणपराण्यपि वाक्यान्यत्र मुख्यतात्पर्यविशेषतया विवक्षितानि। कारणवाक्यानि तु तटस्थतामात्रेणेति वेदान्तिनां मर्यादा। बहून्युत्तरसूत्राण्युपक्रम-परामर्शोपसंहारैकवाक्यतयाऽद्वैत एव स्वरसानीति-भाष्यप्रदीपः ॥

संकर्षेण सविशेषे जीवभिन्ने निर्णीते जन्मादि-

सूत्रेषु जीवपूर्वपक्षतया अनुत्थितिः

सर्वथा तु सविशेषस्य विष्णोर्ब्रह्मत्वशङ्का बहुप्रकारा मा भूदित्यभिप्रेत्यैव "स विष्णुराह हि स विष्णुराह हि" इत्यभ्यासः। वाक्यविशेष उपास्यस्य जीवत्वशङ्काम्, प्रधानपरत्वशङ्कां वा वारयितुं न्यायविशेषाणां सूत्रणं तु निर्विशेषविष्णुब्रह्मतायामपि न विरुध्यते। कर्मशेषतया, उपासनाशेषतया वा ब्रह्मपरत्वं वेदान्तानामिति यदि जैमिनीयानां शङ्कानिरासमात्रं चिकीर्षितम्, तर्हि ब्रह्माभावाभिप्रायनिरासः सिद्धान्तस्य लक्ष्यम्। ब्रह्मसत्त्वमभिप्रेत्योपासनामात्रपरतेति यदि श्रीभाष्यसिद्धान्तः, तर्हि "स विष्णुराह हि" इति देवतामीमांसयैव गतार्थत्वाद् वितथैव ब्रह्ममीमांसाप्रतिज्ञा ॥

सूत्राणाम् अद्वैततात्पर्यवसायित्वे पृथग् ब्रह्मजिज्ञासावैयर्थ्यम्

अत्र संकर्षदृष्ट्या सर्वासां देवतानां विष्ण्वात्मनैव मुख्यं देवतात्वम्। अत एव विष्णोरेव प्राधान्यमिति सिद्धान्तोऽपि। तत्र संकर्षकाण्डानन्तरं सविशेषब्रह्मातिरिक्तब्रह्माऽयोगशङ्कानिराकरणेन केवलज्ञेयस्वरूपब्रह्मजिज्ञासापरतायां तु न काऽप्यनुपपत्तिः। संकर्षकाण्डानन्तरत्वेऽपि न त्रिकालाबाध्यत्वेन, किन्तु व्यावहारिकत्वमात्रेणेति निरूपणेन निर्विशेषस्यैव मुख्यं पारमार्थिकत्वमिति निरूपणार्थं पृथग् जिज्ञासाऽपेक्ष्यते, अन्यथा तु सविशेषस्यैवोपास्यतया सत्यत्वस्थापनस्य संकर्षेणैव सिद्धत्वाद् व्यर्था पृथग् ब्रह्मजिज्ञासा ॥

निर्विशेषब्रह्मजिज्ञासाप्रतिज्ञायामपि सगुणविचार-

स्याप्यत्र सङ्गतिः, परं तु शास्त्रभेदः

सर्वथा तु—ब्रह्ममीमांसायामपि सविशेषस्यापि गोदोहनन्यायेन विचार्यत्वात् तदंशमादाय पूर्वोत्तरमीमांसयोः कर्म-देवताजिज्ञासयोरिवैकशास्त्र्येऽपि न विरोधः। निर्विशेषजिज्ञासांशमादाय तु शास्त्रभेद एव। परिमलादीनां वेदार्थमीमांसात्वेन गौणैकशास्त्र्यतात्पर्यं तु पुराणेतिहासानां

सर्वेषामपि "पुराण-न्याय-मीमांसे"त्यत्रेवाऽर्थैकत्वसमर्थनार्थं प्रौढिवादेनापि शास्त्रैक्याभ्युपगम इत्याद्यपि तत्र तत्र व्यक्तम् ॥

### श्रीभाष्यसिद्धान्ते ब्रह्मजिज्ञासायां चतुःसूत्रीवैयर्थ्यम्

तथाच सविशेषप्रतिज्ञाऽवान्तरतात्पर्येणैवात्र, तदनुकर्षेणैवान्यत्र निर्विशेषप्रतिज्ञा; अन्यथा कथं कर्म-ब्रह्मजिज्ञासे उभे? यदि तयोरविरोध उपकार्योपकारकभावेन, तर्हि समं प्रकृतेऽपि। अत एव कल्पतरुः—

"वशीकृते मनस्येषां सगुणब्रह्मशीलनात्।
तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम् ॥"

इति वदति। तत्र ब्रह्मजिज्ञासावैयर्थ्याऽऽपादनं, चतुःसूत्रीमात्रमधिकृत्येति शतभूषणी लिखति। यतः सविशेषं ब्रह्म संकर्षेणैव निर्णीतम्, असन्दिग्धं च। अतः कर्म-सविशेषोभयजिज्ञासाया धर्मजिज्ञासायामेव प्रकृतत्वात्, कारणवाक्येन ब्रह्मणः सविशेषत्वस्य निर्णीतत्वात्, सत्योपास्यविष्णुस्वरूपस्यापि ब्रह्मणः सङ्कर्षेण निर्णीतत्वाच्च किन्निरूपणार्था ब्रह्ममीमांसा श्रीभाष्यमते? अद्वैतसिद्धान्ते तु सविशेषातिरिक्ते प्रत्यगभिन्ने निर्विशेषे प्रमाणाभावादितिशङ्कासमाधानार्थं चतुःसूत्रीयमर्थवती, श्रीभाष्यसिद्धान्ते तु सा निरर्थिका ॥

### अथातः शेषलक्षणमित्यादिवद् नात्रान्तर-प्रतिज्ञादि ब्रह्मणः

तत्र "अथातो धर्मजिज्ञासे"ति प्रतिज्ञायामपि "अथातः शेषलक्षणम्" "अथातः क्रत्वर्थ-पुरुषार्थयोर्जिज्ञासा" इति पृथक् प्रतिज्ञा धर्मशेषत्वात् क्रत्वर्थ-पुरुषार्थयोर्युज्यते; प्रथमप्रतिज्ञातधर्मविशेषक्रत्वर्थत्वादिगुणनिरूपणार्थत्वात्। न चैवं ब्रह्म प्रतिज्ञातस्य धर्मस्य गुणविशेषः, धर्मविशेषो वा। अत एव "चोदनालक्षणोऽर्थो धर्मः" इति शास्त्रैकदेशचोदनामात्रप्रामाण्यं धर्मे, ब्रह्मणि तु शास्त्रमात्रप्रामाण्यमिति प्रामाण्यव्यवस्था। तत्र शास्त्रमात्रप्रामाण्यस्य ब्रह्मणि वर्णनेन "सर्वे वेदा यत्पदमामनन्ति" इति शास्त्रार्थो ज्ञाप्यते। अत एव समन्वयसूत्रमपि ॥

### उपनिषदां निर्विशेषे ब्रह्मण्येव महातात्पर्यात् न कर्मकाण्डशेषत्वम्

तेन चोपनिषदां परमं तात्पर्यं निर्विशेषवादे, अवान्तरं तु तात्पर्यं कर्मोपासनापरणामिति सूच्यते। श्रीभाष्यमपि जैमिनीयमतनिरासपरतया

समन्वयाधिकरणं भाषमाणं कर्मकाण्डस्यावान्तरतात्पर्यमेव कर्मणि, ब्रह्मण्येव तु महातात्पर्यमिति स्वीकरोति। अत एव परमपुरुषाराधनवेषेणैव कर्मणां कर्मयोगो नाम। अद्वैतसिद्धान्तस्तु कर्मोपासनाकाण्डयोरुभयोरप्यवान्तरं तात्पर्यं निर्विशेषवाक्यशेषतया, निर्विशेषवाक्यानां तु परमं तात्पर्यमिति स्वीकरोति ॥

धर्मजिज्ञासाप्रतिज्ञायाः पृथग् ब्रह्मजिज्ञासाप्रतिज्ञासार्थक्यमद्वैतमते

भामत्यां धर्मपदस्य वेदार्थमात्रपरत्वं पूर्वपक्षोपपादनार्थतया समाहृतम्, न तु सिद्धान्ताभिप्रायेणेति कल्पतर्वाद्यनुसारेण बहुशोऽन्यत्र व्युत्पादितम्। सत्यप्येवं तत्रैव सिद्धान्तत्वभ्रमो बहूनां प्रतिपत्तॄणाम्। भामती हि भिन्नं धर्मपदार्थम्, ब्रह्मपदार्थं च विवृणुते, इति सविशेषब्रह्मविचारोऽप्यत्र सङ्गत इत्यानन्दमयाधिकरणादौ व्यक्तम्। सत्यम्, धर्मजिज्ञासायां ब्रह्मण उपसना तत्सद्भावं विनाऽपि संभवतीति शङ्का समुन्मिषेत्, संकर्षकाण्डानन्तरं तु न साऽवकाशतेऽपीति तत्सद्भावसमर्थनार्थं पृथग् ब्रह्मजिज्ञासाप्रतिज्ञाऽद्वैतवादे ॥

चोदनासूत्रात् पृथग् शास्त्रयोनित्वसूत्रसार्थक्यमद्वैत एव

'चोदनालक्षणः' शास्त्रयोनित्वात्' इत्यनयोः सूत्रयोः शब्दभेदेनाम्नानं प्रमाणप्रवृत्तिप्रकारभेदं ज्ञापयति। इदमेवाभिप्रेत्योक्तं भाष्ये "चोदनाप्रवृत्तिभेदाच्चे"ति। इदं च ज्ञेयब्रह्मपरतायां शास्त्रस्योपपद्यते। सत्यम्, सिद्धार्थेऽपि प्रामाण्यं पक्षद्वयेऽपि; तथाऽपि सिद्धस्योपासनाशेषतयैव प्रामाण्ये विप्रतिपत्तिस्तु वर्तते ॥

श्रीभाष्यमत उपासनस्यापि धर्मत्वात्
ब्रह्मजिज्ञासावैयर्थ्यम्

तत्र कर्मपराणामपि वाक्यानां सिद्ध-दधि-यूपादिपदार्थबोधकत्वेन प्रामाण्यमनपोहम्, इति ततो विशेषो ब्रह्मणो ज्ञानमात्रेण पुरुषार्थोपयोगित्व इति सूचनार्थमेव शास्त्रपदमत्र, पूर्वत्र तु चोदनापदम्, धर्मपदं च। कायिकम्, वाचिकमिव मानसमुपासनमपि नूनं कर्मैत्र। अतो धर्मजिज्ञासयैव निर्वाहः श्रीभाष्यमते। व्यक्तं चैतद्भाष्ये समन्वयाधिकरणे ॥

संकर्षणेऽत्र सविशेषब्रह्मोपासनानिर्वाहः

संकर्षकाण्डस्य विष्णुब्रह्मपर्यवसायिन उपासनाकाण्डप्रामाण्येऽपि तात्पर्यमुरीकरणीयम्। अत एव कर्मणामपि ब्रह्मार्पणबुद्ध्याऽनुष्ठीयमानानां

ब्रह्माराधनरूपत्वमपि, इति विष्णुब्रह्मपर्यवसायिनः संकर्षस्य तदुपासनापरवाक्यप्रामाण्येऽपि तात्पर्यमूरीकर्तव्यम् ; अन्यथा स एव सर्वासां देवतानां परा काष्ठेति निरूपणं किमर्थम् ? न हि कर्माङ्गानीन्द्रादिदेवताः परमार्थतो विष्णुशरीराण्येव, विष्णुरेवात्मेति वादः सविशेषब्रह्मसिद्धान्ताद् नान्यः ॥

संकर्षस्य कर्माङ्गदेवतानिर्णायकत्वे न तात्पर्यम्,
किन्तु सविशेषब्रह्मनिर्णयेऽपि

तत्र संकर्षे देवताविचारं को वा वारयति ? उपास्यब्रह्मस्वरूपमपि विष्णुस्वरूपं स विवेचयतीत्येतावन्मात्रमत्र बोध्यते । न चैतावता कर्मशेषदेवतास्वरूपमात्रबोधनं संकर्षस्य लक्ष्यम् । कर्मफलदातृत्वं हि सविशेषस्यैव ब्रह्मणः, न तु निर्विशेषस्य, इति फलदातृत्वमुपासनायामिव कर्मण्यपि सविशेषब्रह्मण एव, इति संकर्षाभिप्रायेणेव व्यवस्थां बादरायणः सूचयति ॥

श्रीभाष्यमते ब्रह्मजिज्ञासायां चतुःसूत्रीवैयर्थ्यम्

अत एव बादरायणो निर्विशेषमिव सविशेषमपि ब्रह्म प्रतिजानातीति तत्र तत्रोद्घुष्यते । अत इदं सिद्धम्—सविशेषब्रह्मजिज्ञासामात्रप्रतिज्ञायाम्, अत्र न केवलं प्रथमं सूत्रम्, किन्तु चत्वार्यप्याद्यानि सूत्राणि वितथानि स्युः ॥

ब्रह्मपदस्य निर्विशेषसाधारण्यम्

ब्रह्मपदं हि सविशेपस्येव निर्विशेषस्यापि प्रकरणवशाद् बोधकम् । यथाच निर्विशेषेऽपि ब्रह्मणि ब्रह्मशब्दवृत्त्युपपत्तिः, तथोपरिष्टाद् व्यक्तीकरिष्यते—

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मशब्दितम् ॥"

इत्यादिप्रमाणानुसारेण ।

ब्रह्मजिज्ञासासूत्रे द्विरूपब्रह्मणोऽपि ग्रहणं तन्त्राऽऽवृत्त्यादिना

तत्र 'अथातो धर्मजिज्ञासे'त्यत्राधर्मोऽपि जिज्ञास्यः परिहारायेति भाष्ये व्यक्तम् । एवं 'अथातो ब्रह्मजिज्ञासे'त्यत्राब्रह्मजिज्ञासाऽपि न विरुध्यत इति केषांचन विवरणं तु वर्तते, इति संकर्षप्रस्तुतब्रह्मणोऽपि सविशेषस्यात्र विवक्षा न विरुध्यत इत्यत्रैव नैर्भर्यम् । सर्वथा तु द्विरूपब्रह्मविवक्षाऽत्रैकेनैव ब्रह्मपदेन तन्त्रावृत्तिविधया विवक्ष्यते, इति न किमपि छिन्नम् । व्यक्तं चेदमाकरे ॥

### द्वैरूप्येऽपि ब्रह्मणस्तयोरौपाधिक एव भेदः, न तु स्वरूपेण

यत्तु—निर्विशेषब्रह्ममात्रप्रतिज्ञायामपि सविशेषोपासनाविचारो नासङ्गतः, निर्विशेषं ब्रह्माश्रित्यैव सविशेषोपासनस्य फलपर्यन्तत्वादिति न्यायरक्षामण्यनुसारेणोक्तम्, तदिदं निर्विशेषस्यैव सोपाधिकत्वेन सविशेषत्वात् तयोरौपाधिक एव भेदः, स्वरूपं त्वेकमेवेत्यभिप्रेत्य। व्यक्तं चैतत्—"द्विरूपं हि ब्रह्मावगम्यते कल्पितोपाधिसंबन्धापेक्षम्, निरस्तसमस्तोपाधिकं चे"ति भाष्ये। तथाच सत्यप्यौपाधिके भेदे स्वरूपस्याभिन्नत्वात् सविशेषप्रतिज्ञा न विरुध्यते, उपास्यत्वं तु सोपाधिकत्वेनौपाधिकभेदवतः सविशेषस्यैव, न तु निर्विशेषस्य, इति न निर्विशेषोपासनाविवक्षामुक्तवाक्यस्यादाय विकल्पानाम्, तद्दूषणानां चावकाशः॥

### तत्त्वम्पदवाच्यलक्ष्यार्थविवेकः

एवमौपाधिकम्, निरुपाधिकं च ब्रह्म, जीवात्मानं च बोधयितुमेव कर्मकाण्डम्, उपासनाकाण्डम्, ज्ञानकाण्डं च। तत्र निरुपाधिकं ब्रह्म घटादिकमिव फलव्याप्यतयाऽवाङ्मनसगोचरमपि वेदान्तप्रमाणजनितवृत्त्याऽज्ञाने निवृत्तेऽनावृतचिन्मात्रतया स्वयंप्रकाशमानमेवावतिष्ठते। तावत्पर्यन्तं तु सर्वेषां प्रमाणानामविद्यावद्विषयाणां प्रवृत्तिः। तत्र तत्त्वम्पदशब्दवाच्यत्वमौपाधिकस्य, निर्विशेषस्य त्वाध्यासिकसंबन्धेन लक्ष्यत्वमिति वस्तुस्थितिः॥

### सृष्ट्यादिप्रक्रिया सोपाधिकपरा निरुपाधिकस्वरूपबोधनार्थेति भागवताशयः

सति चैवं सृष्ट्यादिवाक्यानि ब्रह्मशब्दवाच्यतावच्छेदकोपाधिसमर्पणपरतयोपयुज्यन्ते, लक्षणया तु स्वरूपसमर्पणविधया। अत एव 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुतिरपि। श्रीमद्भागवतमपि श्रुतिगीतया सृष्ट्यादिप्रक्रिया निर्विशेषब्रह्मस्वरूपबोधनार्थमपेक्षितोपाधिसमर्पणार्था जीवात्मभावेन तत्तज्जन्मान्तरसंबन्धादिभोगसमर्थनार्थेति प्रतिपादयति॥

### श्रुतिगीताया निर्विशेष एव स्वारस्यम्

अत एव—

"ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः।
कथं चरन्ति श्रुतयः साक्षात् सदसतः परे॥"

इति प्रश्नोत्तरप्रसङ्गेन सगुणत्वमौपाधिकम्, परमार्थतस्तु निरुपाधिकम-पीति बोधनार्थमेव—

"बुद्धीन्द्रिय-मनः-प्राणान् जनानामसृजत् प्रभुः।"

इति निर्विशेषस्याप्यौपाधिकस्योपाधिसंबन्धेन वाच्यत्वम्, स च काल्प-निकः, न तु परमार्थतः, इति गुणवृत्तीनामपि श्रुतीनां निर्गुणपरत्वमविरुद्ध-मिति ज्ञापयति ॥

निर्गुणत्वं ब्रह्मणः सर्वविशेषराहित्येन, न तु सत्त्वादिराहित्येन, हेयगुणशून्यत्वेन वा

"निर्गुणे ब्रह्मणी"त्यत्र सत्त्वादिगुणराहित्यमात्रविवक्षायां वस्तुगत्या-ऽसंख्येयकल्याणगुणे ब्रह्मणि गुणवृत्तीनामप्रवृत्तिशङ्काया नोत्थितिरपि। अतो वाच्यवच्छेदकधर्ममात्रशून्ये ब्रह्मणि तत्पुरस्कारेण प्रवर्तमानानां शब्दानां कथं प्रवृत्तिरित्येव प्रश्नार्थो वक्तव्यः। उक्तार्थोऽप्यौपाधिकधर्मेण कल्पितेन ब्रह्मसृष्टेन वाच्यत्वम्, जगतो ब्रह्मसृष्टस्यापि वस्तुगत्या"एकमे-वाद्वितीयमि"त्यादिश्रुत्यादिष्विवाध्यासस्यैवौचित्येन तत एवाद्वितीयत्वाद् निर्विशेषत्वमित्यविरोध इत्येवाशयः। व्यक्तं चैतदुत्तरत्र। तथाच जनाना-मिति बहुवचनं प्रतिजीवं बुद्धीन्द्रियाद्युपाधिभेदमात्रेण, न तु परमार्थत इत्यभिप्रेत्यैवः। व्यक्तं चैत्—

'न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः'।

इत्यत्र त्वमहमादिभेदनिर्देशः शरीरभेदमात्रमभिप्रेत्य, न तु प्रत्यगात्म-स्वरूपभेदमभिप्रेत्येति गीताभाष्ये। व्यक्तीकरिष्यते चेदं संविन्नानात्व-भङ्गवादपरीक्षायाम्। अत एवात्र 'आत्मने' 'अकल्पनाय चे'ति सार्थकम्। तत्रात्मन इति प्रभुणा परमात्मना संबध्यमानमपि जीवात्मन एव वस्तु-गत्या परमात्मत्वं ज्ञापयति। अनेन हि—"अनेन जीवेनाऽऽत्मनाऽनुप्र-विश्ये'ति श्रुत्यर्थ एवानुसन्धीयते। अतोऽकल्पनायेत्येव पदच्छेदोऽत्र, इत्यध्यारोपापवादविधयैव—

"ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः।"

इति प्रश्नोऽत्र। निर्विशेषाप्रामाणिकतायां तु प्रश्न एवायमनुपपन्नः। सविशेषपरत्वमेव सर्वासामुपनिषदामिति वादे कथमयं प्रश्नः? तत्रोत्तरं निर्विशेषे शब्दप्रवृत्तिप्रकारमेव निर्वक्ति। स च सृष्टिद्वारेति वर्णने-नैवोक्तप्रश्नोत्तरसमापनात्, उपाधिद्वारा निर्गुणस्यापि गुणवृत्तिशब्द-बोध्यत्वमिति निरूपणेनैव शान्ताकाङ्क्ष इत्यर्थसिद्धं निर्विशेषत्वम्।

अत एव 'आत्मने' 'अकल्पनाय' चेति । न चात्र कल्पनाय चेति पदच्छेदो युज्यते; सृष्टेरपि कल्पनारूपत्वेन तस्यात्रान्वयानुपपत्तेः । अतः श्रुतिगीता-स्वारस्यं निर्विशेषवाद एव ॥

### श्रुति-स्मृत्यादीनामारोपितरूपेण वाच्यत्वम् , तदपवादेन तु लक्ष्यत्वं ब्रह्मण इत्येव तात्पर्यम्

नारद-नारायणसंवादमुखेन प्रवृत्तप्रकरणसंशुद्धिरप्यत्रैव । औपाधिकं शब्दबोध्यत्वमध्यारोपापवादाभ्यां वाच्यविधया, लक्षणाविधया च बोध्यत्वमेव । "नेति नेती"ति श्रुतिरपि कल्पितोपाधिनिषेधमुखेन जहद्-जहल्लक्षणया तत्र प्रवृत्तिमेव विशदयति । तात्पर्यानुसारिणी लक्षणाऽपि फलमुखगौरवस्यादूषणत्वान्न शब्दानां लाक्षणिकार्थपरत्वेऽस्वरसमावहति । तदेवं परमार्थतत्त्वनिरूपणपरत्वमद्वैतवाद एव स्वरसम् , इति परमार्थभूषणत्वमद्वैतवाद एव यथार्थं स्यात् , अन्यथा तु परमार्थदूषणमेव । यथा च सर्वेषामपि सूत्राणां न सविशेषमात्रपरत्वम् , तथा व्यक्तमुत्तरत्र । न च ब्रह्मणि शब्दवृत्त्यनुपपत्तिः; औपाधिकरूपेण शक्यविधया, निर्विशेषरूपेण तात्पर्यानुसारिलक्षणया च तदुपपत्तेरविरोधात् । सर्वमिदं शतभूषण्यां व्यक्तम् , परमार्थभूषणं तु न मात्रयाऽपि सर्वमिदं स्पृशति, को वा संबन्धोऽपरथा प्रश्नोत्तरयोरत्र ॥

### जन्मादिसूत्रस्यापि पूर्वोक्त एवाशयः

एतेन—जन्मादिसूत्रमपि—व्याख्यातम् ; तस्यापि ब्रह्मशब्दवाच्यतावच्छेदक-तत्तदुपाधिसमर्पणद्वारा लक्षणाविधया च निर्विशेषब्रह्मपरतैव युक्ता । अत एव भाष्ये जन्माधिकरणान्ते—इदमुपलक्षणं नित्य-शुद्ध-बुद्ध-स्वभावसर्वज्ञ-स्वरूपपराणामपीति ॥

### भृगुवल्ल्या अपि निर्विशेषवाद एव स्वारस्यम्

प्रक्रान्तं हि निर्विशेषं ब्रह्माभिन्नमित्तोपादानतया तटस्थलक्षणमुखेनैव भृगुवल्लीप्रकरणार्थः । अत एव "आनन्दो ब्रह्मेति व्यजानात्" "सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिते" त्युपसंहारः । तटस्थलक्षणस्य निर्विशेषज्ञापकत्वमात्रं लक्ष्यम् , शाखाया इव चन्द्राज्ञापकत्वम्, न तु लक्ष्यनिष्ठतया । सर्वत्र तटस्थलक्षणेष्वियमेव गतिः । साक्षाल्लक्ष्यासंबद्धमेव हि तटस्थलक्षणम् । अतश्च कारणत्वस्य निर्विशेषस्वरूपलक्षणत्वाभावेऽपि न क्षतिः ॥

### जन्मादिसूत्रस्य सविशेष-निर्विशेषोभयलक्षणत्वोपपत्तिः

साक्षात् सूत्रार्थस्तु—सोपाधिकस्य सविशेषस्य वा ब्रह्मणः साक्षाल्लक्षणत्वेन पर्यवसानेऽपि उपाधिपरित्यागेन स्वरूपांशमात्रस्य लक्ष्यं प्राकरणिकशुद्धब्रह्मज्ञापनमेव, न तु तत्र लक्ष्य-लक्षणभावः। कारणत्वं सविशेषस्य स्वरूपांशेऽधिष्ठानत्वेन, विवर्तमानत्वेन वा, उपाध्यंशे, उपहितांशे च साक्षात् परिणामितया, निमित्तकारणतया च। तत्रावृतावस्थायामेव कारणत्वात्, अनावृतसंविन्मात्रस्य निर्विशेषस्याविद्यानाश्रयस्याकारणत्वाच्च सविशेषस्यैव कारणत्वं कल्पनामात्रेण; यथा शुक्त्यवच्छिन्नचैतन्यस्यावृतस्य कारणत्वम्, अनावृतस्य तु न तत्॥

### जगत आरोपितस्यापि ब्रह्मलक्षणत्वोपपत्तिः

तत्राऽरोप्येणाधिष्ठानलक्षणं तज्ज्ञापनमात्रम्। इदमेवाभिप्रेत्य रत्नप्रभा यथा—"रजतं शुक्तेर्लक्षणम्, तथा जगत्कारणत्वं ब्रह्मलक्षणमि"ति। तत्र बाधावस्थायां रजतस्य, शुक्तित्वस्य पूर्वमज्ञातस्य ज्ञानम्, इति बाधितं सर्वमधिष्ठानतत्त्वज्ञापकत्वमात्रेण लक्षणमिति व्यपदिश्यते। परमार्थदृष्ट्याऽऽरोप्यबाध्यतादृशायामेवाधिष्ठानतत्त्वावगमः। भूतपूर्वगत्या रजतं 'काकवद् देवदत्तगृहमि'त्यादाविवोपलक्षणविधया शुक्तेर्लक्षणमिव एवमेव जगदपि ब्रह्मलक्षणमिति तु निष्कर्षः। अत एव तटस्थलक्षणमिति॥

### जगत्कारणत्वस्य क्रमशो निर्विशेषलक्षणत्वेन तटस्थलक्षणत्वम्

जगत्कारणत्वं चेदं ब्रह्मणो जगदध्यासाधिष्ठानतया कल्पितमेव। प्रतीयमानेन संबन्धेन वस्तुतोऽसता लक्षकं हि शाखादि तटस्थलक्षणम्। न च ब्रह्मणः प्रपञ्चकारणत्वं परिणामिविधया मृदादेरिव। अतः कारणवाक्यैरापाततः प्रतीयमानं न सन्दिग्धम्, इति तल्लक्षणविचारोऽत्र निष्प्रयोजनः, इति तद्विचारसाफल्यं तटस्थलक्षणविधया स्वरूपलक्षणतायामेव, इति प्रकरणार्थनिष्कर्षपरं सूत्रं क्रमशो निर्विशेषपरं कारणसविशेषद्वारेणैव निर्विशेषे पर्यवस्यति॥

### "यतो वे"ति लक्षणस्य क्रमशो ब्रह्मतत्त्वज्ञापनमेव लक्ष्यमित्यत्र "तपसा ब्रह्म विजिज्ञासस्वे"ति पुनः पुनराम्नानमेव प्रमाणम्

अत एव पुनः पुनः "तपसा ब्रह्म विजिज्ञासस्वे"त्यत्र प्रकरणे निर्विशेषब्रह्मद्वारमात्रं सविशेषनिरूपणम्, यथाऽन्नमयादिवाक्यानि; अन्यथा भृगुवल्ल्या अपि शरीरात्मवाद एव तात्पर्यमापद्येत, इति यथाऽन्नमयादिः परमात्मनः तटस्थलक्षणम्, एवमत्रापीति वक्तव्यम्; अन्यथा—"यतो

वा इमानि भूतानि जायन्ते' इति प्रकृतस्य लक्षणस्य "अन्नं ब्रह्मेति व्यजानात्" इति प्रस्तुतान्न एव पर्यवसानमसङ्गतं स्यात् ॥

### भृगुवल्ल्या क्रमशो लक्ष्यमाणं ब्रह्म निर्विशेषम्; अधिष्ठानं च पुच्छब्रह्मैव

तत्र यदि मुख्यप्राकरणिकार्थानन्दस्वरूपलक्ष्यतायामेव तात्पर्यम्, तर्हि स्वागतम्; आनन्दस्वरूपनिर्विशेषब्रह्मतायामेव "यतो वे"ति प्रकरणपर्यवसानस्य स्वीकारात्। तत्र 'जन्माद्यस्य यतः' इति सूत्रनिर्दिष्टं ब्रह्मानन्दात्मनाऽज्ञातम्, सच्चिदात्मना ज्ञातं च। आनन्दात्मनाऽपि ज्ञाने तु ज्ञेयब्रह्मप्रकरणसमाप्तिरिति हि—"सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिते'ति प्रतिपादयति। परम-व्योमशब्दार्थो ह्यखण्डं निर्विशेषमानन्दमयान्ताधिष्ठानं पुच्छं ब्रह्मैव, न तु सविशेषमिति तैत्तिरीयवार्तिके व्यक्तम्। अधिकमानन्दमयाधिकरणपरीक्षावसरे व्यक्तीभविष्यति ॥

### अखण्डब्रह्मलक्षणस्याध्यासभाष्योपपादकत्वमध्यासस्य, मिथ्यात्वस्य चालौकिकत्वेऽपि

तत्र प्रथमसूत्रं ब्रह्मजिज्ञासां प्रस्तुवत् तत्सार्थक्यार्थं निर्विशेषमेव मुख्यं विवक्षतीति पूर्वमेवोक्तम्। निर्विशेषं च ब्रह्म तदाश्रितसर्वजगन्मिथ्यात्वेन। अत एवाद्वैतिनामध्यासभाष्यमिति प्रथमे सूत्र उपोद्घातविधया प्रकरणं सर्वजगन्मिथ्यात्वस्य। सार्वलौकिकानुभवसुदृढता सविशेषब्रह्मणोऽपि समाना। शास्त्रीयोऽनुभवस्तु जगन्मिथ्यात्वस्य, ब्रह्मनिर्विशेषतायाश्च ॥

### ब्रह्मणाऽसादृश्येऽपि जगदध्यासाधिष्ठानत्वोपपत्तिः

तत्र जगदध्यासाधिष्ठानत्वं तत्कारणत्वं चेत्यनर्थान्तरम्। तच्च जगतो ब्रह्माश्रिताविद्यापरिणामविधयोत्पत्तिम्, सच्चिदात्मना प्रतीतिम्, आरोपं चादाय ब्रह्मणि गमयति। तदुक्तम्—

> "अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।
> आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥"

इति। न चैतद् ब्रह्ममायोभयोपादानत्वं तत्तदनुगमं विनोपपद्यते; शुक्तिरजतादावप्यत एवानिर्वचनीयरजतोत्पत्तिवादः, अध्यासपक्षेऽपि कथञ्चन सादृश्यमात्रेण, विनाऽपि वा सादृश्यमुपादानत्वं दृश्यते ॥

### निर्विशेषब्रह्मप्रतिज्ञायामपि जन्मादिसूत्राविरोधः

तत्र वैलक्षण्यं विवर्तांशेन, साम्यं त्वौत्सर्गिकं परिणामांशेन। सादृश्यज्ञानं नाध्यासकारणमिति पक्षः सम्यगुपपादि कवितार्किकमतोपन्यासावसरे सिद्धान्तलेशसंग्रहे। अतः शुक्तिरजताध्यासाधिष्ठानं रजतकारणमिति न विरुध्यते। अज्ञातावस्थायामधिष्ठानत्वादुपाधिनिबन्धनं कारणत्वमौपाधिकं कल्पितमधिष्ठानस्य न व्याहन्यते, इति जन्मादिसूत्रं प्रथमसूत्रप्रतिज्ञातनिर्विशेषस्वरूपमेव क्रमशो भृगुवल्ल्यनुसारेण सिद्धान्तयति, इति न प्रथम-द्वितीयसूत्रयोभिन्नवाक्यता, भिन्नार्थत्वं वा॥

### ब्रह्मणोऽभिन्ननिमित्तोपादानत्वमुपहितस्य सर्वज्ञत्वेन, विशेष्यांशस्य विवर्तमानत्वेन च

तत्राभिन्ननिमित्तोपादानत्वं ब्रह्मणः सर्वज्ञत्वस्य सर्वतादात्म्यरूपत्वात्, उपादानातिरिक्तसर्वज्ञाभावाच्च संविन्मात्रस्यापि सर्वाधिष्ठानत्वेन विवर्तोपादानत्वात् तदतिरिक्ताया मायाया अपि परिणामिविधयोपादानकारणत्वेऽपि निर्वहति, इति विवरणमतेऽपि मायोपहितस्याप्युपादानकारणत्वम्। न हि ब्रह्म परिणामिकारणम्, किन्तु जगदध्यासाधिष्ठानम्। जगदाकारेण परिणममानाविद्याविषयत्वेन ह्युपादानत्वम्, निमित्तत्वं तु तदुपाधिमायावृत्त्याश्रयत्वेन, साक्षात् सर्वतादात्म्येन वा, इति मायोपहिताभिन्ननिमित्तकारणत्वं न व्याहतम्॥

### श्रीभाष्यमते ब्रह्मणः सविशेषस्याभिन्ननिमित्तोपादानत्वानिर्वाहः

एतेन—कर्तृत्वमीश्वरस्य, उपादानत्वं शुद्धस्येति—व्याख्यातम्; उभयस्योपहितविषयत्वात्, उपहितात्मनैवाभिन्ननिमित्तोपादानत्वात्। न चात्राकारभेदः। विशिष्टाद्वैतमते तु निमित्तत्वमीश्वरस्य ब्रह्ममात्रस्य, उपादानत्वं तु मायामात्रस्य, न तु मुख्यमुपादानत्वं निमित्तत्वं च विशिष्टस्य। शतदूषणी हि वादावल्यादिवत् मायाया एव मुख्यमुपादानत्वम्, गौणं तु ब्रह्मणस्तद्विशिष्टस्येति ब्रह्मोपादानताभङ्गवादे विशदयति॥

### श्रीभाष्यमते ब्रह्मोपादानत्व-निमित्तत्वोभयानुपपत्तिः

चिदचिद्विशिष्टब्रह्मोपादानता तु यद्यपि केषाञ्चनमते वर्तते, तथाऽपि तदिदम् 'मायां तु प्रकृतिं विद्यात्' 'अजामेकां लोहितशुक्लकृष्णाम्' इत्यादिश्रुतिषु मायामात्रपरिणामिताया एवोक्तत्वात्, विशिष्टोपादानताया लोकानुभवविरुद्धत्वात्, "मृत्तिकेत्येव सत्यमि"ति विकारव्यतिरिक्तकारणांश-

मात्रसत्यत्वाम्नानविरोधाच्च नोपपद्यते। कथञ्चनोपपत्तावपि निमित्तत्वं न विशिष्टस्य, किन्तु निष्कृष्टस्य ब्रह्मांशमात्रस्येत्यत्रैव प्रकरणे परमार्थभूषणं विवेचयति, इति नाभिन्ननिमित्तोपादनता तत्र निर्वोढुं पार्यते। अद्वैतमते तु मायाया उपाधित्वमात्रमात्रस्वीकारात् सत्तामात्रेण ब्रह्माधिष्ठानतानिर्वाहकत्वेऽपि न ब्रह्मणो यादृशमुपादानत्वम्, तादृशं मायायाः, न वा यादृशमुपादानत्वं मायायाः, तादृशं ब्रह्मण इत्युभयोपादानत्वेऽप्युपहितब्रह्मण उपहिताकारेणैव निमित्तत्वमुपादानत्वं च संभवति। "यतो वा इमानि भूतानि जायन्ते" इति यच्छब्देन सूक्ष्मचिदचिद्विशिष्टस्य प्रागेव ज्ञाने वितथमनेन लक्षणकथनम्॥

"यतो वे"ति वाक्यस्य "सदेवे"ति वाक्यानपेक्षमेव बोधकत्वम्, तस्यापि विशिष्टकारणपरत्वायोगश्च।

वस्तुतस्तु—"यतो वे"तिवाक्ये स्थूलचिदचिद्विशिष्टस्यैव लक्षणतया वर्णनात्, सूक्ष्मचिदचिद्विशिष्टस्य चोद्देश्यमात्रत्वात् स्थूलचिदचिद्विशिष्टस्यासार्वदिकत्वात् ब्रह्मस्वरूपलक्षणत्वं दुरुपपादम्॥

श्रीभाष्यमते विशिष्टस्य जगत्कारणत्वलक्षणत्वायोगः

यत्तु—"यतः" इति यच्छब्दात् पुरोवादापेक्षमिदं वाक्यम्, पुरोवादश्च 'सदेव सोम्येदमि'ति वाक्यजातम्। तत्र च 'ऐतदात्म्यमिदं सर्वमि'ति कारणे चिदचिद्वैशिष्ट्यं संप्रतिपन्नमेव। अतः कारणस्यैव ब्रह्मणोऽत्र ग्रहणमिति ख्यापनम्, इति चिदचिद्विशिष्टमेवात्र यच्छब्दार्थः—इति, तत्र "सदेव सोम्येदमि"त्यत्रापि सत्पदेन चिदचिद्विशिष्टग्रहण इदम्पदवैयर्थ्यात्, "एकमेवाद्वितीयमि"ति सतोऽद्वितीयत्वोपदेशेन निर्विशेषस्वरूपस्यैव प्रख्यापनात्, 'सदेवेदम्' "सर्वं खल्विदमि"त्यादावपि बाधायामेव सामानाधिकरण्यविवक्षणेन तत्प्रकरणगतस्य "ऐतदात्म्यमिदं सर्वमि"त्यस्य कारणातिरिक्तकार्यस्वरूपाभावबोधन एव तात्पर्यात्, सद्विद्यायामपि कारणत्वप्रतिपादनेन तत्रापि विशिष्टग्रहणे प्रमाणान्तरापेक्षाप्रसङ्गात्, कार्यसामान्यस्य लोकतः सिद्धत्वेन सामान्यतः प्रसिद्धिमात्रेण यच्छब्दोपपत्तेः, वेदान्तवाक्यानां सर्वेषामज्ञातार्थबोधकत्वेनाननुवादत्वेन पुरोवादानपेक्षणाच्च, चिदचिद्विशिष्टस्य प्रथमं यत्पदेन ज्ञानमनुपपन्नमेव, इति न विशिष्टस्य ब्रह्मणोऽत्र विवक्षा॥

यद्यपि कारणावस्थं ब्रह्म प्रकृतिविशिष्टमेव; तथाऽपि प्रकृत्युपहित-ब्रह्ममात्रस्य कारणतया निर्देश एवात्र समुचितः। अत एव "आनन्दो ब्रह्मेति व्यजानात्" इत्यानन्दमात्रस्वरूपस्य सूक्ष्मचिदचिद्विशिष्टस्यात्र ब्रह्म-तयोपसंहारः—'परमे व्योमन् प्रतिष्ठिते'त्यादिना। "इमानि भूतानी"ति निष्कृष्य भूतमात्रस्य कार्यत्वोल्लेखस्तु विशिष्टस्यैव कार्य-कारणभावे-नोपपद्यते। स्वावसरे चेदं व्यक्तीकरिष्यते॥

तत्त्वसुधा तु परकालमठीयकृतिर्ब्रह्मणोऽपि मुख्यमुपादानत्वं वदति, परन्तु विशेषणोपादानत्वद्वारैव ब्रह्मणोऽपि मुख्यमुपादानत्वम्—इति॥

### श्रौतमुपादानत्वमधिष्ठानस्वरूपब्रह्ममात्रस्य, न विशिष्टस्य

तत्राधिष्ठानत्वरूपमुपादानत्वं ब्रह्मणः श्रुतिसिद्धं न लोकप्रसिद्धिम-पेक्षते, इति लोकप्रसिद्धमुपादानत्वं ब्रह्मण्यद्वैतमते नास्तीति शङ्काऽप्रयो-जिका। ब्रह्मणो विशेष्यमात्रस्योपादानत्वमेव श्रौतम्, न तु विशिष्टस्य। अधिष्ठानत्वरूपमुपादानत्वं निमित्तत्वं च वेदैकसिद्धं न लोकप्रसि-द्धिमपेक्षते, श्रीभाष्यमतेऽप्यभिन्ननिमित्तोपादानत्वं न लोकसिद्धमिति समानम्॥

### विशिष्टकारणताया न लोकसिद्धत्वम्

वस्तुतस्तु—शुक्तिरूप्यादिस्थले लोकेऽप्यधिष्ठानत्वरूपमुपादानत्वं प्रसिद्धमेव, श्रीभाष्यमते तु न लोकप्रसिद्धं परिणामित्वमपि। न च मृत्ति-कादि लोकप्रसिद्धमुपादानं कुलालादिविशिष्टचैतन्यरूपम्, येन सर्वत्र विशिष्टकारणता निरुह्येत, न वा तत्र विशिष्टं कारणमेव निमित्तमपि॥

### विशिष्टकारणताया विशेषणमात्रोपादानत्व-पर्यवसाने विज्ञानभिक्षुमतप्रवेशापत्तिः

अतोऽगत्या प्रकृतिमात्रोपादानत्वमेव श्रीभाष्यमते स्वीकर्तव्यम्, इति किमन्तर्गडुना ब्रह्मणोपादानकारणेन? तन्निमित्तकारणतामात्रेणापि निर्वा-हात्। उपादानकारणप्रकृत्याश्रयत्वमात्रेणोपादानत्वं न कुलालादौ दृष्टम्, अन्यथा विज्ञानभिक्षुमतप्रवेशापत्तिः, तेनापि हि ब्रह्माभिन्ननिमित्तोपा-दानम्। तत्रोपादानत्वं प्रकृत्याश्रयत्वेन, निमित्तत्वं तु स्वत इत्येव मन्यते, इति तदीये विज्ञानामृतभाष्ये व्यक्तम्। न हि विशेष्यांशमात्रं निमित्तम्, न वा विशिष्टमुपादानमिति लोकप्रसिद्धम्, येन तथा व्यवस्था साध्वी स्यात्॥

### जगत उत्पत्तिश्रुतीनामुत्पत्तौ न तात्पर्यमिति शाङ्करभाष्यं सदात्मनाऽनुत्पत्त्यभावपरम्

एतेन—कार्याधिकरणान्तर्गतेन "मृदादिदृष्टान्तैर्हि सतो ब्रह्मण एकस्य सत्यत्वम्, विकारस्य चानृतत्वं बोधयद् नोत्पत्त्यादिपरं भवितुमर्हति" इति शाङ्करभाष्येण गलहस्तितमेव, न स्वार्थतात्पर्यं कारण-श्रुतिनिकरस्य, इति जगज्जन्माद्यपलापाद् गतमेव जन्मादिसूत्रेणेति—परास्तम्, इदं हि वाक्यं विशेषनिराकरणश्रुतीनामन्यार्थत्वात् स्वार्थे तात्पर्यम्, जगदुत्पत्ति-स्थिति-प्रलयहेतुत्वपरश्रुतेस्तु तच्छेषत्वादन्यार्थत्वेन न स्वार्थे तात्पर्यम्; अपवादापेक्षिताध्यारोपमात्रपरत्वादुत्पत्त्यादिश्रुतीनामिति निरूपयितुं प्रवृत्तम्, येन 'सदेवे'त्यादिवाक्यानां वस्तुसज्जगत्कारणत्वे न तात्पर्यमिति पर्यवस्यति। तत्र परिणामित्वमेकत्वेन, सत्यत्वेन च न ब्रह्मणो भवितुमर्हति॥

### उत्पत्तिश्रुतानामारोपमात्रे तात्पर्यं शुक्तिरूप्यादाविव

किं बहुना? मृत्तिकादीनां नश्वराणां सावयवानामप्युपादानत्वं परिणामित्वनिबन्धनम्; मृद्-घटयोः समसत्ताकत्वेऽपि घटादीनां तत्परिणामानामनृतत्वात्, कारणत्वं सतामिव प्रतीयमानानामपि जलादिकार्याणामविद्यारूपेणैव कारणत्वात्, अविद्यायाश्च ज्ञाननिवर्त्यायाः बाध्यत्वाच्च परमार्थदृष्ट्याऽविद्यान्तानां विकाराणां मिथ्यात्वमेव। लोकसिद्धं पारमार्थिकत्वं तु मृदादीनां परिणामिनामपि न ब्रह्मवत् त्रिकालाबाध्यत्वरूपम्, तत्र सर्वस्य ब्रह्मात्मनोऽप्युत्पत्तिव्यवहारस्तु लोकप्रसिद्धिमाश्रित्य, वस्तुगत्या तूत्पत्तिरपि शुक्तिरजतादीनामिवारोपमात्रम्; मिथ्यापरिणाम्युपादानकत्वात्॥

### शुक्तिरूप्यादीनामारोपस्थल उत्पत्तिव्यवहाराभावे कारणं प्रातिभासिकत्वम्, अतो वैलक्षण्यम्

इयान् विशेषः—शुक्तिरूप्यादावप्यविद्यापरिणामत्वेनोत्पत्तिमत्त्वेऽपि व्यवहारदशायां बाधितत्वान्नोत्पत्तिव्यवहारः, तदुपादानस्य व्यवहारदशायामेव बाधात्, घटादौ तु व्यवहारदशायामबाधाद् मृत्तिकाया एव परिणामित्वस्य प्रत्यक्षसिद्धतयोत्पत्तिव्यवहारमात्रम्। वस्तुतस्तु—बाधितपरिणाम्युपादानकत्वात्, अबाधितब्रह्मव्यतिरेकेणाभावाच्च ब्रह्मव्यतिरिक्तानां सर्वेषां मिथ्यात्वेन निर्विशेषमेव ब्रह्मेत्येवोक्तप्रकरणार्थः, न तु

लोकसिद्धजगदुत्पत्त्यादिनिषेधे तस्य तात्पर्यम् ; निर्विशेषानावृतसंविन्मात्रस्यानुपादानत्वात् , तत उत्पत्त्यादिवादो न युज्यते; अविद्योपहितब्रह्मोपादानत्वं त्वधिष्ठानत्वमात्रमधिष्ठानतादशायाम् , आवृतावस्थायां वा, न निर्विशेषत्वमुपादानत्वं च विरुद्धम् ॥

### उत्पत्तिनिषेधे "सद्भावेन ह्यजं सर्वमि"ति वचनप्रमाणता

इदं सर्वमभिप्रेत्यैव—"सद्भावेन ह्यजं सर्वमि"त्यजातवादो माण्डूक्यकारिकायाम् । एवं च 'मृत्तिकेत्येव सत्यमि'ति वाक्यमपि "इत्येव"पदेनाविद्योपहितस्वरूपे स्वरूपमात्रसत्यतापरम् , अविद्यान्तसर्वानृतत्वपरं च । विकारशब्दो हि निवर्त्यपरः, नोत्पद्यमानपरः । विकारः सादित्वमिव सान्तत्वमपि । तत्र मुख्यो विकारः सान्तत्वमेव; अनादिविकारसाधारणत्वात्तस्य । सर्वथा तु ब्रह्ममात्रोपादानत्वे, तद्विवर्तत्वेन ब्रह्मेतरमिथ्यात्व, एव श्रुतीनां तात्पर्येऽपि जन्मादिसूत्रं सुष्ठु सङ्गच्छते, इति ब्रह्मस्वरूपस्याप्यविद्याया इवोपादानत्वमादायैव जगज्जन्मादिश्रुतिः ॥

### अविद्योपहितस्यैव कारणत्वादुपादानत्वं ब्रह्मणोऽधिष्ठानत्वमात्रम्

"तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति श्रुतिरप्यविद्योपहितमज्ञातं ब्रह्मैवोपादानमभिप्रैति; अन्यथा स्वप्रकाशस्यात्मरूपस्य ब्रह्मणः सर्वदा ज्ञातत्वात् "ब्रह्मविदाप्नोति परमि"ति श्रुतिः प्रमाणसाध्यज्ञानवत एव ब्रह्मभावप्रतिपादनपरा नोपपद्येत ॥

### विशिष्टोपादानत्वं सद्विद्याविरुद्धम्

तत्र सूक्ष्माचित एवावरणशक्तेरपि स्वीकारेणाद्वैतमते तद्विशिष्टस्य, तदुपहितस्य वा कारणत्वे न विप्रतिपत्तिः, सूक्ष्मचिद्विशिष्टस्यापि कारणत्वे न किमपि प्रमाणम् । तत्र "सदेवेदमिति"वाक्ये सच्छब्देन सूक्ष्माचिद्विशिष्टस्य ग्रहणेऽपि सूक्ष्मचिद्विशिष्टस्य ग्रहणं न युक्तम् ; अन्यथा "सदेव सोम्येदम्" 'ऐतदात्म्यमिदं सर्वमि'त्यादिनैव सूक्ष्मचिदचिद्विशिष्टस्यैव ब्रह्मणः स्वरूपत्वे सद्विद्ययाऽवगते "तत्त्वमसी"ति जीवमात्रमवलम्ब्य चिद्विशिष्टमात्रस्य नवकृत्वोऽभ्यासोऽनुपपन्नः स्यात् ॥

तत्र तत्पदार्थो यदि ब्रह्मस्वरूपमात्रम् , त्वम्पदार्थस्तु जीवविशिष्टं स्वरूपम् , तावताऽपि चिदचिच्छरीरकत्वानुपपत्तिः । तत्पदेन प्रक्रान्तसत्पदार्थविवक्षायां तेन चिदचिद्विशिष्टग्रहणानुपपत्तिः । अतः प्रत्यक्षान-

मानादिसिद्धं जगत्कारणं सद्वितीयमनूद्य तस्याद्वितीयत्वमुपपाद्य चाद्वितीय-संविन्मात्राभेद एव त्वम्पदेनापि वक्तव्यः, इति न सद्विद्या चिदचिद्वि-शिष्टब्रह्मतावादमुपबृंहयति ॥

सृष्टिवाक्यानां लोकसिद्धं कार्यत्वमादायाध्यारोपाप-
वादनयेनैव तटस्थलक्षणविधया व्यवस्था

एतेन—'यत इमानि' इति यच्छब्देदम्पदे अपि—व्याख्याते; इमानीति प्रत्यक्षसिद्धकार्येणानुमानसिद्धस्य कारणस्यैवात्र विवक्षया, इति जगत्कारणत्व-स्य लोकसिद्धस्य सृष्टिवाक्यतात्पर्यविषयत्वाभावेनानुपपन्नत्वादनुपदोपपादि-ताध्यारोपापवादन्यायापेक्षिताध्यारोपपरत्वमेव स्वीकर्तव्यम्। अत एव तट-स्थलक्षणपरम्, ब्रह्मस्वरूपोपपादकद्वारमात्रनिरूपणपरं वा जन्मादिसूत्र-तद्वि-षयवाक्यानि, इति तत्सूत्रमद्वैतवादसिद्धान्तमेव स्वरसमवगमयति ॥

जन्मादिसूत्रस्वारस्यभङ्गः श्रीभाष्यमते

एतेन—जन्मादिसूत्रस्वारस्यभङ्गात् कृत्स्नमीमांसाशास्त्रस्वारस्यभङ्गो-ऽद्वैतमते स्पष्टः इति—परास्तम्; पूर्वोक्तविधयाऽद्वैतसिद्धान्त एव स्वा-रस्यातिशयात्, अन्यत्र तद्वैपरीत्याच्च। अमुमेवार्थं विशदयन्ति कार्याधिकर-णान्तर्गतानि परमार्थभूषणसमुद्धृतानि वाक्यानि ॥

शास्त्रयोनित्वसूत्रे शास्त्रपदं महावाक्यमात्रपरम्,
इत्यद्वैत एव तस्य स्वारस्यम्

एतेन—शास्त्रयोनित्वाधिकरणमपि—व्याख्यातम्। तत्र शास्त्रपदम्—

"प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥"

इतिवचनाल्लौकिक-वैदिकसाधारणप्रवर्तक-निवर्तकवाक्यमपि गोचरयति; तथाप्यत्र लौकिकस्य, वैदिकस्य वा प्रवर्तकवाक्यस्य सिद्धे क्रियाऽविषये ब्रह्मण्यप्रवृत्त्या सिद्धब्रह्मस्वरूपमात्रतात्पर्यकं महावाक्यमेव विवक्षितम्, न तु प्रवर्तकम्, निवर्तकं वा कर्मोपासनावाक्यमात्रम्। स्वीकरोति चेमां व्यवस्थां परमार्थभूषणमपि—इति ॥

ब्रह्मणो विधेयज्ञानविषयत्वायोगात् शास्त्रयोनित्वं प्रमाणतन्त्रज्ञान-
विषयत्वेनैव, इत्यद्वैत एव स्वारस्यम्

यत्तु—न हि ब्रह्मणो विधिवाक्यैकगम्यत्वं वा, विधिवाक्यैकवाक्यता-पन्नवाक्यमात्रविषयत्वं वा श्रीभाष्यमाह, किन्तु स्वतन्त्रसिद्धपरवाक्यगम्य-

त्वम्; अतः कथं तत्र सूत्रस्वारस्यम्—इति, तदिदं श्रीभाष्यमते, यत्राविधेयज्ञानभङ्गप्रकरणं विशिष्य ब्रह्मणः सिद्धस्याप्युपासनाविधिविधेयोपासनासंबन्धेनैव वेदान्ततोऽवगम इति स्वीकारात्, अद्वैतमत इवाविधेयप्रमाणमात्रतन्त्वज्ञानमात्रेण ब्रह्मणो मोक्षोपयोगित्वस्यास्वीकाराच्च व्याहतम्। लेशतोऽपि विध्यविषयस्य ब्रह्मणो न विधिशेषत्वमुत्पाद्यत्वेन, प्राप्यत्वेन विकार्यत्वेन, संस्कार्यत्वेन वा केनापि प्रकारेणेति समन्वयसूत्रभाष्ये व्यक्तम्॥

### शास्त्रपदेन सूत्रे महावाक्यानामेव ग्रहण उपपत्तिः

यदि परम्परया विधिसंबन्धेऽपि ब्रह्मणो न क्रियाविषयत्वं सिद्धस्येति मत्वा साक्षाद् विधिसंबन्धो ब्रह्मणोऽत्र निषिध्यते, तर्हि "व्रीहीन् प्रोक्षति" "दध्ना जुहोति" "सन्ध्यां मनसा ध्यायेत्" इत्यादिवाक्यवद् ब्रह्मपराणां वाक्यानामपि चोदनात्वमेव, इति "चोदनालक्षणोऽर्थो धर्मः" इति सूत्रेणैव ब्रह्मवाक्यानामपि संग्रहात् पृथक् शास्त्रपदप्रयोगेण सूत्रान्तरमत्र निष्प्रयोजनम्, इति वेदैकगम्यत्वेऽपि ब्रह्मणस्तद्घटकावैधज्ञानमात्रमोक्षसाधनतोपपादकं महावाक्यप्रकरणजातमेवाऽत्र शास्त्रपदार्थः॥

### सर्वत्र शास्त्रपदेन भगवत्पादैर्महावाक्यानामेव ग्रहणम्

अत एव यत्र यत्र सूत्रे शास्त्रपदप्रयोगः, तत्र सर्वत्र भगवत्पादाः तत्त्वमस्यादिमहावाक्यमेव ब्रह्मप्रमाणतया विवक्षन्ति—शास्त्रयोनित्वसमर्थनावसरे, समन्वयसूत्रेऽन्यत्र च प्रायेण तत्त्वमसिवाक्यस्य, अविधेयज्ञानोपदेशपरवाक्यस्य वा परामर्शः। यथा "तत्त्वमसी"ति, ब्रह्मात्मभावस्य 'शास्त्रमन्तरेणानवगम्यत्वात्' इति समन्वयसूत्रे, "शास्त्रदृष्ट्या तु" इति सूत्रे 'अहं मनुरभवं सूर्यश्चे'ति। "यतो वा इमानि भूतानी"त्यादिवाक्येष्वपि शास्त्रपदप्रयोगस्तु जगत्कारणत्वमपि ब्रह्मणो नात्रोपासनार्थमाम्नायते, किन्तु "नेति नेती"त्यपवादार्थमेवेति मत्वा॥

### विधिवाक्यानां नैतावताऽशास्त्रत्वम्

न चैतावता विधिवाक्यानामशास्त्रत्वम्, किन्तु ब्रह्मसूत्रकारैर्विशिष्य प्रायेण शास्त्रपदमविधेयज्ञानप्रकरणमात्रे प्रयुज्यते वेदान्तमीमांसायाम्। अतः "शास्त्रयोनित्वादि"ति सूत्रमद्वैत एव स्वरसम्। यथा च निर्विशेषब्रह्मणः शास्त्रगम्यत्वम्, तथाऽखण्डार्थवादसमर्थनावसरे विवेचयिष्यते॥

### सौत्रस्य शास्त्रपदस्य स्वारस्यविमर्शनम्

एतेन—शास्त्रयोनित्वाधिकरणस्य प्रथमवर्णकमपि—व्याख्यातम् ; तस्य मतान्तर इव सविशेषविषयत्वेन निर्विशेषविषयत्वाभावेन तत्रास्वारस्यं नाद्वैतमतेऽपि। तत्र सविशेषमपि शास्त्रैकसमधिगम्यम् , निर्विशेषमपि; तथाऽपि सविशेषमुपास्यं विधिवाक्यसमधिगम्यम् , निर्विशेषं तु तत्त्वमस्यादिमहावाक्यसमधिगम्यमात्रम् , इति महावाक्यस्यापि वेदत्वात् शास्त्रगम्यत्वम् , वेदैकगम्यत्वं चोभयमव्याहतम्। 'सन् घटः' इत्यादौ त्वनाद्यविद्याकल्पितानादिभेदं सखण्डं ब्रह्म प्रत्यक्षादिसमधिगम्यं विवर्तमानत्वेन, इति न निर्विशेषस्यानावृतस्य प्रत्यक्षादिगम्यता। घटाद्यवच्छिन्नचैतन्यस्यावृतस्यैव घटादिप्रत्यक्षकालेऽप्यज्ञानविषयत्वांशमात्रस्य तात्कालिकनिवृत्तिरित्यादि सिद्धान्तलेशसंग्रहादौ व्यक्तम्॥

### श्रीभाष्यप्रकाशिकारीत्या समन्वयाधिकरणपूर्वोत्तरपक्षसंग्रहः

एतेन—समन्वयाधिकरणमपि—व्याख्यातम् ; तद्धि श्रीभाष्यप्रकाशिकायां प्रवृत्ति-निवृत्त्यन्यतरान्वयिफल-तत्साधनप्रतिपादनायत्ततया प्रयोजनवदर्थपरत्वस्य ध्यानविशेषणतया प्रवृत्त्यन्वयेऽपि ध्यानस्य ध्येयसत्तानवश्यम्भावेन ध्येयब्रह्मस्वरूपादिसत्यत्वासिद्ध्या वस्तुसत्ताधीनस्य प्रवृत्त्यन्वयस्य ब्रह्मस्वरूपादावभावेन तत्र वेदान्तानां तात्पर्यासंभवेन विषयासंभवाच्छारीरकमनारम्भणीयमिति पूर्वपक्षे, परमपुरुषार्थभूते ब्रह्मणि साक्षात् प्रतिपाद्ये वेदान्तवाक्यं प्रयोजनपर्यवसाय्येव। ब्रह्मप्राप्त्युपायस्तु ब्रह्मोपासनं तत्र तत्र विधीयते, विषयसत्तानिश्चयं विना तु न कोऽपि कुत्रापि प्रवर्तते। तत्र पश्चात्तनबाधाभावेन ब्रह्मरूपगुणविभूत्या अपि स्मृत्यवश्यम्भावेन वेदान्तवाक्यानां तत्र तात्पर्यानपवादेन विषय-प्रयोजनयोः सत्त्वात् शारीरकमारम्भणीयमिति सिद्धान्त इति सिद्धान्त उपपादितः, श्रीभाष्यं तु समन्वयः पुरुषार्थतयाऽन्वय इति भाषते॥

### प्रतिपत्तिविधिविषयतया ब्रह्मसमर्पणमिति प्राभाकरमतेन पूर्वपक्षः, यत्र ब्रह्मसत्यत्वं न नियतम् ; कार्यान्वितस्यैव वाक्यार्थत्वात्

तत्र पूर्वपक्षः—ब्रह्म, न सत्यम् , उपासनाविषयतया प्रतिपाद्यत्वादित्येव संगृह्यते, एवमुपास्यमपि ब्रह्म, पुरुषार्थभूतं सत्यम् , अबाधात्। तद्धि परमपुरुषार्थरूपं वेदान्तेभ्योऽवगम्यते, इति प्रयोजनसंभवाद्व विचारः

कर्तव्य इत्येव व्यवस्थापितम् । तेन ब्रह्मणोऽसत्यत्वेन विचारायोगपूर्वपक्षे न विप्रतिपत्तिः, पुरुषार्थत्वेऽपि वेदान्तेषु तस्यान्वयात्, असत्यस्य च पुरुषार्थत्वायोगात्, सत्यब्रह्मविषय-प्रयोजनयोः संभव इत्येव सिद्धान्तः । अत्र ब्रह्मणः शास्त्रयोनित्वं श्रीभाष्यरीत्या पुरुषार्थत्वेनान्वयेनैव, बाधाभावस्त्वभ्युच्चयमात्रम् ॥

### ब्रह्मसत्यत्वे बाधाभाव एव हेतुः, न पुरुषार्थत्वेनान्वय इति भूषणाक्षेप-तत्परिहारौ

परमार्थभूषणं तु—"भवदुक्तं तु विध्यर्थत्वेऽप्यबाधात् परविषयवचः स्वार्थे मानं भवेदित्यन्वारुह्योक्तं सूत्रकारसंमतमपि न समन्वयसूत्रार्थतया विवक्षितमिति लिखद् ब्रह्मसत्यत्वासत्यत्वपक्षावादायैव पूर्वोत्तरपक्षौ मन्यते । तत्रापि सत्यत्वे प्रधानयुक्तिस्तु पुरुषार्थतया वेदान्तप्रतिपाद्यत्वमेवेति भाष्य एव व्यक्तम् । बाधाभावस्तु तत्राभ्युच्चयमात्रम् । सूत्रार्थस्तु पुरुषार्थतयाऽन्वयादित्येव । तत्र चान्वयपदार्थ उपक्रमादिलिङ्गकतात्पर्यविषयत्वमेव, न तु पुरुषार्थत्वेनान्वयः । पुरुषार्थोऽपि यद्यपि तात्पर्यग्राहकं प्रमाणम् ; प्रयोजनस्यापि तत्र प्रवेशादिति तु न युक्तम् ; यतः सप्रयोजनत्वाद्विचारशास्त्रमारम्भणीयमिति विवेक्तव्ये विषयसंभवोपपादकविषयसत्यत्वमप्यत्र पुरुषार्थत्वेनान्वयेनैव व्यवस्थाप्यत इति वक्तव्यम् । तत्र च समन्वयपदस्य तात्पर्यविषयत्वमात्रपरस्य पुरुषार्थत्वेनान्वयादिति विवरणं श्रीभाष्यमते क्लिष्टतरम् । विषयासत्यत्वेनानारम्भशङ्का विषयसत्यत्वेनैव परिहरणीया । तत्सत्यत्वसाधिका युक्तिस्तु यदि बाधाभावः, तर्हि ध्यानस्य विषयसत्तां विनाऽपि निर्वाह इत्यस्य समाधानं सूत्रारूढं पुरुषार्थत्वेनान्वयोऽपि वक्तव्य एव, इत्यविधेयज्ञानस्य विषयत्वायोगशङ्कायाः महातात्पर्येण विधेयज्ञानविषयत्वसंभव इति रीत्या विवरणमेव स्वरसम् ; प्रश्नोत्तरयोरेकविषयत्वनियमात्, श्रीभाष्ये तु शङ्काऽसत्यत्वेनानारम्भो विषयासंभवेन, सिद्धान्तस्तु प्रयोजनवत्त्वेन विचारसंभव इति, इति सूत्रावयवतः पूर्वपक्षनिरासोऽतिदूरे; बाधाभावात् सत्यत्वमिति तूत्सूत्रं विवरणं न सूत्राक्षरानुगुणमिति तत्त्वम् ॥

### निर्विशेषब्रह्मवादः शारीरकपञ्चमाध्याये स्यादिति शतदूषणीनिरासे शतदूषण्याशयनिष्कर्षः

यत्तु—शतदूषण्यां 'शारीरकपञ्चमाध्याये निर्गुणं पारिभाषिकं ब्रह्म प्रतिपाद्यताम्—इति, तदिदं शारीरकपदं यदि ब्रह्ममीमांसापरम्, तर्हि

संकर्षस्यापि ब्रह्ममीमांसात्वाज्जैमिनीयषोडशलक्षणस्यैकस्य शास्त्रस्य शारीरकत्वात् पूर्वमीमांसाया अपि तदेकदेशत्वेन शारीरकत्वमवश्यं वक्तव्यम्। तत्र चापरं शारीरकं भवतु वा, मा वा। संकर्षान्तस्य शारीरकत्वे पूर्वमीमांसापञ्चमाध्यायस्य क्रमविषयत्वाद् न निर्गुणब्रह्मविषयत्वसंभव इति शतभूषणी लिखति ॥

परमार्थतस्तु शास्त्रैक्यं ब्रह्मविचारान्तस्यैव मुख्यम्, शारीरकशास्त्रत्वात् तच्छेषत्वाच्च मीमांसान्तरस्येति तत्र सप्तदशाध्यायविषयो निर्गुणं ब्रह्मापतेत्, इति तत्र तद्विचारः स्यादित्यापादनमिष्टापादनम्, इति परिमलाद्युक्तरीत्या विषयादिभेदेऽपि पारिभाषिकमैकशास्त्र्यं स्यात्, व्यक्तीकृतं चैतत् पूर्वमेव। सर्वस्य मुख्यसविशेषविषयत्वमात्रमादायापादने त्वेकविंशाध्याये स्यादित्यापादनं स्यात्, शास्त्रैक्यवादमादाय शङ्कायां न पञ्चमाध्यायस्य निर्गुणब्रह्मविषयतासंभवः, शास्त्रभेदे तु सप्तदशाध्याये तदापादनमिष्टापादनम्, विंशत्यध्यायेष्वपि सविशेषस्यैव विचारे तु तृतीयमापादनं योग्यं स्यादिति शतभूषणीहृदयम्॥

तत्र निर्गुणं पारिभाषिकं तु सगुणस्यैव निर्गुणत्ववादे, न तु निर्गुणस्य सत एव निर्गुणत्ववादे। इदमेवात्र पृच्छ्यते—किं सगुणस्यैव शारीरकत्वम्, उत निर्गुणस्य पारिभाषिकस्यापि। आद्ये शारीरकपञ्चमाध्यायस्य निर्गुणविषयत्वं बाधितम्। अत एव नान्त्यः; तद्विचारमारभ्यैव शारीरकशास्त्रत्वान्न निर्गुणविचारः शारीरकपञ्चमाध्यायः स्यात्। उभयस्य कृत्वाचिन्तया शारीरकत्वमादाय पञ्चमाध्यायापादने तु संपूर्णस्यैकस्य शास्त्रस्य शारीरकपर्यवसायिनः शारीरकत्वं मत्वा पञ्चमाध्याये तदापादनायोगवर्णनं यद्वानुरूपबलिमनुसन्धायेति सन्तुष्यताम्॥

परमार्थतस्तु—शारीरकमिति नामान्तरं निर्गुणब्रह्ममीमांसायामेवोपपद्यते, न तु सविशेषमात्रजिज्ञासायाम्; तस्या देवतामीमांसात्वस्यैवौचित्यादित्यलम्॥

### मतद्वयाभिमतेक्षत्यधिकरणार्थनिष्कर्षः

एतेन—ईक्षत्यधिकरणमपि—व्याख्यातम्। तत्र सद्विद्यायाः प्रधानपरत्वम्, ब्रह्मपरत्वं वेति विषयो न विप्रतिपन्नः, विप्रतिपत्तिस्तु तत्र किं प्रधानमात्रस्य, उत प्रधानापरपर्यायप्रकृत्युपहितस्येत्यद्वैतप्रक्रिया। श्रीभाष्यप्रक्रियाऽपि यद्यप्येवमेव; तथाऽपि किं प्रकृतिमात्रस्य स्वतन्त्रस्य, उत चिदचिद्विशिष्टस्य ब्रह्मण इति विशेषः, तत्रोभयत्र सत्पदेन विशेषणतया,

उपाधितया वा प्रकृतेर्ग्रहणं सिद्धान्ते संप्रतिपन्नम्। तत्र चाद्वैतमते प्रकृतिमात्रस्य स्वतन्त्रस्योपादानकारणत्वम्, उतोपाधिरूपप्रकृतेः, ब्रह्मणश्चोभयस्य स्वतन्त्रं भिन्नरूपमुपादानत्वमिति विप्रतिपत्तिः। श्रीभाष्यमते तु—किं स्वतः प्रकृतिरेवोपादानम्, उत प्रकृतिविशिष्टमेकं ब्रह्मैकविधमेवोपादानम्, अथवा केषांचन मतेन प्रकृतिरेवोपादानम्, तथाऽपि प्रकृतिशरीरकत्वात् ब्रह्म निमित्तकारणमात्रमप्युपचारादुपादानकारणमिवेति ॥

### श्रीभाष्यमत ईक्षत्यधिकरणपूर्वपक्षस्य नोत्थितिरपि

तत्र द्वितीयकोटिस्वीकारे वस्तुगत्या ब्रह्मणोऽनुपादानत्वात् प्रकृतेरेवोपादानत्वात् प्रकृतिमात्रोपादानतावादनिरास ईश्वराङ्गीकारपक्ष इव वितथः; तस्यैव स्वसिद्धान्तत्वात् तन्निरासः स्वसिद्धान्तनिरास एवेति शतभूषणी। तत्र श्रीभाष्यप्रकाशिका पूर्वपक्षबीजं 'न विक्षणाधिकरण' इवात्रापि सालक्षण्यमपि मन्यते, सिद्धान्तयुक्तिं ब्रह्मणः प्रपञ्चवैलक्षण्यमपीति त्वन्यदेतत्। तत्र श्रीभाष्यमते सिद्धान्ते-कल्पद्वयेऽपि विशिष्टस्यैव कारणत्वात्, कार्यत्वाच्च वैलक्षण्यशङ्काया नावसरलेशोऽपि। अद्वैतसिद्धान्ते ब्रह्मणोऽपि स्वतन्त्रमुपादानत्वस्य स्वीकारात् कार्य-कारणयोर्वैलक्षण्यं सुसङ्गतमिति विशेषोऽत्रानुसन्धानमर्हति। अत ईक्षत्यधिकरणपूर्वपक्षबीजं श्रीभाष्यमते नाङ्कुरत्यपि ॥

### श्रीभाष्यसिद्धान्तस्य सेश्वरसाङ्ख्यमतस्य-<br>चैक्याद् न तन्मतनिरासंसम्भवः,

स्यादेतत्—एवं पूर्वोत्तरपक्षयोरुभयोरपि प्रकृतिमात्रपरिणामत्वाद्-जगतः कथामात्रं पूर्वोत्तरौ पक्षौ, न वस्तुतो भिन्नौ, इति सेश्वरसाङ्ख्यमतात् श्रीभाष्यमतस्याविशेषे कथमीक्षत्यधिकरणं तल्लक्षणलक्षितमपि पूर्वोत्तरपक्षाभेदात्, तयोः प्रयोजनभेदाभावाच्च ? तत्र यदि सेश्वरसाङ्ख्यमतं श्रुतिसूत्रोभयविरुद्धम, अप्रामाणिकं च, तर्हि कथं न स न्यायः श्रीभाष्यमतेऽपि दण्डेन सुवारः ?

### अद्वैतमते ईक्षत्यत्यधिकरणवैयर्थ्यापादनम्

एतेन—अद्वैतमतेऽपि माया, प्रकृतिः परिणाम्युपादानमेवेति कथं तन्निरासः ? इह तन्मात्रकारणतानिरासपरत्वं तु श्रीभाष्यमतेऽप्यविशिष्टम्। समन्वयाध्याये न कुत्रापि प्रकृतेः कारणत्वं निषिध्यते, किन्तु साङ्ख्यसंमतं

कारणभूतं प्रकृतितत्त्वं तत्र तत्र श्रुतिषु न विवक्षितम्, किन्तु तदतिरिक्तं ब्रह्मेत्येतावदेव विवक्षितमिति—परास्तम् ॥

### ईक्षत्यधिकरणेन सेश्वरसाङ्ख्यमतस्यापि निरसनं श्रीभाष्यनिरसनमपि

तत्र सेश्वरसाङ्ख्यमत ईश्वरस्य परिणामिकारणप्रकृतितत्त्वविशिष्टस्य, तदपृथक्सिद्धिशून्यस्य वा केवलनिमित्तकारणतावादस्यैव स्वीकारात्, तत्र प्रकृतिपरिणामवादस्योभयसंमतत्वात् ब्रह्ममीमांसायां तस्यास्वीकारात् कथं तेन नयेन नात्र श्रीभाष्यमतनिरसनमपि ? यद्युपादानत्वमपि ब्रह्मणः संमतं श्रीभाष्ये, तर्हि साक्षाद् ब्रह्मपरिणामवादस्य श्रीभाष्यमतेऽप्यस्वीकारात् औपचारिकतत्प्रयोगस्याकार्यकारित्वान्न फलतो विशेष उभयत्रापि ॥

### श्रीभाष्यसिद्धान्तस्य विज्ञानभिक्षुसिद्धान्तस्य चैक्यम्,

विज्ञानभिक्षुस्तु श्रीभाष्याभिमतं शरीर-शरीरिभावमभ्युपगम्य, मायाश्रयत्वमात्रेणेश्वरमभिन्ननिमित्तोपादानमभिप्रैति, प्रकृतिमात्रमुख्यपरिणामवादस्वीकारेण, इति न ततो विशेषः कोऽपि श्रीभाष्यस्य संभाव्यते ॥

### अद्वैतसिद्धान्ते ईक्षत्यधिकरणस्य पूर्वोत्तरपक्षयोः फलभेदो मायाब्रह्मोभयोपादानत्वेन

अद्वैतमते तु माया परिणामिकारणम्, ब्रह्म विवर्तोपादानम्, अथवा माया नोपादानम्, किन्तु ब्रह्मैव निमित्तकारणमपि; सर्वतादात्म्येन सर्वज्ञत्वात्, विवर्तोपादानमात्रत्वाच्च, इति मायामात्रोपादनतावादेन पूर्वपक्षः, ब्रह्मोपादनतास्थापनपरः सिद्धान्तश्च वस्तुतो भिन्नौ सप्रयोजनौ च, येन जगतो व्यावहारिकसत्त्वम्, परमार्थतोऽभावः, यावद्बाधं ब्रह्मणः सद्वितीयत्वम्, परमार्थतोऽद्वितीयत्वं चेति जागर्त्येव फलभेदः ॥

### चिदचिद्विशिष्टकारणतावादस्य सद्विद्याविषयत्वायोगः

तत्र विशिष्टपरिणामवादः "अजामेकामि"तिश्रुतिविरुद्धः 'नविलक्षणत्वाधिकरणवैयर्थ्यापादकः, कृत्स्नप्रसक्त्यधिकरणपूर्वपक्षविद्धरुश्चेति न श्रीभाष्यमतेऽपि तन्मात्रकारणतानिरासमाम्यम ; तत्र विशिष्टस्यैव कारणत्वे विशिष्टस्य तन्मते केवलं निमित्तकारणताया अस्वीकारात्, 'तदैक्षते' त्यादौ विशिष्टविवक्षणायोगात, "ईक्षतेर्नाशब्दमि"ति सौत्रहेत्वनुपपत्तिः,

'तदैक्षते'त्यत्र ब्रह्ममात्रस्य विवक्षणे तु 'सदेवे'त्यत्र सत्पदेनापि ब्रह्ममात्रं विवक्षणीयम्, इति कथं तत्रापि चिदचिद्विशिष्टकारणपरतया सत्पदस्य सिद्धान्ते योजनमिति शङ्का दुरपह्नवा। श्वेतकेतुं प्रति तत्त्वोपदेशपरायां सद्विद्यायां जीवस्य ब्रह्मणः पृथक्कृत्यैव प्रवृत्तत्वात् सत्पदेन जीवविशिष्टस्य ग्रहणं बाधितम्, अन्यथा 'तत्त्वमसी'त्युपदेशवैयर्थ्यम्, इति पूर्वमेवोपपादितम् ॥

### अद्वैतमते सद्विद्याप्रतिपाद्य ईक्षितृत्वादीनां समन्वयाद् न मायोपहितब्रह्मोपादानत्वादिव्याघातः

मायोपहितमेव ब्रह्मेक्षत्यधिकरणसिद्धान्तविषयः, इति सविशेषे तत्रेक्षणादिकमद्वैतमते न व्याहतम्, येन न सौत्रहेतुस्वारस्यमद्वैतमते श्रीभाष्यमत इव स्यात्, इति न तत्सूत्रास्वारस्यमद्वैतमते। ईक्षितृत्वं मायोपहितस्य ब्रह्मणो विवरणदृष्ट्या भामतीदृष्ट्या, चोभयथाऽपि न व्याहन्यते। तत्र विवरणमते मायायास्त्रिगुणायाः सत्त्वपरिणामो ज्ञानं तदुपहिते सविशेषे ब्रह्मणि मायोपाधिसंपर्कवशादयःपिण्डस्य दग्धृत्वमिव न विरुध्यते। निरूपितमिदमधस्तादनादिमायासंबन्धोऽप्यध्यास एव, इति तत्तादात्म्याध्यासात्तद्धर्मत्वं तत्तादात्म्यापन्नस्य ब्रह्मणोऽपि संभवतीति ॥

### जन्यज्ञानाश्रयत्वेनेक्षितृत्वमद्वैतसिद्धान्त एव, न श्रीभाष्यमते

तत्र प्रमातृचैतन्याश्रिततूलाविद्यापरिणामरूपा वृत्तिरविद्यानिष्ठाऽपि प्रमातृचैतन्यगताऽपि इति, जीवस्य भ्रान्तत्वव्यपदेशः, यथा व्यवहारदशायामप्यन्तःकरणधर्मस्य तन्निष्ठस्य च वृत्तिरूपज्ञानस्य संविदन्तःकरणयोस्तादात्म्याध्यासात् ज्ञातृत्वम्, एवमत्रापीति न दोषः। व्यक्तीकरिष्यते चेदमात्मज्ञातृत्वाध्याससाधनावसर उत्तरत्र। ज्ञानात्मनोर्धर्म-धर्मिभावो हि न ज्ञानस्यात्मधर्मत्वमादाय श्रीभाष्यमते निर्वोढुं पार्यते; उत्पत्ति विनाशशालिनो ज्ञानस्य नित्यस्वरूपज्ञानात्मकात्मधर्मत्वायोगात्। न च धर्मभूतं ज्ञानं नित्यमपि; ज्ञानमुत्पन्नं नष्टमित्यनुभवविरोधात् ॥

### आनन्दमयाधिकरणस्याद्वैतमते एव स्वारस्यप्रतिज्ञा

एतेन—आनन्दमयाधिकरणमपि—व्याख्यातम्। इदं ह्यधिकरणं परेषां परपक्षनिराकृतिनिराकरणपूर्वकमद्वैतमत एव स्वरसमिति वेदान्तरक्षामण्यादौ विवृतम् ॥

### आनन्दमयाब्रह्मतायां युक्तिविशेषाः, अद्वैतसिद्धान्ते सूत्र आनन्दमयपदस्वारस्यं च

आनन्दमयपरमात्मतावादे पञ्चकोशोपनिषदादयो बहव उपनिषद आनन्दमयकोशतापरा विहन्येरन् ॥

तत्र—"आनन्दमयोऽभ्यासात्" इति सूत्रे 'अभ्यासादि'ति हेतुरानन्दमयस्यानभ्यासादानन्दमय-ब्रह्मतायां नान्वेति ॥

आनन्दमयशब्दार्थः 'आनन्दमयप्राचुर्यं तु—"स एको ब्रह्मण आनन्दः" इति श्रोत्रियस्यापि जीवस्य, मुक्तात्मनो वा, इति जीवसाधारण्यान्नानन्दमयब्रह्मतासाधनायालम् ॥

"तस्यैष एव शारीर आत्मा यः पूर्वस्ये"ति वाक्यमानन्दमयब्रह्मतावादे वितथम्; "तस्माद्वा एतस्माद् विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः" इति वाक्येनैव गतार्थत्वात् प्रतिपर्यायमन्त एव श्रुतस्य वाक्यस्य 'तस्य पूर्वस्य'पदयोः सामानाधिकरण्येनान्वये तु आनन्दमयपर्याये तत्पर्यायान्ते तदाम्नानं न स्वरसम् ॥

तत्र सूत्रे आनन्दमयपदम्—"ईक्षतेर्नाशब्दमि"त्यत्रेव 'न'शब्दस्यान्वयेन; प्रधानम्, न यतो वेति वाक्यप्रतिपाद्यम्, तत्समानार्थकसदेवादिवाक्यघटकसदादिपदाप्रतिपाद्यत्वादितिवत्, आनन्दमयः, न ब्रह्म, अनभ्यासात्, किन्तु पुच्छवाक्यगम्यं तदधिष्ठानमेव ब्रह्म, अभ्यस्यमानत्वादिति पूर्वपक्षनिरासपूर्वकं सिद्धान्तसमर्थनार्थम् ॥

आकाशाधिकरणादिष्वपि, आकाशः, न भूताकाशः, अतद्धर्मत्वात्, किन्तु ब्रह्मैव; उपदिश्यमानतद्धर्मवत्त्वादित्यादिप्रकारेणैव सूत्रयोजना, सर्वत्र प्रथमाध्याये ईक्षतिसूत्रन्यायेन पूर्वपक्षनिरासपूर्वकसिद्धान्तसमर्थनपरतया सूत्राणां योजनाऽनुसन्धेया ॥

सर्वत्र सूत्रे पदनिर्देशः पूर्वपक्षयुक्तिसूचकः—यथा आकाश-प्राणज्योतिरादावाकाशादिपदं ब्रह्मलिङ्गेतरलिङ्गाबाधितत्वेन स्पष्टब्रह्मलिङ्गत्वसमन्वयार्थम्, अतः साक्षात् सिद्धान्त आनन्दमयस्याविवक्षायामपि विकारार्थकमयडन्ताप्रतिपाद्यत्वात् आनन्दमयाब्रह्मत्वसूचकसिद्धान्तयुक्तिसमर्थनार्थत्वान्न दोषः। पूर्वपक्ष-तन्निरासान्यतरयुक्तिसमर्पकपदघटितत्वमात्रेण स्पष्टब्रह्मलिङ्गत्वसमन्वयो न विरुध्यते ॥

तत्र वृत्तिकारमते न पूर्वपक्षयुक्तिसूचकमानन्दमयपदम्, किन्तु सिद्धान्तपक्षस्यैव सूचकम्, इति यद्यप्याकाशादिसाम्यम्, तथाप्यभ्यासा-

दिति न्यायस्वारस्यं तु भाष्यकारपक्ष एव; अन्यथा विकारशब्दादित्यपि सत्रवैयर्थ्यापत्तिरित्यादि वेदान्तरक्षामण्यादौ व्यक्तम् ॥

### प्रथमाध्याये न पदमात्रं विषयः, किन्तु तत्प्रकरणम् , आनन्दमयप्रकरणस्याद्वैत एव स्वारस्यं च

तथाहि—सर्वत्र प्रथमाध्यायप्रथमपादे ब्रह्मसमर्थनं प्रकरणस्य पदविशेषस्वारस्यमादाय तत्तत्प्रकरणस्यैव विषयतया, यथा जन्मादिसूत्रे, ईक्षतिसूत्रे, अन्तरधिकरणसूत्रे, आकाशाधिकरणादौ च। अयमेव न्याय आनन्दमयाधिकरणेऽपि। इदमेवाभिप्रेत्य शतभूषणी लिखत्यानन्दमयपर्यायपरमेवाऽऽनन्दमयपदमिति; अन्यथा—"अभ्यासादि"ति हेतुसमन्वयो न स्यात्। उभयसम्मतं चेदमिति नात्राद्वैतमते सूत्रास्वारस्यम्। उपर्यपि साध्यब्रह्मजिज्ञासासूत्रसूत्रितब्रह्मण एव साध्यता, न तु प्रतिष्ठाभूतं पुच्छं ब्रह्म जिज्ञास्यब्रह्मणो व्यतिरिक्तम्, किन्त्वानन्दमयप्रकरणमपि जिज्ञास्यब्रह्मपरमेव, न तु सावयवोपास्यब्रह्मपरम्, यदानन्दमयपदमुख्यार्थः कथञ्चनेति वृत्तिकारा मन्यन्ते। उपपादितमिदमधस्तात् ॥

मयटः प्राचुर्यार्थत्वे, विकारार्थत्वे वोभयथाऽपि बद्धमुक्तान्यतरपरत्वं दुरपह्नवमिति। श्रीभाष्यमते हि न बद्धमात्रनिरासोऽपि, इति न सम्भावनाऽपि जिज्ञास्यस्य सविशेषस्य, निर्विशेषस्य वा ब्रह्मण आनन्दमयपदेन ग्रहणे सावयवत्वम्, तत्रापि पुच्छत्वमात्रं वा नाविकारस्य ब्रह्मणः सम्भवति। विकारपरत्वं पुच्छपदस्याप्यबाधम्। आकाशाधिकरणादावप्याकाशपदमेव यदि विषयः, तर्हि कथं संशयः, पूर्वोत्तरपक्षौ वा? कथं वा शास्त्रसङ्गतिः? वेदान्तवाक्यविषयता वा? इति तत्रापि तत्प्रकरणमेव विषयः ॥

तत्र श्रीभाष्यकारपक्षेऽपि सिद्धान्ते प्रकरणस्य ब्रह्मप्राधान्यमुपपादयितुमानन्दमयपदस्य तदानुषङ्गिकजीवपरत्वव्युत्पादनं लक्ष्यमेव। अत एव 'इदं त्विह वक्तव्यमि"त्यादिनाऽऽनन्दमयस्य जीवत्वपक्षोऽपि समर्थ्यते; आनन्दमयप्रकरणमानन्दमयप्राधान्यपरम्, उत ब्रह्मप्राधान्यपरमिति संशये पूर्वोत्तरपक्षोपपादनमानन्दमयपदार्थनिर्णयमप्यपेक्ष्यते, इति नानन्दमयपदार्थस्याप्याकाशादिपदार्थस्येव निर्णेयता। अतो भूमविद्यायामिव प्रक्रान्तशैलीपरित्यागेन पुच्छब्रह्मण एवोपदेशो नात्र विरुध्यते ॥

"तस्यैष एव शारीर आत्मे"त्यानन्दमयपर्यायान्त उपसंहार एव तत्रैवोपदेशसमाप्तिं सूचयति; अन्यथा तद्वाक्यवैयर्थ्यापत्तिः; तस्यानन्दमय-

पर्यायान्त आम्नानानुपपत्तिश्चेत्यादि व्यक्तमन्यत्र, इति नात्रास्वारस्यमद्वैतमते, किन्त्वभ्यासादिहेतूनामनन्वयादिदूषणगणग्रस्तत्वात् मतान्तर एव सूत्रास्वारस्यम् ॥

### चिन्मात्रस्यापि वृत्तिव्याप्यत्वेन जिज्ञास्यता

एतेन—चिन्मात्रस्य स्वयम्प्रकाशस्य ज्ञानाविषयतया जिज्ञास्यत्वायोगादिति शतदूषणी—परास्ता; तत्र प्रमाणजन्यस्य, विचारजन्यस्य वा ज्ञानस्यैवेच्छाविषयत्वात्, अविद्यानिवर्तकवृत्तिमात्रजनकत्वेन वेदान्तानां चारितार्थ्याच्च जिज्ञास्यत्वं ब्रह्मणो न विरुद्धम् ॥

न हि शुद्धब्रह्मणो वृत्तिव्याप्यत्वमपि वार्यते, किन्तु फलव्याप्यत्वमेवेति व्यक्तमन्यत्र। आवरणाभिभवमात्रार्था वृत्तिरिति ब्रह्मसाक्षात्कारमात्रमभिप्रेत्यैवेत्यादि सिद्धान्तलेशसंग्रहादौ व्यक्तम्। वृत्तिव्याप्यत्वं नाम तदाकारत्वमात्रं वृत्तेः, नान्यदिति सर्वमनवद्यम्, इति विषयत्वं ब्रह्मणो वृत्त्युपधानमात्रेण न विरुध्यते, वृत्तिनाशे तु तदपि निवर्तते ॥

### यावदखण्डाकारवृत्ति सर्वेषां प्रामाण्यम्, ब्रह्मज्ञानं तु सर्वदा प्रमाणम्

तच्च विषयत्वं वृत्तिकालीनं व्यावहारिकसत्, ततस्तु मिथ्यात्वं सर्वेषां ब्रह्मव्यतिरिक्तानां यावदज्ञाननिवृत्ति, यावद्वृत्तिनिवृत्ति शास्त्रतो मिथ्यात्वनिश्चयः परोक्ष एव, अपरोक्षनिश्चयस्तु मिथ्यात्वस्य जीवन्मुक्तानां वर्तत एव। तथाप्यज्ञानसंस्कारवशात् प्रारब्धभोगानामनुभवोऽपटुतर एवानुवर्तते, पटुतरो मिथ्यात्वनिश्चयस्तु सप्तमभूमिकास्थानां सर्वव्यवहारविदूराणां दग्धपटन्यायेन सशरीराणामिव सताम्, इति न तादृशबाधितानुवृत्तावपि न प्रामाण्यम्, इति तत्त्वमस्यादिवाक्यानां सत्यब्रह्मस्वरूपविषयाणां तत्राविद्याया दोषविधया हेतुत्वाभावात् प्रामाण्यमनपोहम् ॥

अविद्याया दोषविधया कारणत्वं तत्प्रयुक्तार्थविषयकत्व एव। न च ब्रह्मैवंविधम्, इति न दोषः ॥

### वेदान्तानां लक्ष्यार्थविषयत्वेन प्रामाण्यमभिहितान्वयवादेन

शक्यार्थासम्भवे लक्ष्यार्थमादायैव प्रामाण्यं 'स्वरसम्, न बाधितं शक्यार्थमादाय, बाधितार्थत्वे तत्राप्रामाण्यात्; अन्यथा 'विषं भुङ्क्ष्वे'त्यादिवाक्यानां स्वारस्यं शक्यार्थविषयत्व एव स्यात्, यथा चोपक्रमाद्यनुसारेण ब्रह्मपराणां वाक्यानां लक्ष्यार्थमादाय प्रामाण्यम्; गत्यन्तराभावात्,

तथोत्तरत्र विशदम्। सर्वत्र वाक्यार्थस्य लक्ष्यत्वमभिहितान्वयवादे, इति लक्ष्यार्थमादायाप्रामाण्येऽस्वारस्यम्, सर्वेषां वाक्यानां वाक्यार्थोऽस्वरसश्च स्यादिति बोधनार्थमत्र प्रकरणे शतभूषण्यामभिहितान्वयवादोपक्षेपो विस्तरेण, इति न तदवैयर्थ्यम्। तत्राभिहितान्वयवादे वाक्यार्थस्यावाच्यत्वं संप्रतिपन्नम्, इति वाच्यस्य लक्ष्यत्वम्॥

### ब्रह्मणोऽपि संकेतवशाद् वाच्यत्वम्

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्॥
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मशब्दितम्॥"

इति विष्णुपुराणावलम्बनं तु ब्रह्मणः सङ्केतविशेषेण वाच्यत्वमपि सम्भवति, सत्तामात्रत्वागोचरत्वादिकं तु ब्रह्मणः स्वरूपमात्रस्य साङ्केतिकवाच्यत्वोपपादनार्थतयाऽद्वैतिनां न प्रतिकूलम्। न चेदं विष्णुपुराणवचनं सविशेषमुक्तात्मस्वरूपनिरूपणपरमिति शतभूषण्यां विस्तृतम्। अत्रापि सत्यवसरे तदिदं विशदीकरिष्यते॥

### सविशेषवाक्यानां पर्यवसानं निर्विशेषे

यथाच जन्मादिवाक्यान्यध्यारोपापवादविधया निर्विशेषब्रह्मस्वरूपविवेचनार्थमपेक्षितमध्यारोपावस्थामादाय प्रथमं प्रवर्तमानानि पर्यवसानेनाऽपवादापेक्षितनिषेध्यसमर्पणार्थमन्वारुह्य प्रवृत्तानि, सविशेषवचनान्यपि निर्विशेष एव पर्यवस्यन्ति; सर्वेषां कारणवाक्यानामद्वैत एव पर्यवसानम्, तथा—"अद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वादि"त्यस्य व्याख्यावसरे लघुचन्द्रिकायां व्यक्तम्॥

### कर्म-देवतामीमांसयोस्तत्त्वंपदवाच्यार्थसमर्पकत्वम्

तत्रापि संकर्षकाण्डस्य सविशेषपरत्वम्, तत्पदवाच्यार्थनिरूपणविधया, ब्रह्मजिज्ञासायां तु तदनूद्य निर्विशेषपरत्वमिति व्यवस्थेति देवतामीमांसाब्रह्ममीमांसोभयसार्थक्यम्, श्रीभाष्यमते तु—"अथातो ब्रह्मजिज्ञासे"त्यादि पृथक् प्रतिज्ञादिकं वितथमिति निरूपितमधस्तात्॥

### वेदानां स्वरूपतो मिथ्यात्वेऽपि तद्विषयो ब्रह्म सत्यमेव

तत्र वेदान्तानामविद्यापरिणामत्वाद्, मिथ्यात्वम्, ब्रह्मणो विषयस्य तु सत्यत्वादमिथ्यात्वम्; बोधक-बोध्ययोः समसत्ताकत्वानियमात्। अत एव भ्रमविषयाभिलापकः शब्दो व्यावहारिकः, भ्रमविषयस्तु प्रातिभा-

सिकः, इति शास्त्रस्य व्यावहारिकत्वेऽपि ब्रह्मणः पारमार्थिकत्वमविद्यातत्प्रयुक्तान्यतरत्वप्रयुक्तमिथ्यात्वाभावादुपपद्यते ॥

### प्रमाणपारमार्थ्यं तदपारमार्थ्यं वा न विषयसत्यत्वासत्यत्वप्रयोजकम्

एतेन—प्रमाणपारमार्थ्यमन्तरा प्रमेयपारमार्थ्यं न संभवतीति—परास्तम्; ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रयुक्तत्वाद् मिथ्यात्वस्य, पारमार्थिकत्वस्य च तद्विपरीतत्वात्। न हि प्रमाणमिथ्यात्वे प्रमेयमिथ्यात्वम्; बाष्पे धूमभ्रमेण यथार्थवह्निप्रमाया दर्शनेन तन्नियमासिद्धेः। सर्वं मिथ्येति दर्शिनां जीवन्मुक्तानां भगवत इव लीलामात्रमाहारविहारादिकम्—"कर्मण्यकर्म यः पश्येदि"ति न्यायेन, चक्षुः पश्यति, नाहं पश्यामीति विधया, नात्मीयत्वबुद्ध्या। अयमेव जीवन्मुक्तात् बद्धस्य विशेषः यद् बद्धः सर्वमात्मीयं पश्यति, नैवमपरः—इति ॥

### निर्विशेषत्वेन वृत्तिव्याप्यत्वमविरुद्धम्

तत्र निर्विशेषस्य ब्रह्मणो वृत्तिविषयत्वम्, निर्विशेषत्वं च न विरुद्धम्; यावदज्ञानतत्कार्यानुवृत्ति वृत्तिविषयत्वम्, तन्निवृत्तावनावृतसंविन्मात्रावस्थायां नित्यसिद्धं निर्विशेषत्वमिति व्यक्तमन्यत्र ॥

### "आनन्दमयोऽभ्यासादि"त्यत्रानन्दमयब्रह्मतायां न हेत्वन्वयः

यत्तु—आनन्दमयब्रह्मतायां हेतुः—"अभ्यासादि"ति, तस्याभ्यासकाष्ठापन्नानन्दविशेषपरत्वार्थकत्वेऽपि न तत्र व्यभिचारः; तदानन्दस्य श्रुताघभ्यासाभावात्—इति, तत्राभ्यासपदस्योक्तार्थकत्वं पराभिमतमूरीकृत्याऽऽपादितस्य व्यभिचारस्य परिहारः कं वाऽभ्यासमपरमादाय? यदुत्तरत्रानन्दाभ्यासः परमात्ममात्रविषयः, स एव च हेतुः, तर्हि अभ्यासकाष्ठापन्नेति विशेषिताभ्यासघटितो हेतुः परित्यक्तः; ब्रह्मानन्दाकामहतश्रोत्रियानन्दयोरेकत्वे प्रजापत्यानन्दशब्दगुणितानन्दस्योभयसाधारणस्य कथं नाभ्यासः? यदि धर्मभूतः कश्चनानन्द एवोत्तरत्राभ्यस्यते, तर्हि अद्वैतमत आनन्दमयधर्म आनन्दो न ब्रह्मस्वरूपम्, इति केवलानन्दाभ्यासः, पुच्छब्रह्माभ्यास एव, नानन्दमयाभ्यासः, इति नानन्दमयाधिकरणस्य पतितोत्पतितवत् पुनरपि श्रीभाष्य एव स्वारस्यव्यवस्थापनाय प्रयत्नः सफलः ॥

### ईक्षत्यधिकरणेनाभिन्ननिमित्तोपादानत्वायोगः

अयमेव न्यायः पुनरीक्षत्यधिकरणमवष्टभ्य प्रत्युत्थानेऽपि। न हि विशेषणस्य केवलस्य विशेष्यस्य वोपादानत्वमस्वीकृत्य सविशेषोपादानतावादोऽभिन्ननिमित्तोपादानतामुपपादयितुमलम्। विशेष्यमात्रं निमित्तम्, विशिष्टं तूपादानमिति वादो हि भिन्ननिमित्तोपादानतावाद एव। इयमेव गतिर्विशेषणमात्रस्योपादानत्वं मुख्यम्, विशेष्यस्यैव निमित्तत्वमिति सिद्धान्तेऽपि। न च श्रीभाष्यमते विशेषणं प्रकृतिमात्रमुपादानम्, निमित्तं च; अचेतने सर्वज्ञत्वासम्भवेन न निमित्तत्वम्, विशेष्यमात्रे तु निमित्तत्वसत्त्वेऽपि नोपादानत्वम्, इत्यभिन्ननिमित्तोपादानत्वसिद्धान्तव्याघात एवेक्षत्यधिकरणसिद्धान्ते श्रीभाष्यमते॥

### आकाशाधिकरणस्याप्यद्वैत एव स्वारस्यम्

न चाद्वैतसिद्धान्ते सर्वा ब्रह्ममीमांसा निर्विशेषपरैव, किन्तु यथासम्भवं सविशेषपराऽपि, निर्विशेषपराऽपि, इति सविशेषपरत्वस्याकाश-प्राणाद्यधिकरणेषु केषुचन, किं बहुना? बहुषु स्वीकारेऽपि नास्वारस्यलेशः। तत्र सर्वत्र विशिष्टचैतन्यस्यैव सदादिपदेन, आकाशादिपदेन वा ग्रहणाद् आकाशाधिकरणे तद्विशिष्टकारणताया एव सिद्धान्तितत्वात् कथमाकाशशब्देन भूताकाशस्य ग्रहणम्? इति तत्र पूर्वपक्षो नोत्तिष्ठति, इति श्रीभाष्यमत आकाशाद्यधिकरणानि वितथानि। अयोगव्यवच्छेदार्थेऽत्र पादे केवलं ब्रह्मकारणतायाः श्रीभाष्यमतेऽभावात्। विशेष्यमात्रं ब्रह्म कारणं मा भून्, आकाशमात्रं कारणं भवत्विति शङ्का कथमुत्तिष्ठति? न चात्राकाशपरित्यागेन ब्रह्मोपादानतास्थापनमपि। विशेष्यस्यैव कारणत्वे, सर्वेषां पदानां विशिष्टपरत्वे च कथं विशेष्य विशेषणान्यतरमात्रकारणताऽऽशङ्का-तत्परिहारौ? अद्वैतमते तु भूताकाशमात्रकारणत्वशङ्का, ब्रह्ममात्रकारणत्वसमर्थनं चोपपद्यते, इत्याकाशाधिकरणेऽपि स्वारस्यमनपोढम्॥

### आकाश-प्राणादिशब्दानां तद्विशिष्टपरत्वस्य, प्रकृति-विशिष्टस्य वा ग्रहणायोगः

वस्तुतस्तु—आकाश-प्राणादिवाक्यानामचेतनाकाशादिकारणत्वशङ्केक्षत्यधिकरणेनैव निरस्ता, इति वितथमाकाशाधिकरणमिति शतभूषणी। परमार्थभूषणं तु—सद्विद्याया इवाकाशवाक्यस्यापि कारणवाक्यत्वाविशेषेण श्रुतिप्राबल्येनेक्षत्यधिकरणोपमर्देनाऽऽक्षेप इति—लिखति॥

तत्रेदमेव पृच्छ्यते—यदीयं साङ्ख्यानां शङ्का, तर्हि तन्मते प्रकृतेरेव सर्वभूतकारणत्वात्, आकाशस्य तदकारणत्वात् कथमियं शङ्का? अथ यद्याकाशपदस्य प्रकृत्युपलक्षणत्वमित्याशङ्का, तर्हि आकाशपदेन माया-विशिष्टग्रहणमिति पर्यवसानात् कथं मायाविशिष्टग्रहणे न वैयर्थ्यमापतति? आकाशविशिष्टम्, मायाविशिष्टं वा चेतनमेव,' इतीक्षत्यधिकरणेऽचेतन-कारणत्वशङ्का कथमुदेति? इति तदधिकरणवैयर्थ्यम्। विशिष्टपरत्वमन-भ्युपगम्य यदि तत्र पूर्वपक्षः, तर्हि प्रकृते तदभ्युपगम्यैव विचारप्रवृत्तौ किं निमित्तम्? ब्रह्मण औपचारिकमुपादानत्वमिति न श्रीभाष्यमतमिति पुनः पुनस्तदीयवाक्यानां विरुद्धमेव परमार्थभूषणमाम्रेडयति, सद्द्वारकोपा-दानत्वमपि मुख्यमिति वादस्त्वग्रेवोपरि तत्त्वसुधापरीक्षावसरे निरसिष्यते। अद्वैतमते तु ईक्षत्यधिकरणे, अत्र, सर्वत्र वा चेतनमात्रपरत्वात् सद्विद्या-यामिवात्रेक्षत्यश्रवणाद् न गतार्थत्वमिति वैषम्यम्, इति सिद्धान्ते बहुष्व-धिकरणेषु सविशेषपरत्वस्वीकारे नाद्वैतव्याघात इति तु शतभूषणी ॥

### श्रीभाष्यमत इन्द्रप्राणाधिकरणवैयर्थ्यम्

एतेन—इन्द्रप्राणाधिकरणमपि—व्याख्यातम्। अत्रापीन्द्र-प्राणादि-शब्दानां सर्वेषां तद्विशिष्टैकब्रह्मपरत्वात् कथमिन्द्रादिशरीरमात्रपरत्वशङ्का? इति शतभूषणी लिखति। परमार्थभूषणमपि इन्द्रशरीरकः, प्राणशरीरकः, वामदेवशरीरकः, मन्वादिशरीरक इति वदत् तमेवार्थमनुवदति। पर-न्त्विन्द्र-प्राणादिपरत्वेन पूर्वपक्षं न परित्यजति, स्वीकरोति चैकत्वेऽपि सर्व-शरीरकस्यैकत्वेन इन्द्र-प्राणादिशरीरस्य त्रिविधमुपासनमात्रेति॥

शतभूषणीप्रश्नस्तु—इन्द्र-प्राणादिशरीरकः परमात्मा सत्यमेकः, 'प्राणो-ऽस्मी'ति प्राणशरीरकत्वम्, प्रज्ञात्मशरीरकत्वं चेन्द्रस्य कथमिति? एवं वाम-देव-मन्वादिशरीरकः परमात्मा काममेको भवतु, कथं वामदेवो मनु-सूर्यादि-शरीरक इति? न हि जीवानामपि परस्परं शरीर-शरीरिभावः श्रीभाष्यमते-ऽपि; अन्यथा शतभूषणी-परमार्थभूषणयोरप्येकत्वात् परमार्थभूषणं किमा-त्मानमेव खण्डयति?

### अद्वैतमते जीवानाम्, जीवेश्वरयोर्वा वाच्यार्थयोर्नैक्यम्, किन्तु लक्ष्ययोरेवोपाध्यविवक्षया

अद्वैतमते तु न केवलं जीव-परमात्मनोः, किन्तु जीवानामपि शोधिता-नामेवैक्यम्। इदमेवाश्रित्य—"ज्ञानी त्वात्मैव मे मतम्।" "सर्वभूतस्थ-मात्मानम्" "क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत"—इति च गीयते।

इयं तु शास्त्रदृष्टिरेव, न लोकदृष्टिरित्यभिप्रेत्यैव "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति वामदेवदृष्टान्तेन सूत्रम् ॥

तत्र "अहं मनुरभवं सूर्यश्चे"ति निर्गलितोपाधिस्वरूपचैतन्याभिप्रायेणाभेदे सामानाधिकरण्यं तत्त्वमस्यादिवाक्य इवोपाध्यविवक्षया। अत एव 'मामुपास्वे'ति। न चात्र "सर्वं खल्विदं ब्रह्मे"त्यत्रेव बाधायां सामानाधिकरण्यम्। न हि जीवानां परस्परमधिष्ठानारोप्यभावः, येन बाधायां सामानाधिकरण्यमत्र स्यात्, इति परमार्थभूषणमपरमार्थमेवाद्वैतसिद्धान्तं क्रमपि लिखति। पुनः पुनः सविशेषपरत्वमद्वैतमतेऽत्रेत्याम्रेडनं कथमद्वैतसिद्धान्तस्य दूषणम। यथायथमधिकारिभेदेन कर्मयोग-भक्तियोग-ज्ञानयोगाः सर्वेऽपि प्रमाणमेवेत्यद्वैतसिद्धान्तं किमिति वाऽन्यथाऽनूद्य दूष्यते। सर्वथा तु प्रथमाध्यायप्रथमपादस्वारस्यमादित आन्तमद्वैतसिद्धान्त एव। किं बहुना ? सर्वत्राऽप्यध्यायेषु तथा। अधिकं तु भाष्यप्रदीपादौ सूत्राधिकरणाद्युपक्रम-परामर्शोपसंहारेण व्यक्तीकृतम्। तदेवं प्रथमाध्यायस्वारस्यविचारः ॥

## अथ द्वितीयाध्यायविचारः

### श्रीभाष्यकाराणां पाशुपताद्यपेक्षया पञ्चरात्रे पक्षपाते न किमपि कारणम्

द्वितीयाध्यायद्वितीयपादे—

"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ॥
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥"

इति सर्वेषामेषां नानामतत्वम्, नैकमत्यमिति वा प्रतिज्ञानात् पाञ्चरात्रस्य वैदिकसिद्धान्तेन यथा नैकमत्यम्, तथा तत्रैव निर्दिष्टानां साङ्ख्ययोग-पाशुपतानाम्, इति श्रीभाष्यं पञ्चरात्रातिरिक्तानामवैदिकत्वं स्वकुर्वाणं कुतो वा पाञ्चरात्रस्यापि नानामतत्वं न स्वीकरोति ? तत्रांशविशेषे नानामतत्वाभावे किं क्वचन पाञ्चरात्र-पाशुपतयोरैकमत्यम्, किं वा पाशुपतवैदिकयोः ? इति कुतः, सर्वेषां नानामतत्वोक्तिस्त्वंशविशेषमात्रमभिप्रेत्येति विवेचनीयम् ॥

### वेदाविरुद्धांशे सर्वेषां प्रामाण्यमद्वैतसिद्धान्तेऽपि

तत्रांशविशेषे नानामतत्वं सर्वेषाम्, वैदिकेऽद्वैतसिद्धान्तेऽपि स्वीक्रियते। वैदिकेन मतान्तराणां वैमत्यं तु जगत्कारणस्वरूपनिर्णये,

तेन प्रसङ्गेन जगत्स्वरूपे, मुक्तिसाधने, प्रधाने, मुक्तिस्वरूपे च। सर्वमपीदं प्राधान्येन ज्ञेयं ब्रह्मस्वरूपम्, ज्ञातारं चाश्रित्येति वक्तव्यम्। तत्र जीव-ब्रह्मैक्यानुबन्धविचारस्तु विलक्षण एव; जीवतत्त्वस्यैकस्योभयत्रानङ्गीकारात्। तत्र च वैदिकदर्शनं यदि पाञ्चरात्रादतिरिक्तम्, तर्हि नानामतत्वे न विवादलेशस्यावसरः। तत्र वेदात् पाञ्चरात्रस्य भेदात् पृथग् निर्देश एव नास्तीति मुष्टिमेयेनोदनेन कूष्माण्डस्यावरणमात्रम्। तत्र "वेदारण्यक-मेवेति"पाठस्य कल्पने तु पाञ्चरात्रदर्शनमपि न प्रमाणतामावहेत्॥

### पाञ्चरात्रस्यावेदत्वम्

"पाञ्चरात्रस्य सर्वस्य कर्ता नारायणः स्वयम्॥"

इति तत्र प्रकरणे कुतः पाञ्चरात्रस्यानिर्दिष्टस्य कर्तृव्यवस्था? पाञ्चरात्र-पदस्यैव तत्राभावात्। वेदारण्यकमितिपदं तु न पाञ्चरात्रे प्रसिद्धम्; तत्र तत्तन्निर्देशपूर्वकं कर्तृनिर्देशात्, वेदारण्यकस्य पारिशेष्याच्च तेन पाञ्चरात्रस्य ग्रहणमिति वादस्तु वेदारण्यकपदस्य पाञ्चरात्रे प्रसिद्धत्व उप-पद्येत। न च सत्यन्येषां तत्तत्पदेनैव कर्तृप्रस्तावे, वेदारण्यकमात्रस्य पाञ्च-रात्रपदेन प्रस्तावेऽस्ति किमपि नियामकम्। यद्यारण्यकपदेन पाञ्चरात्रस्य ग्रहणम्, तर्हि को वा वेदपदार्थः? यद्यपौरुषेय आम्नायः, एवमपि वेद-भिन्नमेव पाञ्चरात्रम्, इति वादयोरुभयोरपि पाञ्चरात्रावैदिकत्वमेव। न च पाञ्चरात्रं वेदः; अन्यथा वेदस्यापौरुषेयत्वात् तस्य कर्तृनिर्देशो नोपपद्यते, इति वेदारण्यकपदेन समाहारद्वन्द्वेन निर्दिष्टस्य वेद-पाञ्चरात्रसमुदयान्त-र्गतेनारण्यकपदेन पाञ्चरात्रस्य ग्रहणम्, वेदपदेन तु तदन्यस्य ग्रहणम्, इति पाठभेदेनाप्युपलभ्यमानेनैकवाक्यता सिद्ध्यति, इति न नानामतत्वं वेद-पाञ्चरात्रयोरपलपितुं शक्यते। अतः पाञ्चरात्रं न वेदान्तसिद्धान्तस्य मूलम, किन्तु तद्विरोधात् तत्परिपन्थ्येव॥

### द्वितीयाध्यायद्वितीयपादे पाञ्चरात्रा-प्रामाण्यव्यवस्थैव युक्ता

तत्र अविरोधाऽध्यायाख्यद्वितीयाध्यायप्रथम-द्वितीययोः साङ्ख्यादि-दर्शनानां पौरुषेयाणामपौरुषेयप्रबलवेदान्तबाधने शक्त्यभावात्, विप्रति-पेधात्, युक्तेः श्रुतिबाधकत्वायोगाच्च वेदाविरुद्धांऽशे प्रामाण्यम्, विरुद्धांशे त्वप्रामाण्यमिति व्यवस्था, न 'त्वविरोधाध्याय' इति समाख्यया तत्र समालोचितानां सर्वेषां वेदान्तेनाविरोधसमर्थनमात्रम्। तत्र यदि

पाञ्चरात्रस्य सर्वांशे वेदान्तेनाविरोधः, तर्हि कथम्—"साङ्ख्यं योगः" इति वचने तस्य, वेदानां च नानामतत्वोल्लेखः ? अन्यथा किमिति वा वेद-विरुद्धवादानां साङ्ख्य-योग-पाशुपतानामिव पाञ्चरात्रस्यापि द्वितीयपादे विरुद्धमतनिरासावसरे चर्चा ? अंशतोऽविरोधस्तु साङ्ख्य-योग-पाशुपत-दर्शनैरपि वेदान्तस्य समानः। न चाद्वैतसिद्धान्तेऽपि पाञ्चरात्रस्य सर्वांशे सौगतार्हतादिमतानामिवात्यन्तहेयत्वमभिप्रेयते, किन्तु जीवोत्पत्तिवादे, येन जीवब्रह्मैक्यसिद्धान्तस्य वैदिकस्य बाधः, इति तस्मिन्नेवांशेऽत्रा-प्रामाण्यम् ॥

### वेद-पाञ्चरात्रयोर्विरुद्धस्थानानां संग्रहः

तत्र परमार्थभूषणं भगवत्पादानां पाञ्चरात्राप्रामाण्यपरतया जीवो-त्पत्त्यादिविषये वेदान्तविरोधोद्भावनं जीव-मनस्स्वरूपस्य पाञ्चरात्रसि-द्धान्तसिद्धस्याज्ञानमूलमिति निरूपयितुं महाभारतशान्तिपर्वगतानि वचनानि बहूनि संगृह्णाति। तत्र "संकर्षणादीनां जीवादीनामपि वासु-देवात्मत्वम्—

ततो भूयो जगत् सर्वं करिष्यामीह विद्यया ॥
अस्मिन् मूर्तिश्चतुर्थी या साऽसृजच्छेषमव्ययम् ॥
स हि संकर्षणः प्रोक्तः प्रद्युम्नं सोऽप्यजीजनत् ॥
प्रद्युम्नादनिरुद्धोऽहं सर्गो मम पुनः पुनः ॥
अनिरुद्धात्तथा ब्रह्मा तन्नाभिकमलोद्भवः ॥
क्रमशः सर्वभूतानि चराणि स्थावराणि च ॥
एतां सृष्टिं विजानीहि कल्पादिषु पुनः पुनः ॥"

इति वासुदेवात् संकर्षणस्य, ततः प्रद्युम्नस्य, ततोऽनिरुद्धस्य, ततो ब्रह्मणः, ततश्चराचराणामुत्पत्तिर्विशदीक्रियते। सति चैवं न केवलं संकर्षणा-दीनाम्, किन्तु चराचराणामप्युत्पत्तिः प्रतिपाद्यते। तत्र संकर्षणोऽपि जीव एव, परन्तु भगवत एव स्वरूपविशेष इति यदि सिद्धान्तः, तर्हि न केवलं भगवत्स्वरूपातिरिक्तानां जीवानाम्, किन्तु भगवत्स्वरूपस्यापि जीव-स्योत्पत्तिस्त्वाम्नातैव। यदि तत्र परस्परया वासुदेवादुत्पत्तिमात्रेण प्रद्युम्नादी-नामपि भगवत्स्वरूपत्वम्, तर्हि अनिरुद्धादुत्पन्नस्य ब्रह्मणः, तत उत्पन्नानां चराचराणामपि भगवत्स्वरूपत्वाविशेषात् सर्वानुत्पत्तिवादापत्त्या "यतो वा इमानि भूतानि जायन्ते' इति श्रुतिविरोधः ॥

### पाञ्चरात्रे जीवोत्पत्तिवादप्रदर्शनम्

पाञ्चरात्रे जगदुत्पत्तिवादोऽपि वर्तते। तत्र च चराचराणामुत्पत्ति-र्मुख्या, संकर्षणादीनामुत्पत्तिस्तु यदि गौणी, तर्हि तत्र का वा विनिर्गमना ?

तत्र जीवानां प्रद्युम्नादीनां भगवत्स्वरूपाणां करणत्वमपि वेदान्तविरुद्धम्, जीवोत्पत्तिवादस्यौपाधिकत्वमिति "चराचरव्यपाश्रयस्तु" इति सूत्र-वर्णितं वेदान्तसम्मतं प्रकारान्तरेण केनापि सूत्रानारूढम्, धर्मभूतज्ञान-विकासेन तस्य जीवस्योत्पत्तिकल्पनाऽपि न प्रामाणिकी ।।

### प्रद्युम्नाद्युत्पत्तिवादस्य गौणत्वायोगः

तत्र मन आद्यभिमानितया जीवादिव्यवहार इति तु सर्वत्राभिमन्यमाना-भिमानिनोरभेदव्यपदेशस्य पारिभाषिकत्वात्, वेदान्तादिप्रमाणासिद्धत्वात्, अभिमन्यमानोत्पत्तिमात्रेणाभिमान्युत्पत्तिवादस्याभिमन्यमानजीवोत्पत्ति-वादसापेक्षत्वाच्चाभिमान्युत्पत्तिवादोऽर्थसिद्ध एव। संकर्षणाद्युत्पत्तिवादस्यौ-पचारिकत्वम्, इत्यंशतो वेदविरोधेन पाञ्चरात्राप्रामाण्यवाद एव युक्तः ।।

### महाभारतोद्धृतदर्शनानामिव प्रायपाठात् पाञ्चरात्रस्यापि निरासे तात्पर्यम्

भारतप्रामाण्येन साङ्ख्यादीनामपि सर्वात्मनाऽप्रामाण्यशङ्का-समा-धानादिकं सर्वं निरालम्बम्, यतो न तथा शतभूषणी वदति ।।

अत एव साङ्ख्य-योग-पाशुपतानामिव प्रायपाठात् पाञ्चरात्रस्या-ऽप्रामाण्यमेव सौत्रम्, इति तन्निरास एव सूत्राणां स्वरसं तात्पर्यम् ।।

### द्वितीयाध्याये पाञ्चरात्रप्रामाण्यसमर्थनायोग इत्येव शाक्तमत-निराकरणं श्रीमाध्वभाष्ये, इति तन्मतरीत्याऽपि ब्रह्म-कारणतायां वैमत्यं श्रीभाष्यमते

श्रीमाध्वैः शाक्तमतनिराकरणपरत्वं पाञ्चरात्रस्थाने यदङ्गीकृतम्, तदपि सूचयति—द्वितीयाध्यायद्वितीयपादो निरस्यमतसमालोचनमात्रपरः—इति, इति तदीय एव पन्थाः किमिति श्रीभाष्यकारैरपि नानुक्रियते ? श्रीमाध्वसम्प्र-दायेऽपि पाञ्चरात्रप्रामाण्येऽपि ब्रह्मकेवलनिमित्तकारणताया एव स्वीकाराद् न श्रीभाष्यसिद्धान्तः तदंशे पाञ्चरात्रसिद्धान्तः, इति पाञ्चरात्रसिद्धान्तस्यापि विरोध एव श्रीभाष्यमते। यदि ब्रह्माभिन्ननिमित्तोपादानमित्येव पाञ्चरात्र-सिद्धान्तः, तर्हि पाञ्चरात्रप्रामाण्यवाद एव सूत्रस्य तात्पर्यं स्यादित्येव

श्रीमध्वसम्प्रदायस्यापि तात्पर्यम् , इति पाञ्चरात्रनाम्ना वेदविरुद्धानामंशानां स्वसिद्धान्तत्वेन स्वीकारो हि श्रीभाष्यकाराणामसाम्प्रतमित्येव तत्तात्पर्यम् ॥

### निरस्यमतनिरासप्रसङ्गे पाञ्चरात्रप्रामाण्य-समर्थनमनुचितमिति न्यायसुधादयः

एतेन—अत एव पाञ्चरात्राप्रामाण्यासम्भवात् माध्वैर्मतान्तरनिरास-परत्वमस्याख्यायीति—व्याख्यातम् । सर्वथा तु न्यायसुधादयो निरस्यमत-विचारप्रसङ्गे पाञ्चरात्रप्रामाण्यसमर्थनमप्राप्तावसरमिति ब्रह्मसूत्राणां पाञ्च-रात्रप्रामाण्यपरतया विवरणमत्यन्तमस्वरसमिति श्रीमाध्वभाष्यादिकमनु-सृत्य गमयन्ति ॥

### अविरुद्धांशे पाञ्चरात्रमपि प्रमाणम्

को वा विप्रतिपद्यते पाञ्चरात्रस्याप्यभिगमनोपादानेज्या-स्वाध्याय-योगादयः, भगवदाराधनं च सर्वसम्मतमिति, इति तस्मिन्नंशे पाञ्चरात्रम-द्वैतिनामपि प्राणबन्धुरेव, परन्तु वेदान्तपरमसिद्धान्तजीवेश्वर-तत्कारणत्व-मुक्तिसाधन-मुक्तिस्वरूपादौ तदद्वैतिनां प्राणघातकम् । अत एव विज्ञाय तत्त्वमिदं पाञ्चरात्रस्य बन्धोरप्यप्रामाण्यमेव सूत्रकारेण विना पक्षपातं समर्थितम् ॥

अभिगमनोपादानादिकं तु भगवत्पादादिसम्मतस्मृतिपुराणेतिहासा-दिभिर्वेदाविरोधिभिरपि सुज्ञानम् , इति न तदर्थमेकान्तेन पाञ्चरात्रमेव प्रमाणीकर्तव्यम् । सर्वथा तु जीवस्वरूपे, ब्रह्मकारणत्वादौ च पाञ्चरात्रं वेदान्तविरुद्धत्वाद् न प्रमाणम् , इति तत्प्रामाण्यस्थापनपरतया सूत्राणां योजनमत्यन्तमेवास्वरसमिति द्वितीयाध्यायविचारः ॥

## अथ तृतीयाध्यायविचारः

### साधनाध्यायस्य साधकावस्थमधिकृत्य प्रवृत्तिः, न मुक्तावस्थम्

तत्त्वमस्यादिमहावाक्यावगतजीवब्रह्मैक्यं जीवत्वेश्वरत्वोपलक्षितानावृ-तसंविन्मात्रस्वरूपम् , यस्य मुक्तात्मस्वरूपस्य न साधनापेक्षा, विचाराधि-कारः, किं बहुना ? न शरीरधर्मब्राह्मणत्वाद्यवस्थाविशेषादिसापेक्षविधि-निषे-धाधिकारो वा, इति साधनाध्यायः साधकाधिकारनिरूपणपरः, तत्तच्छरी-रोपाधिकौपाधिकभेदवज्जीवमभिप्रेत्य प्रवृत्तोऽपि नाद्वैतविरोधी; साधका-वस्थाविषयत्वात् सर्वेषां साधनविचाराणाम् , इत्येकस्यैवात्मनः तत्तदवस्था-

भेदनिबन्धनं भेदमादाय वैराग्यपादादिप्रवृत्तिः। श्रीभाष्यमतेऽपि तु मुक्तात्मानमधिकृत्य न साधनाध्यायः; अन्यथा तद्विचारवैयर्थ्यात् ॥

### तृतीयाध्यायस्य जीवस्वरूपभेदतात्पर्याभावः

मुक्तावस्थायामपि जीवानां भेद एवेति वादः श्रुति-स्मृत्यादिविरुद्ध इति फलाध्याये व्यक्तं भविष्यति। न हि मुक्तावस्थ आत्मेव साधनावस्थोऽपृथक्सिद्धं परमात्मशरीरमात्रमात्मानं मन्यते, इति पृथक्सिद्धतयाऽऽत्मानं मन्यमानः साधकावस्थः, इत्यवस्थाभेदनिबन्धनरूपभेदः सम्मत एव, इति न जीवस्वरूपभेदोऽस्य लक्ष्यम्, इति तृतीयाध्याये न सूत्रास्वारस्यलेशोऽपि ॥

### तृतीयाध्यायो जीवब्रह्मैक्यसिद्धान्ताविरोधी

न ह्यद्वैतसिद्धं जीवेश्वरैक्यं जीवेश्वरत्ववैशिष्ट्यदशायाम्, किन्तु तदुपलक्षितदशायाम्। न हि साधनावस्थायां जीवः, ईश्वरो वा परस्परमभिन्नमात्मानं जानाति, इति न भूषणापादितदोषप्रसङ्गोऽद्वैतसिद्धान्ते ॥

### अवस्थाभेदेन जीवेश्वरयोर्भेदाभेदौ, अतो न भोगादिसाङ्कर्यम्

व्यवस्थापितश्चायं सिद्धान्तो द्वितीयाध्यायप्रथमपादे "इतरव्यपदेशाद्धिताकरणादिदोषप्रसङ्गः" इत्याद्यधिकरणेषु "अधिकं तु भेदनिर्देशात्" इत्यादौ भगवत्पादैः। तथा च भाष्यम्—यत् सर्वज्ञं सर्वशक्ति ब्रह्म नित्य-शुद्ध-बुद्ध-मुक्तस्वभावं शारीरादधिकमन्यत्, तद् वयं जगतः स्रष्टारं वदामः। न च वयं शारीरं स्रष्टारं ब्रूम, येन हिताकरणादयो दोषाः प्रसज्येरन्नित्यादि। श्रीभाष्यसिद्धान्तेऽप्यस्मिन्नधिकरणे सर्वकारणस्य ब्रह्मणः चिदचिद्विशिष्टस्य स्वविशेषणीभूतचिदचिदाख्यकार्यं प्रत्येव कारणत्वेन चिद्रूपकार्येणापि ब्रह्मणोऽनन्यत्वात् स्वाभिन्नं जीवं जानतो ब्रह्मणः जीवसम्बन्धिहिताकरणादि स्वस्येति ज्ञाने हितरूपजगत्करणम्, अहितजगदकरणं च स्यादिति शङ्कायाम्—"अधिकं तु भेदनिर्देशादि"ति सूत्रविवरणप्रसङ्गेन-न हि वयं जीव-ब्रह्मणोः स्वरूपैक्यरूपमनन्यत्वं वदामः, किन्तु विशिष्टयोरेवैक्यमनन्यत्वाख्यमित्येवात्र मन्यते। तत्र भेदाभेदनिमित्तप्रकारभेदस्तु वर्तत इति त्वन्यदेतत्, इति जीवेश्वरैक्यसिद्धान्तेऽपि तद्भेदाभेदयोरवस्थाभेदनिबन्धनत्वाद् नेश्वरो जीवाभिन्नतयाऽऽत्मानं ज्ञातुं शक्नोतीति मतद्वयेऽपि प्रकृते विषये स्वारस्यम्, अस्वारस्यं वा समानम् ॥

श्रीभाष्यमतेऽप्यनन्यत्वं न भेदं विना, इति न हिताकरणादिप्रसङ्गः

तत्र श्रीभाष्यमते मुक्तावस्थायामिव बद्धावस्थायामपि परमात्मा पृथक्सिद्धत्वात् कार्य-कारणयोरिवानन्यत्वे कथं शङ्कापरिहारः? तत्र पिण्डत्वावस्थस्योपादानद्रव्येणैक्यम्—विशेषणीभूतावस्था द्रव्यस्य, न स्वरूपैक्यम्, अतो जीव-ब्रह्मणोर्भेदः सिद्धान्ते, जीवस्यावस्थात्वात्, ब्रह्मणश्चोपादानस्य द्रव्यत्वात्। यद्यपि न ब्रह्मानन्यत्वम्, किन्तु मृदादिदृष्टान्त इवावस्था-तद्वतोरिवात्रापि साक्षादपृथक्सिद्धिस्वरूपसम्बन्धस्याऽऽवश्यकत्वात् कथं नानन्यत्वम्, कार्य-कारणयोरपृथक्सिद्धत्वस्यैवानन्यत्वव्यपदेशनिमित्तत्वात्, ब्रह्मणोऽपि तेन न्यायेन न कथमनन्यत्वं जीवैरिति शङ्का हि दार्ष्टान्तिके ब्रह्मणि निर्विकारत्वनिर्वाहार्थं सत्यप्यपृथक्सिद्धत्वे भेद एव वर्तते, इति श्रीभाष्यप्रकाशिकायां व्यक्तम्॥

श्रीभाष्यमतेऽपृथक्सिद्धौ स्वतन्त्रभेदाभावात्
हिताकरणादिदोषपरिहारासंभवः

सति चैवं अनन्यताव्यपदेशनिमित्तेऽपृथक्सिद्धत्वे विद्यमान एव न जीवस्य ब्रह्मणा स्वतन्त्रो भेदः स्वीक्रियते। अस्वतन्त्रभेदोऽयं श्रीभाष्यसिद्धान्ते दृष्टान्तविरुद्धः। तत्र भेदो निर्विकारस्य ब्रह्मणः साक्षादवस्थाऽयोगात् स्वतन्त्रो वा भवतु, अनन्यत्वेनाविरुद्धाऽपृथक्सिद्धिप्रयोजकाभेदो व्यवहारप्रयोजकभेदविनाभूतो वा, उभयथापि न कार्य-कारणभावस्थल इव न भेदाविनाभूत इति तु तत्त्वम्॥

सविशेषपरत्वस्यापि स्वीकाराद् न ब्रह्ममीमांसायां
गुणोपसंहारपादानुपपत्ति-तत्परिहारौ

एतेन—निर्विशेषवादे गुणोपसंहारपादः शिरःशूलमिति—परास्तम्; तत्र यदि निर्विशेषपरत्वे गुणोपसंहारायोगात् सविशेषपरत्वमेव सर्वेषां वेदान्तानाम्, सर्वस्या ब्रह्ममीमांसायाश्च वक्तव्यम्। अतः सविशेषपरत्वमेव वेदान्तानामिति मन्यते, तर्हीदं मन्यताम्—सविशेषपरत्वमपि वेदान्तानाम्, ब्रह्ममीमांसायाश्चेति, तावताऽपि गुणोपसंहारपादोपपत्तिरेव॥

निर्विशेषवाक्यानामप्युपसंहारोऽपि वर्तते

न चाद्वैतवादेऽपि निर्विशेषपरत्वमेवैकान्ततो ब्रह्ममीमांसायाः, इति न तेन पादेनाद्वैतव्याघातः, परन्तु गुणानामुपसंहार इति प्रायिकाभिप्रायम्। निर्विशेषस्वरूपोपसंहारोऽपि तत्तच्छाखाविशेषगतनिर्विशेषपराणां न्यायसिद्ध इति तु भाष्यादिषु व्यक्तम्। विचार्यते च "आनन्दादयः प्रधा-

नस्ये"त्यादौ निर्विशेषस्वरूपाणां तत्तच्छाखागतानामुपसंहारोऽपि भाष्ये तत्र तत्र ॥

प्रपञ्चनिषेधवाक्यानामुपसंहारः परविद्याया
निर्विशेषतायाः साधकः

एतेन—"अक्षरधियां त्ववरोधः" इति सूत्रमपि—व्याख्यातम्; तस्यापि ब्रह्मणि सर्वविशेषशून्य एव भूतयोनित्वप्रतिपादनेन स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वरूपमिथ्यात्वनिरूपणद्वारा वस्तुगत्या तदभाववति कल्पितेन रूपेणैव जगतो भानेनाधिष्ठानविषमसत्ताकत्वरूपविवर्तत्वबोधनद्वारा कारणवाक्यानामद्वैतपर्यवसानं व्यवस्थापयितुं सर्वविशेषशून्यत्वमेव ब्रह्मण इति सूचनद्वारा, गुणनिषेधोपसंहारद्वारा च, इति न गुणोपसंहारमात्रमुक्तपादार्थः, किन्तु तन्निषेधोपसंहारोऽपि ॥

न च सर्वगुणनिषेधद्वारा गुणनिरूपणं तत्र गुणानां कल्पितत्वं विनोपपद्यते, इति सर्वविशेषशून्ये श्रूयमाणं जगत्कारणत्वं जगतो मिथ्यात्व एव स्वरसम्; अन्यथाऽदृश्यत्वादीनां तत्र सङ्कोचापत्त्या मतान्तर एव स्वारस्यम्। अतो गुणोपसंहारसमाख्यामात्रं श्रौतं निर्विशेषत्वमन्यथयितुं नालम् ॥

वेदान्तानां वस्तुतः शुद्धप्रत्यगात्मपरत्वेऽपि
कर्माधिकारादिव्यवस्था

एतेन—तृतीयचतुर्थपादोऽपि—व्याख्यातः; स हि तुरीयाध्यायप्रथमपादप्रथमाधिकरणं कर्माङ्गकर्तृ-देवतास्तावकतयाऽर्थवाद इति जैमिनियमतनिरासार्थम्। तत्र जीवात्मनः कर्मानङ्गस्य संविन्मात्रस्योपनिषत्सु प्रतिपादनात्, तस्य च कर्मशेषत्वाद् न जीवस्तावकतयाऽर्थवादत्वमित्यद्वैतिनां विवरणम्। श्रीभाष्यविवरणं तूपनिषदां न जीवात्मपरत्वम्, किन्तु परमात्ममात्रपरत्वम्। स च न कर्माङ्गमिति नार्थवादत्वमिति। तत्र जीवात्मपरत्वमङ्गीकृत्य वेदान्तानां कर्माधिकारविरुद्धं जीवस्वरूपमादाय सिद्धान्तोऽद्वैतमते, श्रीभाष्यसिद्धान्ते त्वन्यपरत्वमादाय पूर्वपक्षः, अन्यपरत्वमादाय सिद्धान्तः, इति स्वारस्यमद्वैत एव ॥

कर्मणां ब्रह्मविचाराऽपेक्षाऽनपेक्षयोर-
विरोधोऽद्वैत एव, न श्रीभाष्ये

एतेन—"अग्नीन्धनाद्यनपेक्षा" इति सूत्रम्, "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति च परस्परविरुद्धार्थतयेव प्रतीयमाने सूत्रे अपि—

व्याख्याते। तत्र विरोधपरिहारः सूत्रस्यास्यापि "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती"ति वाक्यस्येव साक्षात् विद्यायां न कर्मापेक्षा, किन्तु विद्याप्रतिबन्धकनिरासद्वारा, इत्यद्वैतमते स्वारस्यम्, तेन हि जन्मान्तरीयकर्मणाऽपि विद्याधिकारसिद्धयोर्ध्वरेतसां विरक्तानां ब्रह्मचारिणाम्, गृहस्थानाम्, सन्यासिनामन्येषां च साधनचतुष्टयसम्पन्नानामधिकारसिद्धया "तमेतं वेदानुवचनेने"ति वाक्यस्य न गृहस्थमात्रपरत्वं सिद्धयति, श्रीभाष्यमते तु नैवम्। तत्र हि कर्मविचारानन्तरमेव ब्रह्मजिज्ञासा कर्मानधिकारिविषयेऽपि कथं नियन्तुं शक्यते? किं वा श्रुतिवाक्यं ब्रह्मचारिणाम्, ऊर्ध्वरेतसां वा यज्ञादिकर्मानधिकारिणां विना कर्मविचारमधिकारकारणं श्रीभाष्येण मन्यते। यद्यप्यग्नीन्धनं गृहस्थमात्रविषयम्; तथापि तत्रादिपदप्रयोगात् तत्तदाश्रमकर्मापेक्षाऽपि गृहस्थव्यतिरिक्तानां वारिता स्यात्, तेन च तत्तदाश्रमात् पातित्यमपि स्यात्। अतो विद्याधिकारसिद्धयर्थं तत्तत्कर्माधिकारः सर्वेषाम्, अनन्तरं तु विद्यार्थं न कर्मापेक्षा सन्यस्तानामपि, किन्तु ज्ञानप्रतिबन्धनिरासार्थैव विविदिषासंन्यासिनामिति व्यवस्थास्वारस्यमद्वैत एव कर्मापेक्षादिव्यवस्थायाः, न तु भिन्नविषयतयाऽधिकरणद्वयव्यवस्था श्रीभाष्याभिमता स्वरसा॥

### मतद्वयेऽप्यध्ययनस्यार्थज्ञानार्थत्व-
### तदभावभयोर्लक्ष्यनिरूपणम्

तत्र "शेषत्वात् पुरुषार्थवादः" इति सूत्रमध्ययनस्यार्थज्ञानार्थत्वे स्यात्, अन्यथा वेदान्तानां कर्माङ्गतत्कर्तृ-देवतास्तावकतया प्रामाण्यं स्यादिति श्रुतप्रकाशिकायां प्रथमसूत्रार्थविवरणावसरे व्यक्तम्॥

अत्रापि त्वर्थज्ञानार्थत्वमादाय पूर्वपक्षः, सिद्धान्तस्तु नार्थज्ञानार्थत्वमध्ययनस्य, अतो नार्थवादत्वम; तथापि कथञ्चन स्वतन्त्रमक्षरग्रहणार्थत्वेऽप्यध्ययनस्य "ज्ञेयश्चे"ति ज्ञानविधिर्वर्तत एवेति शङ्कायामुपनिषदां ब्रह्मनिरूपणे तात्पर्यम्, अतो नार्थवादत्वमिति व्यवस्था श्रीभाष्ये। अद्वैते त्वर्थज्ञानार्थत्वेऽपि कर्मानङ्ग-तद्विरोधिजीवस्वरूपविवेचनपराणां तदर्थवादत्वायोग इति। तथा चोभयत्रापि वेदार्थज्ञानस्य नियतत्वे न विवादः। अध्ययनविधेरर्थज्ञानार्थत्वे परेषामस्ति विप्रतिपत्तिः। सूत्रकाराभिप्रायस्तु—"अध्ययनमात्रवतः" इत्यत्राप्यध्ययनशब्दस्यार्थज्ञान फलकाध्ययनपरत्वात्, मात्रपदेनाध्ययनवन् एवाधिकारविवक्षणाच्च न विरोधलेशोऽपि, इति नाद्वैतेऽस्वारस्यमुक्तसूत्रस्यापि॥

### "अध्ययनमात्रवतः" इति सूत्रस्याद्वैत एव स्वारस्यम्

"अध्ययनमात्रवतः" इति सूत्रं तु कर्माधिकारप्रयोजकवेदभागमात्रस्याध्ययनम्, कर्मज्ञानमात्रं वा कर्माधिकारप्रयोजकम्, न त्वात्मज्ञानमपि। अत आत्मविज्ञानस्य स्वातन्त्र्येण फलहेतुत्वं न विरुद्धमिति निरूपणार्थमेवाऽत्र मात्रपदमात्मज्ञानस्य व्यावर्तकम्, न कर्मज्ञानस्य, इत्यध्ययनस्यार्थज्ञानार्थत्वपक्ष एव श्रौतः, अन्यथा विनाऽर्थज्ञानं कर्माधिकारेऽर्थज्ञानस्यावैधत्वे च विनाप्यर्थज्ञानं कर्माधिकारः स्यात्, इत्य'र्थी समर्थो विद्वान् कर्माधिकारी'ति सिद्धान्तो भज्येत। सर्वथा त्वैच्छिकत्वेऽपि धर्मजिज्ञासायाः, ब्रह्मजिज्ञासाया वा नार्थज्ञाननिरपेक्षता कर्मणामिति तु तत्त्वम्। इदं सर्वमभिप्रेत्यैव जिज्ञासाद्वयस्यापि वैधत्वं भामती समर्थयति॥

इतरव्यपदेशाधिकरणे "अधिकं तु भेदनिर्देशादि"ति सूत्रेऽद्वैतमते निर्विशेषब्रह्मणो ग्रहणम्, परन्तु तेन जीवस्याद्वैतमतेऽपि नाभेदः, किन्तु भेद एवेति निरूपितमधस्तात्, परन्तु तत्र श्रीभाष्यमत एव ब्रह्मणोऽवस्थाविशेषरूपस्य जीवस्य मृदवस्थाविशेषघटस्येवाभेदापत्त्येश्वरविवक्षायामप्यनन्यत्वस्यावारणात् हिताकरणादिदोषप्रसक्तिर्न सुवारा, इति 'भक्षितेऽपि लशुने न रोगशान्तिः'। तत्र दृष्टान्त-दार्ष्टान्तिकयोः कथञ्चन वैषम्यमपि स्वीकृत्य दोषपरिहारस्तु श्रीभाष्यमतेऽस्वरस इति हृदयेन श्रीभाष्यानुयायिनोऽनुमन्यन्ते॥

### "अधिकं तु भेदनिर्देशादि"त्यत्र भेदपदस्य तत्त्वम्पदलक्ष्यार्थभेदपरत्वाभावः

तत्र "अधिकं तु भेदनिर्देशात्" इत्यत्र भेदो विशिष्टजीवेश्वरयोः, विशिष्टेश्वर-विशिष्टजीव-संविन्मात्रयोरेव वा, न तु शुद्धयोः, इति तयोर्भेदस्य व्यावहारिकत्वम्। अत एव निर्देशपदम्, नोपदेशपदम्, तत्रापदेश-व्यपदेशादिशब्दप्रयोगो भेदस्यावान्तरतात्पर्यविषयत्वे, न महातात्पर्यविषयत्वे। उपदेशपदं तु महातात्पर्यविषयत्वे। तत्र 'अन्तस्तद्धर्मोपदेशात्' इत्यत्रोपदेश्यत्वं तद्धर्मपदस्वारस्यादवान्तरतात्पर्यविषयत्वमेव, यतस्तद्धर्माणामप्युपास्यत्वं विवक्षितम्, न तु "आकाशस्तल्लिङ्गादि"त्यत्रेव तल्लिङ्गस्यानुपास्यत्वम्; अन्यथा "आकाशस्तल्लिङ्गादि"ति सूत्रं वितथं स्यात्। "अन्यथापि चैनमधीयते" "उभयेऽपि हि भेदेनैनमधीयते"इत्यादावप्यधीयमानत्वं महातात्पर्यविषयत्वेन। अत्र हि जीवभिन्नत्वेऽप्यन्तर्यामिणो मायोपहितस्य वस्तुगत्या निर्विशेषत्वात् अधीयमानपदस्य 'एन'मित्यनेनैवान्वयः॥

### अन्तर्यामिब्राह्मणस्याप्यौपाधिकभेदपरत्वमेव

अत एवान्तर्यामिब्राह्मणे पृथिव्यादीनां शरीरत्वमुपाधित्वरूपम्, न तु नियम्यत्वादिलक्षणं पारिभाषिकं शरीरत्वम्; 'यमयती'त्यनेनैव निर्वाहे शरीरपदस्यान्यथा वैयर्थ्यात्। नियामकत्वं हि ब्रह्मणोऽधिष्ठानत्वमेव, नान्यत्, इति तत्रापि विशिष्टजीवभेदस्य निर्विशेषेऽबाधाद् भेदांशेऽनुवादः, अन्तर्यामिस्वरूपांशमात्रेऽधीयमानत्वात्। अत एव 'एनं' पदं सार्थकम्॥

### अन्तस्तद्धर्मादिसूत्रमपि जीवेश्वरयोरेव कल्पित-भेदपरम्, न तु लक्ष्यार्थभेदपरम्

"भेदव्यपदेशाच्चान्यः" इत्यत्र त्वन्यत्वं साध्यम्, व्यपदिश्यमानभेदत्वं हेतुरिति न हेतु-साध्ययोरैक्यम्। "अन्तस्तद्धर्मोपदेशात्" इत्यत्रोपदेशपदं तु जीवलिङ्गापेक्षया ब्रह्मलिङ्गस्य लिङ्गविशेषत्वेऽप्युपास्यकोटिप्रविष्टत्वेन प्राबल्यं सूचयितुम्। यद्यपि "तद्धर्मे"त्यनेनैव "आकाशस्तल्लिङ्गादि"त्यादावपीष्टसिद्धिः; तथापि पूर्वत्र तद्धर्मत्वमात्रस्य जीवेश्वरसाधारण्यात्, उपदिश्यमानत्वेन श्रुतिमूलत्वं सूचयितुमुपदेशपदम्। अत्र तु लिङ्ग-पदात्, तच्छब्दाच्च श्रुतेर्भूताकाश-ब्रह्मोभयसाधारण्यम्, लिङ्गस्य त्वसाधारण्यं ब्रह्मणीति तत्पदेनैव निर्वाहात् लिङ्गपदम्। अत एवोक्ताधिकरण-सार्थकम्॥

### अध्ययनस्यार्थज्ञानार्थत्वेऽपि यावदधिकार-संपत्ति न ब्रह्मविचारः

तत्राध्ययनस्यार्थज्ञानार्थत्वपक्षे अक्षरग्रहणार्थत्वपक्षे चोभयत्राप्यध्ययनविधिना स्वतन्त्रविध्यन्तरेण वाऽर्थज्ञानस्य नियतत्वे फलभेदस्तु—अक्षर-ग्रहणानन्तरमेव न समावर्तनम्, इति तत्र तत्र व्यक्तमेव। तत्रार्थज्ञानार्थत्व-पक्षेऽविरक्तस्य कर्मकाण्डमात्रार्थज्ञानार्थो विचारः, विरक्तस्य तु वेदान्तार्थानां विचार इति वस्तुस्थितिः। तथा चोपनिषदर्थविचारानन्तरमेव न कर्माधिकारः, किन्तु ततः पूर्वमेव॥

### ब्रह्मचारिणां तु विनापि कर्मविचारं न ब्रह्मविचाराधिकारः, साधनसंपत्तौ त्वस्त्येवाधिकारः

एतेन—जीवातिरिक्तात्मवाक्यार्थज्ञानातिरिक्तोपासनात्मकज्ञानैदम्पर्य-स्योपनिषत्सु स्थितस्याऽऽविद्यकत्वाददद्वैतमतप्रतिकूलमेवाध्ययनमात्रवत् इत्यादीति—परास्तम्; अर्थज्ञानार्थत्वपक्ष इवाक्षरग्रहणार्थत्वपक्षेऽप्यर्थ-

ज्ञानस्याऽऽवश्यकत्वेऽधीतवेदेन ब्रह्मणोऽपि ज्ञातत्वात् कथं ब्रह्मोपासन एव न प्रवृत्तिः। यदि वैधत्वेऽपि ज्ञानस्य रागत एव विचारविशेषे प्रवृत्तिः, तर्ह्यर्थज्ञानार्थत्वपक्षे यथाऽधिकारमेव कर्मोपासनविध्यर्थविचारे प्रवृत्तिः, इत्यनधिकारिणामुपसनांशे, विद्यांशे वा विचारानधिकारेण प्रवृत्त्ययोगात् कृते विचारे तत्तदनुगुणोपासना-विद्यादिनिर्वृत्त्या न किञ्चिदपि हीनमद्वैतमते ॥

### "पुरुषार्थोऽतः" इति सूत्रे सविशेष-ब्रह्मण एव विवक्षा

"पुरुषार्थोऽतः" इत्यधिकरणे "अधिकोपदेशात्तु" इति सूत्रे 'अधिक'-पदेनेश्वरस्य ग्रहणे तस्य वेदार्थत्वस्य संकर्षकाण्डेन निर्णीतत्वात् पूर्वपक्षस्यैवानुत्थानं श्रीभाष्यमते, अद्वैतमते तु नैवम्। वेदान्तमात्रसमधिगम्यनिर्विशेषात्मतत्त्वमात्रस्य पूर्वमज्ञातस्योपदेशमनङ्गीकृत्य पूर्वपक्षः, तदुपदेशेन सिद्धान्त इति सुष्ठु लगति ॥

### "एक आत्मनः" इति सूत्रस्याद्वैतमतेऽपि श्रीभाष्यमत इव साफल्यम्

एतेन—"एक आत्मनः शरीरे भावादि"त्यधिकरणमपि—व्याख्यातम्। तत्र 'देहातिरिक्तात्मनः सद्भावः समर्थ्यते बन्ध-मोक्षाधिकारसिद्धये' इति भगवत्पादीयं भाष्यम्, श्रीभाष्यं तु श्रुतप्रत्यगात्मनोऽपि स्वरूपेण परमात्मोपासनायामुपास्यत्वम्, न तु तद्विपरीतेन कर्माङ्गत्वरूपेणेति। तत्रोभयत्र बन्ध-मोक्षाधिकारिण आत्मनो नैकं रूपम्, कर्माधिकारो ब्राह्मणत्व-कर्तृत्वादि-विशिष्टतया, विद्याधिकारस्तु तद्विपरीतरूपेणेति समानम् ॥

तत्र देहातिरिक्तात्मवादं सिद्धवत्कृत्यैवोभयत्र कर्माधिकारः पूर्वतन्त्र-सिद्ध इति वस्तुस्थितिः। अतः शरीरातिरिक्तात्ममात्रसमर्थनमद्वैतमते, बद्धजीवात्मव्यतिरिक्तप्रत्यगात्मस्वरूपानुसन्धानावश्यकतासमर्थनमितरत्र। तत्राद्वैतमते स्थूल-सूक्ष्मकारणशरीराणि त्रिविधानि जागर-स्वप्न-सुषुप्त्यवस्थाभेदात् सर्वैरवगतानि, एवं तत्तद्दशायां तत्तच्छरीरमात्मतया सर्वैरपि मन्यते। तत्र जागरावस्थशरीरात्मतानिराकरणेन लोकान्तरगमनयोग्य-कर्माधिकारयोग्यसूक्ष्मशरीरात्मवादसमर्थनं शास्त्रमुखस्य लक्ष्यम् ॥

### "एक आत्मनः शरीरे भावादि"त्यस्याद्वैतमत उपयोगप्रकारः

जागरावस्थायां हि स्थूल-सूक्ष्म-कारणशरीराणि सर्वाणि वर्तन्ते, इति स्वप्नावस्थादिपर्यालोचनेन मृतावस्थायामिव "व्यतिरेकस्तद् भावभावि-

त्वात्" इति न्यायेनावगम्यते। तत्र कर्तृत्वादिमानात्मा सूक्ष्मशरीराभिमान्यपीति कर्माधिकारी बन्धाधिकारी, निरूपितः शास्त्रमुखे, तमेवांशमनूद्य कर्मानधिकारि-शुद्ध-प्रत्यगात्मतत्त्वनिरूपणमेवात्र मुख्यं लक्ष्यम्, स्थूलशरीरातिरिक्तात्मस्वरूपस्य शास्त्रमुखे साधितस्यानुसन्धानस्य, न तु मुख्यलक्ष्यतया, मुख्यं तु जाग्रदाद्यवस्थात्रयातीतं विश्व-तैजस-प्राज्ञातिरिक्तं माण्डूक्योपनिषत्प्रतिपाद्यं तुरीयमात्मतत्त्वमेव, यदेवाधिकृत्य—"अधिकोपदेशादि"ति सूत्रमित्येव भगवत्पादानामाशयः। अत एवोक्तसूत्रोपक्रमवाक्यम्—"बन्ध-मोक्षाधिकारसिद्धये' इति ॥

### "अधिकोपदेशादि"ति सूत्रस्य कर्माधिकारातीत-जीवविषयकत्वम्, नेश्वरविषयकत्वम्; अत एवोपदेशपदम्

तत्र—"एक आत्मनः शरीरे भावादि"ति तृतीयाध्यायतृतीयपादे, "अधिकोपदेशात्तु" इति तृतीयतुरीयपादे। ततश्च तृतीयाध्यायगतस्य देहातिरिक्तवादसमर्थनस्य कर्माधिकारांश इव मोक्षाधिकारांशेऽपि तात्पर्येऽपि तत्राधिकारांशोपयोगिजीवात्मस्वरूपमात्रं पारमार्थिकं मत्वा "शेषत्वात् पुरुषार्थवादः" इति पूर्वपक्षः, तस्याकर्त्रादिस्वरूपसमर्थनपर्यन्ततात्पर्यमादाय—"अधिकोपदेशादि"ति सूत्रम् ॥

तत्र कर्माधिकारिणो लोकसिद्धत्वाद् न शास्त्रैकसमधिगम्यत्वम्, शुद्धस्य तु प्रत्यगात्मनः शास्त्रैकसमधिगम्यत्वमिति 'उपदेशपदमि'ति मन्तव्यम् ॥

### श्रीभाष्यमतेऽधिकोपादेशादिन्यायवैफल्यम्

इदं हि ब्रह्ममीमांसामात्रावसेयम्। अत एवात्रैवपोदेशः, इति न देहातिरिक्तात्मवादसमर्थनाधिकरणाधिकोपदेशन्यायेन, अधिकोपदेशन्यायेन वाऽपरेण वेदं गतार्थम्। सविशेषब्रह्मस्वरूपं सेश्वरमीमांसादृष्ट्या, संकर्षदृष्ट्या वा पूर्वमेव निर्णीतम्, इति कथमत्र तस्याधिकस्योपदेशः? इति श्रीभाष्यमते न तद्योजनं स्वरसम्। तत्र संकर्षकाण्डः कामं वर्तताम्, उद्गीथाद्युपासनमपि, सविशेषपरमात्मस्वरूपमपि मुख्यं निर्णीतम्, इति कथमत्र तस्योपदेशो नाम?

### "असंभवस्तु सतोऽनुपपत्तेः"इत्यस्याद्वैतमते सार्थक्यम्

एतेन—"असम्भवस्तु सतोऽनुपपत्तेः" "नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः" इति सूत्रद्वयमपि—व्याख्यातम्, तत्राद्यं श्रीभाष्यमते वियदधिकरणगुण-

सूत्रमपि ब्रह्मणोऽनुत्पत्तिनिरूपणपरमिति फलतो न विशेषोऽद्वैतमतेन तस्य पृथगधिकरणत्वेऽपि, द्वितीये तु—नात्मोत्पद्यते, अश्रुतेः, तदुत्पत्त्यश्रवणात्, तदुत्पत्तिश्रवणस्य देहाद्युत्पत्तिमात्राभिप्रायत्वेनौपाधिकत्वेन गौणत्वादिति "चराचरव्यपाश्रयस्तु" इत्यधिकरणार्थमपि मनसि निधायाद्वैतमते व्यवस्था ॥

### आकाशनित्यत्वानित्यत्वचर्चायाः श्रीभाष्यमतेऽनुपपत्तिः
### अयमेव न्यायो जीवोत्पत्तावपि

श्रीभाष्यसिद्धान्ते त्वाकाशादिपदानां भूताकाशादौ गौणत्वम्, मुख्यत्वं तु तत्तच्छरीरकपरमात्मन्येव । इदं तूत्पत्तिश्रुतिविरोधाविरोधचर्चायामसङ्गतम् । तत्राकाशादीनामुत्पत्तिश्रवणम्, नित्यत्वश्रवणं च तस्यैव तच्छरीरकपरमात्मनोऽपि समानम्, तथा कारणत्वमपीति विशिष्टस्यैव कार्य-कारणभावं स्वीकुर्वतां श्रीभाष्यानुयायिनां समानम्, इति केवलभूताकाशस्याप्यात्मन इव ब्रह्मावस्थाविशेषत्वस्यासंभवात् तस्य ब्रह्मकार्यत्वश्रुतीनां कथमुपपत्तिः? "अधिकं तु भेदनिर्देशादि"त्युक्तेर्न जीवानां कार्याणामपि निर्विकारब्रह्मावस्थात्वमनेन नयेन ॥

तथा च जीवस्य, वियदादेश्च श्रीभाष्यमते कथं ब्रह्मकार्यत्वशङ्काऽपि? सति चैवं वियदाद्युत्पत्तिर्विशेषणभूतसविकारप्रकृतिकार्यत्वेनेति वक्तव्यम्। न चैवंविधं कार्यत्वं जीवानां संभवति । अत "उत्पत्त्यसम्भवात्" इत्यस्योत्पत्तिश्रुतेरुपाधिविषयत्वादिव्यवस्थापनमेवात्र सूत्रार्थः ॥

### धर्मभूतज्ञानसंकोच-विकासाभ्यां जीवोत्पत्तिव्यवस्थाऽयोगः

तत्र यद्यपि श्रीभाष्यमप्युत्पत्त्यभावं सिद्धान्तयति; तथाप्युत्पत्तिश्रुतीनां धर्मभूतज्ञानस्य सङ्कोच-विकासाङ्गीकारेण तद्विकाररूपोत्पत्तिपरत्वम्, शरीरसम्बन्धपरत्वं वेति प्रतिपादयन् तस्य शरीरोत्पत्तिनिबन्धनोत्पत्तिः, न स्वरूपोत्पत्तिनिबन्धनेत्यद्वैतसिद्धान्तेनैकार्थमेव, धर्मभूतज्ञानसङ्कोचविकासात्मकविकारद्वारा जीवोत्पत्तिरिति तु सङ्कोच-विकासविकाराभ्यां धर्मभूतज्ञानस्य नित्यस्य न स्वरूपोत्पत्तिरिति स्थितौ का वा कथा जीवस्वरूपोत्पत्तेः परम्परया योजनस्यायोगे? तत्र संकोच-विकासौ यदि नानित्यत्वप्रयोजकौ, तर्ह्यात्मन एव तदङ्गीकारे का वा बाधा ॥

### ब्रह्मोत्पत्तिनिरासवैयर्थ्यम्

तत्र "असम्भवस्तु सतः" इति सूत्रे कारणस्य ब्रह्मणोऽनादिमायोपाधिकत्वेन नौपाधिकोपपत्तिरपि, जीवस्य तूत्पत्तिश्रवणं विशिष्टस्यौपाधिकं

वर्तत एव, स्वरूपतस्तु तस्य न साऽस्तीति वैषम्यं सूचयितुमत्राधिकरण-द्वयम् ॥

### जीवज्ञत्व-कर्तृत्वादिस्थापनं श्रीभाष्यमते वितथम्

अयमेव न्यायो जीवस्य ज्ञत्व-कर्तृत्वादिनिरूपणपरत्वं उपरितनानां सूत्राणाम् । व्यक्तं चैतत् "तद्‌गुणसारत्वात्" इत्यादौ । अतो नित्यत्व-व्यवस्थेयं शुद्धस्यैव । एवं ज्ञानरूपत्व-विभुत्वादिव्यवस्था अपि । तद्विरुद्धं त्वौपाधिकस्यैव ॥

### "असंभवस्तु सतोऽनुपपत्तेरि"त्यस्याद्वैतमते सार्थक्यम्

श्रीभाष्यमतेऽपि शुद्धस्य प्रत्यगात्मनो नात्र नित्यत्वसाधनं प्राप्तकालम्, तस्य धर्मभूतज्ञानसङ्कोच-विकासाख्यविकारस्य, देहादिसम्बन्धस्य चायोगात् । यद्यपि तत्पदलक्षितम्, त्वम्पदलक्षितं चाद्वैत एकम्; तथापि तदैक्यावधारणं तत्त्वम्पदार्थस्य शोधितावस्थस्यैव, इति तत्पदार्थशोधन-प्रसङ्गेन, "असम्भवस्तु सतोऽनुपपत्तेः" इति, त्वम्पदार्थशोधनप्रसङ्गेन "नात्माऽश्रुतेरिति" सूत्रम्, इति सङ्गतिरुभयानुत्पत्तिवादस्य, तन्नित्यत्व-वादस्य चानवद्या ॥

### जीवाणुत्वादिविचारस्याद्वैतमत एव सार्थक्यम्, न श्रीभाष्यमते-

जीवो लोकसिद्धो न ब्रह्मभिन्नः, किन्तु श्रुतिसिद्ध एवेति लौकिक-वैदिकप्रतीत्योर्वैदिकप्रतीत्यनुसारेण व्यवस्थेति सूचनार्थमेवाणुत्वनिराकरणेन विभुत्वादिनिरूपणमपि; अन्यथा लोकसिद्धधर्मभूतज्ञानोत्पत्तिविरोधेन तदुत्पत्तेः संकोच-विकासविकारमात्रपरत्वम्, 'जीवो जातः' इत्यस्यान्यथा नयनम्, किं बहुना देहातिरिक्तत्ववादसमर्थनम्, लोकसिद्धस्वतन्त्रकर्तृत्व-निषेधेन पराधीनकर्तृत्वनिर्णयश्चेत्यादि सर्वं श्रीभाष्यमतेऽप्यनुपपन्नमेव । अतो जीवोत्पत्त्यादीनामौपाधिकत्वव्यवस्थापनमेव जीवत्वस्याप्यौपाधि-कत्वं साधयति, इति जीवत्वस्यौपाधिकत्वे, तत एव जीवपरिमाणादीनाम-प्यौपाधिकत्वसिद्ध्या व्यर्थमतः तत्साधनमिति शङ्काऽप्यत एव परास्ता ॥

### 'चराचरव्यपाश्रयस्तु' इत्यस्याद्वैते स्वारस्यम्

तत्र "चराचरव्यपाश्रयस्तु" इति सूत्रं जीवोत्पत्तेरौपाधिकत्वनिरूपण-मुखेन तदुत्पत्तिव्यवहारस्याप्यौपाधिकत्वं यद्यपि सूचयति; तथापि संविन्मात्रस्य तस्य ज्ञानत्वं नौपाधिकम्, किन्त्वणुत्व-कर्तृत्वादिकमेवेति

सूत्रमपि ब्रह्मणोऽनुत्पत्तिनिरूपणपरमिति फलतो न विशेषोऽद्वैतमतेन तस्य पृथगधिकरणत्वेऽपि, द्वितीये तु—नात्मोत्पद्यते, अश्रुतेः, तदुत्पत्त्यश्रवणात्, तदुत्पत्तिश्रवणस्य देहाद्युत्पत्तिमात्राभिप्रायत्वेनौपाधिकत्वेन गौणत्वादिति "चराचरव्यपाश्रयस्तु" इत्यधिकरणार्थमपि मनसि निधायाद्वैतमते व्यवस्था ॥

आकाशनित्यत्वानित्यत्वचर्चायाः श्रीभाष्यमतेऽनुपपत्तिः

अयमेव न्यायो जीवोत्पत्तावपि

श्रीभाष्यसिद्धान्ते त्वाकाशादिपदानां भूताकाशादौ गौणत्वम्, मुख्यत्वं तु तत्तच्छरीरकपरमात्मन्येव । इदं तूत्पत्तिश्रुतिविरोधाविरोधचर्चायामसङ्गतम् । तत्राकाशादीनामुत्पत्तिश्रवणम्, नित्यत्वश्रवणं च तस्यैव तच्छरीरकपरमात्मनोऽपि समानम्, तथा कारणत्वमपीति विशिष्टस्यैव कार्य-कारणभावं स्वीकुर्वतां श्रीभाष्यानुयायिनां समानम्, इति केवलभूताकाशस्याप्यात्मन इव ब्रह्मावस्थाविशेषत्वस्यासंभवात् तस्य ब्रह्मकार्यत्वश्रुतीनां कथमुपपत्तिः? "अधिकं तु भेदनिर्देशादि"त्युक्तेर्न जीवानां कार्याणामपि निर्विकारब्रह्मावस्थात्वमनेन नयेन ॥

तथा च जीवस्य, वियदादेश्च श्रीभाष्यमते कथं ब्रह्मकार्यत्वशङ्काऽपि? सति चैवं वियदाद्युत्पत्तिर्विशेषणभूतसविकारप्रकृतिकार्यत्वेनेति वक्तव्यम्। न चैवंविधं कार्यत्वं जीवानां संभवति । अत "उत्पत्त्यसम्भवात्" इत्यस्योत्पत्तिश्रुतेरुपाधिविषयत्वादिव्यवस्थापनमेवात्र सूत्रार्थः ॥

धर्मभूतज्ञानसंकोच-विकासाभ्यां जीवोत्पत्तिव्यवस्थाऽयोगः

तत्र यद्यपि श्रीभाष्यमप्युत्पत्त्यभावं सिद्धान्तयति; तथाप्युत्पत्तिश्रुतीनां धर्मभूतज्ञानस्य सङ्कोच-विकासाङ्गीकारेण तद्विकाररूपोत्पत्तिपरत्वम्, शरीरसम्बन्धपरत्वं वेति प्रतिपादयत् तस्य शरीरोत्पत्तिनिबन्धनोत्पत्तिः, न स्वरूपोत्पत्तिनिबन्धनेत्यद्वैतसिद्धान्तेनैकार्थमेव, धर्मभूतज्ञानसङ्कोच-विकासात्मकविकारद्वारा जीवोत्पत्तिरिति तु सङ्कोच-विकासविकाराभ्यां धर्मभूतज्ञानस्य नित्यस्य न स्वरूपोत्पत्तिरिति स्थितौ का वा कथा जीवस्वरूपोत्पत्तेः परम्परया योजनस्यायोगे? तत्र संकोच-विकासौ यदि नानित्यत्वप्रयोजकौ, तर्ह्यात्मन एव तदङ्गीकारे का वा बाधा ॥

ब्रह्मोत्पत्तिनिरासवैयर्थ्यम्

तत्र "असम्भवस्तु सतः" इति सूत्रे कारणस्य ब्रह्मणोऽनादिमायोपाधिकत्वेन नौपाधिकोपपत्तिरपि, जीवस्य तूत्पत्तिश्रवणं विशिष्टस्यौपाधिकं

वर्तत एव, स्वरूपतस्तु तस्य न साऽस्तीति वैषम्यं सूचयितुमत्राधिकरणद्वयम् ॥

### जीवज्ञत्व-कर्तृत्वादिस्थापनं श्रीभाष्यमते वितथम्

अयमेव न्यायो जीवस्य ज्ञत्व-कर्तृत्वादिनिरूपणपरत्वं उपरितनानां सूत्राणाम्। व्यक्तं चैतत् "तद्गुणसारत्वात्" इत्यादौ। अतो नित्यत्वव्यवस्थेयं शुद्धस्यैव। एवं ज्ञानरूपत्व-विभुत्वादिव्यवस्था अपि। तद्विरुद्धं त्वौपाधिकस्यैव ॥

### "असंभवस्तु सतोऽनुपपत्तेरि"त्यस्याद्वैतमते सार्थक्यम्

श्रीभाष्यमतेऽपि शुद्धस्य प्रत्यगात्मनो नात्र नित्यत्वसाधनं प्राप्तकालम्, तस्य धर्मभूतज्ञानसङ्कोच-विकासाख्यविकारस्य, देहादिसम्बन्धस्य चायोगात्। यद्यपि तत्पदलक्षितम्, त्वम्पदलक्षितं चाद्वैत एकम्; तथापि तदैक्यावधारणं तत्त्वम्पदार्थस्य शोधितावस्थस्यैव, इति तत्पदार्थशोधनप्रसङ्गेन, "असम्भवस्तु सतोऽनुपपत्तेः" इति, त्वम्पदार्थशोधनप्रसङ्गेन "नात्माऽश्रुतेरिति" सूत्रम्, इति सङ्गतिरुभयानुत्पत्तिवादस्य, तन्नित्यत्ववादस्य चानवद्या ॥

### जीवाणुत्वादिविचारस्याद्वैतमत एव सार्थक्यम्, न श्रीभाष्यमते

जीवो लोकसिद्धो न ब्रह्मभिन्नः, किन्तु श्रुतिसिद्ध एवेति लौकिकवैदिकप्रतीत्योर्वैदिकप्रतीत्यनुसारेण व्यवस्थेति सूचनार्थमेवाणुत्वनिराकरणेन विभुत्वादिनिरूपणमपि; अन्यथा लोकसिद्धधर्मभूतज्ञानोत्पत्तिविरोधेन तदुत्पत्तेः संकोच-विकासविकारमात्रपरत्वम्, 'जीवो जातः' इत्यस्यान्यथा नयनम्, किं बहुना देहातिरिक्तत्ववादसमर्थनम्, लोकसिद्धस्वतन्त्रकर्तृत्वनिषेधेन पराधीनकर्तृत्वनिर्णयश्चेत्यादि सर्वं श्रीभाष्यमतेऽप्यनुपपन्नमेव। अतो जीवोत्पत्त्यादीनामौपाधिकत्वव्यवस्थापनमेव जीवत्वस्याप्यौपाधिकत्वं साधयति, इति जीवत्वस्यौपाधिकत्वे, तत एव जीवपरिमाणादीनामप्यौपाधिकत्वसिद्ध्या व्यर्थमनः तत्साधनमिति शङ्काऽप्यत एव परास्ता ॥

### 'चराचरव्यपाश्रयस्तु' इत्यस्याद्वैते स्वारस्यम्

तत्र "चराचरव्यपाश्रयस्तु" इति सूत्रं जीवोत्पत्तेरौपाधिकत्वनिरूपणमुखेन तदुत्पत्तिव्यवहारस्याप्यौपाधिकत्वं यद्यपि सूचयति; तथापि संविन्मात्रस्य तस्य ज्ञानत्वं नौपाधिकम्, किन्त्वणुत्व-कर्तृत्वादिकमेवेति

सूचनार्थमुपरितनान्यधिकरणानि । शरीरवाचकानामाकाशादिपदानां शरीरे गौणत्वमिति साधनमत्र न केवलं सङ्गतम्, किन्तु तदङ्गीकार आकाशाधिकरणादावाकाशादिपदस्य भूताकाशे रूढ्या पूर्वपक्षोऽपि नोदियात्, इति वितथान्यधिकरणानि बहून्यापद्येरन् ॥

### विशिष्टयोः कार्य-कारणभावसिद्धान्ते विशेष्य-विशेषणयोः पृथक्तया कार्यत्वादिविचारायोगः

किं बहुना ? विशिष्टब्रह्मण एव कारणत्वम्, कार्यत्वं चेति सिद्धान्ते विशेषणस्य वियदादेः, विशेष्यस्य ब्रह्मणो वा कार्यत्वशङ्काया नोत्थितिरपि, इति विफलम्—"असम्भवस्तु सतोऽनुपपत्तेः" इति सूत्रम् ॥

### तद्गुणसारत्वव्यपदेशोऽद्वैत एव स्वरसः

"तद्गुणसारत्वात् तद्व्यपदेशः" इति सूत्रं तु श्रीभाष्यमतेऽस्वरसम्, तद्धि ज्ञातुर्ज्ञानाश्रयस्य ज्ञानत्वव्यपदेशः कथमिति शङ्कावारणार्थम् । तद्वारणं च तन्मते स्वप्रकाशज्ञानस्वरूपत्वस्यापि स्वीकारात् तत्स्वरूपत्वेनैव, न तु तद्गुणसारत्वेन; अन्यथा तद्गुणसारत्वमात्रत्वे तत्पदार्थः, गुणपदार्थः, तत्सारत्वम्, तन्मुख्यत्वं च कथमुपपद्यते ? कथं चात्र नैयायिकमत इव जीवस्य नाचेतनत्वम् ? अतो धर्मभूतज्ञानाश्रयस्य ज्ञानत्वं ज्ञानस्वरूपत्वेनैवोपपादनीयम्, इति तत्र न सूत्रस्य सामर्थ्यम्, अद्वैतमते तु ज्ञानस्वरूपस्य ज्ञातृत्वं कथमिति शङ्कावारणमत्र विवक्षितम् । तच्च धर्मभूतज्ञानाश्रयबुद्धितादात्म्येन तदात्मतया भानेनैव । तद्गुणसारत्वादित्यत्र तत्पदेन तस्यैव ग्रहणम् । यद्व्यपदेशो येन, तद्गुणतादात्म्यमेव तद्व्यपदेशे निमित्तम्, इति तत्पदेन बुद्धेरेव वृत्त्यात्मकज्ञानधर्मिणो ग्रहणमिति स्वारस्यमद्वैत एव ॥

### तद्गुणसारत्वसूत्रं जीवाणुत्वस्याप्युपलक्षणम्

तदिदम् "ज्ञोऽत एवे"ति सूत्रमभिप्रेत्य; ज्ञानस्वरूपस्यैव तद्गुणसारत्वेनैव ज्ञातृत्वस्यापि तत्र विवक्षणात् । तेनैव न्यायेनाणुत्वव्यपदेशोऽपि वक्तव्यः, इति "तद्गुणसारत्वादि"ति बुद्धितादात्म्येनाणुत्वमिति मन्यते—यदुपाधिकत्वेन ज्ञत्वम्, तदुपाधिकमेवाणुत्वम् । अणुत्वव्यपदेशोऽणुत्वगुणवद्बुद्धितादात्म्येनेति तु निष्कर्षः । तथा च श्रुतिः—"बुद्धेर्गुणेनाऽऽत्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः" इति । तत्र बुद्धिगुण आराग्रमात्रत्वम्, तत्तादात्म्यादात्मनोऽपि गुण इति वर्णनात् तद्गुणसारत्वं संसारिणो जीवस्य, विभुत्वं तु मुक्तात्मन इति विवेकः ॥

### जीवाणुत्वस्यौपाधिकत्वे यावदात्मभावित्वसूत्रमपि

एतेन—"यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्" इति सूत्रमपि—व्याख्यातम् । अत्रात्मशब्देनाणुत्वेन प्रसिद्धः संसार्यात्मैव विवक्षितः, इति यावत्संसार्यात्मस्वरूपं बुद्धेरपि भावात् तद्गुणसारत्वमविरुद्धम्. श्रीभाष्यमते तु ज्ञानस्वरूपस्यात्मनो नित्यधर्मभूतज्ञानाश्रयत्वं यावदात्मभावं स्वतः सिद्धं नात्र हेतूकर्तव्यमिति व्यर्थमिदं सूत्रम् । आत्मशब्दोऽप्यत्र जीवात्मपर एव; तस्यैवाणुत्वादिव्यपदेशस्य प्रस्तुतत्वात् ॥

### जीवकर्तृत्वादिकमपि तद्गुणसारत्वेनैव

"कर्ता शास्त्रार्थवत्त्वात्" इत्यौपाधिकं कर्तृत्वम्, स्वरूपतस्त्वकर्तृत्वमिति विवेचनार्थमेव; जीवकर्तृत्वाकर्तृत्वश्रुतिविरोधपरिहारार्थपरत्वादस्याधिकरणस्य । "नात्माऽश्रुतेरि"त्यारभ्य जीवनित्यत्वानित्यत्व-जीवज्ञानरूपत्व-ज्ञानाश्रयत्वाणुत्व-विभुत्वादीनामिव जीवकर्तृत्वाकर्तृत्वश्रुतिविरोधपरिहारोऽपि हि पादस्यास्य लक्ष्यम् । अयमेव न्यायोंऽशत्वानंशत्वयोरपीति सर्वमनवद्यम् । अत्र शास्त्रपदप्रयोगो यावदखण्डाकारसाक्षात्कारं बाधितानुवृत्तिविधयाऽहमर्थानुवृत्त्यभिप्राय इति न कोऽपि विरोधः ॥

### त्वम्पदार्थस्य शुद्धस्यात्र व्यवस्थाऽद्वैतमते

तृतीयाध्यायतृतीयपादस्तत्त्वम्पदार्थशोधनार्थं प्रवृत्तस्त्वम्पदार्थशोधने प्रसक्ते स्वप्न-सुषुप्ति-मूर्च्छावस्था एव तस्य तत्र विचारयति, तेन च जीवस्य वस्तुसद्रूपं जागरेऽनुभूयमानं देहात्मवादसाधारणं नात्मतत्त्वविनिर्णयेऽत्यन्तमुपयुज्यते, किन्तु स्वप्न-सुषुप्त्यवस्थाबोधन एव तत् तत्रोपयुज्यत इति सूच्यते । अत एव स्वयम्प्रकाशत्वमात्मनः स्वप्नावस्थां पुरस्कृत्य, परमात्मतादात्म्यं च सुषुप्तिमवष्टभ्य ॥

### स्वप्नावस्थापरीक्षायाः सर्वप्रपञ्चमिथ्यात्वं लक्ष्यम्

तत्र स्वप्नावस्थया सर्वोऽपि स्वाप्निकोऽनुभवः "स्मृतिरूपः परत्र पूर्वदृष्टावभासः" इति प्रक्रान्ताध्यासलक्षणलक्षित इति व्यवस्थापयितुं शक्यते । तत्र तत्तदर्थप्रकाशोऽपि तत्तत्पदार्थानां नादित्यादिप्रकाशाधीनः, किन्त्वात्मप्रकाशाधीनः, इति तत्सामान्यात् जागरिकाणामपि तत्त्वविवेकप्रकरणोक्तरीत्या जीवात्मसृष्टत्वेन साक्षिभानादेव भानं नान्यथेति ज्ञाप्यते । तेन च जागरिका अपि स्वाप्नवन्मिथ्याभूता इति निर्णीयते ॥

### वैराग्यपादस्यापि स्वाप्नपरीक्षोपष्टम्भकत्वम्

वैराग्यपादोऽपि स्वाप्निकदृष्टान्तपरीक्षासिद्धजागरिकमिथ्यात्वावगमाधीनं वैराग्यं द्रढयति। लोकान्तरगमनागमनादिकं तु तत्तच्छरीरात्मतानुसन्धानविघटनमात्रं करोति। स्वप्नावस्थानिरूपणं शरीरसामान्यात्मतानुसन्धानविघटनमिति सर्वानुभवसिद्धम्। अतो वैराग्यपादोऽपि पाठतः प्रथमोऽप्यर्थतः स्वाप्नार्थविचारशेष एव ॥

### स्वप्नावस्था हि स्वयं ज्योतिष्ट्वनिर्णायक- संप्रज्ञातसमाधिसमाना च

तत्र स्वयंज्योतिष्ट्वं स्वप्नावस्थायाम्, सुषुप्त्यवस्थायां चैकरूपमेव। इयान् विशेषः—यत् स्वप्नावस्थायामात्मा स्वयंप्रकाशेनाऽऽत्मसृष्टानपि प्रातिभासिकान् केवलं प्रकाशयति, इति संप्रज्ञातसमाध्यवस्थासमाना स्वप्नावस्था नाम। सुषुप्त्यवस्था तु केवलमात्मप्रकाशमात्रेणासंप्रज्ञातसमाध्यवस्थावदित्यादि तत्र तत्र व्यक्तम् ॥

### सुषुप्त्यवस्थाऽसंप्रज्ञातसमाधिसमाना फलस्वरूपं सूचयति

अत एव त्वम्पदार्थशोधनप्रसङ्गे सुषुप्त्यवस्थाया अपि परीक्षा, मूर्च्छावस्थायाश्च, न जागरावस्थाया अपि। तत्र सूत्रकृतः जागरावस्थापेक्षया स्वप्नावस्थायामैदम्पर्यं साधकावस्थायामपि। मिथ्यात्वनिर्णये सैवाधिकारार्थमपेक्ष्यते, तेन साधकावस्थायाः स्वरूपं निर्णीयते, सुषुप्त्यवस्था तु फलावस्थानिर्णय उपयुज्यते। तत्राप्यैदम्पर्यं फलावस्थामपेक्ष्यैव ॥

### स्वप्नावस्था-सुषुप्त्यवस्थापरीक्षाफलानि

तत्र स्वप्नावस्था-सुषुप्त्यवस्थयोर्निरूपणं जिज्ञासाकर्तृस्वरूपम्, जिज्ञासाधिकारः, शरीरातिरिक्तात्मस्वरूपज्ञानम्, स्वप्नवत् प्रपञ्चमिथ्यात्वानुसन्धानम्, आनन्दस्वरूपमात्रमिदानीमज्ञातम्, ज्ञेयं तु मोक्ष इति तदिच्छैव श्रेयस इत्युक्ताधिकारसम्पत्सम्पन्न एव शिष्यतामर्हतीति शिष्यलक्षणोद्बोधनम्, तेन चावस्थात्रयातीतं जीवात्मस्वरूपमेव ज्ञेयं ब्रह्मापि विषयोऽपि सुष्ठु ज्ञापयति, इति जीवात्मस्वरूपशोधनं साक्षात् त्वम्पदार्थशोधनद्वारा ब्रह्मजिज्ञासायामुपयुज्यते ॥

### श्रीभाष्यमते न जीवस्वरूपशोधनस्य सङ्गतिः, न वाऽऽकाशानित्यत्वनिर्णयः सार्थकः

श्रीभाष्यमते ब्रह्मविचारे प्रस्तुते जीवात्मविचारस्य कः प्रसङ्गः? किं वा फलं वियदाद्यनित्यत्वस्थापनस्येति शतभूषणी पृच्छति। तदाशयस्तु

"आकाशशरीरं ब्रह्मे"ति विशिष्टाकाशशरीरत्वमपि श्रुतावाम्नातम्। तच्चाऽऽकाशस्यानुत्पत्तौ नित्यत्वेऽप्युपपद्यते प्रकृतिशरीरकत्वमिव। तथाऽङ्गीकारे च—आकाशशब्देन ब्रह्मविवक्षाऽपि स्वरसोपपद्यते, अद्वैतवादे तु अद्वितीयत्वमाकाशनित्यत्वे नोपपद्यते, इति तस्य सादित्वम्, अनित्यत्वं च सार्थकम्। अनादित्वेऽप्यविद्याप्रयुक्तत्वेन मिथ्यात्वं वक्तुं शक्यम्, परन्तु न तस्यानादित्वे प्रमाणम्; उत्पत्तिश्रवणात्तस्य, बाधकाभावाच्चेति तदुत्पत्त्यादिसमर्थनम्—इति ॥

### वियदाद्युत्पत्तिसमर्थनम्, अद्वैतमतेऽविद्योत्पत्त्यसाधनेन वैकल्यं चेति भूषणस्याक्षेपः

अत्र परमार्थभूषणं लिखति—ब्रह्मणोऽद्वितीयत्वाय यद्याकाशोत्पत्तिसमर्थनम्, तर्हि अविद्याया अप्यनित्यत्वार्थमुत्पत्तिः समर्थनीया स्यात्; अनादिनित्यत्वनियमात्। न च वियदादेरुत्पत्तिमात्रसाधनेन तस्या अपरमार्थत्वेऽसाधितेऽद्वितीयता ब्रह्मणः सिद्ध्यति। अपरमार्थत्वे सर्वस्य सादेः, अनादेर्वा किम्प्रयोजना वियदाद्युत्पत्तिचिन्ताऽद्वैतमते? सर्वकारणत्वनिरूपणार्थमेव तदुत्पत्तिसमर्थनमस्मन्मत इति तु तत्त्वम्—इति ॥

### वियदाद्युत्पत्तिचिन्ताया अद्वैतमते सार्थक्यसमर्थनादिनोक्ताक्षेपपरिहारः

इदमेवात्र पृच्छ्यते—यदि सर्वकारणत्वनिर्वाहार्थं वियदाद्युत्पत्तिसमर्थनम्, तर्हि प्रकृतेरप्युत्पत्तिः कथं न चिन्त्यते? यद्यनादि सादि वोत्पद्यमानमपि सत्यम्, तर्हि वियदाद्यनादितायामपि तदितरासन्दिग्धकार्यवर्गैरेव सर्वकारणत्वनिर्वाहाद् वितथाऽऽकाशोत्पत्तिचिन्तेति। अद्वैतमते त्वनादेरप्यविद्यायाः, तत्प्रयुक्तस्य जीवेशभेदादेरपि ज्ञाननिवर्त्यत्वेनैवापरमार्थत्वात् वियदादेरविद्यात्वम्, तत्प्रयुक्तत्वं विना ज्ञाननिवर्त्यत्वेन मिथ्यात्वासंभवादद्वितीयत्वसिद्ध्यर्थं वियदादेरविद्यापरिणामत्वेन, ब्रह्मविवर्तत्वेन च कार्यत्वमद्वितीयब्रह्मस्वरूपनिर्णयार्थं तदुत्पत्तिशङ्केति तु हृदयम् ॥

### "आकाशशरीरं ब्रह्म"इत्यस्य स्वारस्यमद्वैते, नापरत्र

एतेन—"आकाशशरीरं ब्रह्मे"तिवाक्यमद्वैतमते बाधितार्थकम्, अस्मन्मते तु वस्तुगत्या व्यर्थमपि तदशरीरत्वशङ्काव्यावर्तनार्थं तथोक्तिः, अथवाऽऽसमन्तात् प्रकाशमानदिव्यशरीरत्वं तदर्थ इति—परास्तम्; इदमेवात्रापि पृच्छ्यते—कं वा शरीरपदार्थं मत्वा बाधितार्थत्वमुक्तवाक्यस्याद्वैतमतेऽभि-

मन्यते भूषणेन ? यदि नियम्यत्वम् , तर्हि ब्रह्मविवर्तवादेऽपि तद्विवर्तत्वेन कार्यत्वात् कारणाधीनसत्ताकत्वाच्च कार्यस्याकाशस्य शरीरत्वं न बाधितमद्वैतदृष्ट्यापि ॥

शरीरपदार्थः उपाधिरेव, न चात्र दिव्यत्वं शरीरस्य

वस्तुतस्त्वद्वैतमते शरीरपदार्थः सर्वत्रोपाधिरेवेति विशिष्टाद्वैतभञ्जनादौ श्रीभाष्याभिमतचतुर्विधशरीरलक्षणनिरसनेन व्यवस्थापितम् । तत एव नयद्युमणिभूमिकापि निरस्तप्राया, इति न बाधितार्थकत्वमद्वैतमते । अधिकमद्वैततत्त्वशुद्धितोऽवगन्तव्यम् । तत्राकाशपदस्य दिव्यपरत्वं तु यद्यपि सविशेषस्य भगवतो भूषणमेव, तथाप्यविद्योपाधिकस्य सर्वकारणस्य तदावरणप्रयोजकत्वात् सर्वं शरीरं तस्यापि दूषणम् । प्रसिद्धार्थत्यागस्तु भूषणस्यापि दूषणम् । किं बहुना ? यथा च "चराचरव्यपाश्रयस्तु" इति सूत्रस्य, "नात्माऽश्रुतेरि"ति सूत्रस्य च मुखभेदेन प्रवृत्तिः पृथगधिकरणत्वेऽपि निर्विशेषस्यैव मुख्यमात्मत्वम् , न तु शरीरोपाधिकस्येति निष्कर्षणार्थम् , तथा पूर्वमेव विवेचितम्—आकाशादिपदानां गौणार्थत्वव्यवस्थापनपरत्व आकाशाधिकरणानुपपत्त्यादिनिरूपणपूर्वकम् ॥

शरीरवाचकानां शरीरिपर्यन्तत्वं न भामत्यभिमतम्

यत्तु—भामत्यां देवदत्तादिनामधेयं जीवात्मनः, न तु शरीरस्य—इति, तदिदं शरीरोपहितसंसार्यात्मन एव देवदत्तादिनाम , न तु शरीरमात्रस्य, आत्ममात्रस्य वेत्यभिप्रायेण, इति नेयं भामती शरीरवाचकानां पदानां शरीरिपरत्वाभिप्राया । अत एव हि तत्र न शरीरस्येदं नामधेयमिति । अनेन हि न शरीरवाचकत्वं देवदत्तादिनामधेयस्येति विशदं वर्णनात् , कथं शरीरवाचकत्वस्याप्यभावे शरीरवाचकानां पदानां शरीरपर्यन्तत्वे कथं नाम भामती भूषणस्यावलम्बः ?

शरीरिणः कारणत्वं न सौत्रम्

तत्रेदं सूत्रं श्रीभाष्यमते यद्यपि "तेजोऽतस्तथा ह्याह हि" इत्यधिकरणस्य गुणसूत्रम् , अद्वैतमते च पृथगधिकरणम् । तथापि पूर्वपूर्वशरीरकात् परमात्मन एवोत्तरोत्तरं तत्त्वमुत्पद्यत इत्यभिप्रायनिरूपणार्थं सूत्रमपेक्ष्यते; "तदभिध्यानादेव तु तल्लिङ्गात् सः" इत्यनेनैव तत्तदुपहितपरमात्मन एव तत्तदुत्पत्तेरुपपादनात् । कारणत्वं हि न ब्रह्ममात्रस्य, न वा तत्तदुपाधिमात्रस्येति तत्रैव व्यक्तम् ॥

### शरीरवाचकानां शरीरपर्यन्तत्वस्य गौणत्वायोगः

तत्र यदि तत्तदुपहितस्य ब्रह्मण एव कारणत्वम् , कथम्-"आकाशाद्वायुरि"त्याकाशमात्रस्य कारणत्वाम्नानमिति चेत् , तदर्थं कामं भवतु शरीरवाचकानाम् , उपाधिवाचकानां वा शरीरिपर्यन्तत्वम् , न तु शरीरवाचकानां शरीरे गौणत्वम् , येनोक्तसूत्रं तत्र सार्थकं स्यात् । तुल्यवित्तिवेद्यतया विशिष्टमुख्यार्थत्वकल्पनं तु क्लिष्टतमम् , अद्वैतमते तु आदित उत्पत्तिविचारात् चराचरव्यपाश्रय उत्पत्तिव्यवहारः सर्वत्रेति प्रकृतार्थविचारत्वात् नितरां स्वारस्यम् ॥

### कर्मणां विविदिषार्थत्व-विद्यार्थत्वपक्षयोरविशेषः

यत्तु—कर्मणां विविदिषार्थत्वम् , वेदनार्थत्वं वेति पक्षद्वयमद्वैतिनाम् , तत्र विदिधात्वर्थः प्रमाणतन्त्रात्मसाक्षात्कारः, न तु चोदनातन्त्रोपासनापरपर्याया विद्या श्रीभाष्याभिमतेत्यद्वैतसिद्धान्तः । तत्र विविदिषापदस्य ज्ञानप्रतिबन्धकपापनिवृत्तिरर्थः 'ओषधेन बुभुक्षती"त्यादाविवेति व्यक्तमन्यत्र ॥

"ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः ॥"

इति वचनं विविदिषार्थत्वपक्षे मूलम् । अस्मिन् हि पक्षे वाक्येन वाक्यार्थज्ञानेऽप्रामाण्यशङ्काविरहितनिर्विचिकित्से ज्ञाने जननीये कर्मणां प्रतिबन्धकनिवृत्तिमात्र उपयोगः, ज्ञानं तु प्रमाणात् स्वत एव सेत्स्यतीति फलतो वेदनार्थत्वपक्ष एव विविदिषार्थत्वपक्षोऽपि ॥

### संयोगपृथक्त्वन्यायेन कर्मणामुपयोगपक्षोपपादनम्

अत एव संयोग-पृथक्त्वन्यायेनोभयार्थत्वपक्षमादायैव वेदनार्थत्वपक्षप्रतिपादनं तत्र तत्रेति व्यक्तं बहुषु निबन्धेषु । "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्"इत्यत्राश्वदृष्टान्तस्वारस्यात् कर्मसहभावेन प्रमाणजन्यज्ञानस्य विनैव संन्यासमावर्त्यमानस्य शीघ्रं मोक्षसाधनत्वमिति संयोगपृथक्त्वन्यायो विद्वत्संन्यासिनां साधनचतुष्टयसंपन्नानामसंन्यासिनामपि विषयः अन्यथा तु विविदिषासंन्यासः कर्मासहभावश्च प्रमाणजन्यज्ञानस्यापरोक्षस्यावर्त्यमानस्येति ब्रह्मसिद्ध्यादिः ॥

### उपासनामात्रेण न मोक्ष इत्यत्रैवाद्वैतनैर्भरम्

नैर्भर्यं त्वद्वैतनिबन्धानामुपासनमामोक्षसाधनत्वनिरासे, इति श्रीभाष्यमतादद्वैतमतस्य विशेषः । तत्र कर्मोपासनयोः समुच्चितयोरुपास-

नाया अपि पुरुषतन्त्रत्वाविशेषात् विविदिषार्थत्वे, विविदिषा-विद्योभयार्थत्वे वा साक्षात्, परम्परया वा मोक्षार्थत्वनिरासमात्रे तात्पर्यम् ॥

### जीवन्मुक्तानामपि कर्मानुष्ठानं लोकसंग्रहार्थम्, एवं विविदिषासंन्यासिनामपि स्वस्वाश्रय-धर्मानुष्ठाननैयत्यम्

आजीवन्मुक्ति कर्मानुष्ठानम्, जीवन्मुक्तानामप्याधिकारिकाणां कर्मानुष्ठानं वा लोकसंग्रहार्थम्, न त्वात्मज्ञानार्थमिति तु हृदयम्। यथा च कर्मणां साक्षात्, परम्परया वा न ज्ञान उपयोगः, तथा भामत्यां विवृतम्। संन्यासिनां तदाश्रमधर्मानुष्ठानं तु विद्यासहकारिमात्रम्; अन्यथा हि तत्तदाश्रमित्वमात्मनो मन्यमानानां नित्याननुष्ठानप्रयुक्तप्रत्यवायेनोत्पन्नाऽपि विद्या न फलाय स्यात्। न चैतावता कर्मणां विद्याङ्गत्वमिति तु निष्कर्षः।

तत्र जीवन्मुक्तानामपि लोकसंग्रहार्थं कर्मानुष्ठानम्, आधिकारिकाणामिव। ते हि ब्राह्मणत्वादिकं स्वव्यतिरिक्तस्वशरीरधर्ममात्मनो मन्यन्ते, नात्मधर्मम्, येन कर्माधिकारस्तेषां विविदिषार्थतया, ज्ञानार्थतया वा स्यात्। ते हि प्रारब्धकर्मविशेषेण शरीरयात्रां परमनभिनिवेशेऽपि निर्वहन्ति; बाधितानुवृत्तेस्तत्र स्वीकारात् ॥

बाधश्चाज्ञानस्यावरणांशस्यैव, न विक्षेपांशस्य, इति विक्षेपशक्तिमात्रानुवर्तनेन स्वशरीरादिकं परदृष्ट्या संसारिणामिव वर्तते, न तु संसारिणामिव तत्रात्मत्वावभासः, इति न तेषां शरीरधर्मब्राह्मणत्वाद्यवभासः ॥

### शम-दमादीनां तृतीयाध्याये विचारस्तेषामेवाधिकारिविशेषणत्वं गमयति

यत्तु—तृतीयाध्याये नित्यानित्यवस्तुविवेकादीनां चतुर्णां साधनानां विचारः, कर्मणां च विद्याप्रतिबन्धकपापनिवृत्तावेवोपयोगश्च निर्णीयते, ततो ज्ञायते जिज्ञासाऽधिकारिविशेषणान्येव तत्र विचार्यन्ते; अन्यथा ब्रह्मजिज्ञासां प्रस्तुत्य तत्साधननिरूपणं न सङ्गच्छते। कर्मविचारोऽधिकारिविशेषणमिति मन्वाना श्रुतप्रकाशिकाऽप्यत एव 'पाठक्रमादर्थक्रमो बलीयानि'ति न्यायेन जैमिनीयकर्मविचारस्य तृतीयाध्यायतुरीयपादेन सङ्गतिं साधयति ॥

साधनाध्याय एव तृतीये साधनव्यवस्थायाः सङ्गतिः

"अथातो ब्रह्मजिज्ञासा" इति संग्रहसूत्रप्रस्तुतब्रह्मस्वरूपस्य विरोध-परिहारेण निरूपणं प्रथम-द्वितीयाध्यायाभ्याम्, अथशब्दार्थानन्तर्य-प्रतियोगिनिरूपणं तृतीयाध्यायेन, तुरीयाध्यायेन फलरूपावगतिः; ब्रह्म-भावपर्यन्तायाः, सगुणोपासनफलगौणमुक्तेश्च निरूपणात्, इति तृतीया-ध्याय एव तन्निरूपणं सुसङ्गतम्। तच्चाद्वैतमत एव स्वरसम्॥

श्रीभाष्याद्वैतसिद्धान्तयोर्ज्ञानयोगस्वरूपनिष्कर्षः

अद्वैतिनां ज्ञानयोगो जीवन्मुक्ताभ्यस्यमानाऽखण्डाकारा वृत्तिः, श्रीभाष्यानुयायिनां तु ज्ञानयोगः शोधितत्वम्पदार्थतत्त्वसाक्षात्कारमात्रम्, यैव हि वासिष्ठरीत्या स्थितप्रज्ञावस्था नाम। तत्र साङ्ख्ययोगिनां कर्म-योगाधिकारो न विप्रतिपन्नः। तेषामेव ज्ञानयोगित्वं मत्वा कर्मयोगाधिका-रस्तु बाधितः॥

श्रीभाष्याभिमतज्ञानयोगस्य कर्मणाऽविरोधः,
अद्वैते त्वस्ति तस्य तेन विरोधः

तत्र विना साङ्ख्ययोग-ज्ञानयोगस्वरूपविवेकं ज्ञानयोगिनामपि कर्म-योगाधिकार इति वादो न युक्त इत्येव शतभूषणी। तत्र परमार्थभूषणं ज्ञानयोग-कर्मयोगयौगपद्यं नाङ्गीक्रियत इति वदत् सर्वेषां योगानां न्यूनाधिकभावेन सर्वत्रानुवृत्तिरिति स्वीयं सिद्धान्तं विस्मरति॥

कर्मयोग-ज्ञानयोगयोरयौगपद्यसिद्धान्ततत्त्वविवेकः

यावज्जीवश्रुत्याऽऽप्रायणं कर्मानुष्ठानं विदुषामपि कर्तव्यमिति स्वयं तत्र तत्राम्रेडितं किमिति भूषणं साम्प्रतं परित्यजति? ज्ञानयोगिभिरपि कर्मयोगोऽनुष्ठेय इति वचनं निर्मूलमिति शतभूषणीति-यद्यद्वैतिनां ज्ञान-योगमाश्रित्य, तर्हि निर्मूलमेव। यदि भूषणमपि तमेवार्थमभिप्रैति, तर्हि ज्ञानयोगस्य, कर्मयोगस्य च यौगपद्यं नाङ्गीक्रियत इति मन्यते, तर्हि स्वा-गतम्; तयोर्यौगपद्यनिरास उभयोरपि नैकफलसाधनत्वाभिप्रायेण, न तु लोकसंग्रहार्थमप्यनुष्ठाननिषेधेन, इति न किञ्चिदवद्यम्॥

कर्मानकारिणामप्यवताराणां लोकसंग्रहार्थं तदनुष्ठानम्

स्वाधिकारविशेषनिर्वर्तनार्थं लोके व्यवहरन्तः, तत्त्वज्ञानिनः, जीवन्मु-क्ता वा अवतारपुरुषा वा सर्वेऽप्याधिकारिका एव; यथाऽपान्तरतमादयो

महर्षयः, रामाद्यवताराश्च । सर्वेषामेव तेषां तत्तच्छरीरेण व्यवहरतामपि न कर्माधिकारः, परन्तु स्वतः सिद्धविविदिषत्वात् , स्वतः सिद्धविद्यत्वाद्वा, तेषां कर्मानुष्ठानं लोकसंग्रहार्थम् , यथाऽवतारपुरुषस्य श्रीकृष्णस्य ॥

### जीवन्मुक्तावताराणां विवेकः

यत्तु—ईश्वरस्य विधिपारवश्याभावात् लोकसंग्रहार्थं कर्मानुष्ठानम्—इति, तत्रेदं प्रष्टव्यम्—किं तस्यापि स्वजात्याश्रमादिशरीराभिमानो वर्तते, न वा । आद्ये कथमीश्वरत्वम् ? अन्त्ये च विधिपारवश्याभावे कथं लोकसंग्रहार्थमपि कर्मानुष्ठानम् ? अतो जीवन्मुक्तावस्थैवावतारपुरुषाणाम् । इयान् विशेषः—जीवन्मुक्ताः ज्ञानापहतपाप्मानः, अवतारपुरुषास्तु स्वयमपहतपाप्मानः—इति ॥

### सूत्रेषु जीवस्य कर्तृत्वादेर्भ्रान्तिसिद्धस्यापि विचारो नासङ्गतः

यत्तु—जीवस्य परिशुद्धस्वरूपस्यैव भ्रान्तिसिद्धकर्तृत्वादेरप्युपदेशः, स औपाधिकानौपाधिकजीवस्वरूपविवेकायैव; सोऽपि विचारावस्थायाम् , न तु तत्त्वज्ञानानन्तरम् । ब्रह्ममीमांसा हि तत्तद्विषयवाक्यानि गृहीत्वा सन्दिग्धानां तत्त्वानां विवेचनार्था, इति नैकवाक्यार्थनिर्णयमात्रेण वाक्यान्तरार्थोऽनिर्णीतोऽपि निर्णीतो भवति; अन्यथा "स विष्णुराह हि" इत्यत एव सर्वा ब्रह्मजिज्ञासा सिद्धा, इति सर्वा ब्रह्ममीमांसा वितथा स्यात् । अतस्तत्तद्वाक्यावगतजीवस्वरूपविशेषाणां कोष्ठशोधनिकया विवेचनं न वितथम् । अतः परिशुद्धस्वरूपनिरूपणदशायां प्रतिपक्षप्रक्षेपपूर्वकस्य भ्रान्तिसिद्धाकारस्य समर्थनं तद्रूपेण नासङ्गतम् , तेन ह्याकारविशेषाणामौपाधिकत्वनिरूपणद्वारा परिशुद्धं स्वरूपमेवोपपादितं भवति, इति तदुपबृंहणमेवाकारविशेषाणां भ्रान्तिसिद्धत्वव्यवस्थापनम् । सर्वथा तु सूत्राशयो भगवत्पादव्यवस्थापित एव वैयासिकः, न तु श्रीभाष्यकाराद्दतः ॥

### विचारसारः

तथा हि—"अथातो ब्रह्मजिज्ञासा" इत्यत्र कर्मविचारानन्तर्यमथशब्दार्थ इति श्रीभाष्यम् , साधनचतुष्टयसम्पत्त्यानन्तर्यमथशब्दार्थ इति भगवत्पादीयं भाष्यम् । तत्र कर्मविचारानन्तर्यार्थत्वं न युक्तम् , न च तत्र स्वारस्यमिति भाष्य एव व्यक्तम् । ब्रह्मपदार्थोऽपि यदि सगुणः, तर्हि संक्षेपेणैव गतार्थतत्वात् पुनः"अथातो ब्रह्मजिज्ञासे"त्यादि वितथमिति व्यक्ती-

कृतमधस्तात्। आनन्दमयाधिकरणार्थे स्वारस्यमद्वैत एवेति बहुशो विवेचितम् ॥

"तत्त्वमसी"ति वाक्यस्य, अन्यस्य वा शरीर-शरीरि-
भावपरतया योजनं न सूत्रे कुत्रापि

'तत्त्वमसी'त्यादौ जीव-ब्रह्माभेदोऽसंदिग्धोऽन्यत उपक्रमाद्यनुसारेण, न तु तत्र शरीर-शरीरिभावादिरप्रतीतोऽसिपदवैयर्थ्यापादकः प्रतिभासतेऽपि; अन्यथा तद्वाक्यार्थनिर्णयार्थं कुतो न पृथगधिकरणम्? यथा चानन्दमयाधिकरणं न शरीर-शरीरिभावाभिप्रायम्, तथाऽद्वैततत्त्व-शुद्ध्यादौ विस्तृतम्। न हि कुत्रापि सूत्रे शरीर-शरीरिभावः सूत्रितः ॥

अन्तर्यामिब्राह्मणादेर्न शरीर-शरीरिभावपरत्वम्, इति
तत्राभेद एव सामानाधिकरण्यमिति निष्कर्षः

"आत्मेति तूपगच्छन्ति" इत्यादि तु स्वरूपपरम्, न तु शरीरिपरम्। अन्तर्यामिब्राह्मणस्याप्यशरीरात्मपरत्वमिति बहुतरोपनिषद्वाक्यानुसारेणाद्वैवतत्त्वशुद्धिभूमिकायां व्यक्तीकृतम्। अतोऽभेदपराण्येव सामानाधिकरण्यपराणि वाक्यानि। तत्रान्तर्यामी यद्युपास्यः, तर्हि स व्यावहारिक एव, इति तेन सर्वसामानाधिकरण्यं बाधितं स्यात्, ज्ञेयत्वे तु तस्याधिष्ठानस्वरूपस्याबाध्यत्वात् सत्यत्वमेव, परन्तु स तच्छब्दलक्ष्यार्थमात्रम्, तेन त्वमर्थस्यापि शुद्धस्याभेदे सामानाधिकरण्यम्, इति जीव-ब्रह्माभेदे सामानाधिकरण्यम्, इति तत्रैव वेदान्तानां पर्यवसानम् ॥

आत्मनो वस्तुत एकत्वात् "आत्मान
उच्चरन्ती"त्यौपाधिकात्मपरं बहुवचनम्

तत्र "नात्माऽश्रुतेरि"ति सूत्रं शुद्धप्रत्यगात्माभिप्रायमिति पूर्वमुपवर्णितम्। अत एव तत्रैकवचनं तदेकताया उपपादकम्। "सर्व एत आत्मान उच्चरन्ती"त्यादिवचनान्यौपाधिक-संसारिजीवात्मपराणि, न शुद्धप्रत्यगात्मैक्ये विरुद्धानि ॥

श्रुति-स्मृति-सूत्रादीनामात्मैकत्वं स्वाभाविकम्, तद्बहुत्वं
त्वौपाधिकमित्यत्रैव तात्पर्यम्

"नित्यो नित्यानां चेतनश्चेतनानामि"त्यप्यत एव—व्याख्यातम्; इदमपि हि वचनं नित्योपाधिकजीवानां चेतनानामपि बिम्बभूतमेकमीश्वरमभिप्रैति, इति न शुद्धप्रत्यगात्मभेदे तत् प्रामाण्यम्। प्रत्येकैकत्वाभि-

प्रायेणैकवचनोपपत्तिः क्लिष्टतरा नितरामस्वारस्यमावहति । अयमेव न्यायो जात्येकत्वपरतायामपि ॥

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ॥"

इति सर्वेषु शरीरेषु शरीराद्विविक्तमेकमेवात्मानमुपदिशति—एकपरमात्माभिन्नतया । तत्र यद्यपि—

"इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥"

इत्यत्रेदं शरीरमप्येकवचनेनैव निर्दिश्यते; तथाप्यनन्तर एव श्लोकः—

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ॥"

इति क्षेत्रज्ञमात्रं क्षेत्राद्विविक्तं विवेचयति । तत्र 'क्षेत्रज्ञमि'त्येकवचनम्, 'सर्वक्षेत्रेषु' इति क्षेत्रेष्विति सर्वपदघटितं बहुवचनं च क्षेत्रज्ञस्य क्षेत्रविविक्तस्यैकत्वम्, क्षेत्राणां सर्वेषां बहुत्वं च विविनक्ति, इत्यात्मैकत्व एव श्रुति-स्मृति-सूत्रतात्पर्यम् ॥

एतेन—"सर्वभूतस्थमात्मानमि"त्यपि—व्याख्यातम् । अत्र सर्वभूतशब्देनाचेतनवर्गमात्रमुच्यताम्, अचिच्छरीरसंपृक्तसर्वसंसारिबद्धजीवात्मवर्गमात्रं वा; उभयथा तु शरीराद्विविक्तस्यात्ममात्रस्यैक्यमेव तदपि विशदयति । संसारिणो जीवस्यौपाधिकस्य परमं तत्त्वमनौपाधिकमेवाधिष्ठानमिति त्वम्पदार्थशोधनमेवात्र । अत एव "यो मां पश्यति सर्वत्रे"ति तत्पदार्थशोधनम्, "सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः" इति जीवब्रह्मैक्योपदेशश्चोपपद्यते ॥

"श्रेष्ठश्चे"तिसूत्र एकवचनं यथा प्राणानां वृत्तिभेदेन बहुत्वमौपाधिकम्, तथा जीवानामप्यौपाधिकमेव बहुवचनम्, वस्तुतस्त्वैक्यम्, पञ्चवृत्तिरेक एव प्राणः इति वदद् भूषणं तु स्वात्मानमेव दूषयति, इति "श्रेष्ठश्चे"ति सौत्रैकवचननिदर्शनमौपाधिकं बहुत्वम्, स्वाभाविकमैक्यं चोपबृंहयति । तदुक्तम्—

"हृदि प्राणो गुदेऽपानो व्यानः सर्वशरीरगः ॥"

इति ॥

'अंशाधिकरण'स्याप्यद्वैतवाद एव स्वारस्यम्

एतेन—"अंशो नानाव्यपदेशादन्यथाऽपि दाशकितवादित्वमधीयत एके" इति सूत्रेंऽशपदमपि—व्याख्यातम् ॥

अत्राप्यंश इत्येकत्वं शुद्धप्रत्यगात्मैकत्वमभिप्रेत्यैव; तत्राप्यंशत्वस्यौपाधिकत्वनिरूपणद्वारा स्वरूपैक्यस्यैव विवक्षणात्। अत एव—अंश इवांश इति व्याख्यानम्। औपाधिकमंशत्वं च तत्र कल्पितत्वमात्रेण। अत्र पादे "चराचरव्यपाश्रयस्तु" "तद्गुणसारत्वात्" "यथा च तक्षोभयथा" इत्यादावौपाधिकस्वरूपद्वारा निरुपाधिकस्वरूपबोधनं लक्ष्यम्। अतोऽंश इवेति विवरणमर्थसिद्धस्यैव, इति नास्वारस्यम्। श्रीभाष्यमते तु विशेषणवाचकानां पदानां विशेष्यपर्यन्तत्वाद् अंशशब्देन विशिष्टस्य ग्रहणावश्यम्भावाद् विशेषणमात्रपरत्वे कथं नास्वारस्यम्? कथं चैकवचनमपि विशेषणत्वमात्रे विवक्षिते? विशेषणे विशिष्टांशत्वव्यवहारस्तु न लोकसिद्धः॥

तत्र जीवस्यावच्छेदवादे, प्रतिबिम्बवादे चोभयत्र दोषसाम्य-तत्परिहारसाम्यविवेचनपूर्वकं वादद्वयेऽपि न नैर्भर्यमिति सिद्धान्तलेशसंग्रहे वर्तते। न च जीवबहुत्ववादो नावच्छेदवादेऽपि; उभयत्रौपाधिकभेदस्यैव विवक्षणात्। अत एव सिद्धान्तलेशसंग्रहे बिम्ब-प्रतिबिम्बवादो व्यवस्थाप्यते। न हि प्रतिबिम्बानां भेदो वस्तुगत्या; अर्चावतारेषु, मूर्तिभेदेषु च परमात्मनोऽपि भेदप्रसङ्गात्, इति जीवस्वरूपं सौत्रमद्वैतमतमेव पोषयति। न ह्यन्यथा भिन्नानां ज्ञत्वाणुत्व-कर्तृत्वांशत्व-नित्यत्वादिविचारणामत्र प्रसङ्गोऽपि जीव-ब्रह्मैक्यस्यैव सौत्रतात्पर्यविषयत्वे॥

### उभयलिङ्गाधिकरण उभयलिङ्गत्वनिषेधो निर्विशेषैकविषयत्वपरत्वादद्वैतानुगुणः

एतेन—उभयलिङ्गाधिकरणमपि—व्याख्यातम्। तत्र शतभूषण्यां स्वसिद्धान्तानुसारेण सूत्राणां योजनेन श्रीभाष्यपक्षेऽस्वारस्यं सूचितप्रायमेव। वेदान्तरक्षामण्यादौ तु तद्विस्तरेणाऽऽवेदितम्॥

तत्र निषेध्यस्यापुरुषार्थगन्धस्यासौत्रत्वमेकं प्रधानमस्वरसम्, उभयलिङ्गमिति बहुव्रीहिरेवाद्वैतमतेऽपि। अत एव न साकारम्, निराकारं चोभयम; साकारस्यैव कथञ्चन निराकारत्वं हेयगुणराहित्यादिनेति योजने ब्रह्मैकलिङ्गमेव, नोभयलिङ्गम्, इत्युभयपदप्रयोगोऽस्वरसः श्रीभाष्यमते॥

निरस्तसमस्तदोषत्व-कल्याणगुणत्वयोरुभयोरत्र साधने नोपयोगोऽपि; निरस्तसमस्तदोषत्वेनैवेष्टार्थसाधनात्। सर्वथाऽत्र पाद औपाधिकस्वरूपविवेचनप्रसङ्गेन वस्तुगत्याऽनौपाधिकं स्वरूपं परिशेष्यते, इति तेन न्यायेन साकारत्व निराकारत्वोभयनिषेधेनैकस्यैव रूपस्य परमार्थिकत्व-

मेव प्रतिपाद्यते। तथा च ब्रह्म, परमार्थतो नोभयलिङ्गम्, किन्तु निरुपाधिकं तत्स्वरूपं पारमार्थिकम्, साकारं रूपं तु व्यावहारिकमिति व्यवस्था। तत्र श्रीभाष्यमते साकारत्व-निराकारत्वयोः सविशेषेऽविरोधः, अद्वैतेऽपि, परन्त्वध्यारोपापवादनयेनाविरोधोऽद्वैतमते, हेयगुणराहित्येन, निरस्तसमस्तदोषत्वेन वा निर्विशेषत्वम्, सविशेषत्वं तु स्वतन्त्र्यविरोधोऽन्यत्र ॥

### उभयलिङ्गत्वविरोधात् न तत्समर्थनम्, किन्तु तन्निराकरणमेव

'सर्वत्र हि' इति 'हि' शब्दप्रयोगः पक्षद्वयेऽपि प्रसिद्धिमेव सूचयति—एकत्राद्वितीयत्वादिना प्रसिद्धिः, अन्यत्रोभयलिङ्गत्वप्रसिद्धिरिति त्वन्यदेतत्। न चाद्वैतमत उभयमपि लिङ्गमौपाधिकम्; निराकारत्वस्य स्वाभाविकत्वात्। यदि तु साकारत्वमिव निराकारत्वमपि कल्पितमिति कृत्वा तृतीयप्रकारं निर्विशेषं संविन्मात्रं ब्रह्मेति तृतीयप्रकारं ब्रह्माऽऽपाद्यते, तर्हीष्टापादनमेव। उभयलिङ्गनिषेधः, उभयलिङ्गवत्त्वं च व्याहतम् ॥

"न स्थानतोऽपी"त्यपिशब्दाद् उपाधितः, स्वरूपतश्च तस्योभयलिङ्गवत्त्वमेव निषिध्यते—उभयमपि तत्र सत्यं न भवतीति, स्थानानामुपाधीनामविद्यान्तानामत्र मिथ्यात्वसमर्थनं मुख्यं लक्ष्यम्। तेन चौपाधिकानां धर्माणामपारमार्थिकत्वं ज्ञाप्यते। न चात्रैकतरनिषेधे निर्विशेषत्वस्यापि निषेधापत्तिः ॥

### तत्र मुख्यो निषेध औपाधिकभेदस्यैव, न दोषसामान्यनिरासः; अप्रसक्तप्रतिषेधात्

"भेदादिति चेन्न प्रत्येकमतद्वचनादि"ति सूत्रानुसारित्वाद् निर्विशेषत्वसिद्धान्तस्य। तत्र जीवात्मनि जागराद्यवस्थासु प्रसक्तौपाधिकधर्मनिषेधवदत्राप्यौपाधिकधर्मनिषेधेन निर्विशेषपर्यवसानमेव युक्तम्। यत्परिशेषितम्, तदेव "सर्वत्र ही"त्यनेन परामर्शमर्हति ॥

### तत्रोभयलिङ्गत्वनिषेधेऽपि निषिद्धस्याप्यनुशासनायामुपयोगोऽद्वैतमते, अन्यत्र तु तस्य न कोऽप्युपयोगः; अप्रसक्तस्य निषेधात्

न च सर्वत्रोभयलिङ्गत्वं प्रसिद्धम्; अध्यारोपापवादनयेन निर्विशेषताया एव तात्पर्यविषयत्वात्। यद्यप्यत्र सविशेषत्वमात्रं निषेध्यम्; तथापि

सविशेषत्वस्यापि व्यावहारिकत्वादवान्तरतात्पर्यविषयत्वं वर्तत इति सूचनार्थम्, निर्विशेषत्वे महातात्पर्यविषयत्वं समर्थयितुं चोभयलिङ्गत्वनिषेधः। सविशेषत्वपारमार्थिकत्वे हि सूत्रकारः किमित्युभयलिङ्गत्वं सूत्रयति? यदि निर्गुणवाक्यानामन्यथानयनं सूचयितुम्, तर्हि कुतः सविशेषवाक्यानां निषेधापेक्षितनिषेध्यसमर्पकतां सूचयितुमुभयलिङ्गत्वमनूद्य तस्य परमार्थतो नास्तित्वम्, केवलमुपासनामात्रोपयोगित्वमिति सूचयितुं नोभयलिङ्गत्वनिषेधः, येन निर्विशेषत्वं पर्यवस्यति॥

श्रीभाष्यमतेऽपुरुषार्थसम्बन्धनिषेधः संभोगप्राप्तिरिति
सूत्रसिद्धत्वाद् वितथः

सति चैवं तत्पदार्थशोधनं पूर्वाधिकरणासिद्धमुपपादयितुमिदमधिकरणं सार्थकम्, श्रीभाष्यमते तु शतभूषण्युक्तरीत्या पूर्वाधिकरणद्वयेन शरीरसम्बन्धप्रयुक्तापुरुषार्थगन्धशून्यत्वस्य साधनात् वितथमिदमधिकरणमिति तत्रैव विशदम्॥

संभोगप्राप्ति-भोक्त्रापत्तिसूत्रद्वयविषयातिरिक्तविषयत्वेन
भूषणेन सूत्र सार्थक्यशङ्कादि

यत्तु—"सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्" इति सूत्रे जीवेन सह शरीरे स्थितत्वात् भोगः स्यादिति शङ्का, तच्छरीरस्य जीवं प्रतीवेश्वरं प्रत्यपि शरीरत्वादिति शङ्का च "भोक्त्रापत्तेरि"ति सूत्रेण परिहृता, अथाऽत्र प्रकारान्तरेण शङ्का—पुण्य-पापकर्माभावादीश्वरस्य न भोक्तृत्वमिति युक्तम्; ईश्वरस्यापि कर्ममूलमेव सशरीरत्वमित्यापाद्य भोगापादनम्, इति तस्या अपि परिहारार्थमिदमधिकरणम्। तत्र परिहारक्रमोऽपि विभिन्नः जीवनिरूपितस्वत्वसम्पत्त्यर्थं शरीरनिर्माणवद् ईश्वरनिरूपितस्वत्वसम्पत्त्यर्थं शरीरनिर्माणाभावादिति प्रथममुक्तम्, कर्माधीनशरीरत्वाभावादीश्वरस्य न भोक्तृत्वमिति तु पश्चादुक्तम्। अत्र त्वखिल-हेय-प्रतिभटशक्तिः श्रौती हेतुरुच्यते—इति॥

तत्र "संभोगप्राप्तिरि"ति चेन्न वैशेष्यात्" "भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्" इत्युभयत्रापीश्वरस्य कर्माधीनशरीराभावेन भोक्तृत्वशङ्का परिहृता, तावताऽपि शरीरे संनिधानमात्रम्, सशरीरत्वेऽपि कर्मानधीनशरीरत्वं न भोक्तृत्वप्रयोजकमिति सत्यं निरूपितम्॥

स्वशक्त्येश्वरस्य भोगसंभवायोगादिनोक्तशङ्कापरिहारः

इदमेवात्र पृच्छ्यते—कुतो वाऽत्र भोक्तृत्वशङ्का समुत्थिता ? यदि शरीरे सन्निधानमात्रेण, तर्हि प्रथमाधिकरणेनैव गतार्थत्वात् नेदमधिकरणं सफलम् । यदि कर्माधीनशरीरत्वमापाद्य भोक्तृत्वशङ्का, तर्हि द्वितीयेन गतार्थम्, किं वाऽत्र 'इह त्वखिलहेयप्रतिभटशक्तिः श्रौती हेतुरि'त्यनेन—कर्माधीनशरीरत्वेऽपीश्वरस्य स्वशक्त्या सुख-दुःखादिभोगः स्वस्य परिह्रियते—इति, उत कर्माधीनशरीरत्वमनभ्युपगम्य । आद्ये सिद्धान्तहानिः । द्वितीये भोक्त्रापत्त्यधिकरणेनैव गतार्थता; अन्यथा विश्वामित्रादीनामिव स्वतन्त्रसृष्टिशक्तिमात्रेण ब्रह्मणो निखिलहेयप्रतिभटशक्तिमात्रेण जीवेष्वेव केषुचनान्तर्भाव आपद्येत, अथवा तयैवेश्वरस्याभाक्तृत्व किं वा प्रयोजनं संभोगप्राप्ति-भोक्त्रापत्त्याद्यधिकरणानाम् ॥

ब्रह्म प्रति कस्यापि हेयत्वाभाव इति भूषणोक्त्यर्थाघातः

एतेन "देहयोगाद्वे"ति सूत्रमपि—व्याख्यातम् । यत्तु—सर्वशक्तिसम्पन्नं ब्रह्म प्रति कस्यापि वस्तुनो हेयत्वाभावाद् दुःखाय पुरुषार्थलवलेशोऽपि न भवतीति—भूषणम् , ततोऽपीदमेवावगम्यते—सर्वशक्ति ब्रह्म प्रति कस्यापि हेयत्वाभावेन निखिलहेयप्रत्यनीकत्वं नेश्वरस्य स्वभाव इति । तेन चात्र निखिलहेयप्रत्यनीकत्वमपुरुषार्थगन्धशून्यत्वे हेतूकृतं गतम् , अधिकरणान्तरविरुद्धम् , अप्रयोजकं चेति स्वीकृतम् ॥

शासकविधया भोगायतनत्वं शरीरस्येत्यस्य भूषणाभिप्रेतस्य

निरासेनोभयलिङ्गसूत्रवैयर्थ्यदुष्परिहरत्वोपक्षेपः

यत्तु—भोक्त्रापत्त्यधिकरणे शासनविषयस्यैव शरीरस्य भोगायतनत्वम् , अतथात्वादीश्वरो न भोक्ता राजवत् , इति जीवेश्वरयोरुभयोरपि शरीरं प्रति स्वामित्वाविशेषादविशेषेण भोक्तृत्वं स्यादिति शङ्का परिहृता, अत्र तु यत्र प्राकृतशरीरसम्बन्धः, तत्र भोगायतनत्वमिति शङ्का ततकर्माधीनशरीरत्वमेव तस्य भोक्तृत्वापादकमिति परिह्रियते—इति, अत्रापि श्रीभाष्यप्रकाशिकादौ भोक्त्रापत्तिसूत्र एव कर्माधीनशरीरत्वस्य भोक्तृत्वप्रयोजकत्वमादाय शरीरसंविधानमात्रस्य, शरीरस्वामित्वमात्रस्य वाऽप्रयोजकत्वेनैव भोक्तृत्वशङ्कायाः परिहारादुक्ताधिकरणवैयर्थ्यं दुरपह्नवम् ॥

"भेदादि"तिचेन्नेति सूत्रवैयर्थ्यस्यापरिहार्यत्वं

भूषणोक्तिनिरसनपूर्वकम्

"एतेन—"भेदादिति चेन्न प्रत्येकमतद्वचनादि"ति सूत्रमपि—व्याख्यातम् ॥

अस्य सूत्रस्य देवादिदेहयोगादपुरुषार्थगन्धपरत्वे पूर्वसूत्रस्य को विशेष इति तु शतभूषणी, भूषणं तु जीववदीश्वरस्याप्यपुरुषार्थगन्धो भवतु, अवच्छेदभेदेनापुरुषार्थगन्धोऽस्तु, अनवच्छिन्नस्वरूपेण त्वखिलहेयप्रत्यनीकत्वमस्त्विति शङ्कापरिहारार्थमिदं सूत्रमिति—वदति ॥

चिदचिच्छरीरस्वभावस्य ब्रह्मणस्तदवच्छेदभेदासंभवेना-
पुरुषार्थसम्बन्धायोगोक्त्यनुपपत्तिः

इदमेवात्र पृच्छ्यते—चिदचिच्छरीरस्वभावस्यावच्छिन्नानवच्छिन्नस्वरूपं कथं विवेक्तुं शक्यते ? अन्यथा सिद्धान्तोऽपि कथम् ; प्रत्येकमपि तत्तदवच्छिन्नानवच्छिन्नरूपेणोक्तशङ्कायास्तादवस्थ्यात् ॥

"न स्थानतोऽपी"त्यत एव तस्यापि सिद्धत्वेनोक्तसूत्रवैयर्थ्यम्

न स्थानतोऽपीत्यत्रापि हि शरीरसम्बन्धप्रयुक्तापुरुषार्थगन्धोऽवच्छिन्नरूपेणाशङ्क्य परिहृतः; अन्यथा शरीरसम्बन्धाभावेन कथं शरीरसम्बन्धप्रयुक्तापुरुषार्थगन्धशङ्काऽपि, यत्परिहारार्थं तत् सूत्रम् ॥

अनवच्छिन्नस्वरूपस्यापुरुषार्थसम्बन्ध-
निषेधपरत्वेऽद्वैतादविशेषः

अनवच्छिन्नं हि रूपं निर्विशेषं संविन्मात्रम् , न तु सशरीरमिति साकारत्व-निराकारत्वोभयलिङ्गत्वनिषेध एव पर्यवस्यति, इति को वा विशेषोऽद्वैतसिद्धान्तादस्य। तत्र श्रीभाष्यमते देवादिदेहावच्छिन्नस्यैव परमात्मनस्तच्छरीरत्वस्य कर्मकृतत्वाभावेन ह्यपुरुषार्थगन्धाभावः, अखिलहेयप्रत्यनीकत्वेन, विशिष्टशक्तिमत्वेन वा प्रथमसूत्रेण समर्थितः, सिद्धान्तोऽप्यत्राप्युभयलिङ्गत्वनिरासार्थमनवच्छिन्नरूपस्यैवापुरुषार्थगन्धाभावेन, इति द्वितीयसूत्रवैयर्थ्यं दुष्परिहरम् ; उभयलिङ्गत्वनिषेधस्यान्यतरपारमार्थिकत्वं विनाऽवच्छेदभेदप्रयुक्तभेदेन शङ्का-तत्परिहारयोरसंभवात् ॥

अद्वैतमते तु भेदादित्यंशेन सविशेषत्वशङ्का, अतद्वचनादिति
तस्य परमार्थतो निषेध इत्युक्तसूत्रसार्थक्यम् ,

एतेन—"प्रत्येकमतद्वचनादि"त्यपि—व्याख्यातम् ; तेनापि हि तत्तद्देहाद्यवच्छेदभेदेनैव पुरुषार्थगन्धाभावो व्यवस्थाप्यत उभयलिङ्गत्वस्यैकान्तिकत्वसिद्धान्तेन। अद्वैतमते तु—पूर्वसूत्रेणोभयलिङ्गत्वे निषिद्धे भूषणाद्युपाद्यमानं सविशेषत्वमेव भवत्विति शङ्कापरिहारार्थमिदं सूत्रम् , इति न वैयर्थ्यम् ; प्रत्येकमतद्वचनेन तदुपपादनात् "भेदादि"ति सूत्रांशेनैव

सविशेषत्वस्याऽऽशङ्क्यमानत्वात्। प्रत्येकमतद्वचनं हि सर्वेषां सविशेषवाक्यानां कारणत्वादिपराणाम्, सत्यकामत्वादिपराणां च "नेति नेति" इति निषेधापेक्षितप्रतियोगिसमर्पकत्वेनापच्छेदादिनयेन निर्गुणवाक्यप्राधान्याद्द्वैतमते सुष्ठु लगति; प्रत्युपासनमतद्वचनाभावेऽप्युपासनाविधीनामुपास्यांशबोधनमात्रे तात्पर्येण, तत्रावान्तरतात्पर्यस्यैव स्वीकारेण च निर्गुणवाक्यशेषतयैव पर्यवसानतः प्रामाण्यस्य स्वीकारात्, इति प्रत्येकमतद्वचनं पर्यवसानदृष्ट्या, मुख्यतात्पर्यदृष्ट्या वा, न त्वापातत इति न विरुद्धम्। उपासनार्थत्वेऽपि श्रुतीनां स्वतः प्रामाण्यं यावद्बाधं को वा वारयति? अत एवोपासनाविधीनां व्यावहारिकं प्रामाण्यम्॥

### प्रकृतैतावत्त्वसूत्रेण वाक्यविशेषमाश्रित्यातद्वचनस्य समर्थनम्

एतेन—प्रकृतैतावत्त्वसूत्रस्याधिकरणान्तरत्वमपि—व्याख्यातम्, न स्थानतोऽपीत्यनेन सामान्यतो निर्विशेषपरत्वं सर्वेषां वेदान्तवाक्यानां समर्थितम्, तदेव वाक्यविशेषमवलम्ब्य प्रत्येकमतद्वचनेन शङ्कापरिहारपूर्वकं समर्थ्यते, इत्यधिकरणलक्षणस्य सर्वस्य सत्त्वादधिकरणान्तरत्वमस्य॥"

### "नेति नेति" वाक्यव्याख्यानमद्वैतिनामेव सुष्ठु

"नेति नेति" वाक्यस्यान्यथा व्याख्यानेन निर्विशेषपरत्वायोगशङ्कापरिहारादत्र पूर्वपक्षस्य फल्गुत्वम्, अफल्गुत्वं वा द्रष्टृबुद्धिफल्गुत्वाफल्गुत्वनिबन्धनम्। तत्रान्येषां सिद्धान्त एव प्रायेण सर्वत्र पूर्वपक्षः फल्गुः। तत्र यदि पूर्वपक्षः फल्गुः, तर्ह्यन्येषां सिद्धान्तोऽपि फल्गुः पर्यवस्यति, इति दृष्टिभेदमात्रेऽपि पूर्वोत्तरयोः पक्षयोस्तत्तत्पद्त्वमव्याहतम्। व्याख्यानभेदे स्वारस्यातिशयस्तु शतभूषण्यामेव समर्थितः। "नेति नेती"ति वीप्सा हि सर्वप्रकारनिषेधपरा न परिच्छिन्नमात्रपरेत्यादि भाष्य एव व्यक्तम्॥

### स्वप्नदृष्टान्तेन सर्वमिथ्यात्वसमर्थनेन निर्विशेषत्वव्यवस्थापनार्थं सन्ध्याधिकरणम्

सन्ध्याधिकरणं हि स्वाप्निकमिथ्यात्वनिरूपणद्वारा ब्रह्मभिन्नमिथ्यात्वसमर्थनेन प्रकृतैतावत्त्वाधिकरणार्थ-निर्विशेषमात्रपारमार्थिकत्वमेव विशदयति। तद्ध्युपलक्षणं प्राधान्येन स्वाप्नपरमपि जगन्मात्रमिथ्यात्वस्य; न्याय-

साम्यात्। तद्धि स्वाप्निकस्य मायामात्रत्वं बोधयतीति संप्रतिपन्नम्। मायाशब्दस्थाने कार्यस्य मिथ्यावचनत्वमपि न विरुद्धम्। तत्र तात्पर्यानुसाराद् व्यवस्था। सति चैवं "कात्स्न्र्येनानभिव्यक्तस्वरूपत्वादि"ति वाक्यशेषात् मायाशब्दोऽत्र मिथ्यापर इति व्यक्तं भूषण्याम्। इदं हि सूत्रं न्यायमात्रम्। न्यायसाम्यात्तु जगतो मिथ्यात्वेऽपि प्रमाणमित्यद्वैतसिद्धान्तः, न त्वेतत् सूत्रं साक्षात् सर्वमिथ्यात्वनिरूपणपरमिति, इत्येतद् दृष्टान्तेनैव जागरिकमिथ्यात्वं वैलक्षण्येऽपि व्यवहारदशायां बाधाबाधाभ्यां स्वाप्नव्यतिरिक्तानामपीत्यद्वैतिनो मन्यन्ते ॥

### मिथ्यात्वाविशेषेऽपि स्वाप्निकतदितरयोर्वैधर्म्यमपि गुण एव

अत एव "वैधर्म्याच्च न स्वप्नादिवत्" इति वैधर्म्यमपि; सत्यपि मिथ्यात्वेन साधर्म्ये दृष्टान्त-दार्ष्टान्तिकभावोऽपि साधर्म्य-वैधर्म्ययोरुभयोरपि सतोरेव, नात्यन्तमैक्ये, इति वैधर्म्यमात्रेण प्रपञ्चस्य सत्यत्वमपीष्टम्। तद्धि सत्यत्वममुख्यं स्थूल-सूक्ष्मरूपाभ्यामबाधमात्रेण न तु त्रिकालाबाधेन स्वाप्निकवद् मायामात्रत्वाभावेऽपि मायिकत्वाविशेषेण मिथ्यात्वाविरोधो जगन्मात्रस्य ॥

तत्र सौत्रं "वैधर्म्याच्च न स्वप्नादिवत्" इति वैधर्म्यं योगाचाराभिमतं निरालम्बनत्वं दृष्टान्तेऽङ्गीकृत्य, अत्र तु सत्यपि वैधर्म्ये स्वप्नस्यापि न निरालम्बनत्वम्; तस्यापि प्रातिभासिकानिर्वचनीयत्वाङ्गीकारेण, ततो विशेषस्य मायामात्रत्वादिति निरूप्यते ॥

### अद्वैतमतस्य योगाचारमतप्रवेशापत्तिशङ्का-तत्परिहारौ

सति चैवं यदि मायामात्रत्वेन स्वाप्नानां मिथ्यात्वम्, तर्हि जागरिकाणामपि मायिकत्वादद्वैतमते स्वाप्निकानां जागरसाधर्म्याद् योगाचारमतप्रवेशापत्तिरिति शङ्का तु सत्यं प्रसरति। समाधानं तु तत्र नायं योगाचारसिद्धान्तः। तत्र ज्ञानाकारातिरिक्तविषयसत्त्वानङ्गीकारात् जीवाश्रिततूलाविद्याकार्यस्य, जीवसृष्टस्य, वा विषयस्य प्रातिभासिकसतोऽनङ्गीकाराच्च, इति साक्षात् स्वाप्नमात्रमिथ्यत्व एवास्य तात्पर्यम् ॥

### अध्यासभाष्यं तदनन्यत्वाधिकरणार्थं मनसि निधाय, इदं तु श्रौतं स्वाप्नमिथ्यात्वं समर्थयितुमिति विवेकः

जिज्ञासाधिकरणे भगवत्पादानामध्याससमर्थनम्, श्रीभाष्यकाराणां तन्निरासेन विश्वसत्यत्वसमर्थनमुभयं च भाविनं सौत्रमर्थं मनसि

निधाय। तत्राध्यासभाष्यार्थस्तदनन्यत्वाधिकरणार्थ एवेति भामती-कल्पतर्वादौ व्यक्तम्। तस्यैवोपपत्त्याऽपि समर्थयितुं मिथ्यात्ववादोऽपि श्रौत एवेति दृष्टान्तार्थं स्वाप्नमिथ्यात्वानुसन्धानार्थमुक्ताधिकरणमिति विवेकः॥

तत्र तदनन्यत्वसूत्रे जागरिकमिथ्यात्वं श्रौतम्, अत्र तु स्वाप्नमिथ्यात्वं तथेति विषयवाक्यभेदेनाधिकरणभेदः। तत्र यावद्ब्रह्मसाक्षात्कारमबाधितानां ब्रह्मसाक्षात्कारबाध्यत्वेन मिथ्यात्वं तत्र, तदुपलक्षणं स्वाप्निकानामपीति तु न संभवति; जागरिकमिथ्यात्वपरत्वात् तस्य। ब्रह्मविवर्तं कार्यसामान्यमादाय तदधिकरणम्, स्वाप्निकं तु न तथा; व्यवहारदशायामेव शुक्तिरजतादिवद् बाधात्, इति सद्विद्याप्रतिपादितस्य मिथ्यात्वस्योपपत्त्या साधनं श्रुतिसिद्धमपीति निरूपयितुमेव बादरायणस्य सन्ध्याधिकरणम्। इदमपि न प्रत्यक्षविरुद्धमित्यभिप्रेत्य शुक्तिरजतादिप्रत्यक्षसिद्धमिथ्यापदार्थानुसन्धानमिति वस्तुस्थितिः।

### मिथ्यात्वानुमाने शुक्तिरूप्यदृष्टान्तादरणं जागरिकस्य जागरिकमेव निदर्शनं योग्यं मत्वा, न तु तावता स्वाप्नसत्यत्वम्

तत्र स्वाप्नानां मिथ्यात्वं श्रौतमिति मिथ्यात्वानुमाने श्रुत्यर्थोपबृंहके स्वाप्न एव यद्यपि दृष्टान्ततामर्हति; तथापि तत्रापि श्रुत्यर्थे विवदमानं प्रति दृष्टान्ततया प्रत्यक्षसिद्धं जागरिकं शुक्तिरूप्यादिकमेव प्रायेण जागरिकमिथ्यात्वानुमाने दृष्टान्ततया विवक्ष्यते। सर्वथा तु—स्वाप्नमिथ्यात्वे जागरशुक्तिरूप्यादिदृष्टान्तादरणं स्वप्नमिथ्यात्वपरश्रुत्यर्थे विवदमानं प्रति नानुपपन्नम्; तत्त्वज्ञाननिवर्त्यत्वेनोभयोरपि मिथ्यात्वाविशेषेऽपि प्रपञ्चमिथ्यात्वानुमाने शुक्तिरूप्यदृष्टान्तस्यैवादरणे निमित्तं तु संभवमात्राभिप्रायेण। जागरिकमपि मिथ्या प्रत्यक्षसिद्धमविप्रतिपत्तियोग्यं वर्तत इत्यभिप्रेत्य वा स्वाप्नदृष्टान्तपरित्यागेन जागरिकदृष्टान्तादरणं परीक्षकाणाम्, न तु तद्दृष्टान्तीकरणमात्रेण स्वाप्निकानां सत्यत्वसमर्थनं समुचितम्॥

### मायामात्रत्वं प्रातिभासिकानां मायापरिणामत्वेऽपि मृदादीनामिव कार्यान्तरायोग्यत्वेन, स्वप्नोपादानानामज्ञानानामनेकत्वं च

तत्र जीवाश्रिततूलाज्ञानकार्यत्वेनाविशेषः स्वाप्न-जागरशुक्तिरूप्यादीनां वर्तत इति कृत्वैवोभयोर्मायामात्रत्वम्। स्वाप्निकेषु जागरशुक्तिरूप्यादिषु च तत्कारणस्य मायायास्तत्परिणाममात्रहेतुत्वेन, तत्कारणस्य परिणा-

मान्तराहेतुत्वात् तस्य मायामात्रत्वम्। प्रातिभासिकोपादानान्यज्ञानान्येकैक-प्रातिभासिकमात्रोपादानान्यनन्तानि तत्त्वज्ञाने सति तैः सहैव नश्यन्ति, न तु मृदादिकमिव घटनाशे पुनरपि घटान्तरस्यापि हेतुः ॥

### योगाचाराद्वैतादिमतविशेषविवेचनम्

अत एव जगन्मिथ्यात्ववादस्य योगाचारमताद्विशेष इत्यनुपदमेवोक्तम्। अत्र योगाचारवाद आत्यन्तिकनिरालम्बनतावादः, अद्वैतमते तु यावत्तद्बाधं स्वरूपसदालम्बनवाद इति विशेषः। सर्वविषयात्यन्तिकासत्त्ववादो योगाचाराणाम्, सर्वाऽऽत्यन्तिकसत्यत्ववादः श्रीभाष्यस्य, यावद्बाधं सर्वसत्त्ववादोऽद्वैतवाद इति वादत्रयविवेकः। विनाऽधिष्ठानं सांवृतसत्त्ववादो बौद्धानाम्, अद्वैतिनां तु साधिष्ठानसांवृतमिथ्यात्ववाद इति तु निष्कर्षः ॥

### सौत्रं वैधर्म्यमद्वैतमतं मनसि कृत्वैव, अन्यथोक्तसूत्रमनुपपन्नम्

यद्यप्यनिर्वचनीयविषयकत्वेन सामान्येन प्रातिभासिक-व्यावहारिकानिर्वचनीयविषयत्वेन स्वाप्नजागरयोरस्ति वैषम्यम्, तत एव योगाचारात् विशेषोऽपि। इमं विशेषमादायैव "वैधर्म्याच्च न स्वप्नादिवत्" इति। इदं तु सूत्रमद्वैतवादं मनसि कृत्वैव; अन्यथा स्वाप्न-जागरयोरुभयोरपीश्वरसृष्टतया ऽविशेषेण कथं तयोर्वैधर्म्यम्? न ह्यनिर्वचनीयत्वमात्रेण साधर्म्यं योगाचारोऽपि मन्यते। तेनानिर्वचनीयख्यात्यनङ्गीकारात्, ज्ञानाकारातिरिक्तविषयाकारकथापि हि तन्मते नास्ति ॥

### मायाशब्दस्य मिथ्यापरत्वम्, मायामात्रमिति मात्रपदकृत्यं च

तत्र मायायास्तत्कार्यात्मना परिणामः, परिणतानां कार्याणामपि प्रायेण कार्यान्तरात्मना स्वकारणात्मना परिणामः, तस्यैव पुनः कार्यान्तरात्मना परिणाम इति प्रत्यक्षसिद्धत्वात्तूत्तरोत्तरपरिणामहेतुर्मायेति लोकप्रमाणमेव गमयति। तत्र माया जागरोपादानम्, स्वप्नोपादनं वाऽपरमार्थैव ॥

तत्र स्वाप्निकानां भाष्ये मायात्वोपपादनं तु स्वाप्निकानां स्वप्न एव नश्यतां तदुपादानमायारूपत्वमात्रम्, न तु तस्या रूपान्तरेण परिणामः। बाधज्ञानानन्तरं तु मायाया अपि नाश इत्यभिप्रेत्योत्तरोत्तरपरिणामहेतुत्वमात्रम्। अत एव सन्ध्ये सृष्टिर्मायैवेति भाष्य उक्तम्। परन्तु

तत्रैव न परमार्थगन्धोऽस्तीति भाषणाद् मायात्वमपारमार्थ्यरूपं प्रतीयते, इति मायाशब्दो मिथ्यावचन इत्येव भाष्याशयः ॥

### स्वाप्निकसृष्टेरपि मायात्वम्

मिथ्यात्वं तु मायायाः स्वतः, स्वाप्निकानां तु तदुपादानकत्वेनेत्यन्यदेतत् । स्वाप्निकानां मायोपादानकानामपि मायात्वोक्तिस्तूपादानोपादेययोरभेदमाश्रित्य; उपादानस्यैव मिथ्यात्वे का वा कथा स्वाप्निकानां मिथ्यात्व इति सूचयितुमेव तत्र सृष्टेरेव मायात्वमुक्तमिति मन्तव्यम् ॥

### मायामात्रपदस्वारस्यमद्वैते

यत्तु—तदनन्यत्वाधिकरणे प्रपञ्चस्यापि मायामात्रत्वं वर्णितम्, तस्यापि वस्तुगत्योपादानेन साकं बाधो वर्तत इति साम्यमाश्रित्य। न चैतावता स्वाप्निक-जागरिकाणां सर्वात्मना साम्यम्, येन जागरिका इव स्वाप्ना अपीश्वरसृष्टा एव भवेयुः । अतो "मायामात्रमि"ति मायापदम्, तेन सह मात्रपदं चोभयमप्यद्वैतसिद्धान्त एव स्वरसम्, न श्रीभाष्यसिद्धान्ते । न हि तत्र जागरे कदापि मायामात्रपदप्रयोगः कुत्रापि ॥

### स्वाप्निकानामीश्वरसृष्टत्व उक्ताधिकरणवैयर्थ्यम्, अन्यथा स्वाप्निकानां सर्वानुभाव्यत्वापत्तिः

स्वाप्निकानामपीश्वरसृष्टत्वे "जन्माद्यस्य यतः" इति सूत्रेणैव तत्सृष्टेऽपि संग्रहात् किमर्था वा स्वाप्नपरीक्षाऽपि ह्यत्र ? अन्यथा जागरपदार्थानामिव पुरुषान्तरानुभाव्यत्वमपि स्वाप्निकानां स्यात् । यत्तु शतभूषण्यां सर्वानुभाव्यत्वमेवं सति स्यादिति वर्णितम्, तदिदं स्वेतराननुभाव्यत्वमात्रेण, सर्वानुभाव्यत्वयोग्यताभिप्रायेण वा ॥

### ईश्वरसृष्टस्य सर्वानुभाव्यत्वानियमः इति शङ्का

यत्तु—एकैकमप्यचित्कार्यं न सर्वानुभाव्यमिति नियमः । यावत्पुरुषकर्माधीनं यत्, तत् तावत्पुरुषानुभाव्यमित्येव हि नियमः—इति, तत्रेदं पृच्छ्यते—किमीश्वरसृष्टं पृथिव्यादिकम् कुलालादिरूपेण तत्सृष्टं घटादि, सर्वेषां शरीरादिकम् गृह-धनादिकं च तत्तत्पुरुषमात्रेण दृश्यम्, अनुभाव्यं च । अनुभाव्यपदं हि न भोग्यत्वमात्राभिप्रायम्, किन्तु ज्ञेयत्वाभिप्रायमपि ॥

### स्वाप्नानां सर्वानुभाव्यत्वाभावेन, तज्ज्ञानस्य स्मृतित्वायोगेन चेश्वरसृष्टत्वायोगः

अतस्तत्तत्पुरुषमात्रज्ञेयं तत् कथमिति प्रथमः प्रश्नः? द्वितीयस्तु प्रश्नः कथं भोग्यत्वमिति? प्रथमप्रश्नोत्तरार्थं तु नैव भूषणं यतते। जागरास्तत्तद्देशकाल एव किं स्वप्नेऽपि दृश्यन्ते? यदि स्मरणमात्रं तेषाम्, तर्हि यत्र स्वाप्ना दृष्टाः, तदभिमुखी खलु प्रवृत्तिः सुषुप्तस्य स्यात्। न च सा संभवति, न वा तत्प्राप्तिनिबन्धनसुख-दुःखाद्यनुभवोऽप्यत्र॥

### स्वाप्नानामवान्तरोपादानकारणादि विना सृष्टिस्तूलाविद्याकारणत्वेनैव, नान्यथा

न च प्रकृत्यंशपरिणामत्वं स्वाप्नानां श्रीभाष्यमपि मन्यते, अद्वैते तु तच्च मायामात्रपदेन सूत्रेणैव सूच्यते, इति कथं तस्य सौत्रस्याप्यनङ्गीकारः? कथं च विना वृक्षादिकम् तत्र रथादीनां विना च तत्ताद्यसाधारणकारणं साधारणकारणेनेश्वरेणापि रथादि स्रष्टुं शक्यते? सृष्टानां वाऽन्येषामपि न साक्षात्कारः? दावाग्निदग्धानां वेत्रबीजादीनां कदलीकाण्डजननत्वमपि वेत्रबीजादिकमपेक्ष्यैवं, नानपेक्ष्योपादानकारणम्। किं वाऽत्र रथादीनामुपादानकारणम्? तूलाविद्यापरिणामत्वे तु तदाश्रयो जीव एव तदुपहितरूपेण विवर्तोपादानम्, विशिष्टरूपेण निमित्तकारणम्, तूलाविद्या च तदाश्रितोपादानकारणमिति सर्वं सुस्थम्॥

### शुक्त्यादिदृष्टान्तोऽपि स्वाप्नानामद्वैतानुगुणः स्वाप्नादाविव

एतेन—शुक्त्याद्यज्ञानमपि—व्याख्यातम्; तस्यापि शुक्तिविषयकस्य तदवच्छिन्नचैतन्याभिन्नप्रमात्राश्रयस्य विनेश्वरसृष्टं रजतावयवमपेक्ष्य रजतात्मना परिणामाविरोधात् अघटितघटनापटीयसी शक्तिरविद्यायाः शुक्त्यवच्छिन्नचैतन्याश्रिता प्रातिभासिकात्मना परिणमयितुमीष्टे। नचैवं श्रीभाष्यमते स्वाप्निकानां सृष्टिः, तत्तन्मात्रानुभवो वा संभवति॥

### स्वाप्नानां तत्तत्पुरुषमात्रानुभाव्यानां सृष्टौ नेश्वरस्यापि शक्तिः

एतेन—अज्ञानस्यैव शक्तिमत्त्वे का वा कथा सर्वशक्तस्येश्वरस्येति—परास्तम्। न हीश्वरोऽपि संकल्पमात्रेण रथादिकं तत्तन्मात्रोपभोग्यम्, मुक्तादिमात्रोपभोग्यं वा विना तत्तदवान्तरोपादानम्, अन्तरेण वाऽसाधारणं कारणं सृजति; अन्यथा सर्वं सर्वत्र विना दार्वादिकम् तत्तादिकं वोपलभ्येत,

सर्वज्ञ सर्वस्य भोक्ता स्यात्। तत्तत्कर्मानुसारेण स्रष्टृत्वमपि न संकल्पमात्रेणेश्वरस्य प्रकृत्यादिकमपेक्ष्यैव, न तु स्वशक्तिमात्रेणाप्येकपुरुषमात्रप्रत्यक्षादियोग्यं वस्तु स स्रष्टुमलम्। ईश्वरीयशक्तिवैचित्र्यमात्रेण कृत्स्नव्याप्तिरीश्वरस्यापि न संभवतीति हि भूषणीयः सम्प्रदायः; अन्यथा किमन्तर्गडुना प्रकृत्या ?

जागराणामिव स्वाप्नानामपि सृष्टिश्रवणात् संकल्पमात्रेण स्वशक्त्या स्वाप्नसृष्टत्वम्

यत्तु—सोऽयं प्रश्नो जागरेऽपि तुल्यः स्यात्—इति, सुष्ठु गृहीतो भावो भूषणेन, स एव प्रश्नः शतभूषण्या अपि। किमिति वा विना प्रकृत्यादिकमन्यच्चोपादानं जागरानपि न सृजतीति ? यदि सृष्टिप्रकरणविरोधात्, मायाकारणत्वपरश्रुतिविरोधाच्च नैवम्, तर्हि प्रकृतेऽपि स्वप्ने विना वृक्षादिकमन्यद्वा रथादिसृष्टीनां तत्तत्पुरुषमात्रानुभाव्यानां श्रौतत्वात्, ईश्वरसृष्टत्वे च तद्विरोधात् तूलाविद्याश्रयजीवसृष्टत्वमेव श्रौतमूरीक्रियताम्॥

कात्स्न्येनानभिव्यक्तस्वरूपत्वादिति हेतुरीश्वरसृष्टत्वे न संभवति

एवं सत्येव हि "अनभिव्यक्तस्वरूपत्वादि"ति सौत्रो हेतुः सुसङ्गतो भवति। अनभिव्यक्तस्वरूपत्वं तु मायामात्रपदस्यैव; प्रकृतत्वात्। मायामात्रस्यापि यद्यप्यभिव्यक्तस्वरूपत्वं प्रातिभासिकमस्ति; तथापि कार्त्स्न्येनाबाधिततत्तद्देश-कालादिनिमित्तसम्पत्त्याद्यभावात् कार्त्स्न्येनानभिव्यक्तस्वरूपत्वमव्याहतम्। इदं चेश्वरकर्तृकत्वे न संभवति॥

स्वाप्निकानामीश्वरसृष्टत्वशङ्कापरिहारेण जीवसृष्टत्वव्यवस्था सौत्रहेतुसाध्यादिस्वारस्यमद्वैतसिद्धान्त एव, न श्रीभाष्यमते

अत्र यद्यपि प्रथमद्वितीये सूत्रे श्रीभाष्यमते जीवपूर्वपक्षतापरौ, अद्वैतमते त्वीश्वरपूर्वपक्षतापराविल्यस्ति प्रकृतत्वम्, तथापि स्वप्ने जीवस्य नापहतपाप्मत्व-सत्यसंकल्पत्वादिरूपेणाभिव्यक्तिः, इति कार्त्स्न्येनानभिव्यक्तस्वरूपत्वमविरुद्धम्; मायामात्रपदस्य तु "दैवमायेव निर्मिते"त्यादाविवाश्चर्यपरत्वमीश्वरसृष्टत्वार्थकत्वं मत्वा, इति स्वाप्निकानां न जीवसृष्टत्वमिति व्यवस्था। तत्र जीवोऽपि पूर्वसूत्रे यद्यपि प्रकृतः; तथाप्यभिव्यक्तस्वरूपस्यापि तस्य स्रष्टृत्वं बाधितम्। न च स्वप्ने जीवस्य बद्धस्य कर्तृत्वसंभावनाऽपि; अपवरके शयानस्य तत्र प्रवेशानर्हमहापदार्थस्य

सत्यस्य सृष्टिः कथमुपपद्यते ? अनिर्वचनीयत्वे तु तस्य केवलाविद्याकार्यत्वात् स्वाप्निकमात्रानुभाव्यरथादिसृष्टिः, शुक्तिरूप्यादिसृष्टिरिव संभवति। न च प्रतीतिमात्रं तत्र, किन्तु प्रातिभासिकस्यानिर्वचनीयस्य प्रातिभासिकं सत्त्वमपि। कार्त्स्न्येनानभिव्यक्तस्वरूपत्वं जीवस्य, मायामात्रत्वं स्वाप्निकपदार्थस्येति हेतु-साध्यवैयधिकरण्यदोषोऽपि श्रीभाष्यमते। अद्वैतमते तु— 'सन्ध्ये" इति प्रकृतः स्वाप्निकार्थः पक्षः, मायामात्रत्वं साध्यम्, अनभिव्यक्तस्वरूपत्वादिति हेतुः, शुक्तिरूप्यादिकं दृष्टान्त इति हेतु-साध्यसामानाधिकरण्यादि सुस्थम्॥

### जीवस्येश्वरांशत्वेऽपि तूलाविद्याद्वारैव स्वाप्नस्रष्टृत्वम्

एतेन—"पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्ध-विपर्ययौ" इति सूत्रमपि—व्याख्यातम्। अनेन हि जीवस्येश्वरांशत्वेन न तदैश्वर्यवशात् संकल्पमात्रेण स्रष्टृत्वम्, किन्तु तदाश्रिताविद्याप्रयुक्तत्वेनैवेति विविच्यते। परमात्मांशोऽपि हि परमात्मस्वरूपज्ञानादेव मुक्तो भवति, तथा मुक्तश्चोपभोगमात्रोपयुक्तस्य स्रष्टाऽपि भवति; गौणमुक्तिकाले "संकल्पादेव तच्छ्रुते" रित्यादिनयेन। न च स स्वाप्नः, इति स्वाप्नस्रष्टृत्वं न जीवस्यापि संकल्पमात्रेण। स्वप्नद्रष्टा तु स्वाप्निकस्रष्टा देहयोगादपि तिरोहितशक्तिः। अत एव स स्वाप्नरथादेर्न संकल्पमात्रेण स्रष्टा, किन्तु तदाश्रिताज्ञानद्वारैवेति वस्तुस्थितिः॥

### "पराभिध्यानात्तु"इति सूत्रस्य स्वाप्निकानां जीवस्रष्टृत्वोपपादकत्वम्

यत्तु—"पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्ध-विपर्ययौ" इति सूत्रे जीवस्वरूपमेव तिरोहिततया विवक्ष्यते, इति "अनभिव्यक्तस्वरूपत्वादि" त्यत्रापि जीवस्यैवानभिव्यक्तस्वरूपत्वं विवक्षणीयम्—इति, तदिदं मतद्वयेऽपि यद्यपि संकल्पमात्रेण स्रष्टृत्वनिरासपरम्; तथापि मतद्वयेऽपि स्वाप्निको जीव ऐश्वर्यविशेषेण स्वाप्निकानां न स्रष्टेति समानम्। स्वप्ने प्रकाशमानो हि मुक्तो जीव इव संकल्पमात्रात् स्रष्टा स्वमात्रानुभाव्यानामिति संप्रतिपन्नम्॥

### स्वाप्निकानामीश्वरसृष्टत्वेऽनभिव्यक्तस्वरूपत्वहेत्वनन्वयः

बद्धो हि जीवः स्वाप्निकानां संकल्पमात्रेण स्रष्टेति यदि शङ्का स्यात्, तर्हि "अनभिव्यक्तस्वरूपत्वादिति" तत्र हेतुरुपपद्यते। न च स्वाप्नो जीवो

मुक्तो नाम। तत्र "य एष स्वप्ने जागर्ति कामं कामं पुरुषो निर्मिमाणः" इति यदि श्रीभाष्यरीत्या स्वाप्नजीवपरम्, तर्हि श्रुतिसिद्धं स्रष्टृत्वं कथमन्यथयितुं शक्यते ? यदीश्वरपरम्, तर्हि कथं तदनुसारेण जीव-पूर्वपक्षः ? जीवपरत्वं मत्वा पूर्वपक्ष इति वादस्तु कृत्वाचिन्तया पूर्वपक्षा-भिप्राय इति स्यात्, इतीश्वरपरतया पूर्वपक्षः, स्वाप्नोऽपि जीव एवेति पक्षद्वयानुसारेण योजनेति युक्तम्॥

### स्वाप्निकजीवस्रष्टृत्वपक्षोपसंहारः

तत्र च वस्तुगत्या स्रष्टृत्वे न विवादः, परन्तु स्वाप्निकस्य नैश्वरत्वम्, किन्तु जैवत्वमेवेति सिद्धान्तः। न चाद्वैतिनोऽपि जीवस्याभिव्यक्तस्वरूप-स्यैव स्वाप्नयथार्थस्रष्टृत्वमभिप्रयन्ति, येन तन्निरसनेनाद्वैतसिद्धान्तोऽत्र पूर्वपक्षितः, निरस्तश्च स्यात्। अतो न सूत्रस्वारस्यं श्रीभाष्यसिद्धान्ते, किन्त्वद्वैत एव। यथाच "संकल्पादेव तु तच्छ्रुतेः" इति सूत्रं मुक्तात्मा-भिप्रायम्, न स्वाप्नाभिप्रायम्। न च तमादाय स्रष्टृत्वसंभावना, तथा "पराभिध्यानात्तु" इति सूत्रार्थविवेचनावसरे व्यक्तीकृतम्॥

### "तन्वभावे सन्ध्यवदुपपत्तेः" "भावे जाग्रद्वत्" इति मुक्तसृष्टौ दृष्टान्तस्वारस्यमद्वैतवाद एव

वस्तुतस्तु "संकल्पादेवे"ति सूत्रसिद्धं गौणमुक्तस्रष्टृत्वमवलम्ब्य "अभावं बादरिराह हि" इत्यारभ्य प्रवृत्ते विचारे "तन्वभावे सन्ध्यवदुपपत्तेः" "भावे जाग्रद्वदि"ति सूत्रयोः सन्ध्य-जागरदृष्टान्तेन स्वाप्न-जागरयोर्वैषम्यं सूच्यते। तत्र सन्ध्येऽपि जागरतुल्यतायां कथमत्र दृष्टान्तद्वयम्? अत ईश्वरसृष्टिरिव मुक्तात्मसृष्टिर्जागरतुल्यतया, जीवसृष्टिरिव विनापि शरीरादिकं 'स्वप्नवदि'ति कृत्वैव दृष्टान्तद्वयस्वारस्यं भवति। विशेषस्तु मुक्त-स्वाप्नजीवसृष्ट्योः—संकल्पाद् मुक्तात्मसृष्टिः; नाज्ञानात्, स्वाप्नस्य तु सृष्टिर्न संकल्पमात्रात्, किन्त्वज्ञानादिति। इदमेवाभिप्रेत्य "पराभिध्या-नात्तु" "देहयोगाद्वेति" सूत्रद्वयमद्वैतवादे। व्यक्तं चैतदाकरे। श्रीभाष्य-मते तु "अनभिव्यक्तस्वरूपत्वादि" त्यतोऽधिकं किं वा सूत्रद्वयेन विवक्ष्यते ? कथञ्चनोपपत्तिकल्पना तु न स्वरसा॥

परमार्थतस्तु अभिव्यक्तस्वरूपत्वेऽपि जीवस्य, यथा स्वाप्नस्य स्वाप्नपु-रुषमात्रानुभाव्यत्वम्, स संकल्पमात्रेण न स्रष्टुमर्हति, तथा जाग्रदपीति स्थिते कथं स्वाप्नमात्रे जीवस्रष्टृत्वनिरासोऽत्र ? जागरेऽपि स न स्रष्टा; अन्यथेश्वर-

स्रष्टृत्वकथा कथामात्रमेव स्यात्, इति योगादिसिद्धजीवानामेव सर्वत्र-कारणत्वोपपत्तौ किमन्तुर्गण्डनेश्वरेण ? जगत्कारणेन श्रुतिवशात् यदि जगत्कारणस्य तस्य सिद्धिः, तर्हि तत एव किमिति स्वाप्निकानामुक्तया युक्त्या न मायामात्रत्वम्ः "जगद्व्यापारवर्जमि"ति सिद्धान्तविरोधस्तु-दुष्परिहर इत्यलम् ॥

### अभिव्यक्तस्वरूपस्यापि जीवस्य सूक्ष्माचिद्विशिष्टस्य न स्रष्टृत्वम्, सूक्ष्माचितस्तच्छरीरत्वाभावात्

किञ्च स्वप्नेऽभिव्यक्तस्वरूपस्यापि जीवस्याचिच्छरीरकस्य स्रष्टृत्वम्, उताशरीरस्य तत्स्वरूपमात्रस्य। तत्राद्ये किं तस्य सूक्ष्माचिच्छरीरकस्य स्रष्टृत्वम्, उत स्थूलशरीरविशिष्टस्य। तत्राऽऽद्ये सूक्ष्माचितः प्रकृतेः ब्रह्म-शरीरस्य न जीवशरीरत्वम्; "गुणानां च परार्थत्वात्" इति न्यायात्, द्वितीये तु न तस्य दिव्यशरीरकस्य प्राकृतशरीरविशिष्टकारणता। न हि शरीरं सूक्ष्माचित् प्रकृतिरिव कारणतावच्छेदकम्, येन तत् शरीरलक्षण-लक्षितं स्यात् ॥

### सूक्ष्माचितो जीवशरीरत्वाभावे 'गुणानां च परार्थत्वादि'तिन्यायोपपत्तिः

यत्तु—शतभूषण्यां 'गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यात्' इति न्यायोऽत्रानुसंहितः, स प्रथमं विकल्पमभिप्रेत्य। भूषणमपीदं न केवलं हृदयेन, किन्तु जीवस्याचिन्निरूपितशरीरत्वस्य न कथमपि प्रसक्ति-रिति वदद् मुक्तकण्ठमनुमोदते। अचेतशरीरत्वं तावत् सुप्रसिद्धमिति तु न विप्रतिपन्नमपि। परन्तु नाचेतनशरीरको जीवात्माऽभिव्यक्तस्वरूपोऽपि तच्छरीरकः सन् स्वाप्निकान् स्रष्टुं शक्नोति। "तन्वभावे सन्ध्यवदुपपत्तेः" इति सन्ध्यावस्थो जीवो ह्यशरीर एव मुक्तात्मदृष्टान्तेन 'गुणानाञ्चे'ति न्यायो ह्येकाङ्गिनिरूपितानामेवाङ्गानां परस्परासम्बन्धमभिप्रैति, जीवसूक्ष्माचितौ ह्येकं परमात्मानं प्रत्येवाङ्गम्, इति न परस्परसम्बन्ध इति मुक्तकण्ठं भूषणमपि भूषयति। "व्रीहीनवहन्ति" इत्यत्र तु नायं न्यायः; व्रीह्यवहनन-योरेकाङ्गिनिरूपिताङ्गत्वाभावात्। तत्र व्रीहयो हि यागाङ्गम्, अवहननं व्रीह्यङ्गमिति निगदव्याख्यातम् ॥

एतेन—"गुणानां च परार्थत्वादि"ति न्याये सत्येव देश-कालादेः साङ्गप्रधानाङ्गत्वमपीष्यत एवेति—परास्तम्; उक्तन्यायोदाहरणं हि "य

इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत" इति। तत्र पौर्णमास्याः, अमावस्याया वा सोमेनैव सम्बन्धः, नेष्ट्या सोमाङ्गेनेति हि कालसम्बन्धो प्रधानेनैव नाङ्गेनेति हि सिद्धान्तः ॥

मुक्तात्मनः स्वसृष्टशरीरातिरिक्तशरीराभावादशरीरस्यैव स्रष्टृत्वम्

एतेन—जीवः स्वशेषमचिदंशं परिणमयेत् सति स्वरूपाविर्भावे, न तु स्वयं परिणमेतेति—परास्तम् ; मुक्तात्मनो जीवस्य परिणामयोग्यसविकारशरीरासम्भवात् , सशरीरत्वपक्षेऽपि स्वसृष्टशरीरातिरिक्तशरीरान्तराभावात् कथं सशरीरस्य जीवस्य स्वशरीरपरिणमयितृत्वम् ॥

"सूचकश्च ही"तिसूत्रभाष्यसंग्रहः, असत्यस्यापि सत्यार्थसूचकत्वं च

एतेन—"सूचकश्च हि श्रुतेराचक्षते" इति सूत्रमपि—व्याख्यातम्। अत्रानुसंहिता श्रुतिः—

"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति।
समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ॥"

इति छान्दोग्यपञ्चमाध्यायगा। एतदुपष्टम्भकं पुराणवाक्यं तु भाष्ये उदाहृतम्—"आचक्षते च स्वप्नाध्यायविदः—कुञ्जरारोहणादीनि स्वप्ने धन्यानि भवन्ति। मन्त्र-देव-द्रव्यविशेषनिमित्ताश्च केचन स्वप्नाः सत्यार्थगन्धिनो भवन्तीति मन्यते। तत्रापि सूच्यमानस्य वस्तुनः सत्यत्वम् स्त्रीसूचकस्य स्त्रीदर्शनादेर्भवत्येव वैतथ्यम् ; बाध्यमानत्वादित्यादिस्तु प्रकृतभाष्यसन्दर्भः ॥

असत्यस्यार्थक्रियाकारित्वे तस्येश्वरसृष्टत्वायोगः

अनेन स्पष्टमवगम्यते— न केवलं स्वप्नदर्शनम् , किन्तु स्वाप्नपदार्थाः कुञ्जरारोहणादीनि मिथ्याभूतान्यपि सत्यार्थसूचकानीति। अनेन हि स्वाप्नानामनिर्वचनीयत्वम् , मिथ्यात्वं च ज्ञाप्यते। इदं तु तेषामीश्वरसृष्टत्वे नोपपद्यते ॥

स्वप्नज्ञानस्यार्थक्रियाकारित्वेऽपि तस्यापि मिथ्यात्वाद् नासत्यात् सत्योत्पत्तिविरोधः

स्वप्नदर्शनं न स्वरूपज्ञानमात्रम् ; स्वरूपज्ञानस्यात्मनो निर्विषयत्वस्य संप्रतिपन्नत्वात्। धर्मभूतज्ञानं हि वृत्तिरूपं वाऽन्यद्वा सविषयं नाम। न च

स्वप्ने धर्मभूतज्ञानस्य विकासो नाम श्रीभाष्यमते; अन्यथा जागराणामपि स्वप्ने भानापत्तिः, अद्वैतमते तु स्वाप्नोपादानं तूलाविद्या स्वाप्नाकारा, तदाकारवृत्त्याकारा चोदेति, इति स्वाप्नदर्शनं यद्यपि प्रसिद्धम् ; तथापि तस्यापि मिथ्यात्वात् तत्र दर्शनमात्रार्थक्रियाकारित्वेऽपि मिथ्याभूतस्यार्थ-क्रियाकारित्वमनपोढम्। अतो न सत्यार्थक्रियाकारित्वानुपपत्त्यापि स्वाप्नानामीश्वरसृष्टत्वम्। तद्धि मिथ्यात्वे, जीवसृष्टत्वेऽपि वोपपद्यते ॥

"सूचकश्च हि श्रुतेराचक्षते" इति सूत्रं हि नासत्यत्वं साधयितुम्, किन्तु तदसत्यत्वानुपपत्तिं निरसितुम्। तथा च स्वाप्नार्थाः, सत्याः, अर्थक्रियाकारित्वादित्यनुमानेऽप्रयोजकत्वनिरूपणार्थमिदं सूत्रम्। असत्यत्वे-ऽप्यर्थक्रियाकारित्वोपपत्तेः, इति नात्रासङ्गतिलेशोऽपि ॥

### श्रीभाष्यमते 'सूचकश्च ही'ति सूत्रवैयर्थ्यम्

वस्तुतस्तु—श्रीभाष्यमत एवेदं सूत्रं वितथम्। न हीश्वरसृष्टानां सूचकत्वम्, अर्थक्रियाकारित्वं वा विप्रतिपन्नम्, सन्दिग्धं वा, येन तन्निरूपणमर्थवत् स्यात्। तत्र मुक्तात्मसृष्टावपीश्वरस्यापि स्रष्टृत्वं वर्तते वा, न वा। आद्ये ब्रह्मभावमापन्नस्यैव तस्य स्रष्टृत्वेन सर्वात्मना भगवच्छरीरत्वमेवात्मनो मन्यमानस्य जीवरूपमात्रेण स्रष्टृत्वानुपपत्तिः। जगद्व्यापारवर्जमिति सूत्रविरोधश्च ॥

### स्वाप्नानामीश्वरसृष्टत्वे स्वप्न-मुक्त्यादिवैधर्म्यानुपपत्तिः

को वा विशेषः स्वप्न-मुक्त्योरीश्वरसृष्टत्वे ? तत्र यदि जीवसङ्कल्पानुसारेण मुक्तौ सृष्टिः, स्वप्ने तु तत्तत्कर्मानुसारेण, तर्हि को वा जागर-स्वप्नसृष्ट्योर्विशेषः ? इति कथं वा वैधर्म्यं स्वाप्न-जागरयोः ॥

### जीवसृष्टत्वेऽपीश्वरसृष्टत्वमपि स्वाप्नानाम्

द्वितीये तु सकलजगत्कारणत्वश्रुतिविरोधः; स्वप्नेऽप्यद्वैतमते प्राज्ञ-तादात्म्यापन्नस्यैव जीवस्य कर्तृत्वम्। तदुक्तं भाष्ये—"न चास्माभिः स्वप्नेऽपि प्राज्ञव्यापारः प्रतिषिध्यते; तस्य सर्वेश्वरत्वात् सर्वास्ववस्था-स्वधिष्ठातृत्वोपपत्तेः"—इति ॥

### स्वप्न-मुक्त्योर्भेदः

विशेषस्तु—स्वरूपतः परमात्मा घटादिवद् नाधिष्ठानं स्वाप्निकानाम्, किन्तु जीवभावेन, यथा मुक्तावीश्वभावेन जीवस्य स्रष्टृत्वम्। न चात्र संक-

ल्पापेक्षा, न वा कर्मापेक्षा, किन्त्वविद्यामात्रापेक्षा। अत एवोक्तम्—"मायामात्रमि"ति ॥

श्रीभाष्यमते मायामात्रत्वोपपादनासंभवः, न च स्वप्ने जीवस्यापि सूचकत्वम्

तत्र यदि जीपसंकल्पकृतत्वाभावविशिष्टेश्वराधीनत्वमात्रं मायामात्रत्वपदार्थः, तर्हीदं विविच्यताम्—किं कर्मापेक्षा वर्तते, न वेति। आद्ये कथं मायामात्रत्वम्? अन्त्ये तत्तत्कर्मापेक्षया सृष्टत्वेन तत्तत्पुरुषमात्रोपभोग्यत्वोक्तिविरोधः, जागरवैधर्म्यानुपपत्तिश्च, इति मायामात्रत्वसाधनं श्रीभाष्यमते कथं स्वरसम्? सूचकत्वं ह्यत्र स्वप्नदर्शनस्य स्वाप्निकानामर्थानां च, न तु जीवस्य, इति न स्वसंकल्पेन जीवस्य शुभाशुभसूचकत्वम्, येन तत्सूचकत्वाध्यवसायपुरस्सरं तत्कृतिर्जीवस्य न स्यात् ॥

"पराभिध्यानात्तु" इति सूत्रं स्वाप्नानिर्वचनीयत्वाविरोधि

"पराभिध्यानात्तु" इति सूत्रे हि न जीवसंकल्पकृतत्त्वं स्वाप्निकानामिति गृहीत्वाऽद्वैतमतनिरसनं न प्राप्तकालम्। न चास्माभिः स्वप्नेऽपि प्राज्ञव्यवहारः प्रतिषिध्यते। भगवत्पादभाष्याशयस्तु पूर्वमेवोपपादितः, इति न तद्भाष्यं स्वाप्नानिर्वचनीयत्वसिद्धान्तविरोधि ॥

असत्यात् सत्योत्पत्तिवादस्य भामत्यादिविरोधेनाऽऽक्षेपः

यत्तु—असत्याद् न सत्योत्पत्तिः; किन्तु सा सत्यादेवेति भामत्यामेवोक्तम्—दर्शनम्=सूचकम्, तच्च स्वरूपेण सत्, असद् दृश्यम्, अतो दर्शनसाध्याश्चरमधातुविसर्गादयो जाग्रदवस्थायामनुवर्तन्ते, स्त्रीसाध्यास्तु माल्य-विलेपन-दन्तक्षतादयो नानुवर्तन्ते, इति। यत्त्वत्र मिथ्याभूतस्यापि सूचकत्वपरतया कल्पतरुकृतामेतद्व्याख्यानम्, तत् प्रौढिमात्रम्; अक्षराननुगुणत्वात्। अन्ततः कल्पतरावपि स्वप्नदर्शनस्य मिथ्यात्वमौपचारिकम्, मिथ्यावस्तूपनिबन्धनम्। तस्मादसत्यात् सत्योत्पत्तिवर्णनं भामत्यादिविरुद्धमेव, अतोऽसंभावितार्थसूचकत्वं सूचकसूत्रस्य न भवितुमर्हति—इति ॥

भामत्या अप्यसत्यात् सत्योत्पत्तौ तात्पर्यम्

तदिदमत्र संगृहीतभामतीमात्रसमालेचने बल्बजमित्यापाततोऽपि प्रतीयते। भामत्याशयस्तु विशदोऽसत्यात् सत्योत्पत्तावेवेति भामतीसन्दर्भं पर्यालोचयतां करतलामलकमेव ॥

तथाहि—भामती ह्यध्यासभाष्ये—"असत्यादपि सत्योत्पत्तिर्दृश्यते। न हि लौकिका नाग इति वा नग इति वा पदात् कुञ्जरम्, तरुं वा प्रतिपद्यमाना भवन्ति भ्रान्ताः" इति वदति। भाष्येऽप्यत्रोदाहृतम् –"स्वाप्निकानि कुञ्जरारोहणादीनि धन्यानी"ति स्वाप्नज्ञानस्येव स्वाप्नानामप्यर्थक्रियाकारित्वं विशदयति। क्वचिद्दर्शनं सत्यार्थसूचकमिति सत्यमुक्तम्, परन्तु भामतीमते भ्रमेऽविद्यावृत्तेरनङ्गीकारात् साक्षिचैतन्यमेव दर्शनम्। तच्च प्रातिभासिकोपहितम्, इति विषयोपरक्तमेवार्थक्रियाकारीतिविधयार्थक्रियाकारितायामेव तात्पर्यं स्वीकर्तव्यम्, अत एवात्र कल्पतरुरपि पूर्वोदाहृतः। अतो न पूर्वापरविरोधः न हि केवलं साक्षिचैतन्यं नियतरजताद्यर्थक्रियाकारि भवितुमर्हति ॥

सत्यम्, दर्शनं तु सूचकं स्वरूपेण सत्यम्, असत्तु दृश्यमिति। व्यक्तमिदमत्रापि स्वाप्निकानां न सत्यत्वं ज्ञानमात्रसत्यत्वेऽपि। तत्र दर्शनमात्रस्य साधनत्वमाश्रित्य स्वाप्निकार्थानामपि सत्यत्वं सत्यादेव सत्योत्पत्त्या, यदा दृश्यमुपाधिमात्रम्, न विशेषणम्। तत्राप्यर्थदृष्ट्या तु स्वाप्नानां मिथ्यात्वेन तत्साध्यविलेपनादयः केचनासत्या अपि भवन्ति ॥

इदं तु स्वाप्नासत्यत्वं नोपपद्यते श्रीभाष्यदृष्ट्याऽऽदरणे। तथाच स्वाप्नार्थमात्रस्यासत्यसाधनत्वमपि। मिथ्यार्थोपहितस्य ज्ञानस्य तु तदुपहितत्वेन कार्यकारिणः सत्यसूचकत्वमपीति भामत्याशयः। सर्वथा तु स्वाप्नार्थासत्यत्वं भामत्यां व्यक्तमेव, इति तेषामीश्वरसृष्टत्वकथा भामतीविरुद्धैव ॥

इदमेवाभिप्रेत्य कल्पतरुव्याख्यानस्यापि प्रौढिमात्रत्वम्; अप्रामाण्यं वा कथामात्रम्। असत्यात् सत्योत्पत्तिं मुक्तकण्ठमध्यासभाष्ये भामती वदतीति व्यक्तम्। अधिकं तु तत्रैव ॥

एतेन—स्वाप्नदर्शनस्य मिथ्यात्वमौपचारिकमिति—व्याख्यातम्; तस्य स्वरूपतोऽधिष्ठानरूपस्य वृत्त्यनङ्गीकारपक्षे व्यावहारिकत्वात्। मिथ्यार्थज्ञानत्वेन मिथ्यात्वाच्च ॥

अर्थेनैव विशेषो हि निराकारतया धियाम्।"

इति वचनादर्थानुपहितज्ञानस्यार्थक्रियाकारित्वे ज्ञानत्वाविशेषात् सर्वेषां ज्ञानानां सर्वार्थक्रियाकारित्वमापद्येत। अतो नासत्यात् सत्योत्पत्तिवचनं

भामतीविरुद्धम्। स्त्रीदर्शनस्य चरमधातूनामनुवृत्तिकथाऽप्यसत्यात् सत्योत्पत्तिमेव दृढयति ॥

तथा च भामती—"न ह्यागमज्ञानं सांव्यवहारिकं प्रत्यक्षस्य प्रामाण्यमपहन्ति, अपितु तात्त्विकम्। न च तत्तस्योत्पादकम्; तात्त्विकप्रमाणभावेभ्योऽपि व्यावहारिक—प्रमाणेभ्यस्तत्त्वप्रतिपत्तिदर्शनात्" इति ॥

अनेन हि प्रमाणानां प्रमाणत्वं न सत्त्वेन; सत्त्वस्य कारणतावच्छेदकत्वानियमात्, अस्तु वा सत्त्वं कारणतावच्छेदकम्। यत्त्वर्थक्रियाकारित्वं सत्ताजातिमत्त्वं वा, तदेव कारणतावच्छेदकमिति। अमुमेवार्थमभिप्रेत्य खण्डनकारो वदति—

"पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ ॥
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ॥"

इति ॥

अत्र सत्त्वं न कारणतावच्छेदकमित्येतावन्मात्रं विवक्षितम्, न त्वसतोऽपि कारणत्वम। अस्याः खण्डनोक्तेः सत एव कारणत्वे तात्पर्यमिति भूषणकल्पना खण्डनाशयस्यान्यथाकरणमेव। अत एव सत एव कारणत्वमिति नियमे निरस्तेऽसत्कारणत्वाभावोऽर्थतो निरस्त एव। निष्कर्षस्तु शशशृङ्गाद्यसद्व्यावृत्तमेव कारणम्। तच्चानिर्वचनीयमपि भवितुमर्हति, इति कथं न मिथ्याभूतस्यार्थक्रियाकारित्वेऽसत्यात् सत्योत्पत्त्यनुपपत्त्याद्यनुपपन्नं? तत्र प्रसज्यते। न च सत एव कारणत्वमिति नियमोऽपि संप्रतिपन्नः, सत्यप्येवं यदि सत्वविशिष्टस्यैव, कारणत्वं मन्यते, तर्हि मिथ्याभूतस्याप्यर्थक्रियाकारित्वरूपसत्त्ववैशिष्ट्याद् नानुपपत्तिलेशोऽपि अथ सन्मात्रत्वम, त्रिकालाबाध्यत्वं वासत्त्वम, तर्हि तु बाधितम ॥

"अन्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः।
नान्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः ॥"

इति खण्डनमप्यत एव व्याख्यातम। अनेन हि सत्त्वस्य कारणतावच्छेदकतया विवक्षायां सत्त्वस्य सत्वाभावेन कारणत्वाभावापत्त्याऽसत्कारणवादापत्तिः। अतः सत्त्वासत्त्वोदासीन्येनैव तत्तद्व्यक्तिमात्रस्य पूर्वकालसम्बन्धमात्रमादाय कारणत्वं वक्तव्यमिति ज्ञाप्यते। तथा च खण्डनाशयोऽसत्कार्यवादमादायेत्यादिदूषणानि निरालम्बानि ॥

### अद्वैतमते मिथ्यार्थस्यैवार्थक्रियाकारित्वम् ; नासतः, विशिष्य च सद्रूपस्य; मिथ्यार्थस्याप्यसद्विलक्षणत्वेनासत्त्वाभावात्

एतेन—

"अन्तर्भावितसत्त्वं चेत् कारणं तदसत् कथम् ।
अनन्तर्भावितसत्त्वं चेत् कारणं तदसत् कथम् ॥"

इति – परास्तम् ; असत्कारणताया मतद्वयेऽप्यनङ्गीकारात्, मिथ्यार्थस्यासद्विलक्षणत्वेनासत्त्वाभावाच्च सत्त्वघटितत्वेऽपि त्रिकालाबाध्यत्वरूपं सत्त्वं न कारणतावच्छेदकम्, किन्त्वर्थक्रियाकारित्वलक्षणम्, सत्ताजात्यादिर्वेति नाऽसत्करणतावादः, मिथ्यात्वविरोधिसत्कारणतावादो वेत्येव खण्डनकृतोऽभिप्रायः। अतः कारणत्वं न त्रिकालाबाध्यत्वरूपसत्त्वव्याप्यम्, किन्तु सत्तादिजातिमात्रव्याप्यम्, इति न मिथ्याभूतस्यार्थक्रियाकारित्वं बाधितम्। स्त्रीदर्शनजचरमधातुविकारसत्यत्वमपि तत्रैवानुकूलम् ॥

यत्तु—स्त्रीणां मिथ्याभूतानां चन्दनविलेपनादयो न सत्या दृश्यन्ते—इति, तदिदं मिथ्याभूतस्यार्थक्रियाकारित्वानियमाद् नानुपपन्नम् ॥

### यत्किञ्चित्सत्त्वघटितत्वेन कारणत्वमिदमेव

एतेन—यत्किञ्चित्सत्त्वघटितत्वमावश्यकमिति भूषणोक्तिरपि—परास्ता; त्रिकालाबाध्यसत्त्वाघटितत्व एव खण्डनोक्तेस्तात्पर्यात्। यत्किञ्चित्सत्त्वस्य पूर्वोक्तरीत्या मिथ्यात्वाविरोधिनः कारणतावच्छेदकत्वं मिथ्याभूतस्यार्थक्रियाकारित्वेन न विरुध्यत इति भामत्याशयसंकलनमेव खण्डनस्य लक्ष्यम्। भामती, खण्डनं चाद्वैतसिद्धान्तैकपर्यवसायि, इति भगवत्पादसिद्धान्तो वज्रलेपायते, इति "मायामात्रमि"ति सूत्रमुक्तरीत्याऽद्वैत एव स्वरसम् ॥

### "मायामात्रमिति सूत्रे मायाशब्दो मिथ्यापरः

मायाशब्दश्चात्र पूर्वोक्तरीत्या मिथ्यापर एव। अपूर्वे वस्तुन्यनिर्णेयकारणे मायाशब्दप्रयोगो यद्यपि गौणो भूषणोक्तरीत्या; तथापि बहुपुरुषानुभाव्यत्वादीनीश्वरसृष्टलक्षणानि न दृश्यन्त इति कृत्वैव गौणो मायाशब्दप्रयोगः। न चात्रेश्वरसृष्टत्वं वर्तत इति बहुशो निवेदितम् ॥

### स्वाप्निकानां जीवसंकल्पकृतत्वाभावः

एतेन—"पराभिध्यानात्तु" इति सूत्रमपि—व्याख्यातम्। तद्धि जीवसङ्कल्पकृतत्वं स्वाप्निकानां न संभवतीत्येव व्यवस्थापयति। न च जीव-

संकल्पाधीनत्वं स्वाप्निकानाम्, किन्तु तदाश्रिततूलाविद्याकार्यत्वम्, इति तेन जीवसंकल्पकृतत्वनिषेधो न मिथ्यात्वनिषेधः, इति पूर्वोक्तरीत्या स्वाप्नमिथ्यात्वात् तद्दृष्टान्तेन जागरप्रपञ्चमिथ्यात्वानुमानं सुस्थम् ॥

मायामात्रत्वानुमानस्य,नानुमानान्तरेण प्रकरणसमता

अत्र ह्यनुमाने भूषणमीश्वरसृष्टत्वेन प्रकरणसमं मन्यते, तत्र तु हेत्वसिद्धिरेव। मायामात्रत्वं ह्यनभिव्यक्तस्वरूपत्वेनाद्वैतिनां दृष्ट्या। अत एव स्वप्ननिरालम्बनत्वानुमाने स्वाप्न-जागरयोर्वैधर्म्यं सूत्रकारेण सूत्रितम्। तत्कृत्वा चिन्तयेति तु श्रुतप्रकाशिका॥

वैधर्म्यं बौद्धमतं प्रमाणमिति कृत्वाचिन्तयेति भूषणोपक्षेप;

यत्तु—स्वप्ने श्रुतिवलादेव सत्यविषयकत्वस्वीकारात् प्रपञ्चज्ञानस्य च तथात्वात् श्रुतिबाह्यबौद्धप्रत्युत्तरणावसरे युक्तिमात्रेण समाधानस्येष्टतया, स्वप्नसत्यत्वस्य युक्तिसिद्धत्वाभावात् स्वप्नस्य मिथ्यार्थविषयकत्वं स्वीकृत्य बौद्धमतनिरसनमिति कृत्वाचिन्तेति श्रुतिप्रकाशिका—इति॥

अद्वैत एव वैधर्म्यसंभवः, स्वाप्नमिथ्यात्वस्य

श्रौतत्वादिति नोक्तभूषणोपपत्तिः

तदिदं स्वप्ने तदर्थमिथ्यात्वस्यैव श्रुतिसिद्धत्वात्, श्रुत्यर्थैकवाक्यता तन्मिथ्यात्वस्यैव भवति। एवं श्रुतिसिद्धं स्वाप्नमिथ्यात्वमेव "अनभिव्यक्तस्वरूपत्वादि"त्युपपत्त्या सूत्रमपि स्थापयति, तन्मात्रानुभाव्यत्वेन सत्यत्वानुपपत्त्या युक्त्याऽपि तत्सत्यत्वसाधनस्यासंभवात्, जागरप्रपञ्चसत्यत्वस्यापि श्रुतिमहिम्नैवेश्वरसृष्टत्वस्वीकारात्, तत्सत्यत्वस्याप्यसिद्ध्या स्वाप्नवैधर्म्यासंभवेनोभयमिथ्यात्व-सत्यत्वयोरेकमिथ्यात्वस्य प्रत्यक्षसिद्धत्वे जागरसत्यत्वस्यैव प्रत्यक्षसिद्धत्वेन प्रपञ्चमिथ्यात्वस्य तत्सालम्बनत्वप्रत्यक्षबाधेनैव निरासात्, तन्मिथ्यात्वानङ्गीकारेण प्रपञ्चसत्यत्वसाधनासंभवाच्च स्वाप्नमिथ्यात्वं न कृत्वाचिन्तयेत्येव स्वीकर्तव्यम्। अधिकं तु 'वेदान्तरक्षामण्यद्वैततत्त्वशुद्ध्यादौ व्यक्तम्। न च वैधर्म्यं बौद्धेनापि स्वीक्रियते; अन्यथा "वैधर्म्याच्चे"ति हेतुना कथं बौद्धमतनिराकरणम् इति कृत्वाचिन्तावादोऽद्वैतमतमादायैव भवति? इति कथं किमर्थं चात्र बौद्धानामुपजीवनम्? कथं च मिथ्यात्वानुमाने शुक्तिरूप्यादिदृष्टान्तः स्वाप्नमिथ्यात्वानुमानेऽपि इतिऽजागरमिथ्यात्वानुमानं दुष्टम्॥

एतेन—जागरितप्रत्ययः, मिथ्यार्थविषयः, प्रत्ययत्वादित्यनुमाने दुष्टकारणजन्यत्वमुपाधिरिति—परास्तम्; जागरितप्रत्ययस्यापि अविद्यारूप-

दोषजन्यत्वेन दुष्टकारणजन्यत्वस्य पक्षे सत्त्वेन साध्याव्यापकत्वात्, उपाध्यभावेन साध्याभावसाधने हेत्वसिद्धेश्च न दुष्टकारणजन्यत्वमुपाधिः, इति सोपाधिकत्वे निरस्तेऽनेन सूत्रेण साध्यवैकल्यशङ्कानिरासेन साध्यसमर्थनं क्रियते, इति सर्वमनवद्यम्; स्वप्नमिथ्यात्वश्रुतेः सन्दिग्धार्थपरत्वाद् यावत्तन्निर्णयं मिथ्यात्वानुमाने प्रत्यक्षसिद्धं शुक्तिरूप्यादिकमेव निदर्शनम्, स्वाप्नमिथ्यात्वं तु तद्दृष्टन्तोपबृंहितं श्रुतिबलादपि प्रत्यक्षतोऽपि वा, इति विश्वमिथ्यात्ववत् स्वाप्नमिथ्यात्वमपि श्रौतमिति सिद्धम्, इति "अथातो ब्रह्मजिज्ञासे" ति निर्विशेषविषयिण्यपि जिज्ञासा तृतीयाध्यायान्ताऽद्वैतसिद्धान्त एव स्वरसेति सिद्धम् ॥

इति तृतीयोऽध्यायः

## अथ चतुर्थोऽध्यायः

### "आत्मेति तूपगच्छन्ती"त्यत्र सविशेषमात्रविषयत्वम्, उत निर्विशेषविषयत्वमपीत्यादिचिन्ता

"आवृत्तिरसकृदुपदेशात्" इति प्रथमप्रतिज्ञातसविशेष-निर्विशेषोभयज्ञानस्वरूपं पुरुषतन्त्रमुपासनात्मकम्, प्रमाणतन्त्रं साक्षात्कारात्मकं च साधनं यावत्फलमावर्तनीयमिति व्यवस्थाप्य, उपसनात्मके सविशेषविषये भेदगर्भे संशयाभावात् "अहं ब्रह्माऽस्मी"त्यादिवाक्यजन्यसाक्षात्कारप्रकारं चिन्तयितुमिदमधिकरणम्—"आत्मेति तूपगच्छन्ति ग्राहयन्ति चे"ति। तत्र श्रीभाष्यमते सविशेषविषयैव सेति सिद्धान्तात् तत्रोपासनाप्रकारस्यैव चिन्ता, न निर्विशेषसाक्षात्कारस्य ॥

#### तत्र 'ब्रह्माहमि'ति प्रतिपत्तव्यम्, उत ममेति विप्रतिपत्तिः

सत्यपि विशेषेऽद्वैतिनामिव "अहं ब्रह्माऽस्मी"त्यादिजीव-ब्रह्मसामानाधिकरण्यवाक्यान्येव विषयः। अत उभयत्रोपासनाकारः, ज्ञानाकारो वाऽत्र चिन्त्यते। तत्र "आत्मेति तूपगच्छन्ती"ति सूत्रे आत्मा कस्य को वेति चिन्ता सूत्र एव प्रतिसम्बन्धिनोऽदर्शनेऽपि तुल्या। कस्य को वाऽऽत्मेति प्रश्ने तु मुख्यतयोपास्यः, ज्ञेयो वा ब्रह्मेति न विप्रतिपन्नम्, स चाऽऽत्मेति च। कस्यायमात्मेत्यत्रापि न संशयः; यत उपासनापरत्व उपासकस्याऽऽत्मेति, ज्ञातृपरत्वे ज्ञातुरात्मेति च व्यवस्थानात् ॥

तत्र ज्ञाता, उपासको वाऽहमर्थो जीवात्मेत्यपि संप्रतिपन्नम्। तेन चोपास्यम्, ज्ञेयं वा ब्रह्मस्वरूपं स्वात्मेत्यनुसन्धेयमिति निष्कर्षः ॥

तत्रा'हमि'ति ब्रह्म प्रतिपत्तव्यम्, ममेति प्रतिपत्तव्यं वेति विशयेऽ'ह- मि'ति प्रतिपत्तव्यमित्यप्युभयसंप्रतिपन्नम् ॥

मतद्वयेऽप्यात्मस्वरूपनिष्कर्षः, ज्ञानोपासना- प्रकारव्यवस्था च

तत्र चाहमर्थ एवाऽऽत्मेति सिद्धान्तेऽहमित्यात्मेति पदार्थः। तत्र सामा- नाधिकरण्यं तु शरीर-शरीरिभावेन। अहमर्थान्तरर्गतसंविन्मात्रमात्मेति मते तु नाहमित्यात्मस्वरूपम्; तस्य चिदचिद्ग्रन्थिरूपस्य मिथ्यात्वात्, संविन्मात्रस्यैव मुख्यार्थत्वात्। तत्र सामानाधिकरण्यं त्वभेदे ॥

तत्र सूत्रकारः कं वोपासनाप्रकारम्, ज्ञानप्रकारं वाऽभिप्रेत्यात्रा- ऽऽत्मपदं प्रयुयुज इति शङ्कायाम् "आत्मे"तीतिशब्दघटितं पदं इतिशब्दे- नाऽऽत्मानमहमर्थतो विविच्य संविन्मात्रमात्माऽऽहमित्यभिप्रेत्य संविन्मा- त्रतया ब्रह्मणोऽनुसन्धानमाशेत इति प्रतीयते; अन्यथेतिपदमत्र निरर्थकम्, इति जीव-ब्रह्माऽभेदसिद्धान्त एव सूत्रारूढः, यतो मुक्तात्मैव परमात्मा भवितुमर्हति, न बद्धात्मा। तत्रात्मशब्दः मुख्यस्वरूपमात्रपरः, न तु स्वं प्रत्यात्मेति ॥

इदं चाद्वैतमत एव स्वरसम्; जीवत्वेश्वरत्वोपलक्षितस्वरूपमात्र- पक्षस्यौपाधिकरूपपरित्यागेनाभेदस्य तत्रैव संभवात्। श्रीभाष्यमते तु परमात्मा जीवात्मनो नियामकः शरीर्यात्मा, न जीवात्मनः स्वरूपम्, इति तत्र भेदगर्भ एवाभेदः, नात्यन्ताभेदः। तत्र ह्यपृथक्सिद्धत्वेनात्मत्वं, न स्वरूपैक्यं नाम ॥

आत्मपदस्य संविन्मात्रे मुख्यत्वम्, न स्त्रीये, अतोऽहं सविन्मात्रं ब्रह्मेत्येव वाक्यार्थः

यत्तु—आत्मशब्दस्य स्वपर्यायतया समभिव्याहृतपदान्तरस्याभावे नात्मा भवितुमर्हति; 'अहमि'तिज्ञानस्यासन्दिग्धस्यातत्त्वज्ञानत्वायोगात्— इति, तत्रात्मपदार्थः सविन्मात्रं मुख्यात्मैव। न च स प्रतिसम्बन्ध्यपेक्षः, येन पदान्तरसमभिव्याहारमपेक्ष्यैव बोधनीयः स्यात्, प्रकृतस्त्वत्रोपासना- प्रकारः, ज्ञानप्रकारो वा—"अहं ब्रह्मास्मी"त्यादिवाक्यविवक्षितः, इति प्रकृत उपासकः, ज्ञाता वा प्रतिसम्बन्धी सिद्ध एव। इयमेव गतिः श्रीभाष्य- मतेऽपि ॥

इयान् विशेषः—इतिकरणाद् नाहमर्थ एव मुख्यं स्वरूपं ज्ञातुः, किन्तु ततो विविक्तं संविन्मात्रमिति। अत एव सूत्र इतिपदम्। अहमर्थस्यैवाऽऽत्मत्वे तु, तस्यानुपास्यत्वात् परमात्मन एवात्मत्वात् तयोर्भेदाच्चा-'ऽहमि'ति तूपगच्छन्तीत्येव सूत्रं स्यात्, न त्वात्मेति ॥

"अहं ब्रह्माऽस्मी"त्यत्रा'हमि'त्याकारः न "आत्मेति तु" इति सूत्रस्य तात्पर्यम्

अस्तु वेतिशब्द उपगच्छन्तीतिपदापेक्षिताकारसमर्पणार्थः; तथापि ना 'हमि"त्याकारनिर्णयेऽस्य सूत्रस्य तात्पर्यम्; आत्मपदप्रयोगात्, श्रीभाष्यमतेऽप्ययमेवाऽर्थः, यत उपासको न मुख्य आत्मपदार्थः; परमात्मन एव शरीरिणो मुख्यात्मत्वात्, अहमाकारव्यवस्थायामेव तात्पर्याच्च। अत इदं सूत्रं जीव-ब्रह्मैक्यानुसन्धानं तत्तदुपाधिविगलितं संविन्मात्रस्वरूपमभिप्रेत्यैवेति वक्तव्यम् ॥

"अहं ब्रह्माऽस्मी"त्यादौ स्वरूपैक्यानुसन्धानमेव वाक्यार्थः, न तु तद्भेदगर्भं ज्ञानम्"

इदं चाद्वैतसिद्धान्तमेव स्वरसं गमयति। स्वस्वरूपतया, स्वाभिन्नतया वा तत्तदुपाधिपरित्यागेनानुसन्धानमेवा'हं ब्रह्माऽस्मी'ति वाक्यार्थः, न त्वात्मत्वप्रकारकज्ञानादिर्भूषणापाद्यमानः कोऽपि। जीवत्वेश्वरत्वोपलक्षितसंविन्मात्राऽखण्डाकारा वृत्तिरेव हि मोक्षसाधनम्, संविन्मात्राश्रित-तद्विषयकाज्ञाननिवृत्तिद्वारा, न तु सविशेषज्ञानमात्रं पुरुषतन्त्रम्। न हि ब्रह्मविशेष्यकात्मत्वप्रकारकज्ञानं मोक्षसाधनं विवक्षितम्। न चाहमात्मना ब्रह्माभेदः शास्त्रार्थः, किन्तु संविन्मात्रतया। न च तथाऽत्मा ज्ञातः प्राक् शास्त्राधीनाखण्डाकारवृत्तेः, इति न "अहं ब्रह्माऽस्मी"ति जीव-ब्रह्मभेदविषयकं ज्ञानम्, तादृशमुपासनं वाऽभिप्रेत्य; तत्र विद्युपास्तिशब्दाभावात्, 'तत्त्वमसि' 'अहं ब्रह्माऽस्मी'ति सिद्धस्वरूपपरं हि वाक्यं श्रूयते। तज्जन्यज्ञानमात्रादेव तु पटुतमसंस्कारादिविशिष्टादज्ञाननिवृत्त्या मोक्षो नाम ॥

"आत्मेति तु" इत्यात्मशब्देन निर्विशेषात्मन एव ग्रहणम्

"सर्वं खल्विदं ब्रह्मे"ति ब्रह्मविशेष्यकसर्वात्मकत्वप्रकारकज्ञानाद् मोक्ष इति चेदिति त्वनुक्तोपालम्भनम्, इत्यपसिद्धान्तानुवाद-तन्निरासादिकं तु भूषणस्य न क्षोदक्षमम्। "आत्मेति तु" इतीतिशब्दप्रयोगाद् निर्विशेषात्म-

ज्ञानं सौत्रमिति विशदम्; इतिशब्दप्रयोगात् 'मनो ब्रह्मेत्युपासीत' इत्यादाविव दृष्टिविधिरिति चेदित्यादिशङ्का-समाधानानि सर्वाणि निरालम्बानि ॥

"मनो ब्रह्मेत्युपासीते"ति प्रतीकोपासनमेव मतद्वयेऽपि; उपासनस्यापि विधानात्, न तथा "अहं ब्रह्माऽस्मी"त्यादौ

अद्वैतिनो हि तत्र सर्वत्र प्रतीकोपासनमेवाभिप्रयन्ति; प्रतीकोपास्योभयनिर्देशात्, यत्र तु ज्ञेयस्वरूपमात्रं निर्दिष्टम्, तत्र किं तद्रूपमिति संदिग्धम्, ज्ञेयतया निर्दिष्टस्य संकीर्णस्वरूपत्वे च तत्रेतिपदघटितेन वाक्येनोपासिधातुघटितेनापि निष्कृष्टविविक्तस्वरूपमात्रज्ञानोपदेश एव। यथा—"आत्मेत्येवोपासीते"त्यादौ। स एव न्यायोऽत्र सूत्रेऽपि, इति नात्राहमर्थोपासनाविधिः सूत्रतात्पर्यविषयः ॥

अखण्डाकारवृत्तिरेव 'अहं ब्रह्माऽस्मी'त्यादौ, नोपासनाकारः

तत्रा'हं ब्रह्माऽस्मी'त्यखण्डाकारवृत्तिः, न तु 'अहं ब्रह्मे'त्यैक्याकारा, येन सप्रकारिका स्यात्, किन्तु जीवत्वेश्वरत्वोपाधिपरित्यागेन सविन्मात्राकारज्ञानमेव। व्यक्तीकरिष्यते चेदमुपरिष्टात्। सा चाखण्डाकारा वृत्तिः स्वसमानविषयामविद्यां विवर्तयन्ती सति प्रारब्धकर्मशेषेऽनुवर्तमाना केवलं संस्कारात्मानमविद्यालेशं यावच्छरीरपातमनुवर्तयति, अन्ते च स्वमिव संस्कारमपि तदीयं सर्वात्मना नाशयति, इति न किमपि छिन्नम्। व्यक्तीकरिष्यते चेदम् ज्ञाननिवर्तकोपपत्ति-तन्निवृत्त्यादिविचारेष्वविद्याविचारेषूपरिष्टात्। अतो मुख्यमोक्षोपायसाक्षात्कारस्वरूपाकारनिरूपणमेवात्र, नोपासनानिरूपणम्; अन्तर्यामिब्राह्मणसिद्धत्वात् तदुपासनचिन्तनस्य। अन्तर्यामि-नियम्ययोः शरीर-शरीरिभावो हि श्रीभाष्यकाराणां कुलधनम्; यत्रापृथक्सिद्ध्यैव तच्चिन्तनमपीति निर्णीतप्रायम्, इत्युपासनाऽऽकार 'अह'-माकारेणेति नात्र विचारः सङ्गतः, किन्तु मोक्षसाधनाकारनिर्णय एव ॥

स्वतः फलत्वात्, साधनस्वाच्च साक्षात्कार-चिन्तैवात्र, नोपासनाचिन्ता

तत्र प्राधान्यात् साधनस्वरूपोऽपि साक्षात्कारः फलमपि, इति प्राधान्येन साक्षात्कारस्वरूपमेवात्र विचारमर्हति। अत एवोक्तम्—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ॥"

इति, इत्यविद्यानिवृत्तेरेवोक्तरूपाया मुक्तित्वमिति। न चैवमुपासनं फलमपि; अनुष्ठेयस्य, पुरुषतन्त्रस्य च साधनैकस्वभावस्य सिद्धफलरूपत्वासंभवात् ॥

फलाध्याये साक्षात्कारविचारस्याप्यस्ति सङ्गतिः

एतेन—उपासनस्यापि पुरुषसाध्यतया, पूर्वपूर्वोपासनासाध्यतया च फलत्वादिति—परास्तम् ; न हि यागादि साधनम्, अङ्गान्तरसाध्यं वा फलं नाम। साध्यावस्था क्रिया हि साधनम्, सिद्धावस्थस्तु साक्षात्कारः। स च प्रमाणतन्त्रमात्रः, न पुरुषतन्त्रः, पूर्वोक्तरीत्याऽज्ञाननिवृत्तिरूपो वा स्वयं फलमपि, इति तस्य फलाध्याय आवृत्तिविचारो नासङ्गतः ॥

वस्तुतस्तु—साधनाध्यायो मोक्षसाधनविद्याधिकारोपयुक्तसाधनविचार परः, यदानन्तर्यमथशब्दार्थः फलाध्यायस्तु साक्षात्फल तत्साधनविचारपरः मोक्षश्च गौणः, मुख्यश्च, इति गौण-मुख्यमोक्षसाधारणोपासनविधिपरत्वाच्चतुर्थाध्यायस्य सविशेषोपासनमवान्तरतात्पर्यविषयतया, साक्षात्कारो महातात्पर्यविषयतया च विचार्यते ॥

फलाध्यायेऽप्युपासनविचारः प्रासङ्गिकः
न साक्षात्कारचिन्तेवाऽत्र मुख्यः

एतेन—"गतः तृतीयशेषः, अथेदानीं ब्रह्मविद्याफलं प्रति चिन्त्ये"ति भाष्यमपि—व्याख्यातम्; तृतीयशेषस्य निर्विशेषविचारस्य मुक्तिरूपत्वात् फलत्वम्, साधनत्वमपि रूपभेदेन, इति तृतीयाध्याययोग्यस्यापि फलाध्याये विचार इति तत्त्वम्, अन्यस्तु "न प्रतीके न हि सः" इत्यादिविचारः प्रासङ्गिक इति न विप्रतिपन्नम् ॥

इति शब्दस्य क्वचिन्निष्कृष्य ज्ञानाकारसमर्पकत्वमपि

उपदेशानुपपत्तिः, बाधितानुवृत्तिश्च यथाऽवसरं परीक्षिष्यते भूषणवदेव। इतिकरणं "मनो ब्रह्मेत्युपासीत" "आदित्यो ब्रह्मेत्यादेशः" "आत्मेत्येवोपासीते"त्यादौ यथा नैकरूपम्, तथापूर्वमेव विवेचितम्। सर्वथा तु "आत्मेति तूपगच्छन्ति" "आत्मेत्येवोपासीते"त्यादावितिशब्दोऽहमर्थविवेकेन शृङ्गग्राहिकयाऽऽत्मतत्त्वं ज्ञेयाकारं निदर्शयितुम्, न तूपासनाविषयाकारपरमिति तु निष्कर्षः ॥

"अविभागो वचनात्" इति सूत्रस्य चिद्ब्रह्मणोः सामानाधिकरण्यं बाधायामित्यत्र तात्पर्यम् "अविभागेन दृष्टत्वादि"ति तु जीव-ब्रह्मणोः सामानाधिकरण्यमभेद इति । इदमद्वैत एव स्वरसम्

एतेन—"अविभागो वचनादि"ति सूत्रमपि—व्याख्यातम् । अत्र, "अविभागेन दृष्टत्वात्" इति सूत्रे वाऽविभागशब्दस्यैकार्थ्यं संप्रतिपन्नम् । तत्र प्रथमं सूत्रं "तानि परे तथा ह्याह हि" इति सूत्रेण "एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्याऽस्तं गच्छन्ती"ति षोडशकलानां ब्रह्मभावं प्रतिपाद्य प्रवृत्तम् । ब्रह्मभावश्चायं न सावशेषत्वम्, किन्तु निरवशेषत्वम्, तच्च ब्रह्मव्यतिरेकेणाभावरूपम्, इति "सर्वं खल्विदं ब्रह्मे"त्यादौ, "सदेवेदमि" त्यादौ च बाधायां सामानाधिकरण्यमिति निरूपयितुम्, 'अविभागेन दृष्टत्वात्" इति तु "तत्त्वमसी"त्यादावभेदे सामानाधिकरण्यमुपपादयितुम्, तेन च "आत्मेति तूपगच्छन्ती" ति नोपासनाभिप्रायम्, किन्तु "दृष्टत्वादि" ति हेतुस्वारस्यात् "अहं ब्रह्माऽस्मी-" ति तत्तदुपाधिविरहेण संविन्मात्रात्मना जीव-ब्रह्मोभयसाक्षात्कारावस्था, अनावृतसंविन्मात्रावस्था वा ॥

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ॥"

इति वार्तिकोक्ता वा मुक्तिरिति विवेचयितुमित्यद्वैतिनां सूत्रार्थमर्यादा ॥

श्रीभाष्यानुसारिणां तु "अविभागो वचनादि" त्यपि तेज आदिसम्पत्तिरिव कलासम्पत्तिरप्यविश्लेषमात्रम्, जीव-ब्रह्मणोरपि "अहं ब्रह्माऽस्मी-" त्यादावपृथक्सिद्धिमेव प्रतिपादयति । इदं चा"हं ब्रह्माऽस्मी"त्युपासनाफलं मुक्तिस्वरूपम्; मुक्तौ तथाऽऽत्मनः स्वस्वरूपसाक्षात्कारादिति । व्यक्तं चैतत् शतदूषणी-शतभूषण्योः ॥

'अविभागो वचनात्" "अविभागेन दृष्टत्वादि"त्यनयोरपौनरुक्त्यम्

परमार्थभूषणं तु "अविभागो वचनात्" इत्युत्क्रान्तिविषयम्, उत्तरं मुक्तिदशापरमिति श्रीभाष्यमतम्, अद्वैतमतं तूभयमपि मुक्तिपरम, इत्यत्र पौनरुक्त्यं शतदूषण्या उद्भावनीयमासीत्, परन्तु सूत्रस्वारस्यविचारावसरे तदनवसरम्, इत्यप्रसक्तार्थविचारस्वाभाव्यविरहादाचार्याः स्पष्टं नोद्भावयामासुरिति दण्डयतीव स्वपूर्वाचार्यचरणानपि ॥

वस्तुतस्तु—पूर्वोक्तरीत्या मुक्त्यवस्थायां ब्रह्मव्यतिरिक्तकार्यजातानां साविद्यानामविभागो निरवशेषत्वरूपः, जीव-ब्रह्मणोस्तु स्वरूपैक्यमिति स्पष्टमपौनरुक्त्यं तदाचार्यचरणैरप्यवगतमेव; अन्यथा तु पौनरुक्त्यमेकमेव सूत्रस्वारस्यभङ्गे पर्याप्तं कारणम् , इति कथं तत्र लब्धे छिद्रे परमतदूषणार्थमेव प्रवृत्ता उदासीनाः स्युः ?

### "तानि परे" इति सूत्रस्य मुक्तिविषयत्वमेव

"तानि परे तथा ह्याह हि" इत्यस्योत्क्रान्तिमात्रपरत्वे, "तेजः परस्यां देवतायामि"ति वाक्यमात्रविषयत्वे च तत्र "तानी"ति बहुवचनायोगः, करणग्रामभूतसूक्ष्माचित्संसृष्टस्यैव तेजःपदार्थत्वस्य पूर्वमुक्ततया 'तत् परे' इत्येव सूत्रणापत्त्या, "तेजः परस्यां देवतायामि" ति वाक्यविषयकत्वे च तस्य, 'परे' इति पुंनिर्देशानुपपत्त्या च तस्य मुक्तिविषयत्वमेव स्वीकर्तव्यम् ॥

एवं "वाङ्मनसि सम्पद्यते" इत्याद्युत्क्रान्तिविषयवागादिसम्पत्तिप्रकरणगतस्य "तेजः परस्यां देवतायामि" त्यस्य "समाना चाऽऽसृत्युपदेशात्" इति सूत्रतः प्रागेव निर्देशापत्तिः, इति "तानि परे" इति सूत्रमुत्क्रान्तिप्रकरणं समाप्य, अनुत्क्रान्तमुक्तविषयमित्येव स्वीकर्तव्यम् ॥

### "प्रतिषेधादिति चेन्न" त्यस्यापि मुक्तात्मविषयत्वम्

"प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषामि" त्यप्यत एव विदुषोऽनुत्क्रान्तिपरमित्यवगम्यते, इति तुरीयद्वितीयपादसूत्रक्रमादिस्वारस्यमद्वैतसिद्धान्त एव। पौनरुक्त्यपरिहाराय शतभूषण्या यत्नः 'कुसूले नास्ति मे तातः' इति न्यायेनेति वदद् भूषणमात्मानमेवोक्तन्यायविषयमाविष्करोति॥

### "अविभागो वचनादि" त्यस्य मुक्तिपरत्वायोगशङ्कानिरासः

एतेन—तुरीयद्वितीय उत्क्रान्तिविचारपरे मध्ये "तानि परे" इत्यादिना मुक्तिविचारो न सङ्गतः, इति "अविभागो वचनादि" ति मुक्तिपरमिति भगवत्पादभाष्यं सन्दर्भविरुद्धमिति—परास्तम्; पूर्वोक्तरीत्या "तानि परे तथा ह्याह हि" "अविभागो वचनात्" इत्यनयोर्मुक्तिपरत्वं विना गत्यन्तराभावात् , अन्यथा "तेजः परस्यां देवतायामि" त्यस्यैव 'तानि परे" इति सूत्रविषयत्वे सम्पत्तिपदार्थस्य "वाङ्मनसि दर्शनात्" "शब्दाच्चे" त्यनेन वागादीनां मनआदिभिः संश्लेषमात्रव्यवस्थापनात् वितथं "तानि परे" इति, "अविभागो वचनादि" ति च सूत्रद्वयम् ॥

तत्र "भूतेषु तच्छ्रुतेः" "प्राणस्तेजसी"ति सूत्राभ्यां "प्राणस्तेजसी"त्यत्र तेजःशब्दार्थः सर्वभूतसंसृष्टं तेज इति निर्धारिते "वाङ्मनसि दर्शनादि" ति नयेन "तेजः परस्यां देवतायामि"त्यत्रापि तदविश्लेषे निरूपिते किमर्थं "तानि परे" इत्यादि ? तच्च कुत उत्क्रान्तिविचारानन्तरमिति प्रश्नो दुष्परिहरः ॥

"अविभागो दृष्टत्वादि"त्यस्याविद्यायाः
सावशेषताशङ्कानिवर्तनेन सार्थक्यम्

यत्तु—"अविभागेन दृष्टत्वादि" त्यत्र भामत्याम्—"अविद्यानिमित्तश्च विभागो नाविद्यायां विद्यया समूलघातमपहतायां सावशेषो भवितुमर्हति; तथापि प्रविलयसामान्यात् सावशेषताशङ्कां श्रुतिविरोधेनातिमन्दामपनेतुमिदं सूत्रमि"ति वर्णितम् , तदिदं परेषामाशङ्कापनयमात्राभिप्रायेण, न तु परमुक्तिपरत्वं वर्णयितुम् , मन्दाऽपि तु शङ्का निरसनीयैव श्रुत्यर्थोपपादनाय ॥

श्रीभाष्यमते "अविभागो वचनादि"ति सूत्रवैयर्थ्यम्

श्रीभाष्यमते तु—"अविभागो वचनात्" इत्यत्र "वाङ्मनसि सम्पद्यते"इत्यत्र निर्णीतेऽविश्लेषेऽधिकाशङ्काऽतिमन्दाऽपि नास्तीति व्यर्थं तत्सूत्रम् ॥

"अविभागो वचनात्" "अविभागेन दृष्टत्वात्"इत्यनयोः
पौनरुक्त्यपरिहारोपसंहारः

"अविभागो वचनादि"ति सूत्रम् "अत्राविद्यानिमित्तश्च विभागः" इति वर्णनात् कार्यप्रपञ्चविषयं बाधायां सामानाधिकरण्यस्योपपादकम् , "अविभागेन दृष्टत्वात्" इति तु जीव-ब्रह्माभेदोपपादकमिति विषयविवेकेन पौनरुक्त्यपरिहारोऽपि सूत्रितः ॥

कलानामविभागो ब्रह्मव्यतिरेकेणाभावः,
प्रपञ्चमिथ्यात्वं तु भाविबाधाभिप्रायेण

सति चैवं कलानां ब्रह्मणाऽविभागः, ब्रह्मव्यतिरेकेणाभावरूपस्तदनन्यत्वाधिकरणसिद्धो मुक्त्यवस्थामभिप्रेत्य, न तु तत्त्वसाक्षात्कारात् पूर्वमपि, मिथ्यात्वव्यपदेशोऽपि भाविबाधमप्रेत्यैवेति सूच्यते। यथा चाविभागेऽपि प्रपञ्चोऽविद्यात्मना वर्तते, ब्रह्मात्मना तद्विवर्तत्वाद् भाति, इति वस्तुगत्या शुक्ति-रजतसाम्यमेव प्रपञ्चस्य, तथा पूर्वमेव प्रपञ्चोत्पत्तिव्यवहारसमर्थनपूर्वकं विवेचितम् ॥

### "तानि परे" इति सूत्रार्थो लयो बाध इति निरूपणमुक्ताधिकरणप्रयोजनम्

तत्र "तानि परे तथा ह्याह हि" इत्यनेनोक्तो लयो बाधरूप एव न जीव-ब्रह्मणोरिवाभेदः, न वा घटादीनां मृदाद्यात्मनेव कारणतापत्तिरिति भाष्या-दिष्वेवोक्ताधिकरणस्य प्रयोजनं व्यक्तम्। तथा च नात्रेव जीव-ब्रह्मणोर-विभागः, किन्त्वभेद इति निरूपणम् "अविभागेन दृष्टात्वात्" इत्यधिकर-णप्रयोजनमित्युक्तमेव। न चायमत्रोभयत्र लयश्रवणेनेदन्तया विना निर्धा-रणं सिद्ध्यति। "तानि परे" इत्यत्र भूतानां लयो ब्रह्मणि बाधरूप एव। स चाविद्यानिवृत्तिं विना न भवति, इति तत एवाविद्यानिवृत्तिरपि सूच्यते॥

इदमेवाभिप्रेत्य 'अविभागो वचनात्" इत्यत्र भूषणोद्धृता भामत्यपि, यस्यास्तात्पर्यैरनुपदमेव निरूपितम्। यथा च "अविभागो वचनात्" "अविभागेन दृष्टत्वादि"त्यनयोर्नैकोऽर्थः, तथा पूर्वमेव निरूपितम्॥

### "जक्षन् क्रीडन्नि"त्यादीनां गौणमुक्तिविषयत्वम्

"जक्षन् क्रीडन्" इत्यादिवाक्यं हि गौणमुक्तिप्रकरणगतम्, इति नोक्त-सूत्रस्य तत्परतया विवेचनार्थमुत्कर्षः॥

### अविभागो न परमात्मतापत्तिः श्रीभाष्य इत्यस्य भूषणाक्षेपपरिहारः

यत्तु—"अविभागो वचनात्" इत्यत्र वागादीनां परमात्मतापत्तिं श्रीभाष्यमपि न स्वीकरोति, अतोऽविभागमात्रमिति शतभूषणी, तत्र भूषणं वदति—अद्वैतमतेऽपि निरवशेषलयोक्त्या परमात्मतापत्तिरिष्टेहोच्यते, इति कथं तद्विपरीतमिति॥

तत्रेदं प्रष्टव्यम्—किं वाऽत्र विपरीतमुक्तम्! अविभागो ह्यत्र तद्व्यति-रेकेणाभावः, अपरत्रात्यन्ताभेद इत्येव शतभूषणी मन्यते, न तु तद्विपरीतं किमपि कुत्रापि॥

### "अहं ब्रह्माऽस्मी"त्युक्तस्युरुपानुपपत्तिः श्रीभाष्यमते, नाद्वैतमते

"अहं ब्रह्माऽस्मि" इत्यत्र 'अस्मि' पदानुपपत्तिरीशावास्योपनिषद्-भाष्यसमालोचनपूर्वकमन्यत्र विशदीकृता, प्रकाशिता च संस्कृतसाहित्यप-रिषत्पत्रिकायामुपनिषत्सारसंकलने, तथाऽद्वैततत्त्वशुद्ध्यादावपि॥

### अविभागपदस्य भेदाभावपरत्वम् , न संयोग-परत्वम् ; अतोऽद्वैत एव स्वारस्यम्

आस्तामियं कथा। अविभागसूत्रद्वयस्वारस्यं तु पूर्वोक्तरीत्याऽद्वैत-सिद्धान्त एव। अविभागशब्दो हि भेदाभावपरोऽभेदमेव बोधयति। संयोगस्य विभागपूर्वकस्य, विभागान्तस्य वा नाविभागपदेन व्यपदेशः कुत्रापि, येन संयोगविशेषस्तत्पदार्थः स्यात्। अत उभयत्रापि भेदाभाव-परत्वम् ॥

भेदो हि प्रपञ्चस्य ब्रह्मव्यतिरेकेण सत्त्वम्, प्रपञ्चाभावे तु भेदाभावः। तदुक्तम्—तदनन्यत्वसूत्रे भामत्याम्—"अनन्यत्वमिति नाभेदं ब्रूमः, किन्तु भेदं व्यासेधामः" इति। जीव-ब्रह्मणोस्तूपाधिकृतत्वाद् भेदस्योपाधिनिवृत्तौ भेदस्यापि निवृत्त्याऽभेदे पर्यवसानाद् अविभागशब्देन तत्राभेदाभिधा-नम्, इति नाविभागशब्दस्य सूत्रद्वयेऽप्यस्वारस्यमद्वैतमते ॥

### ब्रह्मभावः ब्रह्मात्मनैक्यम् , न साधर्म्यमात्रम्, तत्रैव सूत्रस्वारस्यम्

एतेन—"ब्रह्मवित् ब्रह्मैव भवति" इति वाक्यमपि—व्याख्यातम्। तत्र ब्रह्मभावो हि ब्रह्मस्वरूपेणैक्यमेव, न तु तत्साधर्म्यमात्रम् , इति निरू-पणार्थं 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः" "चितितन्मात्रेण तदात्मकत्वा-दित्यौडुलोमिः" एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः" इति सूत्राणि ॥

तत्र जैमिन्यभिमतं ब्राह्मं स्वरूपमुपहितरूपेण सजगद्व्यापारं सत्य-कामत्व-सत्यसंकल्पादि, तावन्मात्रं मुक्तात्मनोऽप्युपहितस्यैव, औडुलोमि-मतं तु मुक्तात्मनः स्वोपाध्यनुपहितस्य चितितन्मात्रत्वमेव, न तु सजगद्-व्यापारं सत्यकामत्वादिधर्मवत्त्वमपीति। बादरायणमतं तु मुक्तात्मनः सर्वात्मनेश्वरभावोऽनेकजीववादेऽविद्यैक्यवादेऽपि। व्यक्तं चैतद् मुक्ता-त्मस्वरूपवादे सिद्धान्तलेशसंग्रहे ॥

### अनेकजीववाद ईश्वरभावे मुक्तौ सूत्रतात्पर्यम्

अत्र मुक्तात्मा ब्रह्मैव; अनेकजीववादे स्वोपाधिविरहात् ब्रह्मभावमा-पन्नः, उपहित स्वरूपहीनश्च मुक्तौ भवति। सर्वजगत्कारणाविद्योपहितब्रह्म-स्वरूपातिरिक्तं स्वरूपं जीवात्मनो नास्तीत्युक्ताधिकरणतात्पर्यम्। अत एव "ब्राह्मेणे"ति सौत्रपदम् ॥

श्रीभाष्यमते तु जीवस्यापि वस्तुगत्याऽपहतपाप्मत्वादिस्वभावः, ज्ञानाश्रयस्यापि चितितन्मात्रत्वं च, इति स्वरूपाविर्भाव एव, न तु ब्राह्मस्वरूपाविर्भावः, इति "ब्राह्मेणे"ति न स्वरसम्, अद्वैतसिद्धान्ते तु चितितन्मात्रत्वस्यैव स्वाभाविकत्वात्, तत्स्वरूपातिरिक्तब्राह्मरूपस्य सजगद्व्यापारस्येश्वरभावस्य यावत्सर्वमुक्त्युक्ताधिकरणसिद्धत्वेऽपि शुद्धब्रह्मस्वरूपानावृतसंविन्मात्रस्वरूपस्य सर्वमुक्त्यनन्तरभावित्वात् तत् स्वरसम्, इति। एवंविधमुक्तिस्वरूपनिरूपणार्थमुक्तमधिकरणं सार्थकम् ॥

### एकमुक्तौ सर्वमुक्तिपरिहारोऽद्वैतमते

एवं चाविद्यैक्यवाद एकमुक्तौ सर्वमुक्तिः परिहृता भवति; अन्यथा "अविभागेन दृष्टत्वादि"त्यनेनैव गतार्थत्वादुक्तमधिकरणं व्यर्थं श्रीभाष्यमते, अद्वैतसिद्धान्ते तु सर्वमुक्तौ मुक्तात्मनामत्यन्तब्रह्मैक्यसाधनार्थम्— "अविभागेन दृष्टत्वादि"ति सूत्रमिति विभागः ॥

### विवरणमत ईश्वरभावः, भामत्यादिमते शुद्धब्रह्मभावो मुक्तिः

एतेन—अद्वैतमते मुक्तात्मनोऽनेकविशेषवत्त्वमुक्ताधिकरणसिद्धं स्यादिति निर्विशेषताव्याघात इति—परास्तम्; एकाविद्यावादमाश्रित्य प्रवृत्तोक्ताधिकरणानुरोधेन सजगद्व्यापारेश्वरभावस्यैवाद्वैतसिद्धान्तत्वेन तस्य सविशेषत्वस्येष्टत्वात्, सर्वात्मनैक्यवर्णनं त्वनेकजीववादाश्रितानेकाविद्यावादपरभामतीमते, जीवेश्वरयोरुभयोरपि शुद्धब्रह्मप्रतिबिम्बभाव इति प्रकटार्थकारमते च, न तु जीवेश्वरयोर्बिम्ब-प्रतिबिम्बभाव इति विवरणमते, इति सर्वस्यापि श्रुत्यर्थस्यैक्यवर्णनायासे भामत्यादेर्निष्फलत्वापादनं भामतीपक्षे नोपपद्यते ॥

### ब्रह्ममीमांसायाः यथायथं सविशेष-निर्विशेषपरत्वोपसंहारः

तत्र ब्रह्ममीमांसा निर्विशेषमिव सविशेषमपि देवताकाण्डनिर्णीतमनुषज्य प्रवर्तते। सगुणोपासनमपि श्रवणादीनीव ब्रह्मसाक्षात्कारेऽन्तरङ्गसाधनमिति मत्वेत्यसकृदाम्रेडितं शतभूषण्यादौ, इति न सविशेषपरतयैव सर्वाणि सूत्राणि प्रतीयन्ते भूषणोक्तरीत्या। तदुक्तरीत्यैव सविशेषोपासनाफलगौणमुक्तिस्वरूपमपि निर्णेतुम्—"जगद्व्यापारवर्जमि"त्यधिकरणम्, इत्युक्ताधिकरणस्यापि निर्विशेषसाक्षात्कारफलपरतया योजनं न संभवति ॥

### ब्रह्ममीमांसायाः सगुणोपासनाफलेनोपसंहारः सगुणोपासनस्यापि श्रवणादीनामिवोपयोगं सूचयितुम्

तत्र "अथातो ब्रह्मजिज्ञासा" इत्यवान्तरतात्पर्यविषयं सविशेषम्, मुख्यतात्पर्यविषयं निर्विशेषं च प्रतिजानन्, "जन्माद्यस्य यतः" इत्यादिना सविशेषमुखेन निर्विशेषं लक्षयन्, शास्त्रयोनित्व-समन्वयाधिकरणाभ्यां निर्विशेषं ब्रह्मैव मुख्यतात्पर्यविषयतया व्यवस्थापयन्, मध्ये मध्ये सविशेषवाक्यानि निर्विशेषवाक्यानि च परमृशन् बादरायणो निर्विशेषज्ञानफलमुपसंहृत्य सविशेषोपासनफलमप्युपसंहरति:—विना सविशेषोपासनम्, भक्तियोगं वा न निर्विशेषसाक्षात्कार इति, इति मुख्यसाक्षात्कारफल उपसंहर्तव्ये तत्साधनभक्तियोगफलमुपसंहरति—विना भक्तियोगं न ज्ञानयोगाधिकार इति व्यवस्थापयितुम् ॥

### निपुणमतीनां सकृच्छ्रवणमात्रेण साक्षात्कारो जन्मान्तर एव प्राप्तसाक्षात्काराणाम्, स्थितप्रज्ञानां वा, येषां नोपासनापेक्षा

यत्तु—"लिङ्गाच्चे" ति सूत्रे, भाष्ये" येषां पुनर्निपुणमतीनां नाज्ञानसंशय-विपर्ययलक्षणप्रतिबन्धोऽस्ति, ते शक्नुवन्ति सकृदुक्तमेव "तत्त्वमसि" वाक्यार्थमनुभवितुम्, तान् प्रत्यावृत्त्यानर्थक्यमिष्टमेवे"ति भाषितम्, तदपि जन्मान्तरीयश्रवण-मनन-निदिध्यासनादिलब्धस्य साक्षात्कारस्य पटुतमसंस्काराभावेन कार्याक्षमस्य जन्मान्तरश्रवणमात्रेणोत्पत्तिमभिप्रेत्य, न तु विना सगुणोपासनादिकम्, मननादिकं वा विनैव निपुणमतीनामपि सकृदुक्तिमात्रेणात्मतत्त्वसाक्षात्कारसंभवः कस्यापि। अत एव गीतायां योगत्रयस्योपदेशः। अथवा—

"द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव।
असाध्यः कस्यचिद्योगः कस्यचित् तत्त्वनिर्णयः॥"

इति वासिष्ठप्रतिपादितयोगमार्गावलम्बिनां स्थितप्रज्ञानामपि विना 'तत्त्वमसि' वाक्यार्थज्ञानं मोक्षासंभवात्, तद्वाक्यार्थग्रहणसमर्थान् योगमहिम्ना प्रतिहतप्रारब्धलेशान् संशय-विपर्ययादिरहितानभिप्रेत्य हीदं वचनम्, यत्र सगुणोपासनम्, मननादि वा नापेक्ष्यते इति योगवासिष्ठे व्यक्तम्। सर्वथा तु योगमार्गं परित्यज्य ज्ञानमार्गेणैव मोक्षार्थं यतमानानां श्रवण-मननाद्यपेक्षाया अभावो न भगवत्पादसंमतः, इति नोक्तभाष्यविरोधो भूषणोक्तरीत्या, इति सविशेषवाक्यानां गौणं प्रामाण्यम्, निर्विशेष-

वाक्यानां मुख्यं प्रामाण्यम् , इत्युभयविधवाक्यविचारो ब्रह्ममीमांसायां सङ्गच्छते ॥

यावत्तत्त्वसाक्षात्कारोदयं सविशेषवाक्यान्यपि प्रमाणानि

तत्र प्रामाण्यम् , सत्यम् , सत्येव दुष्टकारणजन्यत्व-बाधकप्रमाण-विरहे, तदपि बाधानिर्णये, असत्यपि बाधकज्ञाने निरपवादम् । न हि "इदं रजतमि"ति भ्रान्तोऽपि "नेदं रजतमि"ति प्राप्तोपदेशोऽपि यावत्परीक्षम्, यावत्तद्बाधकनिर्णयं चाप्रामाण्यं मन्यते, इति सत्यपि बाध्य-बाधक-भावे सविशेष-निर्विशेषवाक्ययोर्यावन्निर्विशेषवाक्याधीनबाधम् , यावत्त-ज्जनितपटुतमनिर्विशेषसाक्षात्कारोदयं वा न सविशेषवाक्यान्यप्रमाणानि ज्ञातुमीष्टे, इति तत्त्वसाक्षात्कारपूर्वक्षणपर्यन्तं प्रामाण्यं सविशेषवाक्यानां दुरपवादम् ॥

निर्विशेषवाक्यानि तु प्रमाणान्येव; विषयस्याबाधात्

अत एव तेषां व्यावहारिकं प्रामाण्यम् । न च व्यावहारिकत्वमिदं पारिभाषिकम् , किन्तु तत्त्वसाक्षात्कारपूर्वक्षणावच्छिन्नत्वमात्रम् , इति निर्विशेषविषये सत्यपि परोक्षज्ञाने तस्य न बाधकत्वम् , रज्जुसर्पादि-स्थले ह्याप्तवाक्यानामपि यावत्स्वयंपरीक्षं न बाधकत्वावधारणम् । निर्विशेष-वाक्यस्य तु न दोषमूलत्वम् ; यतोऽविद्याया दोषत्वं तत्रैव, यत्र तस्या विषयात्मना परिणामः, तदावृतब्रह्मविवर्तत्वमात्रं वा । न च निर्विशेषं ब्रह्म तथा । तद्धि यावदखण्डाकारसाक्षात्कारमावृतमेव प्रकाशते, इति न निर्वि-शेषपराणां दुष्टत्वम् । तद्धि बाधज्ञानावसेयम् । न च वेदान्तानां दुष्टत्वो-पपादकम्, ब्रह्मस्वरूपबाधकं प्रमाणान्तरं तत्र वर्तत इति तु विशेषः ॥

निर्विशेषवाक्यस्य सविशेषवाक्येन न बाधः

तत्र सत्यपि विरोधे सविशेषवाक्यं न निर्विशेषवाक्यस्य बाधकम् , किन्तु निर्विशेषवाक्यमेव सविशेषस्य । तदुक्तम्—

"पूर्वात् परबलीयस्त्वं तत्र नाम प्रतीयताम् ।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥"

इति ॥

सोदाहरणनिर्देशमुपक्रमापच्छेदन्याययोर्विषयविवेकः

अयं ह्युपक्रमाधिकरणापवादस्यापच्छेदाधिकरणस्य संग्रहः । यत्र वाक्ययोः प्रामाण्यं पदैकवाक्यतया, वाक्यैकवाक्यतया वा बोधकत्वेन,

तत्रोपक्रमस्य प्राबल्यम्, यथाऽर्थवादस्य, विधिवाक्यस्य च विरोधे विधिवाक्यानामर्थवादवाक्यापेक्षमेव प्रामाण्यम्, इति दुर्बलस्याप्यर्थवादस्यैव तत्र प्राबल्यम्, इति तदविरोधेन विधिवाक्यानां नयनं कर्तव्यम्—तद्यथा—यत्रार्थवादे वेदानां स्तुतिः, विधौ तु मन्त्रस्याम्नानम्, तत्र वेदस्यैव विधिविषयत्वम्। यथा—"अग्ने ऋग्वेदः" इत्यर्थवादो वेदमुपक्रम्य "उच्चैर्ऋचा क्रियते" इति विधौ मन्त्राम्नाने ऋक्पदेन मन्त्रपरेणापि वेदस्यैव विवक्षा, यत्र तु स्वतन्त्रप्रमाणयोर्द्वयोर्विरोधः, तत्रोत्तरस्यैव प्रामाण्यम्, पूर्वं तु निषेध्यसमर्पकमात्रम्, यथा—'इदं रजतम्' "नेदं रजतमि" त्यनयोः पूर्वं दुर्बलम्, उत्तरं प्रबलम्। अयमेव न्यायोऽत्रापि—सविशेषवाक्यं दुर्बलम्, निर्विशेषवाक्यं प्रबलम्—इति॥

तत्रे'दं रजतमि'ति ज्ञानस्येव सविशेषवाक्यानामपि यावद्बाधनिर्णयं प्रामाण्यमपेक्ष्यैव सगुणवाक्यानां गौणं प्रमाण्यमिति व्यपदेशः, इति निर्गुणवाक्यानामेव मुख्यतात्पर्यमूरीकर्तव्यम्, तच्छेषाश्च सगुणवाक्यानि, इति गुणपराणि सविशेषवाक्यानि, निर्विशेषवाक्यानि तु तदुपकार्याणि; तदर्थसाक्षात्कारान्तरङ्गसविशेषोपासनसमर्पकत्वात्, इति 'गुणे त्वन्याय्यकल्पना' इति न्यायेनापि सविशेषवाक्यानामेवान्यथा नयनं युक्तम्॥

### साङ्ख्यादिदर्शनापेक्षया वैदिकाद्वैतदर्शनस्योत्कर्षः
### तदेव शारीरकशास्त्रस्य परमं लक्ष्यं च

'सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा॥"

इत्यत्र प्रस्तुतसाङ्ख्य-योग-पाशुपत-पाञ्चरात्राणि, तदनुसारीणि च दर्शनानि सति वेदविरोधे तदंशमात्रे वैदिकतया योज्यमानान्यपि हेयानि, तदतिरिक्तैकात्म्यवादानुसारि वैदिकमद्वैतदर्शनमेव तु सौत्रमिति व्यक्तीकृतमधस्तात्॥

अद्वैतदर्शनं हि न कामपि स्वासाधारणीं प्रक्रियामाश्रित्याऽऽत्मानं लभते श्रीभाष्यमिव, यत्र संकोच-विकासशालिधर्मभूतज्ञान-तत्संकोचविकासलक्षणजीवोत्पत्ति-पारिभाषिक-शरीरशरीरिभाव-विशेष्यमात्रनिमित्तकारणत्वसहितविशिष्टोपादानोपादेयभाव-पारिभाषिकापृथक्सिद्धिसम्बन्ध-प्रपत्तिसाधनत्वादयो बहवः प्रक्रियाः समाद्रियन्ते॥

अद्वैतदर्शनं हि दर्शनान्तरसम्मतप्रक्रिया वैदिकसिद्धान्ताविरोधिनीरादायाऽऽत्मानं लभते। वैदिकसिद्धान्तविरोधिनीं तु प्रक्रियां कामपि

प्रमाणं न मन्यते। वैदिकाः सिद्धान्ता एवाद्वैतसिद्धान्तस्य परमं लक्ष्यम्। तत्रानिर्वचनीयख्यात्यादिस्तु भ्रमे, स्वप्ने चानुभवसिद्धः। स्वाप्नानिर्वचनीयत्वं तु श्रौतमपि' इति मायामात्राधिकरणविचारेण निरधारि। शुक्तिरजतादिपारमार्थिकतावादं जयतीर्थन्यायसुधाऽद्वैतपक्षविरोधिन्यपि निरस्यतीत्याद्वैततत्त्वशुद्ध्यादौ मातृ-मदिरा-मतङ्गादिदृष्टान्तावलम्बनेन तद्रीत्या व्यक्तीकृतम्, इति शारीरकशास्त्रमद्वैतसिद्धान्तप्रधानमेव॥

अद्वैतसिद्धान्तपराणामधिकरणानां केषांचन संग्रहः

तदनुगुणान्येव "न स्थानतोऽपि" "मायामात्रम्" "तदनन्यत्वम्" "अत्ता चराचरग्रहणत्" गुहां प्रविष्टौ" "भूमा" "अदृश्यत्वादिगुणकः" "आनन्दमयोऽभ्यासात्" "प्रतिषेधादिति चेन्न" 'तानि परे' 'अविभागेन दृष्टवात्" आत्मेति तूपगच्छन्ति" "ब्राह्मेण जैमिनिः" "तदधिगमे" "आनन्दादय" "अक्षरधियाम्" इत्यादीनि बहूनि सूत्राणि वर्तन्ते। सर्वेषां सविशेषपरत्वं न वैदिकमिति तु तत्त्वम्। न च धर्मभूतज्ञानादि श्रौतमिति व्यक्तमन्यत्र॥

अद्वैतसिद्धान्तो न शैवादिसिद्धान्तपक्षपाती,

शिव-विष्णूपरमात्मतावादो न संभवति; परमात्मनो निर्विशेषत्वात्, एकत्वात्, वस्तुनि विकल्पायोगात्, एकत्वाच्च। तत्र शिव परमात्माबोधिका उपनिषदोऽधिकाः, एवमद्वैतसिद्धान्तैकपक्षपातिन्यश्च। परमात्मा हि तत्र तत्रेश्वर-महेश्वरादिशब्दैर्निर्दिश्यते। ईशावास्योपनिषत्तु ईशशब्देनैव प्रक्रमते। तत्र वैश्वानराधिकरणादौ निर्दिष्टः परमेश्वरः त्रिमूर्तिसाधारणं विराड्रूपम्, न ब्रह्मा, विष्णुः, शिवः, केवलं वा। गीताया विश्वरूपाध्याये विष्णुरपि तदवयवेष्वेक एव दृश्यते—यथा—"किरीटिनं गदिनं चक्रहस्तम्"—इति, योऽर्जुनेनान्यतमावयवरूपो दृश्यते॥

ब्रह्मसूत्रं न शिव-विष्ण्वादिदेवताविशेषपक्षपाती;
ब्रह्मपदस्यैव प्रयोगात्

वस्तुतस्तु—ब्रह्मसूत्राणि साक्षात् सूत्रे ब्रह्मपदमेव निर्दिशन्ति, न कुत्रापि विष्णुपदम्, तत्पर्यायपदं वा प्रयुञ्जते॥

तत्र यद्यपि ब्रह्म सर्वविद्याप्रतिपाद्यं "स विष्णुराह हि स विष्णुराह हि तद् ब्रह्मेत्याचक्षते"इति संकर्षान्ते काशकृत्स्नो वदति, परन्तु स सविशेष एव। बादरायणस्तु न कुत्रापि विष्णुपदं प्रयुङ्क्ते, नारायणपदं वा॥

तत्र "लिङ्गभूयस्त्वाधिकरणे" सविशेषस्वरूपं महानारायणोपनिषद्नुसारेण श्रीभाष्ये निर्धार्यते—सर्वविद्याप्रतिपाद्यनिर्णयस्तु तदेकवाक्यतयैव निर्धारणीयम्—इति। यथा नारायणपरमात्मत्वबोधिका उपनिषदः, तथा शिवपरमात्मत्वबोधिका अपि ततोऽप्यधिका वर्तन्ते ॥

विष्णुपरमात्मत्वबोधकोपनिषदः

तत्र बहव उपनिषदो नारायणस्य परमात्मत्वं बोधयन्ति। कुत्रचन "शंभुराकाशमध्ये ध्येयः" इत्यादौ शंभुरुपास्यत्वेन निर्णीयते। तत्र शंभुपदस्यापि नारायणपरत्वमेव स्वीकर्तव्यम्, न रुद्रपरत्वम्; नारायणपरमात्मताया एवौपनिषदत्वात् ॥

"सृष्टि-स्थित्यन्तकारिणीं ब्रह्म-विष्णु-शिवात्मिकाम्।
स संज्ञां याति भगवान् एक एव जनार्दनः ॥"

इति वचनं तु ब्रह्मादिशरीरकत्वेन ब्रह्मादिषु नारायणशब्दं व्युत्पादयति। अतो नारायणशब्दो न ब्रह्म-रुद्रसाधारणः ॥

तथाहि "ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः" इत्यादिवचनाद् नारायणोत्कर्षावगमात्, "ध्येयः शंभुराकाशमध्ये" इत्यादीनां तदविरोधेन नयनमेव युक्तम्। तत्र नारायणोत्कर्षप्रतिपादिका उपनिषदोऽधो निर्दिश्यन्ते। ता यथा—ब्रह्मबिन्दूपनिषत्, या—"सर्वभूताधिवासं च यद् भूतेषु वसत्यधि। सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवः" इत्युपसंहरन्ती, "पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति। नारायणाद् ब्रह्माऽजायत, नारायणाद् रुद्रोऽजायत" इत्युपक्रम्य, "ओं नमो नारायणाये"ति मन्त्रार्थविवेचनमध्ये नारायणमेव परामृशन्ती, "नारायणसायुज्यमाप्नोति" इति नारायणसायुज्येनैवोपसंहरन्ती च नारायणोपनिषत्, "सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम्। विश्वं नारायणं विष्णुमि"त्युपक्रम्य, "स ब्रह्म स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्" इति परविद्याप्रतिपाद्यत्वेन नारायणमेवोपसंहरन्ती महानारायणोपनिषत्, "ओं नमो नारायणाये"ति मन्त्रोपासनामाहात्म्यनिरूपणपूर्वकं विष्णुध्यानस्यैव सर्वदुःखनिरासनिदानत्वं निरूपयन्त्य आत्मबोधोपनिषत्, पुरुषसूक्तस्य विष्णुपरत्वं प्रतिपादयन्ती मुद्गलोपनिषत्, "एको ह वै नारायण आसीत, न ब्रह्मा नेशानः" इत्युपक्रम्य "स ब्रह्मा

स ईशानः" इति परामृशन्ती महोपनिषत्, यदि योन्याः प्रमुच्येऽहं तत्प्रपद्ये नारायणम्" इति विवेचयन्ती गर्भोपनिषत् "दिव्यो देवो नारायणः" इत्युपक्रम्य प्रवृत्ता सुबालोपनिषच्च ॥

शिवोत्कर्षपराः, अद्वैतपराश्चोपनिषदः

अद्वैतिनस्तु—उपनिषत्सु कानिचन वाक्यानि नारायणपरमात्मत्वं सत्यम्, बोधयन्ति, बह्वस्तूपनिषदः शंभोः परमात्मत्वम्। तत्रापि शिवपरमात्मत्वबोधिका एवोपनिषदोऽधिकाः। सर्वथा तूपास्यस्वरूपं तत्तदिच्छानुगुणं शैवं वा भवतु, वैष्णवं वा। पारमार्थिकं स्वरूपं तु सर्वेषां चिन्मात्रमेव, अन्यत्तु सर्वमौपाधिकम्। नारायणपदमपि संज्ञामात्रं विष्णुपुराणे सृष्टिकर्तुर्ब्रह्मण एव नारायणात्मत्वं प्रतिपादयति, एवं रुद्रस्यापि, इति शिवापेक्षया विष्णोः, विष्ण्वपेक्षया शिवस्य वोत्कर्षापकर्षयोः श्रुतिस्मृति-पुराणेतिहासानां न तात्पर्यम् ॥

"सृष्टि-स्थित्यन्तकारिणीं ब्रह्म-विष्णु-शिवात्मिकाम्।
स संज्ञां याति भगवानेक एव जनार्दनः॥"

इति विष्णुपुराणं विष्णोरपि ब्रह्मादिकोटौ प्रवेशात् यथा न ब्रह्मादिस्वरूपं नारायणशब्दार्थः, न विष्णुस्वरूपमपि तथेति ज्ञापयति। जनार्दनशब्दार्थस्तु सर्वभूताशयप्रत्यगभिन्नपरमात्मैव. इति जीवत्वेश्वरत्वोपलक्षितसंविन्मात्रात्मनैव ब्रह्मानुसन्धानं परमाय श्रेयसे, अभ्युदयाय तु ब्रह्म-विष्णु-रुद्राद्यात्मनाऽपीत्येवंपरमेव विष्णुपुराणमिति मन्तव्यमिति—वदन्ति ॥

तथाहि—"ध्येयः शंभुराकाशमध्ये" इत्यादिवचनैः शिवस्यैव परमात्मत्वं ध्येयत्वेन प्रतिपाद्यते, इति विष्ण्वादिशब्दानां विष्ण्वादिशरीरकसदाशिवपरतयैव योजनं युक्तम्। तत्र शिवोत्कर्षप्रतिपादिका उपनिषदोऽधः केवलं नाम्ना निर्दिश्यन्ते—ब्रह्मणाऽऽश्वलायनं प्रति—"उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिमि"त्यादिना परविद्याप्रतिपाद्यत्वं सदाशिवस्यैवेति बोधयन्ती कैवल्योपनिषत्, नारायणपदेनेव महेश्वरपदेनापि ध्येयस्वरूपस्य प्रतिपादनादुपनिषत्, रुद्रस्यैव भयानुगतस्वरूपस्यैव परमात्मत्वं प्रतिपादयन्ती गर्भोपनिषत्, रुद्रस्यैव विष्णु-देवेन्द्रादिसर्वात्मत्वं प्रतिपादयन्ती—अथर्वशिरउपनिषत्. "कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः शंभुराकाशमध्ये" इत्यादिना सदाशिवस्यैव सर्वकारणपरमात्मत्वं निर्दिशन्त्यथर्वशिखोपनिषत्, 'एवं खल्वात्मेशानः

शंभुर्भगो रुद्रः प्रजापतिः" इति शंभ्वादिवाच्यस्यैव विष्णु-नारायणादि-शब्दवाच्यत्वव्यवस्थापनपरा मैत्रायणीयोपनिषत्, 'सदाशिवं ब्रह्मादि-वन्दितं योगिध्येयं परं पदं तत्र गत्वा न निवर्तन्ते। तदेतदृचाऽभ्युक्तम्—"तद्विष्णोः परमं पदमि"त्यादिना सदाशिवपदस्यैव व्यापकवैष्णवपरत्वा-दिनिरूपणपरा बृहज्जाबालोपनिषत्, "तत्त्वमसी" त्यभेदवाचकमिदं योजयन्ती "ते शिवसायुज्यभाजो भवन्ति" इति ब्रह्मभावस्य सदाशिव-भावत्वमेवाभेदेन बोधयन्ती सर्वकारणपरमात्मस्वरूपं शिव एवेति विविञ्चाना च शुकरहस्योपनिषत्, 'नमः शिवाय गुरवे सदानन्दमूर्तये' इत्युपक्रम्य प्रवृत्ता निरालम्बोपनिषत्, अन्याश्च तेजोविन्दु-ध्यानबिन्दु-नारदपरिव्राजक-त्रिशिखब्राह्मण-शरभ-त्रिपाद्विभूत्याद्युनिषदो विष्णूत्कर्ष-वादं वारयन्ति शिवोत्कर्षदृढीकरणेन। परस्परविरोधे चाद्वैतवादेनैव सर्वा-सामुपनिषदामैककण्ठ्यं वक्तव्यम्। अद्वैतस्यौपनिषदत्वे तु नृसिंहतापिनी-सर्वसार-स्कान्द-पैङ्गल-महा-कठरुद्रोपनिषदादयो बहवः प्रमाणानि॥

तत्र नारायणपदस्य सर्वकारणस्य मुख्यस्यैव तत्त्वस्य तत्तत्कार्यवशात् तत्र तत्र गौण्या प्रवृत्तत्वात् तत्रैवाचिरोद्धृतमैत्रायणीबृहज्जाबालोपनिषदाद-योऽप्यनुकूलाः। सर्वथा तु शरीरभेदमात्रं ब्रह्म-रुद्र-विष्णूनाम्, कार्यभेदमात्रं वेति शरीरभेदेनैव तेषां भेदः, न तु संविन्मात्रस्वरूपेण। "ब्रह्म-विष्णु-शिवा-त्मिकाम्" इत्यत्र शिव इव विष्णुरपि तत्समकोटौ निर्दिश्यते, इति नास्य वाक्यस्य शिवशरीरकविष्णुपरतायां तात्पर्यम्। महाभारतादिकमपि न शिवापेक्षया विष्णूत्कर्षप्रतिपादनपरम्। व्यक्तमधिकमन्यत्र॥

शारीरकप्रथमाध्याये समन्वयाभिधाने विचारितेषु तैत्तरीयक-छान्दोग्य-कठ-मुण्डक-बृहदारण्यक-श्वेताश्वतर-कौशातकीब्राह्मणवाक्येषु कुत्रापि नारायणपदं नास्ति। तदुभयानुगतं स्वरूपमेव तत्त्वम्पदलक्ष्यार्थं मत्वाऽद्वैत-स्यावबोधिका अप्युपनिषदो बहवो वर्तन्ते। बादरायणाचार्या अपि निर्वि-शेषब्रह्मपरतायामेव निर्भराः, ब्रह्मपदमात्रं प्रयुञ्जानाश्च शिव-विष्णुभेदेन कारणस्वरूपोत्कर्षापकर्षविषय उदासीना एव। सविशेषब्रह्मवादमात्रत्वेऽपि वैदिकाद्वैतसिद्धान्ताविरोधेनैव पाशुपतम्, पाञ्चरात्रं चोभयमपि प्रमाणम्, तद्विरोधे त्वप्रमाणम्॥

भगवत्पादानां शैवादिमतेषु साम्यबुद्धिः

तत्र भगवत्पादाः सविशेषं ब्रह्म नारायणमेव तत्र तत्र निर्दिशन्तोऽपि बहूनामुपलभ्यमानानां दशश्लोक्यादीनां "शिवः केवलोऽहमि"त्युपसंहार-

पराणां सत्त्वात् शरीरभेदमात्रं शिव-विष्ण्वादेः, स्वरूपतस्तु न भेदः। अयमेव न्यायो गणेश-स्कन्द-राम-कृष्ण-मत्स्याद्यवतारविशेष-दुर्गादिस्वरूपेऽपि, इति देवतानां सर्वासां स्वरूपैक्यमेव, शरीरभेदमात्रं तु तेषां न स्वरूपभेद-इत्यभिप्रयन्ति ॥

### नारायणपदमात्रं विष्णुपरमात्मतायां न नियामकम्

तत्र पाञ्चरात्रदृष्ट्या नारायणः परमात्मा भवतु, अन्यदृष्ट्या त्वन्यः, सविशेषब्रह्मवादे सर्वशब्दवाच्यत्वात् परमात्मनः यस्य कस्यापि परमात्मत्वे नारायणपदप्रयोगमात्रम्, सदाशिवपदप्रयोगमात्रं वा तावन्मात्रस्य परमात्मत्वं जन्मादिसूत्रोक्तं जन्म-स्थिति-लयत्रितयकारणत्वं वा वैयासिकं तु बाधितमेव। अतः सविशेषेश्वरमात्रं सर्वव्यापकमर्थमेवावलम्ब्य वासुदेवपदेन, सर्ववेदवेद्यत्वेन, नारायणपदेन, पदान्तरेण वा निर्देशमात्रेण भगवत्पादानां न केवलशैव-वैष्णवादिसिद्धान्तेष्वन्यतमे नैर्भर्यम् ॥

### भगवत्पादानां षण्मतस्थापकानां कुत्रापि न द्वेषः

अत एव सौर-शाक्त-वैष्णव-गाणपत्य-शैवसम्प्रदायसमाराध्यतत्तद्देवतानां सर्वासामाराधनरूपपञ्चायतनपूजासम्प्रदायप्रवर्तकत्वम्, अद्वैतसिद्धान्तप्रचारकत्वम्, तेन षण्मतस्थापनाचार्यत्वम्, जगद्गुरुत्वं वा तेषाम्, इति न शैव-वैष्णवसम्प्रदायविशेषमात्रे नैर्भर्यम्, न वाऽन्यतमसम्प्रदाये प्रद्वेषो भगवत्पादानाम्, इति तत्र तत्र भगवत्पादानां निन्दनम्, तत्सम्प्रदायाचार्याणां शब्दतोऽर्थतश्चाक्रमणं च भूषणस्य स्वयं भूषणं वा दूषणं वेति स्वयमेव तत् पश्यतु ॥

### नारायणपदं योगरूढं जन्मादित्रितयकारणपरम्

इदमत्रावधेयम्—प्रथमाध्याये केवलमाकाशाधिकरणे श्रीभाष्यप्रकाशिकायाम्—"न च एको वै नारायण आसीत्" इत्युक्तिविशेषपर्यवसानं शङ्क्यम्; नारायणपदस्य योगरूढतया योगार्थावच्छिन्नरूढ्यर्थबोधस्य योगशक्तिमूलकवाक्यार्थतापन्नावयवार्थसापेक्षतया विलम्बितत्वेन केवलरूढाकाशपदसमर्पितभूताकाशपर्यवसानस्य प्रथमभावितया तत एव निराकाङ्क्षत्वात्" इति नारायणपदं योगरूढम्, न केवलरूढमिति वर्णितम् ॥

### विष्णुपदं सर्वत्र व्यापकमात्राभिप्रायम्

तत्र योगो विष्णुपुराणोक्तः "आपो नारा इति प्रोक्ताः" इति यदि विवक्ष्यते, तर्हि विष्णुपुराणोक्तरीत्या सृष्टिकर्ता ब्रह्मैव स भवितुमर्हति। तत्र

शंभुर्भगो रुद्रः प्रजापतिः" इति शंभ्वादिवाच्यस्यैव विष्णु-नारायणादि-शब्दवाच्यत्वव्यवस्थापनपरा मैत्रायणीयोपनिषत्, 'सदाशिवं ब्रह्मादि-वन्दितं योगिध्येयं परं पदं तत्र गत्वा न निवर्तन्ते। तदेतदृचाऽभ्युक्तम्— "तद्विष्णोः परमं पदमि"त्यादिना सदाशिवपदस्यैव व्यापकवैष्णवपरत्वा-दिनिरूपणपरा बृहज्जाबालोपनिषत्, "तत्त्वमसी" त्यभेदवाचकमिदं योजयन्ती "ते शिवसायुज्यभाजो भवन्ति" इति ब्रह्मभावस्य सदाशिव-भावत्वमेवाभेदेन बोधयन्ती सर्वकारणपरमात्मस्वरूपं शिव एवेति विविञ्चाना च शुकरहस्योपनिषत्, 'नमः शिवाय गुरवे सदानन्दमूर्तये' इत्युपक्रम्य प्रवृत्ता निरालम्बोपनिषत्, अन्याश्च तेजोबिन्दु-ध्यानबिन्दु-नारदपरिव्राजक-त्रिशिखब्राह्मण-शरभ-त्रिपाद्विभूत्याद्युपनिषदो विष्णूत्कर्ष-वादं वारयन्ति शिवोत्कर्षदृढीकरणेन। परस्परविरोधे चाद्वैतवादेनैव सर्वा-सामुपनिषदामैककण्ठ्यं वक्तव्यम्। अद्वैतस्यौपनिषदत्वे तु नृसिंहतापिनी-सर्वसार-स्कान्द-पैङ्गल-महा-कठरुद्रोपनिषदादयो बहवः प्रमाणानि॥

तत्र नारायणपदस्य सर्वकारणस्य मुख्यस्यैव तत्त्वस्य तत्तत्कार्यवशात् तत्र तत्र गौण्या प्रवृत्तत्वात् तत्रैवाचिरोद्धृतमैत्रायणीबृहज्जाबालोपनिषदाद-योऽप्यनुकूलाः। सर्वथा तु शरीरभेदमात्रं ब्रह्म-रुद्र-विष्णूनाम्, कार्यभेदमात्रं वेति शरीरभेदेनैव तेषां भेदः, न तु संविन्मात्रस्वरूपेण। "ब्रह्म-विष्णु-शिवा-त्मिकाम्" इत्यत्र शिव इव विष्णुरपि तत्समकोटौ निर्दिश्यते, इति नास्य वाक्यस्य शिवशरीरकविष्णुपरतायां तात्पर्यम्। महाभारतादिकमपि न शिवापेक्षया विष्णूत्कर्षप्रतिपादनपरम्। व्यक्तमधिकमन्यत्र॥

शारीरकप्रथमाध्याये समन्वयाभिधाने विचारितेषु तैत्तरीयक-छान्दोग्य-कठ-मुण्डक-बृहदारण्यक-श्वेताश्वतर-कौशातकीब्राह्मणवाक्येषु कुत्रापि नारायणपदं नास्ति। तदुभयानुगतं स्वरूपमेव तत्त्वम्पदलक्ष्यार्थं सत्वाऽद्वैत-स्यावबोधिका अप्युपनिषदो बहवो वर्तन्ते। बादरायणाचार्या अपि निर्वि-शेषब्रह्मपरतायामेव निर्भराः, ब्रह्मपदमात्रं प्रयुञ्जानाश्च शिव-विष्णुभेदेन कारणस्वरूपोत्कर्षापकर्षविषय उदासीना एव। सविशेषब्रह्मवादमात्रत्वेऽपि वैदिकाद्वैतसिद्धान्ताविरोधेनैव पाशुपतम्, पाञ्चरात्रं चोभयमपि प्रमाणम्, तद्विरोधे त्वप्रमाणम्॥

भगवत्पादानां शैवादिमतेषु साम्यबुद्धिः

तत्र भगवत्पादाः सविशेषं ब्रह्म नारायणमेव तत्र तत्र निर्दिशन्तोऽपि बहूनामुपलभ्यमानानां दशश्लोक्यादीनां "शिवः केवलोऽहमि"त्युपसंहार-

पराणां सत्त्वात् शरीरभेदमात्रं शिव-विष्ण्वादेः, स्वरूपतस्तु न भेदः। अयमेव न्यायो गणेश-स्कन्द-राम-कृष्ण-मत्स्याद्यवतारविशेष-दुर्गादिस्वरूपेऽपि, इति देवतानां सर्वासां स्वरूपैक्यमेव, शरीरभेदमात्रं तु तेषां न स्वरूपभेद-इत्यभिप्रयन्ति ॥

### नारायणपदमात्रं विष्णुपरमात्मतायां न नियामकम्

तत्र पाञ्चरात्रदृष्ट्या नारायणः परमात्मा भवतु, अन्यदृष्ट्या त्वन्यः, सविशेषब्रह्मवादे सर्वशब्दवाच्यत्वात् परमात्मनः यस्य कस्यापि परमात्मत्वे नारायणपदप्रयोगमात्रम्, सदाशिवपदप्रयोगमात्रं वा तावन्मात्रस्य परमात्मत्वं जन्मादिसूत्रोक्तं जन्म-स्थिति-लयत्रितयकारणत्वं वा वैयासिकं तु बाधितमेव। अतः सविशेषेश्वरमात्रं सर्वव्यापकमर्थमेवावलम्ब्य वासुदेवपदेन, सर्ववेदवेद्यत्वेन, नारायणपदेन, पदान्तरेण वा निर्देशमात्रेण भगवत्पादानां न केवलशैव-वैष्णवादिसिद्धान्तेष्वन्यतमे नैर्भर्यम् ॥

### भगवत्पादानां षण्मतस्थापकानां कुत्रापि न द्वेषः

अत एव सौर-शाक्त-वैष्णव-गाणपत्य-शैवसम्प्रदायसमाराध्यतत्तद्देवतानां सर्वासामाराधनरूपपञ्चायतनपूजासम्प्रदायप्रवर्तकत्वम्, अद्वैतसिद्धान्तप्रचारकत्वम्, तेन षण्मतस्थापनाचार्यत्वम्, जगद्गुरुत्वं वा तेषाम्, इति न शैव-वैष्णवसम्प्रदायविशेषमात्रे नैभर्यम्, न वाऽन्यतमसम्प्रदाये प्रद्वेषो भगवत्पादानाम्, इति तत्र तत्र भगवत्पादानां निन्दनम्, तत्सम्प्रदायाचार्याणां शब्दतोऽर्थतश्चाक्रमणं च भूषणस्य स्वयं भूषणं वा दूषणं वेति स्वयमेव तत् पश्यतु ॥

### नारायणपदं योगरूढं जन्मादित्रितयकारणपरम्

इदमत्रावधेयम्—प्रथमाध्याये केवलमाकाशाधिकरणे श्रीभाष्यप्रकाशिकायाम्—"न च एको वै नारायण आसीत्" इत्युक्तिविशेषपर्यवसानं शङ्क्यम्; नारायणपदस्य योगरूढतया योगार्थावच्छिन्नरूढ्यर्थबोधस्य योगशक्तिमूलकवाक्यार्थतापन्नावयवार्थसापेक्षतया विलम्बितत्वेन केवलरूढाकाशपदसमर्पितभूताकाशपर्यवसानस्य प्रथमभावितया तत एव निराकाङ्क्षत्वात्" इति नारायणपदं योगरूढम्, न केवलरूढमिति वर्णितम् ॥

### विष्णुपदं सर्वत्र व्यापकमात्राभिप्रायम्

तत्र योगो विष्णुपुराणोक्तः "आपो नारा इति प्रोक्ताः" इति यदि विवक्ष्यते, तर्हि विष्णुपुराणोक्तरीत्या सृष्टिकर्ता ब्रह्मैव स भवितुमर्हति। तत्र

यदि योगमात्रम्, तर्हि कथं णत्वम्? योगरूढिस्तु शिवस्यापीति तु शिवरात्रिमाहात्म्यादिकथासन्दर्भेण शैवा मन्यन्ते। सर्वथा वेदप्रतिपाद्यत्वेन सर्वसम्प्रदायानुगतं सविशेषं ब्रह्मस्वरूपमेव—"स विष्णुराह हि" इति संकर्षान्तिमवाक्यमपि कठवल्यन्तोपपादितरीत्या व्यापकस्वरूपमात्रपरमित्यद्वैतपक्ष एव सुपक्षः॥

तत्त्वसुधासमालोचनोपक्रमः शतभूषणी-

कारस्य क्षमाप्रार्थनं च

अथावसरप्राप्तं परकालमठीयकृतेस्तत्त्वसुधायाः समालोचनम्। सा हि भूमिकायां बौद्धाद्वैतसिद्धान्तयोरैक्यम्, बौद्धमतवदद्वैतस्यानादरणीयत्वं च व्यवस्थापयति—

"साङ्ख्य-सौगत-चार्वाकसंकरात् शङ्करोदयः।"

इति निगमान्तदेशिकोक्तिविवरणप्रसङ्गेन। इदमेवात्र प्रमोदस्थानम्—तत्त्वसुधेयं निगमान्तदेशिकमपि तदीयसङ्करोदय इति पाठ स्थाने शङ्करोदय इति पाठकल्पनया दण्डयति॥

वस्तुतस्तु—न शतभूषणीपरीक्षायाः, अस्य विषयस्य च न सङ्गतिलेशोऽपि। तथाप्यत्र सङ्गतिं काञ्चन शतभूषणीकारस्यान्यत्र कञ्चन—

"साङ्ख्य-सौगत-चार्वाकसंकरादन्त्यजोदयः॥"

इति लेखमुपक्षिप्य, तेन प्रसङ्गेनोक्तनिगमान्तवाक्यविचारं तत्त्वसुधा प्रसञ्जयति। शतभूषणीकारस्तूक्तश्लोके—'सङ्करात् संकरोदयः' इति निगमान्तदेशिकपाठं साधु मत्वा स्वीयं भावं तत्र विविनक्ति। यदि स पाठोऽसाधुरिति तत्त्वसुधा शिक्षयति, तर्हि ससंतोषं "साङ्ख्य-सौगत-चार्वाकसंकरादन्त्यजोदयः" इति निगमान्तदेशिकस्य सङ्करपदस्थानेऽन्त्यजपदप्रयोगं सापराधक्षमापणं प्रत्याहरति॥

बौद्धाद्वैतसाम्यवादस्य तत्त्वसुधयाऽप्यनङ्गीकारः

तेन प्रसङ्गेन सौगतमतेनाद्वैतसिद्धान्तस्यैक्यवर्णनं तु तत्त्वसुधा—"अत्र दर्शनेष्वनात्मवादः आत्मवादश्चे"ति वादद्वयम्। नैरात्म्यवादो बौद्धानाम्, आत्मवादश्चेतरेषाम्, इति बौद्धाद्वैतसिद्धान्तयोः प्रधानं वैषम्यमपि निवेदयन्ती स्वयं स्वीयं बौद्धाद्वैतसाम्यवादमसाधु स्थापयति॥

### सौगतनैरात्म्यवादस्याद्वैतसिद्धान्तविरुद्धस्योपक्षेपः

तत्र बौद्धसिद्धान्ते नैरात्म्यवादो द्वेधा—आत्मनैरात्म्यवादः, विषयनैरात्म्यवादश्चेति। तत्र द्वितीयो निरालम्बनतावादो योगाचाराणाम्। तत्र विषयनैरात्म्यं विषयाणां मायापदवाच्यवासनामात्रकार्यत्वेन, न तु ब्रह्मविवर्तत्वेन, । एवं तत्रापि शुद्धक्षणिकविज्ञानसन्ततिमात्रपरिशेषो योगाद्यनुष्ठानेनेति सौगतानां मतम्, यस्य निरासो भामत्यां सौगमत-निरासप्रसङ्गे प्रस्तूयते, प्रसङ्गादात्मनैरात्म्यवादनिरासोऽपि ॥

### सौगताद्वैतवादयोर्विशेषाः

तत्र विषयनैरात्म्यं वासनामात्रनिबन्धनत्वेन विषयाणां ज्ञानाकारत्व-मात्रेण, ज्ञानाकारव्यतिरेकेण जागरादौ सत्त्वमस्वीकृत्य । नायं सिद्धान्तोऽद्वैतमतेऽपि, शून्यवादसाम्यं तु न लेशतोऽप्यद्वैतसिद्धान्ते; सदसदादिचतुष्कोटिविनिर्मुक्तत्वात् शून्यस्य, ब्रह्मणस्त्वद्वैतसिद्धान्ते प्रथमकोटि-स्वरूपत्वात् ततो विशेषः । अपरो विशेषस्त्वौपनिषदोऽद्वैतसिद्धान्तः, सौगतसिद्धान्तस्तु तदागममात्रमूलः, यस्तु श्रीभाष्येणापि तत एवाप्रमाणमिति मन्यते ॥

### ज्ञानस्यात्मविकारत्वे प्रमातृत्वानुपपत्तिदूषणं नाद्वैतसिद्धान्तम्, किन्तु श्रीभाष्यसिद्धान्तमेव गोचरयति

यत्तु—

"बुद्धिजन्मनि पुंसश्च विकृतिर्यद्यनित्यता ।
अथाविकृतिरेवासौ प्रमातेति न युज्यते ॥"

इति कारिका हि ज्ञानस्यात्मविकारत्वेऽनित्यत्वापत्तिपरिहारं प्रमातृत्वानुपपत्त्योपक्षिपति, तेन चात्मनोऽविकारित्वम्, नित्यत्वं च प्रमातृत्वोपपत्त्यर्थं स्वीकर्तव्यमिति गम्यते ॥

इदमेवात्रावसरे सूच्यते—यत् श्रीभाष्यसिद्धान्ते आत्मनो धर्म-भूतज्ञानविकासेनैवोत्पत्तिः, नित्यत्वं च मन्यते, संकोच-विकासशालि-धर्मभूतज्ञानाश्रयत्वेनैव विकारः, अनित्यत्वं चाङ्गीक्रियत इति सौगतमतेन साम्यमिति । अद्वैतसिद्धान्ते तु प्रमातृत्वमात्मनः औपाधिकम्, न तु तस्य विकारो ज्ञानम्, न वा तेनानित्यत्वापत्तिशङ्काऽपि । सर्वथा तु नात्र दूषणस्य प्रसङ्गलेशोऽपि । अत एवान्तःकरणधर्म एव ज्ञानम् । सोपाधि-

काध्यासेनैव तद्धर्मतदात्म्यस्याप्यध्यासेनैव प्रमातृत्वनिर्वाहः, न तु बौद्धमत इव, किं बहुना ? श्रीभाष्यसिद्धान्त इव वाऽऽत्मन एव साक्षात् ज्ञानाश्रयत्वमुररीकृत्य ॥

### सौगताद्वैतसिद्धान्तवैषम्यं प्रमातृत्वादौ

सारांशस्तु बौद्धमते, श्रीभाष्यादिसिद्धान्ते चात्मैव साक्षात् प्रमाता, अद्वैतसिद्धान्ते नु नात्मा साक्षात् प्रमाताऽपि । तत्र प्रमातृत्वं न वास्तवम्, किन्तु कल्पितमित्यद्वैतसिद्धान्तस्य बौद्धादिसिद्धान्तस्य च तत्र महदस्ति वैषम्यम्, यद् बौद्धमते साक्षात् प्रमातृत्वं कल्पितम्, अद्वैतसिद्धान्ते तूपाधितादात्म्याध्यासेन तद्धर्ममात्रस्य लोहितस्फटिकन्यायेन भानमात्रम् ॥

### सौगताद्वैतवादयोरहमर्थवैलक्षण्यम्, मुक्तिस्वरूपभेदश्च

अत एवाहमर्थात्मवादे बौद्धा अन्यमेवाहमर्थमात्मानं मन्यन्ते, अद्वैतिनस्तु चिदचिद्ग्रन्थिरेवाहमर्थ आत्मेति । तत्र मुक्तिः— आत्मनैरात्म्यवादेऽहमर्थस्यालयविज्ञानस्य विपाकपरिणामस्य तत्तद्वासनाधारस्य वासनामात्रनिरोधे शुद्धक्षणिकज्ञानभावः स्वरूपतोऽहमर्थस्य नाशेन, अद्वैतसिद्धान्ते त्वहमर्थैकदेशाचिदंशमात्रनाशः, नाहमर्थस्योपाध्युपहितोभयरूपस्य । न च तत्राहमर्थः शुद्धविज्ञानस्य विपाकपरिणामः, नापि चोभयनाशः; उपाधिमात्रनाशस्यैव स्वीकारात्, इति तत्रापि चास्ति महान् विशेषः । अयं विशेषो नाद्वैतिभिः स्वयं परिकल्पितः, किन्तु श्रौत एवेत्युपरि व्यक्तीभविष्यति ॥

### सौगताद्वैतवादयोः सांवृतसत्यत्वमिथ्यात्वादीनां विशेषः

"द्वे सत्ये समुपाश्रित्य बौद्धानां धर्मचोदना ।
लोके संवृतिसत्यत्वं सत्यं च परमार्थतः ॥

इति बौद्धसिद्धान्तो लोके=व्यवहारे परमार्थसत्यं किमपि न स्वीकरोति, यतो निरधिष्टानवादिनस्ते सत्यमधिष्ठानमपि लोके न प्रथयन्ति, किन्तु मुक्तावेव तत् प्रथते, परन्तु तत्र चतुष्कोटिविनिर्मुक्तम्, अद्वैतसिद्धान्ते तु लोकेऽपि सांवृतम्, पारमार्थिकं चाध्यारोपापवादनयेन, अधिष्टानारोप्यभावेन वा प्रथते मुक्तिदशायां तु परमार्थसत्यमात्रमवशिष्यते इति स्वीक्रियते । वासनाकार्यप्रवृत्तिविज्ञानाकारमात्रतया विषयाणां भानं बौद्धसिद्धान्ते, अद्वैतसिद्धान्ते त्वधिष्ठानं लोकेऽप्य-

धिष्ठानतया सद्द्वितीयमेव भासते, अद्वितीयता तु तस्य मुक्तावेति विशेषस्तु सर्वविदित एव ॥

निष्कर्षस्तु—विवर्तवादे न प्रपञ्चमिथ्यात्ववादो लोकेऽपि सत्यमिथ्यात्ववादोऽद्वैतमते, न सत्यद्वयमित्यद्वैतसिद्धान्तः, बौद्धसिद्धान्तस्तु ज्ञानातिरिक्तविषयाभावात् लोकेऽपि सत्यद्वयकल्पनेति। तत्र विषयाणामपि ज्ञानाकारतया सत्यत्वम् , व्यवहार्यता च, न तु ज्ञानव्यतिरेकेण लोके विषयाणां सत्त्वं स्वरूपतोऽपि, अद्वैतसिद्धान्ते तु लोकेऽपि स्वरूपतो विषयाणां सत्प्रतीतिविषयत्वेऽपि व्यावर्तमानत्वात् मिथ्यैव विषया, इति तत्राप्यस्ति विशेषः ॥

"तस्माद्यद् नास्ति तन्नास्ति यत्त्वस्ति परमार्थतः ।
ततसत्यमन्यद् मिथ्येति न सत्यद्वयकल्पना ॥"

इति वार्तिकमप्यद्वैतमेव पोषयति; असत्यात् सत्योत्पत्तिप्रक्रिया तु ज्ञानातिरेकेण विषयं स्वीकृत्याद्वैतमते, बौद्धमते तु ज्ञानाकारातिरिक्तस्य विषयस्यास्वीकारेण असत्यस्यैवार्थक्रियाकारित्वं बौद्धनये, मिथ्याभूतस्यैव तदद्वैतमते ॥

सौगत-गौडपादयोः सिद्धान्तभेदः गौडपादस्य
सौगतमतानुपजीवनं च

गौडपादकारिका तु न सौगतमतमुपजीवतीति तत्रैवान्ते "नैतद् बुद्धेन भाषितम् " इति वचनेनावगम्यत इति केचन । तत्र बौद्धमते स्वभावेनानुत्पत्तिवादः, अद्वैतमते तु सद्भावेन ह्यजं सर्वमिति । अत एव—

"न स्वतो नापि परतः न द्वाभ्यां नाप्यहेतुतः ॥
उत्पन्ना जातु दृश्यन्ते भावाः क्वचन केचन ॥"

इत्यादि । यतः स्वभाविकमेव सर्वं विषयाणाम् , न तु सहेतुकमिति बोधयति ॥

इदमनेनावगम्यते—जगतो ब्रह्मविवर्तवाद एव युक्तः, सोऽपि सत एवेत्यद्वैतसिद्धान्तः, नैवं विवर्तवादो बौद्धमते, यत्र ज्ञानाकारातिरिक्तं स्वरूपमेव जगतो न स्वीक्रियते । ज्ञानाकारस्यैव विषयस्य व्यवहारोऽसत एव वासनासन्ततिवशात् ज्ञानवत् क्षणिकस्यापि, न चाद्वैतमत एवम् ॥

ब्रह्म-शून्ययोः स्वरूपभेदः

शून्य-ब्रह्मस्वरूपयोर्विशेषस्तु पूर्वमेवाऽऽविष्कारि । व्यक्तीकरिष्यते चेदं पञ्चमप्रकाराविद्यानिवृत्तिसमर्थनावसरे यथावसरम् । तदेवं सौगताद्वैतयोर्विशेषव्यवस्था ॥

### निर्विशेषमेव वैदिकं परमं तत्त्वम्, वेदानां वेदत्वमप्यत एव

यत्तु—अद्वैते निर्विशेषवादोऽप्रामाणिकः—इति, तदिदं तत्त्वसुधायाः मनोरथमात्रम्। तत्रैव हि "सर्वे वेदा यत्पदमामनन्ती"ति वचनम्। सर्वोऽपि वेदार्थो मुख्यो निर्विशेषं ब्रह्मैव। किं बहुना? वेदत्वमपि वेदानां तत्रैवार्थे पर्यवसानेनैव; अन्यथा तु न वेदस्य वेदत्वमपि। इदमेवाभिप्रेत्य—

"उपषिदपि वेद इत्यपीदं समभिवदन्ति महावचो महान्तः।
यतो महावाक्यत एव पुत्रो विजिज्ञिवानस्य पितुः सकाशात्॥"

इति,

"श्रुतं तेन स एव वेदः तथाच सैवोपनिषच्च सिद्धा।"

इति,

अतोऽन्यदत्र निकृष्टं तेनात्र वेदादिगीः॥

इति च संक्षेपशारीरकम्। अनेन विशदमवगम्यते—उपनिषदर्थपर्यवसानेनैव वेदानां वेदत्वमपीति। उपनिषदर्थश्चाद्वैतसिद्धान्त एव। अतोऽद्वैतसिद्धान्ते वेदाप्रामाण्यकथा कथामात्रमेव॥

"साङ्ख्य-सौगत-चार्वाक-सङ्करात् शङ्करोदयः॥"

इति तत्त्वसुधोद्धृतवाक्यव्याख्यावसरे श्रीभाष्यसिद्धान्तस्यैव सौगतादिसाङ्कार्यं व्यक्तीकृतम्। आस्तामियं कथा तत्त्वसुधाया असम्बद्धा, प्रासङ्गिकी वा, प्रकृतं तु शतभूषणीपरीक्षणमेव तत्त्वसुधायाः कृत्यम्। तत्र शतभूषणीकारं तत्त्वसुधा बहुधा निन्दति। कामं सा तेन सन्तुष्यतु भूषणी तु तत्रौदासीन्यमेव भूषणं मन्यते—विषयपरीक्षणमेव लक्ष्यं मत्वा॥

### धर्मभूतज्ञाने न प्रमाणम्, तस्य निरवयवद्रव्यत्व-प्रसराप्रसर-नित्यत्वाद्यनुपपत्तिश्च

तत्र प्रधानो विचारो धर्मभूतज्ञानमधिकृत्य तत्त्वसुधायाः समीक्षणमर्हति। तत्र यथा "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्" "अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा" "तेषामादित्यवद् ज्ञानं प्रकाशयति तत्परम्।" "ज्ञोऽत एव" इत्यादीनि सङ्कोच-विकासशालिनि नित्ये च धर्मभूतज्ञाने न प्रमाणम्, तथा सविस्तरं भूषणपरीक्षायामुपपादितम्। तत्त्वसुधा हि भूषणमेवानुवदति प्रायेण स्वीयस्वतन्त्रविचारावसरे, इति नाधिकमस्माकं तत्परीक्षातोऽत्र परीक्षणीयमवशिष्यते॥

तत्र धर्मभूतज्ञानस्य संकोच-विकासौ नावयवोपचयापचयौ; किन्तु दीपप्रभाया इव विषयव्याप्तितदभावाविति वर्णनप्रसङ्गे ज्ञानं निरवयवं द्रव्यमिति तत्त्वसुधा लिखति। तत्र निरवयवं द्रव्यमणु वा स्यात्, व्यापकं वा। तत्राणुर्हि न व्यापनशीलः स्वभावतः, अन्यथा को वा विशेषो व्यापकस्य, अणोश्च? न च धर्मभूतज्ञानं विभु; विभुर्हि कदाचनोपाधिसम्बन्धवशात् सङ्कुचति, न तु विकसति। न हि दीपप्रभाऽपि द्रव्यं निरवयवं व्यापनशीलं दृष्टम्। न हि विनाऽवयवं प्रसराप्रसरौ; अन्यथा दीपस्यैव निरवयवत्वम्, द्रव्यत्वम्, प्रसरं चोररीकृत्य व्यापनम्, अव्यापनं वा स्वीक्रियताम्, किं तद्धर्मस्य प्रभायाः, अपरस्य वा कल्पनेन? अयमेव न्यायोऽणुपरिमाणस्यात्मनो धर्मेऽपि। तत्राप्यात्मन एवाणोः प्रसराप्रसराभ्यामेव निर्वाहात् किं धर्मभूतज्ञानेन?

तत्र प्रभायाः प्रसरणं स्वभावः, संकोचो वौपाधिकः; अन्यथा दीपपरिमाणभेदेन प्रभायाः परिमाणस्य प्रसरणमनुपपन्नं स्यात्। दीपपरिमाणाधिक्यं हि प्रभापरिमाणाधिक्ये तन्त्रम्। न च प्रभा सर्वदा व्याप्न्येव दृश्यते। अयमेव न्यायो धर्मभूतज्ञानेऽप्यनुसन्धेयः॥

### संकोच-विकासयोरेव यवोपचयापचयरूपत्वमेव, येनानित्यत्वं दुर्वारम्; अन्यथा जैनमतनिरासायोग:

किं बहुना? विकासः = अवयवोपचय इति चण्डमारुतं लिखति, इति कथं निरवयवत्वं द्रव्यस्यापि धर्मभूतज्ञानस्य? अतोऽवयवापचयोपचयौ, संकोच-विकासौ, प्रसराप्रसरौ वेत्यनर्थान्तरम्, इति यदि द्रव्यस्य प्रसराप्रसराभ्याम्, संकोच-विकासाभ्यां वा नानित्यत्वम्, तर्हि जैनमतेऽप्यात्मनः प्रसराप्रसराभ्यामेव निर्वाहसम्भवात् न पर्यायादप्यनित्यत्वापत्तिः। तत्रापि हि कर्मनिमित्तावेव जीवस्य शरीरानुरूपौ संकोच-विकासौ, प्रसराप्रसरौ वा, इति व्यर्थं धर्मभूतज्ञानकल्पनम्; आत्मन एव संकुचित-विकसितावस्थे एव ज्ञानमिति स्वीकारेऽपि ज्ञानमुत्पद्यत इत्याद्युपपद्येत॥

### 'ज्ञानमुत्पन्नं नष्टमि'त्यनुभवस्य न विषयोत्पत्त्याद्यभिप्रायत्वम्

अत एव "अविनाशी वा अरेऽयमात्मा" इत्यात्मन एव नित्यत्वाम्नानम्। अत एवोत्पत्ति-विनाशप्रत्ययौ ज्ञानस्यैवानुभूयेते—'ज्ञानमुत्पन्नं नष्टमि'ति। न हि संकोच-विकासौ, प्रसराप्रसरौ वा कुत्राप्युत्पत्ति-विनाशप्रत्ययौ। सत्यम्, न निर्विषयं ज्ञानमस्ति, यत् स्वरूपज्ञानातिरिक्तम्, तत्तु

'घटज्ञानम्' 'पटज्ञानमि'ति सविषयमेव, तथापि न घटज्ञानं नष्टम् , उत्पन्नमित्यनुभवौ विषयोत्पत्ति-विनाशाभिप्रायत्वादौपाधिकोत्पत्ति-विनाशाभिप्रायौ; न ह्या'त्मज्ञानमुत्पन्नम्' 'परमात्मज्ञानमुत्पन्नमि'ति प्रत्ययस्याऽऽत्माद्युत्पत्त्याद्यभिप्रायत्वं सम्भवति ।।

"स चाऽऽनन्त्याय कल्पते" इत्यपि न धर्मभूतज्ञानाभिप्रायम्, किन्त्वात्मस्वरूपाभिप्रायम्

"स चाऽऽनन्त्याय कल्पते" इति तु व्यापकपरमात्मस्वरूपाभिप्रायमविप्रतिपन्नम्। अद्वैतसिद्धान्ते तु जीवात्माभिप्रायमपि; उपाधिनिवृत्त्यौपाधिकपरिच्छेदाभावाभिप्रायत्वात् तद्वचनस्य-श्रुति-स्मृत्यादयः, गीता चाऽऽत्मनो व्यापकत्वमेव स्वाभाविकं प्रतिपादयन्ति—"नित्यः सर्वगतः स्थाणुः" इति, इत्युपाधिविनाशनिबन्धनमेवाऽऽनन्त्यं शास्त्रतात्पर्यविषयः ।।

न चात्र व्यापकत्वं धर्मभूतज्ञानप्रसरापेक्षम्। तथासति हि धर्मभूतज्ञानमेव सर्वगतं स्यात् , नात्मस्वरूपम्। किञ्च स्वभावतोऽनन्तस्य धर्मभूतज्ञानस्यानन्त्याय कल्प्यत इति तत्सिद्धिवर्णनं वितथम्। स चेति पुंल्लिङ्गनिर्देशस्तु धर्मभूतज्ञानाभिप्रायत्वे नोपपद्यते। अतो जीवस्य मुक्तावस्थामादाय स्वरूपाविर्भाव एवाऽऽनन्त्यपदार्थः ।।

तत्र तस्याऽऽनन्त्यमौपाधिकपरिच्छेदनिवृत्तिमात्रम् , ब्रह्मभावो वा, आनन्त्यं हि त्रिविधपरिच्छेदराहित्यमेव, इति नाशब्दत्वं जीवानन्त्यस्य; 'स देवत्वाय कल्पते' 'अरोगत्वाय कल्पते' इत्यादौ देवत्वम् , आरोग्यं वाऽऽगन्तुकत्वात् पूर्वमसिद्धत्वाच्च नैकम् , आत्मनस्तु स्वाभाविकमानन्त्यमुपाधिनिवृत्तिमात्रं तथाभावेऽपेक्ष्यत इति तु विशेषः। अतो नात्राऽऽनन्त्याय कल्पनं प्रसर्पणम् , स्वरूपस्य प्रसरणं वा। "आनन्त्याय कल्पते" इत्यनेन ह्यन्तवत्स्वरूपपरिच्छेदाभावः, कण्ठचामीकरन्यायेनान्तवत्त्वभ्रान्तिनिवृत्तिर्वा विवक्ष्यते, ज्ञानविकासद्वारकापरिच्छिन्नत्वविवक्षा तु क्लिष्टतरा। अनन्तत्वमत्र ज्ञानपौष्कल्यम्। "सर्वं हि पश्यति" इति वाक्यं तु स्वरूपज्ञानातिरिक्तं ज्ञानमात्मनः, सत्यम् , प्रतिपादयति, न तु साक्षाद् जीवात्मनः सर्वसम्बन्धम् , सर्वविषयसम्बन्धं वा। जीवात्मा हि स्वतः सर्वगतोऽपि सर्वविज्ञानार्थं सर्वत्रान्तःकरणविकासमपेक्षत इति कृत्वैव सर्वदर्शनं तस्य। अन्यथा त्वशब्दार्थत्वम् ।।

### आत्मगतं तद्धर्मभूतं ज्ञानमन्तःकरणपरिणामो वृत्तिरेव

इदमत्र तत्त्वम्—अन्तःकरणसङ्कोच-विकासाभ्यामात्मनः तत्तत्पदार्थ-ज्ञानाज्ञाने। तत्र ज्ञानमन्तःकरणपरिणामोऽनित्यमेव। स तु मनस एव विकासः। तत्र धर्मभूतज्ञानेन प्रसृमरस्वभावेन यदि जीवस्य तत्तत्पदार्थ-ग्रहणम्, तर्हि कथं सर्वदा न सर्वविज्ञानम्? तत्र संकोचोऽप्रकाशः, विकासस्तु प्रकाशो नाम॥

### जीवस्यैव स्वप्रकाशस्य संकोच-विकासयोरनन्तकर्मकृतत्वानुपपत्तिः, किन्तूत्पत्त्यादीनामौपाधिकत्वमेव

तत्र जीवस्यौत्पत्तिकः प्रकाशसङ्कोचः कर्मकृत इति वादस्तु प्रत्यक्षं प्रमाणप्रवृत्तिनिमित्तं परित्यज्य प्रतिक्षणं ज्ञानसङ्कोच-विकासा अनन्तादृष्ट-कर्मनिमित्ता इति कल्पनापत्त्या न क्षोदक्षमः। न हि दृष्टे सम्भवत्यदृष्टक-ल्पना युक्ता। अतः स्वयमपरिच्छिन्नस्यैवात्मनोऽन्तःकरणाद्युपाधिपरिच्छे-दात् परिच्छिन्नस्यैव सतश्चिन्मात्रस्य जीवत्वम्, शरीराद्युपाध्युत्पत्ति-विना-शाभ्यां गौणमनित्यत्वं च, स्वतस्तु नोत्पत्तिः, न वा विनाशः। तदुक्तम्—

"अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥"

इति। इदमुपलक्षणमुत्पत्तेरपि। औपाधिकत्वेऽपि जन्म-मरणयोर-ष्टाचत्वारिंशत् संस्काराः, ब्रह्महत्यादिप्रायश्चित्तविधयश्च यावदुपाधिना-शमुपपद्यन्ते; अन्यथा श्रीभाष्यसिद्धान्त आत्मनः स्वत उत्पत्त्यभावात् कथं ते न वितथाः? अतो जीवस्य स्वतोऽजस्यापि नित्यस्यापि सतो जनन-मरणादि सर्वमौपाधिकं नानिष्टम॥

### ब्रह्मणोऽप्यौपाधिकोत्पत्त्याद्ययोगः

तत्रानित्यत्वं केषांचन स्वरूपतः, केषाञ्चनोपाधिनिबन्धनम। तत्र स्वतः सादित्वे जन्म-मरणाद्यपि स्वतः, परन्तु तद्धेतुं तदपेक्षते, उपाधि-सादित्वे त्वौपाधिकं तत्। ब्रह्मणस्तूपाधिरविद्याऽनादिः, इति तत्परिच्छे-दोऽप्यनादि, तेन चाविद्याया इव ब्रह्मणो नोत्पत्तिः; उपहितरूपेण ब्रह्मणः सत्त्वात्। मिथ्यात्वं तूपहितरूपेण, न तु स्वरूपेणेष्टम्, इति न ब्रह्मण औपाधिकमुत्पत्तिभङ्गमनिष्टम्॥

न चाविद्या ब्रह्मण इव धर्मभूतज्ञानसङ्कोचस्य कर्म, उपाधिर्वा, किन्तु तन्निमित्तम्, इति "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो

लोकः क्षीयते" इति न्यायेन कर्मनिमित्तत्वात्, धर्मभूतज्ञानावस्थाविशेषस्याप्यनित्यत्वापत्तिर्दुष्परिहरा ॥

नित्यधर्मभूतज्ञाने प्रमाणाभावः

न च धर्मभूतज्ञानसङ्कोच-विकासयोरस्ति किमपि प्रमाणम्। अतो धर्मभूतज्ञानस्य नित्यत्वं दुर्वचम्। न च धर्मभूतज्ञाननित्यत्वं विनाऽऽत्मनित्यत्वायोगः, येनात्मनित्यत्वार्थं धर्मभूतज्ञाननित्यत्वमपि स्वीकर्तव्यम्, न वा धर्मस्याऽऽगमापायित्वे धर्मिणोऽप्यनित्यत्वम्, किन्तु साक्षादुत्पत्ति-विनाशयोर्मुख्यमनित्यत्वम्; अन्यथा त्वौपाधिकमनित्यत्वम् ॥

"विक्रियामात्रवाचित्वे" इति वार्तिकं नाद्वैतविषयम्

विक्रियामात्रवाचित्वे न ह्युच्छेदोऽस्य तावता।"

इति वार्तिकं भास्कराद्यभिमतपरिणामवादाभिप्रायम्, न त्विदमद्वैति नाम्, श्रीभाष्यस्यापि वा सम्मतम्; अन्यथा किमिति साक्षाद् ब्रह्मपरिणामवादः श्रीभाष्येणापि निरस्यते? किमर्थं वा सङ्कोच-विकासयोरवयवोपचयापचयरूपत्वं निरस्यते चण्डमारुतविरुद्धम्? आर्हतमते चाऽऽत्मपरिमाणवादः कुतः पराक्रियते? अतो न प्रकृते विषये वार्तिकोक्तिः प्रमाणम् ॥

संकोच-विकासशब्दस्यार्थान्तरकल्पना चण्डमारुतविरुद्धा

परिणामि नानित्यमिति हि भास्करीयः पन्थाः, मीमांसकसिद्धान्तः, आर्हतराद्धान्तो वा न श्रीभाष्यकारणामपि सम्मतः। तत्राऽऽर्हताः संकोच-विकासशब्दावेव परिणामस्थाने प्रयुञ्जते, इति तन्मते संकोच-विकासयोरनित्यत्वापत्तिः, स्वमते तु नैतावताऽप्यनित्यत्वमिति, न केवलम्, नित्य संकोच-विकासशालिधर्मभूतज्ञानकल्पना स्वतन्त्रा, किन्तु संकोच-विकासयोः प्रसराप्रसरतया योजनाऽपि चण्डमारुतविरुद्धा, अप्रामाणिकी च ॥

संकोच-विकासयोः प्रसराप्रसरत्वकल्पनाऽप्रामाणिकी

तत्रार्हता अपि यदि संकोच-विकासौ तत्त्वसुधोक्तरीत्या योजयन्ति, तर्हि किं देहपरिमाणात्मतावादमपि परकालमठीयकृतिरनुमन्येत? इति नात्र श्वश्रू-स्नुषाभिक्षानिषेधन्यायो युक्तः। इदमेवात्र पृच्छ्यते—कुत्र वा सङ्कोच-विकासावेवंपरावितति तत्त्वसुधया दृष्टम्? अतः परिणामित्वम्, नित्यत्वं च श्रीभाष्यमते व्याहतम् ॥

### परिणामित्वं निर्विकारत्वं च व्याहतम्, श्रुतप्रकाशिकादि-विरुद्धं च

परिणामिनित्यं कूटस्थनित्यमिति भगवत्पादानां विभाग एक एव पर्याप्तम्, यत् कूटस्थनित्यवत् न निर्विकारत्वं परिणामिनित्यस्य। तत्रा-त्यन्तानाशः कूटस्थनित्यस्य, परिणामिनित्यस्य कार्येण सहैव नाशः, न तु सर्वात्मनाऽपि न नाशः। अत एव च कूटस्थः=निर्विकार" इति श्रुत-प्रकाशिका, "परिणामः—अवस्थानाशपूर्वकावस्थान्तरापत्तिरि"ति रत्न-पेटिका च। औपचारिकं परिणामिनित्यत्वम्, स्वाभाविकं तु कूटस्थ-नित्यम्॥

तथा च वार्तिकम्—

"स्यातामत्यन्तनाशे तु कृतनाशाकृतागमौ॥"

इति। कार्येष्वनुगममात्रं कार्यसत्तादशायां परिणामिनः, न तु कार्य-नाशसमकालमेव नाशोऽपीत्येवात्र हृदयम्। एतादृशमेव नित्यत्वमभि-प्रेत्य—

"आभूतसंप्लवस्थानममृतत्वं हि कथ्यते।"

इति। तत्र धर्मभूतज्ञानं न परिणामिनित्यम्; तत्कार्यस्य तत्सक्षणस्य स्वानुवेधयोग्यस्याभावात्, नापि कूटस्थनित्यम्; सङ्कोच-विकासाश्रयत्वा-दिति तु निष्कर्षः॥

### "श्रुतेस्तु शब्दमूलत्वादि"ति न धर्मभूतज्ञानविषयम्

तत्र "श्रुतेस्तु शब्दमूलत्वादि"ति न्यायः परिणामिकारणवाददृष्ट्या श्रौते नित्यत्वे परिणामित्वमकिञ्चित्करमित्यभिप्रायम्। न च तत् धर्म-भूतज्ञानविषयमपि; "न विज्ञातुर्विज्ञातेरि"ति तु विज्ञातुर्विज्ञानविशिष्टात् विशेष्यं स्वरूपज्ञानमात्रं विपरिलोपानर्हं निष्कृष्य तन्मात्रनित्यत्वाभि-प्रायम्, न तु तस्य विशेषणांशं धर्मभूतज्ञानमादाय तन्नित्यत्वाभिप्रायम्॥

### धर्मभूतज्ञाननित्यत्ववाद आर्हतानामात्मनित्यत्ववादः

अत एव "अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा" इति धर्मिमा-त्रस्यानुच्छेदो वाक्यशेषे श्रूयते। तत्राऽऽर्हतदर्शनमपि गजादिशरीरे विक-सितावस्थः कर्मवशात्, तत एव पिपीलिकादौ तस्य संकोचमात्रम्, न तु ताभ्यामन्यः परिच्छेदस्तत्र, येनाऽऽर्हतमताद् वैलक्षण्यं निरुच्येत, इति

नात्र विकासशक्तियुक्तस्य विकासप्रतिबन्धकं कर्म तत्रापि, इति विकास-शक्तियुक्तस्य कर्ममात्रेण न प्रतिबन्धमात्रम्, किन्तु कर्मणैकेन विकासः, अपरेण तु तेन सङ्कोच इत्येवात्र तत्त्वम् ॥

### परिणामिनो नित्यत्वं भास्करमतेऽपि श्रुतिमहिम्नैव, न चात्र श्रुतिः प्रमाणम्

वस्तुतस्तु—"श्रुतेस्तु शब्दमूलत्वादि"ति सूत्रं जगत्कारणपरमात्म-विषयम्, न तु धर्मभूतज्ञानविषयम्। न चात्र कृत्स्नप्रसक्तिः, निरवयवत्व-श्रुतिकोपो वा। तत्र तत्त्वसुधा हि निरवयवस्यैव धर्मभूतज्ञानस्य परिणामं स्वीकुर्वाणा सङ्कोच-विकासयोर्निरवयवत्वमनुगुणं मन्यते, न तु तेन विरोधम, इति कथं तत्सूत्रविरोधो नात्र? सर्वथा तु धर्मभूतज्ञानस्य निरवयवत्वं कुतोऽवगम्यते? कुतश्च निरवयवस्यापि सङ्कोच-विकासौ प्रसराप्रसर-रूपाववगम्येते?

### स्वरूपान्यथाभावातिरिक्तो न परिणामो नाम

न च ब्रह्मणः प्रपञ्चात्मना परिणामोऽपि प्रसराप्रसररूपः, इति तेनापि नयेन धर्मभूतज्ञाननित्यत्वविरोधः। न हि स्वरूपान्यथाभावातिरिक्तः परिणामविशेषः, सङ्कोचो वा, विकासो वा; अन्यथा—

"विक्रियामात्रवाचित्वे न ह्युच्छेदोऽस्य तावता।"

इति विक्रियामात्रस्य परिणामत्वोल्लेखो नोपपद्यते। स्वरूपान्यथा-भाव एव हि विक्रिया, अन्यस्तु विवर्त एव, न विक्रियेति हि व्यवस्था॥

### परिणामिनित्य-कूटस्थनित्यस्वरूपविवेकः

"यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै।
परिणामादिसम्भूतां तद्वस्तु नृप तच्च किम्॥"

इति संकोच-विकासयोरपि परिणामत्वम्, तेनानित्यत्वं च साधयति। अतः सङ्कोच-विकासावपि धर्मभूतज्ञानस्योत्पत्ति-विनाशावेव। अत एव परिणामिकारणं परिणामिनित्यम, यत्र तदवस्था कार्यात्मनाऽनित्या। कार्यमपि हि विनश्वरावस्थायां कारणात्मतामापद्यते। प्रागभावावस्थाऽपि तु कारणमेव, परन्तु कारणात्मनाऽपि बाधावस्थायां नश्यति॥

कूटस्थनित्यं तु न कदाऽप्यनित्यम्। अत एव परिणामि-कूटस्थभेदेन नित्यभेदः। अतो धर्मभूतं ज्ञानं कस्यचन न कार्यम्; विकासावस्थायां

कार्यात्मना वर्तते, संकोचावस्थायां तु कारणात्मना, इत्यनित्यत्वमेव तेषाम्, न तु परिणामिनित्यत्वमपि। तत्तु कारणमन्तःकरणं वा, आत्मा वेत्यन्यदेतत्॥

### "बुद्धीनामि"त्यादिश्लोकवार्तिकमद्वैतपरम्, न श्रीभाष्यपरम्

यत्तु—

"बुद्धीनामपि चैतन्यस्वाभाव्यात् पुरुषस्य नः।
नित्यत्वमेकता चेष्टा भेदस्तु विषयाश्रयः॥"
"तथैव नित्यचैतन्यं पुमांसो देहवृत्तयः।
गृह्णन्ति करणानीतान् रूपादीन् धीरसौ मता॥"
"तेनोपनीतसम्बन्धभङ्गित्वाद् भङ्गिनी भवेत्।
न नित्यो दाहको वह्निर्दाह्यासंनिधिना यतः॥"
"तत्र बोधात्मकत्वेन प्रत्यभिज्ञायते मतिः।
घट इत्यादिबुद्धित्वं तद्भेदाल्लोकसंमतम्॥"

इति श्लोकवार्तिकं वेदान्तिनां मतं संगृह्णातीति सम्प्रतिपन्नम्। तथा चात्र सुचरितमिश्रः— "अत्र केचिद् वेदान्तिनः" इति व्याचष्टे। तत्र के वेमे वेदान्तिन इति विषये परकालमठीयकृतिः—श्रीभाष्यमूलपुरुषा वृत्तिकारा एव, ज्ञानं चात्र चैतन्यरूपं धर्मभूतज्ञानमिति—वदति॥

वस्तुतस्तु—केवलाद्वैतिन एवात्र वेदान्तिनः। ज्ञानं चात्र नित्यतया विवक्षितं न धर्मभूतज्ञानम्, किन्तु स्वरूपज्ञानमात्मा संविन्मात्रमेव। अत एव "नित्यत्वमेकता चेष्टा" इति नित्यत्वम्, एकता च ज्ञानस्य। भेदः, नाशश्चात्र घटाद्युपाधिसम्बन्धनिबन्धन इति व्यवस्थाप्यते, चैतन्यत्वं च स्वतो ज्ञानस्य। श्रीभाष्यमते हि धर्मभूतज्ञानं नैकम्, किं बहुना? चैतन्यं स्वरूपज्ञानमपि नैकम्; नानाऽऽत्मवादित्वात्, तद्धर्माणां धर्मभूतज्ञानानामपि प्रत्यात्मं नानात्वात्, स्वभावत एव संकोच-विकासाख्योत्पत्ति-विनाशाभ्युपगमाच्च। धर्मभूतज्ञानानां घटाद्युपाधिभेदनिबन्धनोत्पत्ति-विनाशव्यवस्था तु न श्रीभाष्यमत इति निगदव्याख्यातम्॥

अतोऽत्र विषयभेदनिबन्धनो भेदः, विषयोत्पाद-नाशनिबन्धनोत्पत्ति-नाशव्यपदेशश्च संविद्रूपात्मैक्यपक्षमादायैव समर्थनीयः, इति नात्र धर्मभूतज्ञाननित्यत्वपक्षो विवक्ष्यते, किन्तु केवलाद्वैतसिद्धान्ततत्त्वमात्मैक्यमेव। न चेदमद्वैतदर्शनमतिरिच्य कस्यापि दर्शनस्य तत्त्वम्॥

### श्लोकवार्तिकं न श्रीभाष्याभिमतसंकोच-विकासशालिनित्य-धर्मभूतज्ञानपरम्

अयं तु श्लोकः श्लोकवार्तिकस्य न धर्मभूतं ज्ञानं श्रीभाष्याभिमतं स्पृशत्यपि, इति न भट्टपादस्यापि धर्मभूतज्ञाननित्यत्वैकत्वादि तात्पर्य-विषयः ॥

भट्टपादमते हि ज्ञानमात्मधर्मोऽपि तत्परिणामत्वादेव स्वयमनित्य-मेव। अत एव—

"विक्रियामात्रवाचित्वे न ह्युच्छेदोऽस्य तावता"

इति परिणामित्वेऽप्यात्मन एव नित्यत्वं समर्थयति, न तु परिणा-मस्य ज्ञानस्यापि नित्यत्वम् ॥

न च तन्मते परिणामस्य ज्ञानस्य सङ्कोच-विकासौ स्वीक्रियेते, न वा नित्यत्वम्, एकत्वम्, चैतन्यत्वं वा। भाट्टमते ह्यात्मा भास्करमत इव जड-चैतन्योभयशक्त्याश्रयः। तत्र जडशक्त्या ज्ञानेतरधर्मात्मना परिणामः; चैतन्यशक्त्या तु ज्ञानरूपेण परिणामः। अतो न तन्मते धर्मभूतज्ञानेन चेतनत्वमात्मनः, किन्तु स्वतश्चैतन्यमपि शक्तिविशेषः, इति भाट्टसम्मतो-ऽप्ययं न श्रीभाष्याभिमतसंकोच-विकासशीलधर्मभूतज्ञाननित्यत्ववाद इति तु निष्कर्षः ॥

### श्लोकवार्तिकाभिमतमात्मस्वरूपम्, तद्धर्मभूतज्ञानं च न श्रीभाष्याभिमतम्

एतेन—आत्मनित्यत्ववादोऽपि व्याख्यातः। अत्र हि—

"ज्ञानशक्तिस्वभावोऽयं नित्यः सर्वगतः पुमान् ॥"

इति श्लोकवार्तिकोपक्षिप्तं भट्टपादाभिमतं च ज्ञानशक्तिस्वभावत्वम्, सर्वगतत्वं चाऽऽत्मनो वर्ण्यते ॥

तत्र श्रीभाष्यमतेऽपि स्वरूपज्ञानं केवलं ज्ञानस्वरूपमात्रम्, न तु ज्ञानशक्तिस्वभावम्, न वा सर्वगतम्; अणुपरिमाणत्वात्, इति न स्वरू-पतो नित्यत्वम्, अवस्थाविशेषेण कार्यत्वं चात्राभिप्रेयते ॥

वस्तुतस्तु—यादृशमात्मनो नित्यत्वम्, न तादृशं नित्यत्वं श्रीभाष्यमते धर्मभूतज्ञानस्य; अन्यथा कारकव्यापारवैयर्थ्यात्। तत्र मृदादेरिवाऽऽग-न्तुकावस्थावत्त्वेन कार्यत्वेऽपि स्वरूपतो नित्यत्वं धर्मभूतज्ञानस्येति वादस्तु मृदादीनां घटादिवद् धर्मभूतज्ञानस्यावस्था द्रव्यात्मनैक्यप्रयोजिकाऽपृथक्-

सिद्धिप्रयुक्तसामानाधिकरण्यव्यपदेशहेतुश्च नात्र वर्तते। तत्र हि— मृदादीनां घटत्वादिरवस्थाविशेषः, मृद् घट इति प्रतीतिश्च। न चात्र धर्मभूतज्ञानस्यावस्थाविशेषः कार्यात्मा घटादिरिव संकोचः, विकासो वा॥

धर्मभूतज्ञानं स्वरूपज्ञानस्य धर्मविशेषः, न स्वरूपज्ञानमिव चिद्रूपम्, किन्तु तद्धर्मः। न च तदेव चैतन्यम्; अन्यथा तेनैवात्मनोऽपि चेतनत्वम्, स्वरूपतस्त्वात्मा जड इत्यापद्येत, अद्वैतमते तु संविद्रूपमेवाऽऽत्मा, न तु ज्ञानवत्त्वेनात्मा चेतन इति हि सिद्धान्तः॥

"ज्ञोऽत एवे"तिसूत्रं न धर्मभूतज्ञाने प्रमाणम्

अत एव "ज्ञोऽत एव" इति स्वरूपतो ज्ञानरूपम्, औपाधिकं तु तद्गुणसारत्वेन संविदन्तःकरणयोः, तद्धर्माणां च परस्पराध्यासेन ज्ञातृत्वमौपाधिकम्। तत्र धर्मभूतमपि ज्ञानमन्तःकरणधर्मो वृत्तिरेवेति सिद्धान्तः। सर्वथा तु धर्मभूतज्ञानस्यावस्थात्वेन कार्यत्वम्। तत्र यदि तस्यावस्था मृदादेरिव परिणाम एव, तर्हि स्फुटमनित्यत्वम्; अन्यथा भास्करादीनां परिणामवादेन किमपराद्धम्? तत्र यदि ब्रह्मणोऽपि परिणामित्वम्, तर्हि कथं तस्य नानित्यत्वम्?

मतद्वयसिद्धब्रह्मोपादानत्वे प्रक्रियाभेदाः,
एकविज्ञानेन सर्वविज्ञानोपपत्तिश्च

तत्र ब्रह्मण उपादानत्वं जगदात्मना परिणममानसूक्ष्मचिदचिद्विशिष्टस्यौपचारिकम्, न तु साक्षात्परिणामित्वेन। "प्रकृतिश्चे"ति सूत्रे "परिणामादि"ति सूत्रस्यापि स एवाशय इति श्रीभाष्यम्। परकालमठीयकृतिस्तु साक्षाद् ब्रह्मण एवोपादानत्वं लिखति। सूक्ष्मचिदचितोः शरीरत्वं परिणामिकारणतावच्छेदकत्वनिबन्धनं विशिष्टस्यैवोपादानत्वेनेति तु केचन। भूषणं तूपादानत्वं विशिष्टरूपेण, निमित्तं तु विशेष्यं शरीरिमात्रमिति लिखति। "वाचारम्भणमि"ति श्रुत्यर्थस्तु भूषणमते मृत्तिकापदस्य विशिष्टपरत्वेन, तत्त्वसुधामते तु मृत्तिकापदेन सूक्ष्माचित एव ग्रहणेऽपि ब्रह्मण एव मुख्योपादानत्वविवक्षया॥

अद्वैतमते तु पूर्वोक्तविधया ब्रह्माश्रय-विषयकाविद्याया ज्ञाननिवर्त्याया मृत्तिकापदेन ग्रहणं तटस्थलक्षणविधया, उपादानत्वं तु न मायामात्रस्य, किन्तु तद्विपयब्रह्मणोऽपि॥

तत्र मायायाः परिणामिकारणत्वविधयोपादानत्वम्, ब्रह्मणस्तु विवर्तोपादनताविधया, मायोपादानत्वेन मायावदनिर्वचनीयत्वेन ब्रह्मणो निर्विशे-

षतायां पर्यवसानम्। मृत्तिकापदं तटस्थलक्षणविधया "सदेवे"ति प्रस्तुतसन्मात्रपरमेव; प्रकरणात्, इति सर्वोपादानब्रह्ममात्रपरिशेषेणैकविज्ञानेन सर्वविज्ञानोपपत्तिः ॥

सूक्ष्माचित्परिणामत्वे प्रपञ्चस्य परिणामादितिसूत्राऽनुपपत्तिः

सूक्ष्माचिन्मात्रपरिणामत्वे तु सेश्वरसाङ्ख्यमतनिरसनम्, योगमतनिरसनं वा ब्रह्ममीमांसायामसङ्गतं स्यात्। तत्र सूत्रे परिणामपदप्रयोगस्तु मायाद्वारा ब्रह्म लक्षयितुं विवर्ताभिप्रायमेव, इति ब्रह्ममीमांसाया न श्रीभाष्यसिद्धान्ते तात्पर्यम् ॥

दर्शनान्तरेण दर्शनान्तरस्य निन्दनं 'न हि निन्दा'न्यायेन

तत्र न केवलं श्रीभाष्यसम्प्रदायः, किन्तु सर्वेऽपि वैदिकाः स्वस्वसम्प्रदायाः क्रमेणानादिपरम्परासिद्धाः अधिकारिभेदेन तत्र तत्र दर्शनान्तरेण दर्शनान्तरस्य स्वविरुद्धस्य निन्दनम्, परासनं वा पाञ्चरात्रपरीक्षायां निगमान्तदेशिकोक्तरीत्या 'न हि निन्दा' न्यायेनैव। विश्वस्यतेऽद्वैतसिद्धान्तस्य, भगवत्पादानाम्, शतभूषण्याः, अन्यस्य च निन्दाऽपि तैस्तैर्न हि निन्दा'न्यायेनैव, इति भूषणेन, तत्त्वसुधया वा वैयक्तिकनिन्दाशतैर्दूषणमकिञ्चित्करम् ॥

जैमिनिद्वयस्य शाबरभाष्यसिद्धस्यापि निरासो भूषण-
तत्त्वसुधयोः साहसमेव

तत्र शाबरभाष्ये "अथातो धर्मजिज्ञासा" इत्यत्राधर्मजिज्ञासेति योजनं शतभूषण्यां शाबरभाष्यारूढमुक्तम्, तत्त्वसुधा तु—भाष्ये नोपलभ्यत इति, "कर्मभेदं तु जैमिनिरि"ति सूत्रे तु पूर्वपक्षी कश्चन जैमिनिः, अन्यत्र तु सिद्धान्ती जैमिनिरिति जैमिन्याचार्यद्वयं शतभूषण्युपन्यस्तं नास्तीति च—लिखति ॥

तत्र यदि भूषणीयां घटस्य पटीकरणप्रक्रियां शाबरभाष्यस्यापि निरसनेन मतं स्वतन्त्रं गृहीत्वा तथा लेखः, तर्हि भगवच्छबरस्वामिनमप्यप्रमापयन्त्यौ भूषण-तत्त्वसुधे न प्रामाणिकानामादरपात्रे ॥

स्वस्वसंप्रदायानुसारेणोपनिषदां विवरणं स्व-स्वसंप्रदायश्रद्धामात्रेण न्यायतस्त्वद्वैतवाद एव तत्तदधिकारभेदेन सर्वेषां संप्रदायानां प्रामाण्यम्, तत्र महावाक्यानाम्, अन्येषां चौपनिषदानां वाक्यानां स्वस्वसिद्धान्तानुगुणं स्वीयं विवरणमेव साध्विति वर्णनं तत्त्वसुधायाः, भूषणस्य च

स्वाचार्यभक्तिमेव सूचयति, अद्वैतिनोऽप्यनादिसिद्धं स्वसम्प्रदायमेवात्रा-नुवर्तन्ते, इति स्वस्वसम्प्रदायरक्षायां सर्वे जागरूका इति प्रमोदस्थानमिदम्। व्यक्तीकरिष्यते चोपरिष्टादद्वैतिनामुपनिषदर्थविवरणमेवोपक्रमोपसंहाराद्यु-पबृंहितं प्रमाणम्। एवं विवृण्वाना अप्यद्वैतिनोऽधिकारिभेदेन वैदिक-सिद्धान्तमनादिसम्प्रदायसिद्धं कमपि न प्रामाणिकं मन्वते॥

वेदान्तानां भक्तिमार्गेण समाप्तिः, तत्त्वसाक्षात्कार-
पर्यन्तं वेति मतद्वयनिष्कर्षः

तत्र वेदान्तवाक्यजन्यं ज्ञानमभ्यस्यमानमुपासनात्मकं ध्रुवानुस्मृतिरूप-मेवेश्वरप्रसादद्वारा मुक्तिसाधनमिति भक्तिमार्ग एव शास्त्राणां पर्यवसान-मिति भूषणादयः, अद्वैतिनस्तु तत्साक्षात्काररूपतापन्नमेव मोक्षसाधनं दृष्टविधयेति॥

सौगताद्वैतवादयोरनैक्य एव सूत्राणां स्वारस्यम्

अत्र तत्त्वसुधा भूमिकायां विचारितं सौगताद्वैतसिद्धान्तैक्यवादं ग्रन्थशरीरेऽपि पुनरप्याम्रेडयति। तत्र सा ब्रह्मसूत्राणामद्वैत एव स्वारस्य-भङ्गमेकमेव विषयं प्रस्तौति। एवमपि तस्याः पुनरपि तत्समालोचनमत्र ग्रन्थविस्तरार्थमेव, न तु तत्रास्य ग्रन्थस्य सङ्गतिः। अत्र ब्रह्मसूत्राणि भग-वत्पाददृष्टयापि द्वितीयाध्यायद्वितीयपादे सौगतमतमपि निरस्यन्ति॥

तत्र "वैधर्म्याच्च न स्वप्नादिवदि"ति सौत्रो न्यायोऽद्वैतदृष्टयैव स्वरसः, श्रीभाष्यमते तु कृत्वाचिन्तयैवायं न्याय इति श्रुतप्रकाशिका स्वयं प्रका-शयति। अतः सूत्रस्वारस्यचर्चायां न सङ्गतिलेशोऽपि॥

सौगताद्वैतवादयोरनैक्यं सूत्र-भाष्यारूढम्

"समुदाय उभयहेतुकेऽपि तदप्राप्तिः" "इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्" "उत्तरोत्पादे च पूर्वनिरोधात्" असति प्रति-ज्ञोपरोधो यौगपद्यमन्यथा" "प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरवि-च्छेदात्" "उभयथा च दोषात्" "आकाशे चाविशेषात्" "अनुस्मृतेश्च" "नासतोऽदृष्टत्वात्" "उदासीनानामपि चैवं सिद्धिः" इति सूत्राणि मतद्व-येऽपि सौगतमतमेकरूपमेव निरस्यन्ति। तत्र "अनुस्मृतेश्चे" ति सूत्र-व्याख्यावसरे क्षणिकवादं यथावदेवानुसन्धाय स्मरणानुपपत्तिरेव व्यवस्थाप्यते॥

न चात्र बौद्धप्रक्रियैवाद्वैतिनामपि। "नाभाव उपलब्धेरि" त्यधि-करणेऽप्यात्मनैरात्म्यवादं बौद्धानां यथावदनूद्य भामती निरस्यति

न चात्रापि साम्यं सौगताद्वैतवादयोः। तत्र सौगताद्वैतवादसाम्ये तन्निराकरणं भाष्यकाराणां नोपपद्यते। सति चैवं न सौगताः, न वाऽद्वैतिनः, नापि वा श्रीभाष्यादिसौगताद्वैतवादसाम्यमत्र समर्थयन्ति। यत्किंचित्साम्यं सर्वस्य दर्शनस्य सर्वेण दर्शनेन वर्तते, इत्यंशतः साम्यमात्रेण सौगतैक्यं श्रीभाष्यसिद्धान्तस्यापि समानम्॥

### कुमारिलपादानां सौगताद्वैतवादैक्यपक्षे न तात्पर्यम्

यत्तु—

"युक्त्याऽनुपेतामसतीं प्रकल्प्य यद्वासनामर्थनिराक्रियेयम्।
आस्थानिवृत्त्यर्थमवादि बौद्धैर्ग्राहं गतास्तत्र कथञ्चिदन्ये॥"

इत्यत्रा'न्ये'पदेनाविद्यावादिनोऽद्वैतवादिन एव गृह्यन्त इति तत्त्वसुधाया विवरणम्, तत् सर्वथा न विकल्पसहम्। अत्रान्ये इति नाविद्यावादिनः सौगताः, अद्वैतिनश्च; अविद्याया उभयत्रैकरूपत्वाभावात्॥

तत्र—

"स्वाभाविकीमविद्यां तु नोच्छेत्तुं कश्चिदर्हति।
विलक्षणोपपाते हि न स्यात् स्वाभाविकी क्वचित्॥
न त्वेकोऽभ्युपायानां हेतुरस्ति विलक्षणः।"

इति विवरणप्रसङ्गे "निरस्तश्चायं निरालम्बनवादः" इति वदतां पार्थसारथिमिश्राणामाशयो हि निरालम्बनवादन्यायेनाविद्यानिरासोऽविद्यावादान्तरनिरासस्याप्युपलक्षणमित्येव, न तु सौगताद्वैतवादयोरविद्यैक्यवादेन॥

### सौगताद्वैतवादवैषम्यव्यवस्था श्रुति-सूत्रमूला

तत्र सौगतवादे क्षणिका, असती वासनाऽविद्या, अद्वैतवादे त्वनिर्वचनीया, यावत्तत्त्वज्ञानं स्थिराऽविद्या। प्रथमा निरधिष्ठाना, द्वितीया तु साधिष्ठाना। अपरोऽपि विशेषः—प्रथमे ज्ञानाकारातिरिक्तार्थनिराकरणम्, द्वितीये ज्ञानाकारातिरिक्तार्थस्य सन्निति प्रतीतिः। एवं प्रथमे वासनाख्याऽविद्या युक्तिमात्रनिबन्धना प्रत्यक्षानुमानागमार्थापत्तिसिद्धा, इति कथं साम्यमुभयोरविद्याविषये॥

तत्र, सत्यम्, अनादेरपि वासनाया विलक्षणोपनिपातेन नाशयोग्यता तन्निरसनावसरे प्रतिपाद्यते, परन्तु स न्यायः केवलयुक्तिमूलके सौगते नयेऽवसरति, अद्वैतमते तु श्रुतिप्रामाण्यादखण्डाकारवृत्त्याऽविद्यानिवृत्तिसम्भवाद् न सौगतन्यायस्यावसरलेशोऽपि॥

तत्र वासनापदं क्षणिकानन्तविज्ञानसन्तत्याश्रितसंस्कारविशेषपरं सौगते नये, न चैवमद्वैतसिद्धान्ते, इति न साम्यकथा। सर्वथा तु युक्त्यानुपेत-क्षणिकवासनाऽविद्याकल्पनं सौगते नये, अद्वैतनये तु श्रुतिमूलया युक्त्याऽविद्यायाः प्रमा, इति विशेषात् न बौद्धानामेव प्रक्रियाऽद्वैतवादे। भामती त्वत्र वासनाऽविद्यावादं विशदं निरस्यति। सच्चिदानन्दस्वरूपचैतन्यमाश्रित्याऽद्वैतिनामविद्या आब्रह्मसाक्षात्कारमेकरूपाऽनुवर्तते, सौगतनये तु विपाकपरिणामाश्रितक्षणिकवासनापरपर्याया वासना निरस्ततदागमाभिमतयोगादिवशाद् निवर्तते। सा च सन्ततिरूपेण संस्कारात्मना च क्षणिका। अत एव विषया अपि क्षणिकाः, न त्वद्वैतमतवत् बहुकालावस्थायिनः, इति न साम्यलेशोऽपि॥

नित्यानित्यवस्तुविवेकस्तु नित्यानित्यवस्तुप्रसंख्यानलक्षणात् इहामुत्रार्थफलभोगविराग इति भामती हि नित्यानित्यवस्तुविवेकाधीनं, वैराग्यं विवृण्वती श्रीभाष्यमतमपि संगृह्णाति॥

इदं च यौक्तिकं सौगतनये, अन्यत्र तु वैदिकेषु वेदमूलम्। अत एव सौगतनयोऽत्र न मूलम्, अवैदिकत्वात्तु सौगतनयस्य, इति न तदादरणीयम्॥

अत एव "युक्त्याऽनुपेतामि" ति युक्तिविरुद्धत्वेन वासनाख्याविद्यानिरासोऽत्र, न तु 'श्रुत्याऽनुपेतामि'ति। श्रुतिविरुद्धत्वेन ह्यद्वैतिनामविद्याया अनादरणीयत्वम्। प्रत्युत श्रीभाष्यमताविद्यावादस्त्वत्र निरस्तः, यत्र कर्माण्येवानन्तान्यविद्येति मन्यते वासनावत्। न च तत्र श्रुतिरन्यद्वा वेदैकमूलं प्रमाणम्॥

तत्र कर्माण्यपि संचितान्यनादीन्येव नानाभूतानि, संस्कारात्मना विद्यमानानि बन्धहेतुः, इति वासनारूपाविद्यावाद एव पर्यवसानम्। संकोचविकासयोरपि सतोर्धर्मभूतज्ञाननित्यत्ववादात्त्वार्हतमतसाम्यं श्रीभाष्यमते वर्तत एव। अधिकं चात्र वक्तव्यं पूर्वमेवोक्तम्॥

अत एव "नाभाव उपलब्धेः" "इति, वैधर्म्याच्च न स्वप्नादिवदि" ति च योगाचारमतमत्र निरस्यते सर्वेषु वैदिकेषु दर्शनेषु। तत्र स्वाप्नजागरयोर्वैधर्म्यमद्वैतवादे, सौगतनये तु साधर्म्यम्, येन सौगतमतनिरसनम्, न तु समर्थनम्॥

तत्र वैधर्म्यमर्थानां व्यवहारदशायामेव स्वाप्नजागरयोस्तूलाज्ञान-मूलाज्ञाननिबन्धनत्वेन ज्ञानालम्बनानामेव ज्ञानाकारातिरिक्तानामर्थानां

सत्त्वेन, सत्त्वेऽपि तयोर्वैलक्षण्येन च समर्थ्यते। न च सौगतनय एकोऽप्यंशः समानो वर्तते। इदं हि सूत्रं श्रीभाष्यमत एवासङ्गतम्, व्यवहारदशायामेव स्वप्न-जागरयोरीश्वरसृष्टत्वेन साम्येन वैधर्म्यस्य बाधात्। अत एव श्रुतप्रकाशिका—अद्वैतवादं कृत्वाचिन्तयेदं सूत्रमिति, इति सूत्रस्वारस्यं प्रकृतं श्रीभाष्यसिद्धान्ते बाधितम्। आस्तामयं प्रसक्तानुप्रसक्तो विचारः॥

### जिज्ञासासूत्रस्वारस्यचर्चायाः प्रस्तावः

"अथातो ब्रह्मजिज्ञासे" ति प्रथमसूत्रार्थः किमद्वैतवादे स्वरसः, उत श्रीभाष्यसिद्धान्त इति विचारः प्रकृतः साम्प्रतं प्रक्रियते॥

### ब्रह्मपदेन श्रौतपरापरोभयब्रह्मविवक्षया सर्वोपनिषदर्थसंग्रहोऽद्वैतवादे, श्रीभाष्यमते तु तदेकदेशस्यैव

तत्र "अथातो ब्रह्मजिज्ञासे" त्यत्र निर्विशेषं ब्रह्मपदमुख्यतात्पर्यविषयः प्राधान्येन विवक्ष्यते। सत्यप्येवं ब्रह्मपदेन देवतामीमांसायां निर्णीतस्यापरब्रह्मणोऽप्यनुषङ्गेन विचारो ब्रह्मणो जिज्ञासायां वर्तते॥

अत एव द्विरूपं हि ब्रह्मावगम्यते— परं चापरं चेति भाष्यम्। अत्र मूलं तु "एतद्वै सत्यकाम परं चापरं चे"ति प्रश्नोपनिषत्। तत्रापरं ब्रह्माभिध्येयम्, परं तु केवलं ज्ञेयम्। तत्राद्यमभिध्यायतेरतथाभूतमपि कर्म भवति; मनोरथकल्पितस्याप्यभिध्यायतिकर्मत्वात्, ईक्षणस्य वस्तुतन्त्रज्ञानरूपत्वात्, इत्यपरब्रह्मध्यानं न मोक्षसाधनम्, न वा प्रमैवेति नियमः,- परब्रह्मज्ञानं तु मोक्षसाधनं प्रमैवेति व्यवस्था॥

### प्रश्नोपनिषच्चोदनातन्त्र-वस्तुतन्त्रोपासना-साक्षात्कारविषय-परापरब्रह्मण्येव स्वारस्यम्

तत्र यद्यपि 'परं ब्रह्माभिध्यायीत'इत्युत्तरत्राभिध्यानं परस्यापि ब्रह्मण उक्तम्, तथापि न तत्र परापरविभागेनाभिध्यानस्य विधानम्, न वाऽभिध्येयस्यैवेक्षणीयत्वमपि पृथगाम्नातम्। अत्र तु "परं पुरुषमभिध्यायीते" ति परं प्रस्तुत्याभिध्येयस्यैवेक्षणीयत्वं च प्रतिपादितम्, इत्यभिध्यानेक्षणयोरेककर्मत्वात् ईक्षणस्य प्राधान्याच्चाभिध्यानमपि वस्तुतन्त्रं ज्ञानमेव—इति न विरोधः॥

### अभिध्यानं न चोदनातन्त्रमेव, किन्तु वस्तुतन्त्रमपि

न चाद्वैतमतेऽप्यभिध्यानमेकान्ततः पुरुषतन्त्रमेव, किन्तु वस्तुतन्त्रस्यैवाभ्यस्यमानस्यापीक्षणमपि तत् भवति। अत एव "आत्मा वाऽरे द्रष्टव्यः" इति द्रष्टव्यस्यैव निदिध्यासितव्यत्वमप्याम्नातम्, इति साक्षात्काराभ्यासनिष्पद्यमानमभिध्यानमपि साक्षात्कार एव, इति नानुपपत्तिलेशोऽपि। परविषयत्वेऽभ्यस्यमानसाक्षात्कारोऽपि ध्यानपदार्थः, इत्युत्तरत्र "परं पुरुषमभिध्यायीते" ति परस्याभिध्यानमपि वस्तुतन्त्रं प्रमात्मकमेव विवक्षितम्॥

अत एव "तं त्वौपनिषदं पुरुषं पृच्छामि" इति परपुरुषस्यौपनिषदत्वमात्रमवलम्ब्य। एतेन—पुरुषपदार्थोऽपि—व्याख्यातः॥

### ध्येयेक्षणीयपुरुषयोः परापरताविवेक;

सोऽपि हि पुरुषब्रह्मपदयोरेकार्थत्वात्, परापरभेदेन द्विविधः, इति यत्र गुणाम्नानम्, तत्रापरं ब्रह्म, यस्योपास्यत्वमात्रम्, नेक्षणीयत्वम्, यत्तु केवलमौपनिषदमीक्षणीयत्वेनैवोपदिष्टम्, तन्निर्विशेषं तथाभूतमिति निष्कर्षः॥

### औपनिषदः पुरुषो निर्विशेषात्मतत्त्वमेव

तत्र "तं त्वौपनिषदं पुरुषं पृच्छामि" इति वाक्ये पुरुषपदार्थस्तु निर्विशेषमेव तत्त्वम्। तत्र वाक्यशेषे "स यस्मात् सर्वान् पाप्मन औषत् तस्मात् पुरुषः" इति सर्वपाप्मोदितत्वं प्रतिपादितम्। तत्त्वविद्या-तत्प्रयुक्तसर्वदोषशून्यत्वेनाविद्यानिवृत्त्युपलक्षितानाद्यविद्याप्रयुक्तसदादिभेदशून्यं निर्विशेषमेवाभिप्रेत्य, यदेव विवेचयितुं तटस्थलक्षणविधया "जन्माद्यस्य यतः" इति सूत्र्यते, इति वस्तुगत्योपाधिसम्बन्धप्रयुक्तजगत्कारणत्वाभावेऽपि न क्षतिः॥

### ब्रह्मणो विवर्तोपादानत्वं मृत्तिकादृष्टान्तोपपत्तिश्चाद्वैतवाद एव

अत्र हि ब्रह्मणो विवक्षितमुपादानत्वं विवर्तमानत्वमेव, न परिणाम्युपादानत्वम्। तद्धि ब्रह्मणोऽनित्यत्वापत्त्या स्वरूपतः श्रीभाष्यस्यापि नाभिमतम्। तत्र "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादि"ति मृत्तिकोदाहरणे निमित्तं तु पूर्वोक्तरीत्येदन्तया न निर्विशेषं ब्रह्मतत्त्वं बोधयितुं शक्यम्, किन्तूपाधिद्वारैवेति सूचनार्थमिति निवेदितम्, इति न

मृत्तिकोदाहरणमद्वैतवादस्य परिपन्थि, प्रत्युत श्रीभाष्यसिद्धान्तस्यैव, यत्र न ब्रह्मणो विवर्तोपादानत्वम् , न वा स्वरूपतः परिणाम्युपादानत्वमपि ॥

तत्र मृत्तिकाया अप्यविद्यात्मनैवोपादानत्वम् । अविद्या च सर्वोपादानमेका, तदाश्रय-विषयरूपं ब्रह्माप्येकम् , इति तटस्थलक्षणविधयैकमद्वितीयं ब्रह्मतत्त्वमुपदेष्टुं मृत्तिकोदाहरणमित्यद्वैतराद्धान्तः ॥

### मृत्तिकोदाहरणस्थाने शुक्तिरूप्यदृष्टान्तासंभवः

न चेदं शुक्तिरूप्यदृष्टान्तेन सुसाधम् । तत्रोदाहरणद्वयेऽप्यविद्यासम्बन्धं विना न विवर्तोपादानत्वम् । विशेषस्तु एकत्रैका मूलाविद्या द्वारम् , अपरत्रानन्तानि तूलाज्ञानानि द्वाराणि, एवं पूर्वत्रैकं ब्रह्म विषयः, तद्विवर्तास्त्वनेके, द्वितीये तु तत्तदज्ञानविषया विवर्तोपादानान्यवच्छिन्नचैतन्यविषयाण्यनेकानि, तदुपादेयानि च । तानि च नैकोपादनकानि, इत्येकविज्ञानेन सर्वविज्ञानं न शुक्तिरूप्यदृष्टान्तोपपाद्यतामर्हति । अन्यच्चात्रानुसन्धेयम्— यद् बहूनां व्यवहारकाले भ्रमाणां विद्यमानत्वात् , शुक्तिरूप्यभ्रमस्यैकस्य निदर्शने न विनिगमना काऽपि । न च तत्रैकविज्ञानेन सर्वविज्ञानोपपत्तिः । "सदेवे"ति प्रस्तुतकार्य-कारणभावैकाद्वितीयत्वोपपादकत्वं तु दूरे ॥

### प्रकृत्यधिकरणे "परिणामादि"ति सूत्रणं निमित्तम् , तस्य विवर्तपरत्वं च

इदं तटस्थलक्षणविधयाऽविद्याद्वारककारणत्वमेव जन्मादिसूत्रे, "प्रकृतिश्च प्रतिज्ञा-दृष्टान्तानुपरोधादि"त्यत्र च विवक्षितम् । मृत्तिकोदाहरणस्यापीदमेव लक्ष्यमिति विवेचनार्थमेव प्रकृत्यधिकरणे 'विवर्तात्'इत्यसूत्रणेन "परिणामात्"इति सूत्रणम् । तस्य परमं लक्ष्यं तु विवर्त एव । अत एव भाष्यवार्तिके—परिणामात्" इति = विवर्तादिति व्याख्यातम् ॥

अयमेव न्यायः "उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि"इत्यत्र 'कृत्स्नप्रसक्त्यधिकरणे'च । अयं च विषयो भूषणेऽपि चर्वितः । विशिष्य तु ब्रह्मोपादानत्वोपपत्तिप्रकरणे विशदीभविष्यति ॥

### ब्रह्मविवर्तत्वप्रयुक्तं मिथ्यात्वं नासत्त्वम्

अत एव प्रपञ्चमिथ्यात्वमपि तत्र । यद्यपि ब्रह्मविवर्तत्वमेव मिथ्यात्वप्रयोजकम् , न त्वविद्यापरिणामत्वम् , तथाप्यविद्यापरिणामत्वस्यापि ब्रह्माधिष्ठानकत्वमन्तराऽसम्भवात् , अविद्यासमसत्ताकत्वेऽप्यविद्याया अपि ब्रह्मसाक्षात्कारनाश्यत्वेन मिथ्यात्वाच्च , ब्रह्मसाक्षात्कारनिवर्त्याज्ञान-तत्प्र-

युक्त-तत्संस्कारान्यतमत्वस्यैव मिथ्यात्वप्रयोजकत्वमुपपद्यते । न च मिथ्यात्वेऽपि प्रपञ्चस्यासन्निति प्रतीतिः; सद्विवर्तस्य तस्य सत्तादात्म्यं विनाऽनुपपत्तेः । 'सन् घटः' इत्येवमेव हि प्रतीतिः । मिथ्यात्वं हि नासत्त्वम् । तद्धि क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वम्, मिथ्यात्वं तु तद्विपरीतम् ॥

मिथ्यात्वश्रुतेः, सत्त्वप्रत्यक्षस्य चाविरोधाद् न
श्रुतेः प्रत्यक्षेण बाधः

न च मिथ्या तथा; सत्त्वेन प्रतीयमानत्वात्, इति मिथ्यात्वस्य सत्त्वेन प्रतीत्यर्हत्वस्य चाविरोधात् । प्रपञ्चमिथ्यात्ववादस्य, तत्परायाः श्रुतेश्च न प्रत्यक्षेण विरोधः; तथापि तत्र प्रतीयमानं सत्त्वं ब्रह्मण इव न त्रिकालाबाध्यसद्रूपत्वम्, किन्तु सत्तादात्म्यमात्रम्, सत्ताजात्यर्थक्रियाकारित्वं वेत्यन्यदेतत् । न चैतावताऽपि ब्रह्मणोऽपि मिथ्यात्वापत्तिः; तस्याबाध्यत्वात्, प्रपञ्चस्य च बाध्यत्वात् ॥

परत्वात् श्रुत्यैवापच्छेदन्यायेन बाधः

तत्र श्रुति-प्रत्यक्षयोर्विरोधेऽपि श्रुतिरेव परत्वात् प्रत्यक्षस्य बाधिका, न तु प्रत्यक्षं श्रुतेः । न च प्रत्यक्षस्य शीघ्रप्रवृत्तिकत्वं तत्प्राबल्यप्रयोजकम्; अन्यथा शुक्तिरूप्यादिस्थले भ्रम-तद्बाधयोरुभयोरपि प्रत्यक्षत्वाविशेषात् प्रथमं प्रत्यक्षमेव प्रबलमापद्येत, इति न बाधप्रतीतिः प्रमाणं स्यात् ॥

एतादृशस्थलेऽप्यपच्छेदन्याय एव शरणम् । तत्र यथा सत्यपि भ्रमप्रत्यक्षे दुष्टहेतुके प्रबलेऽदुष्टहेतुकं बाधकज्ञानं पूर्वस्य बाधेनोत्पद्यते, एवमागमस्याप्यदुष्टस्य प्रत्यक्षाबाधेन प्रामाण्यं न दुरपह्नवम् । यथा च प्रत्यक्षमागमस्य प्रामाण्ये नोपजीव्यम्, किन्तु तज्ज्ञानोत्पत्तौ, तदपि परम्परया, कारणसत्तायाः कार्योत्पत्तावप्रयोजकत्वात्, हेतुतत्त्वबहिर्भूतत्वाच्च सत्त्वासत्त्वकथायाः, तथा भामत्यां व्यक्तम् ॥

अपच्छेदनयेऽपि पूर्वमुपजीव्योत्तरस्य प्रवृत्तिरित्यपि कश्चन न्यायः "पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" इति सूत्रसिद्धो वर्तते । स हि द्विविधः—युगपदपच्छेदे, क्रमिकापच्छेदे च । तत्र युगपदपच्छेद उभयप्राधान्यात् विकल्पः, क्रमिकापच्छेदे तु पूर्वस्य बाध इति विवेकः । अत्रापि बाध्यबाधकयोरुपजीव्योपजीवकभावो वर्तत एव । विना बाध्यप्रसक्तिं बाधानुपपत्तेः; अन्यथाऽप्रसक्तप्रतिषेधापत्तेः ॥

तत्रापच्छेदन्यायेन पूर्वबाधः—'पौर्वापर्ये पूर्वदौर्बल्यमि'ति न्यायनिबन्धन एव, न तु युगपदपच्छेदविषयन्यायान्तरनिबन्धनः, तत्रो-

द्गात्रपच्छेदमात्रे पौर्वापर्यकथैव नास्ति, इति नापच्छेदन्यायो नाम कश्चन, किन्तु क्रमिकापच्छेदन्यायविषय एव । स न्यायोऽत्रानुसन्धीयते ॥

तथा च यथोद्गात्रपच्छेदस्य पाश्चात्ये "यद्युद्गाताऽपच्छिन्द्याददक्षिणं यज्ञं संस्थाप्य पुनस्तेन यजेते"ति शास्त्रस्यैवानुष्ठापकत्वम्, न तु पूर्वप्रतिहर्त्रपच्छेदनिमित्तकप्रायश्चित्तविधानस्य "यदि प्रतिहर्ताऽपच्छिन्द्यात् सर्ववेदसं दद्यादिति" शास्त्रस्य, एवं प्रत्यक्षस्य पूर्वस्य पाश्चात्यशास्त्रेण बाधाद् नार्थसाधकत्वम्, किन्तु शास्त्रस्यैव; उभयोः क्रमेणैव प्रवृत्तत्वात् ॥

ततश्च—तत्र "विप्रतिषेधाद्विकल्पः स्यादिति" इति युगपदपच्छेदविषयस्य नात्र प्रसक्तिलेशोऽपि । बाधेऽपि शास्त्रेण प्रत्यक्षस्योद्गात्रपच्छेदनिमित्तस्यैव प्रायश्चित्तस्यैवानुष्ठेयत्वेऽपि "तद् दद्यात् यत् पूर्वस्मिन् दास्यन् स्यादि"ति वचनबलाद् बाधितप्रतिहर्त्रपच्छेदनिमित्तप्रायश्चित्तस्याप्यनुष्ठानवद् बाधितस्यापि प्रत्यक्षस्य व्यावहारिकं प्रामाण्यं यावद्बाधनिर्णयमद्वैतमतेऽपि स्वीक्रियते ॥

तत्र यथा प्रतिहर्त्रपच्छेदमात्रे तस्यानुष्ठापकत्वम्, विरोधकथाया एवाभावात्, एवमत्राप्यागमस्याप्रसक्तौ प्रत्यक्षमात्रप्रामाण्यं मिथ्यात्वेनानिश्चीयमानार्थविषयकत्वरूपं वर्तते । प्रत्यक्षागमयोर्विरोधे तु न तयोर्यौगपद्यकथाया उत्थितिः, न वा तयोः प्रामाण्ये विकल्पवार्ताऽपि ॥

अतो यदा पौर्वापर्यकथा विरुद्धयोर्द्वयोः प्रमाणयोः, तत्र पौर्वापर्ये पूर्वदौर्बल्यन्याय एव शरणम् । सत्यप्येवं प्रत्यक्षस्यापि यावद्बाधनिर्णयं प्रामाण्येन सावकाशत्वात्, आगमस्यैव प्रत्यक्षेण बाधे निरवकाशत्वाच्च, सावकाश-निरवकाशन्यायेनाप्यागमस्यैव प्राबल्यम् । यथा "इदं रजतं नेदं रजतमिति" क्रमिकप्रत्यक्षयोः, पाश्चात्यस्यैव मुख्यं प्रामाण्यम्, एवमागमाप्रवृत्तिदशायां भेददर्शनप्रामाण्यमपि पूर्वोक्तविधया सुस्थितम्, आगमेन परोक्षतया भेदमात्रस्येव स्वस्यापि बाधे निश्चितेऽप्यपरोक्षबाधनिश्चयपर्यन्तं मिथ्याभूतस्यापि यावन्मिथ्यात्वनिर्णयमर्थक्रियाकारित्वात्, तदा प्रत्यक्षस्य तथाविधप्रामाण्यस्योररीकारादुभयोरपि सत्त्वाविशेषात् प्रत्यक्षस्य बाधयोग्यतामादायैव प्रत्यक्षबाधव्यवस्था; अन्यथा प्रत्यक्षेणागमबाधकथापि कथम्? बाधितस्यागमस्य स्वरूपतोऽभावो वा ॥

### यावद्बाधं सर्वेषां ज्ञानानां प्रामाण्यम् , तच्चासद्विलक्षणत्वेऽपि विषयस्य नार्थक्रियाकारित्वविरोधि

प्रामाण्यं हि प्रमाणानां विषयस्य मिथ्यात्वानिश्चयावस्थायामेव, भ्रमस्थलेऽपि हि यावद्बाधनिश्चयं प्रवृत्तिप्रयोजकत्वमात्रम् , रजतप्राप्त्यनुभवनिबन्धनानन्दानुभवश्च वर्तत एव। न चैतावता प्रामाणिकत्वमात्रेण ब्रह्मवत् त्रिकालाबाध्यत्वरूपं सत्त्वम् , येनाद्वैतहानिः स्यात् । आगमस्यापि तदपेक्षयापि परेण 'शून्यमेव तत्त्वमि'ति ज्ञानेन बाधशङ्का तु तस्य बौद्धागममात्रसिद्धस्यापौरुषेयवेदविरुद्धस्याप्रामाण्यं सम्प्रतिपन्नम्, इति न प्रसरति; अन्यथा कर्मकाण्डोपासनाकाण्डादिसिद्धं सर्वमप्रमाणं स्यात्, इति सगुणब्रह्मवादोऽप्यस्तमियात् । अतो यावद्बाधनिश्चयमागमबाध्यानां सदसद्विलक्षणत्वरूपमनिर्वचनीयत्वमेव तत्र ॥

अनिर्वचनीयं च नासत् , इति नासत एवार्थक्रियाकारित्वापातः, येन वेदान्तानामबोधकत्वलक्षणमप्रामाण्यं स्यात् । अर्थक्रियाकारित्वं ह्यसद्विलक्षणत्वप्रयुक्तम् । सत्यम् , लोके सतोऽन्यत्वमसत्त्वम् । न च तत् प्रपञ्चस्य सम्भवति । न च तथा विवक्ष्यते केनापि, किन्त्वबाध्यत्वरूपं सत्त्वमेव न प्रपञ्चस्याभिप्रेयते, यत्तु "सत्यं ज्ञानमि"त्यादिप्रमाणसिद्धम् । लौकिकं हि सत्त्वं सत्ताजात्यर्थक्रियाकारित्वं को वा वारयति ?

### सदसद्विलक्षणत्वरूपानिर्वचनीयत्वं ब्रह्म-शशशृङ्गादिव्यावृत्तं सर्वत्र ब्रह्मभिन्नेषु

यदि सत्त्वासत्त्वयोः परस्परविरहरूपत्वमभिप्रेत्यैकाभावेऽपरसत्त्वं मन्यते, तर्हि भवतु नामाऽसत्त्वम् प्रपञ्चस्य, परन्तु क्वचिदुपाधौ सत्त्वेन प्रतित्यनर्हत्वमसत्त्वम् , तदभावश्च सत्त्वम् । इदं चासत्त्वं न शुक्तिरूप्यादीनाम् , न वा घटादेर्व्यावहारिकस्य क्वचिदुपाधौ सत्त्वेन प्रतित्यर्हस्य; 'सद् रजतम्' 'सन् घटः' इति प्रतीतेः । न चोक्तविधासत्त्वाभावः शशशृङ्गादेः, न वा ब्रह्मणस्तदभावः। सत्त्वं तु यद्यपि ब्रह्मणि वर्तते, परन्तु तदभावस्तत्र नास्ति, इति न सदसद्विलक्षणत्वं ब्रह्मणः, अन्यस्य वा। शुक्तिरूप्यादौ तूभयाभावो वर्तत इति समन्वयः ॥

सर्वथा तु प्रकारद्वयशून्ये शुक्तिरूप्यादौ सदसद्विलक्षणत्वमपेक्षितं वर्तत एव। अनिर्वचनीयत्वं हि प्रपञ्चस्य तदुपादानस्याविद्याया अप्यनिर्वचनीयत्वादर्थापत्तिप्रमाणेन सिध्यति—मिथ्यार्थस्य मिथ्याभूतमेवोपादानं भवतीति ॥

### अनिर्वचनीयाविद्याश्रय-विषय-तन्निवर्तक-निवृत्त्याद्युपपत्तिः

भ्रम-तदविद्याऽऽश्रय-विषय-स्वरूप-प्रमाणादिकं न केवलं पीठिकायाम्, किन्तु ग्रन्थशरीरेऽपि विशदीकरिष्यते, अतो भ्रान्तिज्ञानं नाग्रहणम्, मिथ्याज्ञानम्, अन्यथाज्ञानम्, केवलं कर्म वा। तदाश्रयो विषयश्च ब्रह्म, विषयमात्रं वा ब्रह्म, आश्रयो जीव इति च प्रस्थानभेदमात्रम्। उभयस्यापि अद्वैतपर्यवसाने तु न विशेषः। अतोऽद्वितीयं ब्रह्मैव मुख्यं तत्त्वम्। सा चाविद्या ज्ञानैकनिवर्त्या, अविद्यानिवर्तकं ज्ञानमखण्डाकारप्रमाणजन्यसाक्षात्कारः, न तु स्वरूपज्ञानम्; तस्य तदविरोधित्वात्॥

### विवर्तवादस्य सूपपादत्वम्

ब्रह्मणो निष्प्रपञ्चत्वज्ञानं तत्साक्षात्कारस्य फलम्, न तु तदेवासत्कार्यस्याज्ञानस्य निवर्तकम्। तच्च न प्रपञ्चप्रतीतिदशायाम्, किन्त्वखण्डाकारवृत्तिदशायाम्। तत एव ब्रह्मणो निष्प्रपञ्चात्मना पर्यवसानम्। न च विद्यमाने प्रपञ्चे निष्प्रपञ्चत्वम्। ततः प्राक् तत्त्वज्ञानादर्थक्रियाकारित्वात् प्रपञ्चः सन्नेव। सन्नप्येवं न ब्रह्मवत् सद्रूपम्, किन्तु केवलं व्यावहारिकार्थक्रियाकारिमात्रम्, अतो न विवर्तवादे काऽपि बाधा॥

### ब्रह्मणो जगत्कारणत्वादि नाद्वैतपरिपन्थि

जगत्कारणत्वादिकं ब्रह्मणो मायोपाधिकं, न स्वाभाविकं स्वरूपम्। तत्र तत्र श्रुतौ ब्रह्मणि पुरुषशब्दप्रयोगस्तु परापरब्रह्मविषयो मुख्यावान्तरतात्पर्यभेदेन न निर्गुणवादं हिनस्ति॥

### सगुण-निर्गुणवाक्यानां विषयभेदेनाविरोधाद् न सगुणवाक्येन निर्गुणवाक्यस्य बाधा

न चात्र सामान्यविषयं वेदनं विशेषविषयेण तेन संकोचमर्हति; निर्गुण-सगुणविषययोर्वेदनयोर्विषयभेदेन सामान्य-विशेषभावायोगात्। न केवलं विषयभेदात्, किन्तु स्वरूपभेदादपि निर्गुणवाक्यस्य सगुणवाक्यानुसारेण गुणविशेषनिषेधपरतया योजनम्॥

### निर्गुणवादादीनां दुरपह्नवत्वम्

सगुणविषयं हि ज्ञानं पुरुषतन्त्रमुपासनपरम्, निर्गुणविषयं तु वस्तुतन्त्रम्. प्रमाणतन्त्रं वा साक्षात्काररूपम्, तत्र प्रथममभ्युदयफलम्, द्वितीयं तु निःश्रेयसफलम्। एवं प्रथमं तत्तन्मात्रगुणकभिन्नभिन्नोपासन-

परम्, यत्रोपासनविशेषाणां फलविशेषमात्रोपयोगित्वम्, द्वितीये सर्वगुणापवादेनाखण्डैकाकारज्ञानस्वरूपता, एकविषयता, एकफलकत्वं च ॥

निर्गुणब्रह्मणो गगनकुसुमायमानताकथातु स्पष्टश्रुतिविरुद्धा, स्वगोष्ठीमात्रविनोदाय, न तु प्रामाणिकः। अतो न निर्गुणवादः, विवर्तवादादयश्च श्रुति-सूत्र-युक्तिसिद्धा दुरपह्नवाः ॥

"साक्षी चेता केवलो निर्गुणश्चे"ति मध्ये परामृश्य "स विश्वकृत् विश्वविदात्मयोनिः ज्ञः कालकालो गुणी सर्वविद्" इत्युपसंहरति। तत्र मध्यगतमपि निर्गुणवाक्यं पूर्वोत्तरवाक्यसन्दष्टमात्रम्, किं बहुना ? उपनिषदन्तरावगतानामपि गुणोपसंहारन्यायेन निषेधपरम; सर्वेषामेकार्थबोधकत्वेनैकवाक्यत्वात्। तत् निर्गुणत्वं यदि हेयगुणनिषेधपरमिति नाद्वैतिनामपि विप्रतिपन्नम्—गुणपदेन धर्ममात्रविवक्षायां तात्पर्येण सर्वेषां धर्माणां गुणानां वाऽऽविद्यकत्वेन हेयत्वात्, इति न सगुणपरत्वमुक्तश्रुतेरपीति सुवचम् ॥

### निर्गुणपदस्य साक्षी चेता इत्यत्र सन्दंश-<br>न्यायेन हेयगुणाभावपरतयासंकोचः

अत्र हि 'पाठक्रमादर्थक्रमो बलीयानि'ति न्यायेनैतत्प्रकरणगतगुणवाक्यानां निषेध्यसमर्पकत्वम्, निर्गुणपदमात्रस्य तु गुणसामान्यनिषेधपरत्वमित्येव वक्तव्यम्, अन्यथा हि हेयगुणानां ब्रह्मणि निर्दोषेऽप्रसक्त्याऽप्रसक्तप्रतिषेधापत्तिः, इत्यध्यारोपापवादन्याय एवात्र शरणम् ॥

न चात्र सन्दंशन्यायोऽपि हेयगुणमात्रनिषेधं व्यवस्थापयितुं शक्नोति। सन्दंशन्याये हि स्वतन्त्रवाक्यविहितानां कर्मणां फलाकाङ्क्षिणां प्रधानतदङ्गसन्निधिपठितानामङ्गविशेषपूर्वोत्तरसन्दंशपतितानां तत्सन्दष्टाङ्गत्वमेव, न तु तदसंदष्टकर्माङ्गत्वमिति हि व्यवस्था। न चात्र वाक्यभेदेन कर्तव्यानि, ज्ञेयानि वा वर्तन्ते; यथा दर्श-पूर्णमास-प्रयाजपूर्वोत्तरभागविहिताभिक्रमणस्य मध्यपतितप्रयाजाङ्गत्वम् ॥

तत्र यदि सन्दंशन्यायः प्रवर्तते, तर्हि मध्यगतनिर्गुणवाक्यपूर्वोत्तरभागपठितानां वाक्यानां पूर्वोत्तरसगुणवाक्यसन्दंशानां तत्सन्दष्ट निर्गुणवाक्यशेषतयैव नयनं कर्तव्यम्, न तु सन्दष्टस्य वाक्यार्थस्य, पदार्थस्य वा पूर्वोत्तरवाक्यार्थशेषतया नयनम्, इति सन्दंशन्याये स्वीकृतेऽप्यत्र पूर्वोत्तरभागपठितानां सगुणवाक्यानां मध्यगतनिषेधापेक्षितनिषेध्य-

समर्पकतयैवोपयोगः स्यात् । सति चैवं 'गुणी' 'निर्गुणश्चे'त्येकत्रैव, गुणित्वमिव । निषेधोऽप्युपपद्यते निर्गुण इति तत्र गुणराहित्यमेव मुख्यो वाक्यार्थः; अन्यथा भगवतो हेयगुणवत्त्वप्रसङ्गात् ॥

एकत्रैव वाक्ये गुणिपदस्य, निर्गुणपदस्य च सत्त्वे गुणिपदस्य निषेध्यसमर्पकत्वमेव युक्तम्

तत्रापि 'गुणी' इति "भूम-निन्दा-प्रशंसासु" इति सूत्रादतिशयेऽर्थे-णिनिप्रत्ययान्तत्वविवक्षायां तत्त्वसुधाभिमतायां हेयगुणानामेव प्रशंसाऽपि स्यात् । न च हेया गुणाः प्रशस्तास्तदनुसंहितरीत्या ॥

तत्र यदि गुणाः—

"ज्ञान-शक्ति-बलैश्वर्य-वीर्य-तेजो-यशोधनम् ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥"

इति पराशरोक्ताः, तर्हि के वा हेया गुणा ब्रह्मणोऽत्र विवक्षिताः, वर्जनीयाश्च ते के ? अतो गुणिपदेन विवक्षितप्रशस्तगुणानामेव निषेधः-"साक्षी चेता केवलो निर्गुणश्चे"त्यत्रेति वर्णनीयम् । न ह्यन्यथैकस्मिन्नेव वाक्ये गुणपदस्यार्थद्वयं वक्तुं शक्यते । अतो नात्र सन्दंशन्यायः, न वा हेयगुणमात्रनिषेधः, नापि वा हेया गुणा ब्रह्मणि प्रसक्ताः ॥

वस्तुतस्तु—भगवच्छब्दवाच्यस्य सगुणस्यैव हेयगुणराहित्यम् । कल्याणगुणत्वं च "ज्ञान-शक्ति-बलैश्वर्ये"ति वचनं श्रावयति । "न च साक्षी चेता" इति सविशेषपरम् । अतस्तस्य सन्दंशन्यायेन गुणसामान्यनिषेधपरत्वे का बाधा ? अतो जगत्कारणस्य सगुणस्य सद्वितीयत्वे यावद्द्वितीयसत्त्वं सगुणत्वे, हेयगुणराहित्ये वा न विप्रतिपत्तिः, विनाश्यविद्यासम्बन्धप्रयुक्तत्वाद् जगत्कारणत्वादेः । अत एव जगत्कारणत्वं तटस्थलक्षणम् । स्वरूपलक्षणं तु "सत्यं ज्ञानमि" त्यादिवाक्यान्येवेत्यद्वैतिनां मर्यादा । सर्वं चेदं प्रासङ्गिकविषयमधिकृत्यैव तत्त्वसुधा प्रस्तौति, इति यक्षानुरूपबलिन्यायेनावतारितम् ॥

वेदान्तानां सविशेष इव निर्विशेषेऽपि प्रामाण्यम्, अन्यथा सविशेषमप्यप्रमाणं स्यात्

शतभूषणीसमालोचनं तु प्रतिज्ञातं परकालमठीयकृतिर्नैतावतापि स्पृशति । तत्र तत्त्वसुधा प्रथमं प्रस्तुतविचारमुपक्रम्य "अथातो ब्रह्मजिज्ञासा" इत्यत्र ब्रह्मपदं न निर्विशेषपरम्, तस्याऽप्रामाणिकत्वादिति वदति, शशशृङ्गायमाणत्वं च तस्येति ॥

इदमेवात्रालोचनीयम्—सविशेषं वा ब्रह्म केन प्रमाणेन प्रमितमिति ? यदि वेदान्तेन, तर्हि तदेव निर्विशेषमपि प्रमापयति, इति कथमप्रामाणिकत्वं निर्विशेषस्य ?

तत्र वेदान्ते सविशेषवाक्यानीव निर्विशेषवाक्यान्यपि वर्तन्ते। तत्र सविशेषप्रमाणानि सविशेषं बोधयन्ति, इति यदि सविशेषं ब्रह्म प्रामाणिकम्, तर्हि निर्विशेषवाक्यैः किमपराद्धम् ? तत्र निर्विशेषवाक्यप्राबल्यं बहुधा पीठिकायाम्, अत्रापि भूषणसमालोचनावसरे विशदम् ॥

"अथातो ब्रह्मजिज्ञासा" इत्यत्र मुख्यं लक्ष्यं निर्विशेषब्रह्मप्रतिज्ञा

तत्र च संशयं केषांचन संभावितमुपलक्ष्य तन्निरासार्थमेव काशकृत्स्नेन, अन्यत्र वाऽवान्तरतात्पर्यविषयं सविशेषं "स विष्णुराह हि" "तद् ब्रह्मेत्याचक्षते" इति समापितायामपि देवतामीमांसायां तावतैव वेदार्थविचारो न सम्पूर्णः; सविशेषस्यावान्तरतात्पर्यविषयत्वेनैव प्रामाणिकत्वम्, मुख्यं तु निर्विशेषस्यैव वेदान्ततात्पर्यविषयत्वम्, प्रामाणिकत्वं वा; तथापि यथाधिकारं कर्मपराणाम्, सविशेषपराणाम्, निर्विशेषपराणां च प्रामाण्यमवर्जनीयमिति मत्वैव—"अथातो ब्रह्मजिज्ञासा" इत्यादिना ब्रह्मजिज्ञासाप्रतिज्ञा-तल्लक्षण-प्रमाणादिसूत्रणं बादरायणस्य ॥

"स विष्णुराह ही"त्यस्य नाप्रामाण्यम्

अत्र परकालमठीयकृतिः श्रीभाष्यकृदाशयं विविच्य किमपि न लिखति, भूषणं तु "स विष्णुराह ही"त्यप्रमाणं मनुते—अनेन चावगम्यते—यदि "स विष्णुराह ही"त्यादि प्रमाणम्, तर्हि श्रीभाष्याशयोऽप्रमाणमिति ॥

न चात्र श्रीभाष्यकृदाशयोऽपि स्वसिद्धान्तमेवानुसरतीति शतभूषणी लिखति, किन्तु निर्विशेषाप्रामाण्यं नास्तीत्यादिश्रुति-स्मृति-सूत्राणामाशयविरुद्धमिति। अत्र न्यायसुधेव तत्त्वसुधापि तत्प्रामाण्यमुररीकृत्यैव वदति—विशेषविचारार्थं पृथग् ब्रह्मजिज्ञासाप्रतिज्ञा बादरायणस्येति ॥

श्रीभाष्यमते धर्मजिज्ञासायाः पृथग् ब्रह्मजिज्ञासानुपपत्तिः

एवं वदन्त्यपीयं "अथातो धर्मजिज्ञासे"त्यत्र धर्मपदेन वेदार्थसामान्यस्य विवक्षणात् "चोदनालक्षणोऽर्थो धर्मः" इति कर्मकाण्डार्थपरम्, संकर्षकाण्डस्तु मध्यपतितो द्वादशलक्षणीशेषभूतः, तत्र सामान्यतो वेदार्थप्रतिज्ञानमात्रेण ब्रह्मणो निष्कृष्टं ज्ञानं न भवति, इति "अथातो ब्रह्मजिज्ञासे"ति विवृणोति ॥

इदमेवात्र पृच्छयते—"अथातो धर्मजिज्ञासे" त्यत्र वेदार्थपदेन ब्रह्मापि विवक्ष्यते वा, न वेति। यदि प्रथमः, तर्हि ब्रह्मजिज्ञासाप्रतिज्ञाऽपि सम्पन्नैव, इति जिज्ञासासूत्रं ब्रह्मजिज्ञासापरं किम्प्रयोजनम्? यदि धर्मपदेन कर्मकाण्डार्थमात्रस्य "चोदनालक्षणोऽर्थः" इति लक्षण-प्रमाणपरेण विवक्षा, तर्हि जैमिनिदृष्ट्या वेदार्थो धर्मोः न ब्रह्मेति पर्यवसानात् कथमप्रतिज्ञातार्थनिरूपणपरब्रह्मजिज्ञासाया धर्मजिज्ञासायाश्चैकत्वम्? कथं वा कर्मकाण्डार्थमात्रे प्रतिज्ञाते देवतामिमांसया स्वतन्त्रं जैमिनीयमीमांसाशेषभूतया विष्णुरेव ब्रह्मस्वरूपमिति व्यवस्थापितम्? अप्रतिज्ञातत्वाद् ब्रह्मस्वरूपस्य ॥

अतो यदि सविशेषमपि ब्रह्म धर्मपदार्थः, इति तदर्थं स्वीक्रियते, तर्हि "चोदनालक्षणोऽर्थो धर्मः" इत्यपि सविशेषब्रह्मसाधारणलक्षण-प्रमाणनिरूपणपरमिति मन्तव्यम्। सति चैवं पृथग् "अथातो ब्रह्मजिज्ञासे" त्यादिब्रह्मजिज्ञासालक्षणादिव्यवस्था तूपपन्ना स्यादिति ॥

तत्र "चोदनालक्षणोऽर्थो धर्मः" इति विशेषतोऽपि सगुणब्रह्मणोऽपि जिज्ञासा यदि प्रस्तुता, चोदना च यदि शास्त्रम्, तर्हि प्रतिज्ञासूत्रमिव "शास्त्रयोनित्वात्" इति शास्त्रप्रमाणत्वसूत्रणमपि वितथम् ॥

तत्र धर्मपदेन यदि कर्मकाण्डार्थस्यैव विशेषः, तर्हि—"अथातः क्रत्वर्थ-पुरुषार्थयोर्जिज्ञासेति" पृथक्कृत्य सूत्रयितुमर्हम्, ब्रह्म तु क्रत्वर्थ-पुरुषार्थादिवद् न कर्मण एव विशेषः; कर्म-ब्रह्मणोर्विलक्षणत्वात्, तेनैव न्यायेनात्र धर्मविशेषप्रतिज्ञेति युज्यते। सर्वथा तु देवतामीमांसयैव सापि कृतप्रायेति किमर्थं वा ब्रह्मजिज्ञासासूत्रमपरम्?

### श्रीभाष्यदृष्ट्याऽपि न पूर्वोत्तरमीमांसयोरैक्यम्

वस्तुतस्तु—देवतामीमांसा न कर्मशेषः; विष्ण्वाराधनस्य तदुपासनारूपस्य कर्मशेषत्वाभावत्, अन्यथा—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति कर्मणामुपासनाशेषत्वप्रतिपादनमसङ्गतं स्यात्। ब्रह्मजिज्ञासाशेषः खलु कर्ममीमांसा, याऽपि सामान्यरूपेण, विशेषरूपेण वा देवतामीमांसयैव चरितार्था। सर्वथा तु श्रीभाष्यदृष्ट्यापि न पूर्वोत्तरमीमांसयोरैक्यम् ॥

### "अथातो ब्रह्मजिज्ञासे" ति पृथक् वैयर्थ्यादपि नैकशास्त्रम्

"अथातो धर्मजिज्ञासे" ति च वेदार्थमात्रजिज्ञासायाः प्रस्तावः। ब्रह्मापि धर्म एव; देवतामीमांसायां ब्रह्मणोऽपि धर्मपदार्थत्वं मत्वैव जिज्ञासनात्,

प्रमाणप्रतिज्ञायाः "चोदनालक्षणोऽर्थो धर्मः" इत्यतोऽतिरिक्ताया निष्प्रयो-जनत्वात्, "अथातः शेषलक्षणम्" "अथातः क्रत्वर्थ-पुरुषार्थयोर्जिज्ञासे"त्य-वान्तरप्रतिज्ञायां पृथक् प्रमाणस्यासूत्रणात्, इति "जन्माद्यस्य यतः" इति पृथक् लक्षणस्यापि चोदनालक्षणत्वातिरिक्तस्य देवतामीमांसाविषय इवा-नपेक्षणात्, देवतामीमांसयैव गतार्थत्वाच्च "अथातो ब्रह्मजिज्ञासे"ति पृथक् प्रतिज्ञा वितथा, अद्वैतमते तु ब्रह्मणः स्वरूपतः, लक्षणतः, प्रमाणतः फल-तश्च वैलक्षण्यात् तत एव पूर्वोत्तरमीमांसयोर्भेदात् पृथक् ब्रह्मणः सा सफला ॥

### तत्त्वसुधा स्वयं फलभेदस्वीकारेण शास्त्रभेदं स्वीकरोति

तत्र धर्मजिज्ञासायां फलस्य नेच्छाविषयत्वम्; स्वर्गादीनामनुष्ठानमा-त्रसाध्यत्वेन ज्ञानमात्रस्याफलत्वात्, ब्रह्मजिज्ञासायां तु ब्रह्मापि विचार-स्य फलम्, ज्ञानमपीति परकालमठीयकृतिः। अनेन हि "चोदनाप्रवृत्ति-भेदाच्चे"ति भगवत्पादभाष्यार्थो धर्म-ब्रह्मणोर्वैलक्षण्यपरः संगृह्यते। एवं "फल-जिज्ञास्यभेदाच्चे"ति भाष्यार्थोऽपि, इति कथं धर्मजिज्ञासा-ब्रह्मजि-ज्ञासयोरैक्यं श्रीभाष्याभिमतम्?

वस्तुतस्तु—धर्मजिज्ञासायां यथा ज्ञानमात्रं वाक्यजन्यं न फलम्, किन्त्वनुष्ठानापेक्षमेव स्वर्गादि फलम्, एवमेवात्रापि सविशेषब्रह्मजिज्ञा-सैवात्र विवक्षिता स्यात् ॥

### धर्म-ब्रह्मजिज्ञासयोः फलभेदः

तत्र च फलस्योपासनाविषयस्य, स्वर्गादेश्च प्राप्यानुष्ठेयविषयस्यैव ब्रह्मजिज्ञासायां फलत्वम्, अन्यथा त्वनुष्ठानविषयातिरिक्तस्येति सत्यपि विशेषे विचारजन्यं ज्ञानं न मुख्यं फलं धर्मजिज्ञासायामिव ब्रह्मजिज्ञा-सायाम्, इति सन्नर्थेच्छाविषयत्वं स्वतः फलत्वेन न श्रीभाष्यते ॥

अद्वैतसिद्धान्ते तु "अवगतिपर्यन्तं च ज्ञानं सन्वाच्याया इच्छायाः कर्मे"ति भाष्याद् नानुष्ठानापेक्षत्वं फलस्य, न वा ज्ञेयातिरिक्तं फलमित्वि विशेषः, इति ज्ञानस्य, विषयस्य चोभयस्य फलत्वम्, इच्छाविषयत्वं वा ॥

### गमेर्ग्रामः कर्म, इषेरुभयं कर्मेति महाभाष्यस्वारस्यमद्वैतमत एव

"अथेह 'ग्रामं गच्छति' इति कस्य किं कर्म? इत्युपक्रम्य, एवं तर्हि गमेर्ग्रामः कर्म, इषेरुभे कर्मणी" इति महाभाष्यमद्वैतसिद्धान्त एव सुष्ठु

ल्गति, न तु श्रीभाष्यसिद्धान्ते । यत्र न ज्ञानमिषेर्विषयः, इति जिज्ञासेति सन्प्रत्ययस्वारस्यं न श्रीभाष्यमते ॥

उपासनविषयतयैव ब्रह्मणो विवक्षायां प्राभाकरीय एव पन्थाः श्रीभाष्यस्यापि; परं तु ब्रह्मसत्यत्वं परं विशेषः

तत्र विचारजन्यज्ञानम्, तद्विषयो ब्रह्म वा ज्ञानविषयत्वमात्रेण न फलम्, किन्तूपासनाविषयत्वेनैव, इत्युपास्यत्वेनैव यदि फलत्वं ब्रह्मणः, तर्हि प्रतिपत्तिविधिविषयतया, उपासनाविषयतया वा ब्रह्मणि वेदान्तानां प्रामाण्यमिति सिद्धान्त एव श्रीभाष्यस्य, न तु ज्ञेयतयेत्यवचनसिद्धम् । अयमेव सिद्धान्तः प्रभाकरस्यापि ॥

सिद्धार्थेऽपि प्रामाण्यं वेदान्तानां नास्ति, इत्युपासनमात्रस्य ब्रह्मविषयकस्य फलसाधनत्वम्, ब्रह्म तूपास्यं न प्रामाणिकम्, न वा फलमिति प्रभाकरमतम्, श्रीभाष्यसिद्धान्तस्तु तद्विपरीतम् । तत्र प्रभाकरमते नियोगः, तद्विषयो यागः, तत्फलं च साध्यतया क्रियान्वयात् सत्यम्; नियोगविधयोपासनासाध्यत्वात्, ब्रह्म तु नियोगानन्वयात् न सत्यमिति विशेषः ॥

अद्वैतसिद्धान्ते प्राभाकरमताद् महान् विशेषः

अद्वैतसिद्धान्तस्तु साक्षात्, परम्परया वा नियोगासम्बद्धस्यापि प्रामाणिकत्वम्, वेदान्तवाक्यानि तु विधेयक्रियान्वयं विनाऽपि प्रमाणमिति । व्यक्तं चैतत् नियोगकाण्डे ब्रह्मसिद्धौ, भगवत्पादभाष्ये च ॥

तत्र श्रीभाष्यमतेऽपि ;विधेयक्रियापराणामेव वाक्यानां प्रामाण्येऽपि सिद्धार्थेऽपि क्रियान्वितेऽपि प्रामाण्यात्, उपासनाविषयस्यैव फलत्वेन धर्मजिज्ञासाता विशेषेऽपि ब्रह्म सत्यमित्यस्ति विशेषः; तथापि श्रीभाष्यमते चोदनैव प्रमाणम्, न विना विधिं वेदान्तानां वस्तुतन्त्रब्रह्मज्ञानोपदेशमात्रेणाद्वैतसिद्धान्ते प्रामाण्यम्, अद्वैतमते तु नैवमिति महदस्ति वैलक्षण्यम् ॥

अत एव "अथातो धर्मजिज्ञासा" इत्यनेन ब्रह्मोपासनप्रतिज्ञाऽपि । न ह्यन्यथा देवतामीमांसा सगुणब्रह्मविषयिणी शेषितया, शेषतया वा धर्मजिज्ञासैकदेशः स्यात्, ब्रह्मजिज्ञासा वा शेषरूपेणोपास्यसविशेषब्रह्ममात्रपर्यवसायिनी; अन्यथैकशास्त्रवादोऽप्यस्तमियादिति ॥

### परिमलस्यापि शास्त्रभेद एव तात्पर्यम् , अतः कर्मविचारान्तर्यं नाथशब्दार्थः

अद्वैतसिद्धान्ते तु वेदार्थविशेषत्वं ब्रह्मणोऽपि वर्तते, इति वेदार्थविचारत्वोपाधिक ऐकशास्त्र्येऽपि चोदनातन्त्रत्वोपाधिकधर्म-ब्रह्मविषयकत्वेनैकशास्त्र्यं विरुद्धमित्येव परिमलाशयः, इत्यविधेयवेदार्थजिज्ञासा न पूर्वतन्त्रार्थः, इत्यविधेयवेदार्थजिज्ञासा स्वतन्त्रेति विशेषः। एवंविधजिज्ञासया शास्त्रैक्येऽपि कर्मविचारानन्तर्यं नाथशब्दार्थः, इति फलतः शास्त्रभेद एव मुख्यं तात्पर्यं केवलं प्रौढयैव। कथञ्चन सत्यप्यवान्तरे न विषयभेदेऽप्यैकशास्त्र्यसमर्थनमित्यादि परिमल एव व्यक्तम्। अतो ब्रह्मणोऽपि वेदार्थत्वेन धर्मत्वे न विप्रतिपत्तिः, चोदनातन्त्रवेदार्थत्वे तु नाविवादः परिमलदृष्ट्यापि। न चैतावता ब्रह्मजिज्ञासाजिज्ञास्यो धर्मः, चोदनालक्षणत्वाभावात्। न हि श्रेयःसाधनत्वमात्रं धर्मपदशक्यतावच्छेदकम्, किन्तु विधेयत्वसध्रीचीनं श्रेयःसाधनत्वम्॥

### ब्रह्मणो धर्मपदबोध्यत्वमुपचारमात्रेण, अतो न धर्मजिज्ञासाविषयत्वम् ; अन्यथा ब्रह्मजिज्ञासावैफल्यम्

न च ब्रह्म विधेयमपि; यागादीनामिवाननुष्ठेयत्वात्। अतो विष्णुसहस्रनामादौ ब्रह्मणो धर्मनामत्वेऽपि न दोषः; श्रेयःसाधनत्वांशमात्रेऽपि हि तत्र धर्मपदेनोपचारमात्रम्; अन्यथा धर्मजिज्ञासागतधर्मशब्दार्थत्वेऽस्यापि चोदनालक्षणार्थत्वे स्वीक्रियमाणे व्यर्था पुनरपि ब्रह्मजिज्ञासा —"अथातो ब्रह्मजिज्ञासा"॥

पूर्वं प्रथमसूत्रे वेदार्थत्वेन ब्रह्मणः प्रतिज्ञा, अत्र तु ब्रह्मणो धर्मविरुद्धस्य प्रतिज्ञेति पूर्वापरविरोधोऽपि. इति धर्मत्वेऽपि ब्रह्मणः स्वीक्रियमाणे ब्रह्मजिज्ञासा विफला, भगवत्पादमते तु "ब्रह्मपदेनाज्ञातप्रत्यगभिन्नसंविन्मात्रस्य पूर्वमज्ञातस्य जिज्ञासा सूत्रिता, इति न वैयर्थ्यम्॥

यत्तु—"सर्वो ह्यात्मास्तित्वं प्रत्येती"ति भगवत्पादभाष्यम्, तदहमर्थे संविन्मात्रस्यापि प्रकाशमभिप्रेत्य। अत एवोत्तरत्राऽऽत्मस्वरूपे विप्रतिपत्तिं प्रदर्श्य तत्स्वरूपनिर्धारणार्थं ब्रह्मजिज्ञासेति भाष्यम्॥

### निर्विशेषब्रह्मणो वेदान्तबोध्यत्वोपपत्तिः

एतेन—'सर्वो ह्यात्मास्तित्वं प्रत्येती"त्यादिभाष्यमादाय लोकसिद्धत्वाद्द्वैताभिमतस्य ब्रह्मणः "अथातो ब्रह्मजिज्ञासे"ति प्रतिज्ञावैयर्थ्यापाद-

नम्—अपास्तम्; ब्रह्मजिज्ञासा हि वेदान्तवाक्यान्यवष्टभ्यैव प्रवर्तिता। न चाद्वैतवादे न किमपि प्रमाणं यथार्थम्; प्रत्यक्षादीनां सर्वेषां प्रमाणानां तत्र स्वीकारात्। तत्रापि वेदान्तवाक्यानि सविशेषपराणीव निर्विशेषपराण्यपि प्रमाणान्येव। तथा च मिथ्यात्वेऽपि वेदान्तप्रमाणानामबाधितब्रह्मबोधकत्वम्; स्वाधिष्ठानकसर्वप्रपञ्चबाधकज्ञानविषयत्वेन वेदान्तानां तत्र प्रामाण्यस्य चर्वितचर्वणत्वात्, अखण्डाकारवृत्तिव्याप्यत्वाच्च ब्रह्मणः॥

अद्वैत्यभिमतवृत्तौ प्रत्यक्षादिप्रामाण्यं दर्शनान्तरसंवादश्च
धर्मभूतज्ञानस्याप्रामाणिकत्वं च

न च वृत्त्यङ्गीकारे प्रमाणाभावः; श्रीभाष्यमत आत्मधर्मभूतज्ञानस्थानत्वादन्तःकरणधर्मस्य वृत्तेस्तस्यां प्रत्यक्षादिसर्वप्रमाणसिद्धायां विवादायोगात्॥

वस्तुतस्तु—वृत्तावपि "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा-धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एवे"ति श्रुतिः प्रमाणम्॥

सैव हि साक्षात् प्रमाणजन्यं ज्ञानमिति द्वैतिनोऽप्यनुमन्यन्ते। साङ्ख्यादिदर्शनमपि तत्र प्रमाणमेव। इयं हि ब्रह्माज्ञानविरोधिनी, प्रकाशिका चाज्ञाननिवर्तनद्वारा, धर्मभूतज्ञाने तु संकोच-विकासशालिनि न किमपि प्रमाणमिति पूर्वमेवाऽऽवेदितम्। संविन्मात्रस्य ज्ञानस्य नित्यस्य ह्यज्ञानास्याज्ञाननिवर्तनार्थं वृत्तेरपेक्षा॥

स्वप्रकाशसंविन्मात्रस्याप्यावरणनिवृत्त्यर्थं वृत्तिस्वीकारः

सा चाऽऽवरणमात्रं निवर्तयति, संवित्तु स्वयं प्रकाशते, इति स्वप्रकाशार्थं संविन्मात्रं न वृत्तिमपेक्षते, इति न स्वप्रकाशत्वविरोधः संविन्मात्रस्य। तत्र ब्रह्मणो ज्ञानविषयत्वमप्यत एव वृत्तिव्याप्यत्वमात्रेण॥

निर्गुणस्य शब्दप्रमाणगम्यत्वं पर्यवसानतः-
तथापि जगत्कारणत्वमुपहितस्यैव

निर्गुणस्यापि शब्देन, लक्षणया, सङ्केतेन वा पदैः, अभिहितान्वयवादेन वाक्यघटकपदाभिहितार्थतो वा ज्ञानमबाधम्। ब्रह्मशब्दवृत्त्युपपत्तिविचारेऽधिकं द्रष्टव्यम्। तत्र जगत्कारणत्वमविद्योपहितस्य सगुणस्यैव, इति तस्य श्रीभाष्यमत इव न विरोधोऽद्वैतमते॥

वस्तुतस्तु—विवर्तोपादानत्वापरपर्यायमधिष्ठानत्वमेव जगत्कारणत्वम्। तच्च जगदाकारेण परिणममानाविद्याविषयत्वमनाद्यविद्याकल्पितसदादि-

भेदवतो ब्रह्मणः सखण्डावस्थायामेव, नाखण्डावस्थायाम्। अत एवास्य तटस्थलक्षणत्वं परिणाम्युपादानाविद्याद्वारा। स्वरूपं हि साक्षादिदन्तया न बोद्धुं शक्यते। तत्राविद्याया ब्रह्माधिष्ठितायाः, ब्रह्मणश्चाविद्याविषयतया यथायथं परिणाम-विवर्तोपादानत्वात् तद्द्वारैव ब्रह्मलक्षणात्, शाखाद्वारेणेव चन्द्रस्य वस्तुगत्या तदसम्बद्धस्य लक्षणत्वमबाधम्॥

### तटस्थ-स्वरूपलक्षणकृत्यम्

तटस्थलक्षणं हि वस्तुगतया न लक्ष्यगतम्, किन्तु लक्ष्यसामीप्यमात्रेण तदसम्बन्धेऽपि लक्षणम्। स्वरूपलक्षणं तु यद्यपि न लक्ष्यगतो धर्मविशेषः, किन्त्वसङ्कीर्णतयाऽनुपहितरूपेण स्वरूपस्य ज्ञापकम्। तत्र प्रथमं लक्ष्यवृत्तितया ज्ञायमानम्, न तु लक्ष्यगतम्, द्वितीयं तु स्वरूपं सत्यमेव, परन्त्वनुपहितम्; उभयत्र सत्यासत्यविभागोऽकिञ्चित्करः। उभयमपि स्वज्ञाप्यव्यावर्तकमेव। लक्षणद्वयमपि सोपाधिक-निरुपाधिकभेदमिति तु न नियमः॥

लक्ष्यसोपाधिकत्वे, निरुपाधिकत्वे वा तटस्थलक्षणमुपाधिः, स्वरूपलक्षणं त्वितरव्यावृत्तस्वरूपमेव। तत्र व्यावृत्तिरपि स्वरूपमेव, परन्तु लक्षणत्वं व्यावृत्तिरूपेण, न तु स्वरूपमात्रेण केवलेन, नान्यत् किमपि लक्षणद्वयस्यापि निर्णायकम्। तत्र तटस्थलक्षणं लक्षणदशायामप्युपाधिवत् सत्तामात्रमपेक्षते, इति काकादयो न तटस्थलक्षणानि शाखादीनीव, न वा स्वरूपलक्षणानि। यद्यप्यानन्दादिरपि ब्रह्मस्वरूपम्, परन्त्वनानन्दव्यावृत्तरूपेणैव लक्ष्यत्वात्, आनन्दस्यानानन्दव्यावृत्तिरूपेणासङ्कीर्णरूपेण लक्ष्यत्वम्, न स्वरूपमात्रेण॥

अत एव "सत्यं ज्ञानमनन्तं ब्रह्मे"ति त्रीणि पदानि। अनाद्यविद्याकल्पितसदादिभेदभिन्नतया ज्ञायमानस्याखण्डात्मना ज्ञानं हि स्वरूपलक्षणस्य कृत्यम्। सत्यज्ञानादिवाक्ये पदत्रितयमपि मिलित्वाऽखण्डस्वरूपज्ञापकम्। एकैकं पदं त्वसत्यादिव्यावृत्तरूपेण ज्ञापकत्वात् स्वरूपलक्षणमिव। तत्र स्वरूपं स्वरूपात्मनैवेतरव्यावर्तनविधया लक्षणम्, न तु धर्म-धर्मिभावेन॥

अतस्तटस्थ-स्वरूपलक्षणविवेकस्य विशदत्वाद् लक्ष्यगतत्वागतत्वसत्यत्वासत्यत्वादिविकल्पन्तद्दूषणान्यनालम्बानि॥

तत्र विवर्तोपादानं कारणविषमसत्ताकार्यवत्त्वमद्वितीयवाक्यमूलकं न निर्मूलम्। तच्च यथावसरं परीक्षिष्यते॥

### ब्रह्मणो निर्विशेषस्यापि शास्त्रयोनित्वम्

शास्त्रयोनित्वं तु ब्रह्मणः शास्त्रजन्याखण्डाकारवृत्त्याऽज्ञाननिवृत्तिमात्रेणाऽऽवृतरूपविगमेन, स्वप्रकाशस्वरूपमात्रेणावस्थानाद् ज्ञापकत्वमेव, न तु घटादिवदनुभाव्यत्वेनेत्यादि व्यक्तमधस्तात् ॥

### सविशेषस्य, निर्विशेषस्य च वेद्यत्वाविरोधः, तत्र प्रमाण-तत्प्रकारयोः परं विशेषः, इति न निर्विशेषस्य जिज्ञास्यत्वानुपपत्तिः

"यत् सत्यं नैव तद्वेद्यं यद्वेद्यं नैव तच्च सत् ।
इति ते समयस्तत्र कुत्रार्थे शास्त्रमानता ॥
सर्वधर्मोज्झितस्यास्य किं शास्त्रेणाधिगम्यते ॥
मिथ्याधर्मविधाने हि शास्त्रस्यैवाप्रमाणता ॥"

इति तु नाद्वैतसिद्धान्तं मात्रयाऽपि स्पृशति । अद्वैतसिद्धान्ते परमपरं चेति द्वे ब्रह्मणी । तत्र सगुणमपरं शास्त्रवेद्यमित्यत्र तु न विवादः । तत्र परमप्युपास्यमपि, परन्तु केवलं ज्ञेयमेव सत् फलम् । तत्र ज्ञेयत्वमुपनिषदधीनम्, न प्रत्यक्षादिप्रमाणगम्यत्वम्, उपनिषत्त्वलौकिकं सगुणमिव स्वमहिम्नाऽध्यारोपविधयेवाऽपवादतयाप्यलौकिकं तत्त्वमवगमयितुं शक्नोति— "अथात आदेशो नेति नेति" "नेह नानास्ति किञ्चने"त्यादिः, इति व्यक्तीकृतमधस्तात् ॥

निर्विशेषवाक्यानि प्रबलान्यखण्डं ब्रह्मतत्त्वमेव मुख्यतया बोधयन्ति । तत्र तस्य वेद्यत्वं न सत्यत्वमात्रेण, किन्त्वखण्डरूपेण । तच्चावरणनिवृत्तिद्वारमात्रेण । न च शास्त्रमिथ्यात्वं तद्विषयस्याप्यविद्याऽप्रयुक्तस्य ब्रह्मणोऽपि मिथ्यात्वं बोधयितुमलमिति चर्वितमधस्तात् ॥

सधर्मकमेव प्रमाणवेद्यमिति लौकिको यन्न्यायः । नायं वेदार्थनिर्णय उपयुज्यते । 'किमिव वचनं न कुर्यात् नास्ति वचनस्यातिभारः' इति न्याय एवात्र शरणम्; अन्यथाऽलौकिकस्वर्गादिबोधकान्यपि कथं प्रमाणानि ? सति चैवं—"अथातो ब्रह्मजिज्ञासे"त्यत्र निर्विशेषं ब्रह्म यदि न ब्रह्मपदार्थः, तर्हि देवतामीमांसयैव गतार्थत्वादाद्यानि त्रीण्यधिकरणानि विफलानीति गतमधस्तात् ॥

देवता-ब्रह्ममीमांसाभ्यां निर्णेयब्रह्मस्वरूपविवेकः, ब्रह्मवल्ली-
भृगुवल्लीप्रकरणयोर्निर्विशेषमेव जिज्ञास्यम्, किं
बहुना ? सर्वं शास्त्रं निर्विशेष एव पर्यवसायि

अन्यथा "स विष्णुराह हि स विष्णुराह हि" इति देवतामीमांसा कथं प्रमाणम् ? तत्र यदि विष्णुर्धर्मपदार्थ इति कृत्वा देवतामीमांसा, तर्हि "तद् ब्रह्मेत्याचक्षते" इति प्रतिपादितं ब्रह्मस्वरूपं न ब्रह्मजिज्ञासासूत्रघटक-ब्रह्मशब्दार्थः। स च निर्विशेषं ब्रह्मेत्येव वक्तव्यम् ॥

अत एवात्र "जन्माद्यस्य यतः" इति सूत्रम्। इदं हि ब्रह्मवल्ल्याः, भृगु-वल्याश्च सम्पूर्णाया निर्विशेष एव पर्यवसानं दर्शयितुम्, न तु "यतो वा इमानि भूतानि जायन्ते" इति वाक्यमात्रस्य जगत्कारणतापरत्वं ज्ञापयितुम्; अन्यथाऽन्नमयादिमुखेन, तत्तत्कारणादिमुखेन च "आनन्दो ब्रह्मेति व्यजानात् सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिते" त्यन्तेन तदर्थोपपादनमसङ्गतं स्यात् ॥

तेन चावगम्यते—तटस्थलक्षणविधया स्वरूपलक्षणपर्यन्तं पूर्व-पूर्वनिषे-धमुखेन जन्मादिकारणताद्वारा तस्य प्रकरणस्य तात्पर्यमिति स्वीकर्तव्यम्; अन्यथा ब्रह्मपदार्थस्य सविशेषस्यैवात्र जिज्ञास्यत्वे "स विष्णुराह हि तद् ब्रह्मे" त्यनेनैव तस्य निर्णीतत्वात्, तत्र ब्रह्मस्वरूपे संशयाभावाच्च "अथातो ब्रह्मजिज्ञासे" ति सूत्रं व्यर्थम्। अतोऽवगम्यते—स्वयं श्रेयः साधनं धर्मः सविशेषमपि ब्रह्म, श्रेयोमात्ररूपं तु निर्विशेषमेव तत्, यदेव ब्रह्मजिज्ञासाघटकब्रह्मपदार्थो मुख्यः ॥

तत्राऽऽद्ये सविशेषवाक्यानि प्रमाणम्, निर्विशेषपरं सर्वं शास्त्रम्। तत्र त्वम्पदार्थनिरूपणपरो भागः कर्मकाण्डः, तत्पदार्थनिरूपणपर उपासना-काण्डः, उभयानुषङ्गेण त्वंपदेन कर्मकाण्डार्थम्, तत्पदेनोपासनाकाण्डार्थं च संगृह्य कर्मोपासनाधिकारोपयोगिनो धर्मान् सर्वान् परित्यज्य काण्डद्वय-स्याप्येकवाक्यतया सिद्धमर्थं निरूपयितुं ज्ञानकाण्डम्, इत्यध्यारोपापवाद-विधया सर्वं शास्त्रं निर्विशेषैकस्वरूपमेव मुख्यतात्पर्यविषयमुपदिशति ॥

निर्विशेषपरत्व एव सर्वस्य शास्त्रस्य शास्त्रयोनित्व-समन्वया-
धिकरणसार्थक्यम्

अत एव "शास्त्रयोनित्वादि" ति तृतीयं सूत्रं सप्रयोजनम्; अन्यथा "चोदनालक्षणोऽर्थो धर्मः" इत्यनेन सविशेषब्रह्मणः क्रियाविधिशेषतया सिद्धत्वात् शास्त्रयोनित्वं वितथम् ॥

अयमेव न्यायः समन्वयसूत्रेऽपि । सारांशस्तु—चोदनामात्रं न ब्रह्मणि प्रमाणम् , येन सविशेषमेव ब्रह्म वेदार्थः स्यात् , किन्तु सर्वं शास्त्रं तत्र प्रमाणम् । सर्वमपि हि शास्त्रं न यागादौ चोदनातन्त्रे प्रमाणम् , किन्तु तत्र तत्तद्विधिवाक्यमेव, ब्रह्मणि तु महावाक्यविधया, तच्छेषतया वा सर्वं शास्त्रं प्रमाणम् , तत्रैव शास्त्राणां समन्वयोऽपि, इत्यद्वैत एवेति संग्रहात्मकब्रह्ममीमांसायाः स्वारस्यम् , न श्रीभाष्यमते ॥

### ब्रह्मजिज्ञासायाः सविशेष-निर्विशेषोभयविवक्षाफलम्

तत्र ब्रह्मपदम् "बृहन्तोऽस्मिन् गुणाः" इति वचनादपरब्रह्मपरमपि,

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।"

इति स्मृत्या निर्विशेषपरमपीति वक्तव्यम् ॥

तत्र वाक्यैकवाक्यतया कर्मोपासनाकाण्डयोः कर्मणोऽप्युपासनया सहभाववत् साधनतया कर्मोपासनयोरुभयोरपि साक्षात् परस्परसहभावाद् ब्रह्मज्ञानेऽप्युपयोग इति सूचनार्थमेव ब्रह्ममीमांसायां सगुणब्रह्मणोऽपि जिज्ञासा ॥

अत एव भाष्यम्—"ब्रह्म च नित्य-शुद्ध-बुद्ध,मुक्तस्वरूपं सर्वज्ञं सर्वशक्तिसमन्वितं च"—इति, इति बहुष्वन्तराकाश-प्राण-ज्योतिराद्यधिकरणेषु सगुणवाक्यविचारोऽपि सार्थकः ॥

अतः "बृहन्तोऽस्मिन् गुणाः" "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञान-बलक्रिया च" "सत्यकामः सत्यसङ्कल्प" इत्यादिश्रुतयः, "मय्यनन्तगुणे" "तेजो-बलैश्वर्य-महावबोध-सुवीर्य-शक्त्यादिगुणैकराशिः" "परः पराणामि"त्यादिस्मृतयः, "अन्तस्तद्धर्मोपदेशात्" "अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्" "विवक्षितगुणोपपत्तेश्च" "सर्वधर्मोपपत्तेश्चे" त्यादिसूत्राणि सविशेषब्रह्मपराण्यपि नाद्वैतवादे विरुध्यन्ते; तत्त्वसाक्षात्कारोपकारकोपासनाविषयपरात्वात्तेषाम् । भगवत्पादानां धर्मपदविवरणपरं सहस्रनामभाष्यमप्यत एव व्याख्यातम् ॥

### विरुद्धवत् प्रतीयमानयोरपि शास्त्रयोरविरोधेन प्रामाण्योपपत्तिः

"को हि मीमांसको ब्रूयात् विरोधे शास्त्रयोर्मिथः ।
एकं प्रमाणमितरदप्रमाणं भवेदिति ॥"

इति वार्तिकमपि शास्त्रयोरुभयोरपि प्रामाण्यं वक्तव्यमित्येवाभिप्रैति ॥

तत्रोभयप्रामाण्यं न वस्तुनि विकल्पायोगात् विकल्पेन। यद्यप्येकस्यान्यथा नयनं संभवति; अन्यथा तूभयाविरोधेन नयनेनोभयप्रामाण्यं रक्षणीयम्। अस्ति चात्राविरोधः सगुण-निर्गुणवाक्ययोः। न चात्र सिद्धे वस्तुनि विकल्पः सम्भवति; क्रियाविषयत्वात् तस्य॥

तत्र च श्रीभाष्यानुयायिनो निर्विशेषवाक्यानामपि सविशेषपरत्वं मन्यन्ते, अद्वैतमते त्वधिकारिभेदेनोभयत्र विनैव संकोचम्, अन्यथा नयनं वा निर्विशेषवाक्यानां यावदुपासनाधिकारं प्रामाण्यं सगुणपरत्वस्याविरोधात्, व्यावहारिकप्रामाण्यं च सविशेषवाक्यानां निर्विशेषवाक्यापेक्षितप्रतियोगिसमर्पणविधया, इति नान्यतरस्याप्यप्रामाण्यं निर्विशेषप्राधान्येऽपि; यावदविद्यानिवृत्ति कर्मोपासनाधिकाराविरोधात्। न च कर्मयोग-भक्तियोगयोरपि वैयर्थ्यमद्वैतवादे। सावकाश-निरवकाशादिन्याया अद्वैतसिद्धान्तस्यैवानुकूला इति निरूपितमधस्तात्। विस्तरेण च स्वावसरे विवेचयिष्यते॥

### वेदानां शास्त्रत्वमप्यमद्वैतपरतायामेव

तत्राद्वैतसिद्धान्ते चोदनाऽपि यद्यपि शास्त्रम्, परन्तु न मुख्यतया, किन्तु तत्त्वमस्यादिमहावाक्यशेषतया, तदुपकारकत्वाद्वा। इदमेवाभिप्रेत्य—

"उपनिषदिति वेद इत्यपीदं समभिवदन्ति महावचो महान्तः।
यतो महावाक्यत एव पुत्रः विजिज्ञासानस्य पितुः सकाशात्॥"
"इति श्रुतं तेन स एव वेदस्तथा च सर्वोपनिषच्च सिद्धा॥"

इति। तेन चेदमवगम्यते यावद्वेदान्तवाक्यशेषत्वमेव वेदत्वम्, शास्त्रत्वं वा कर्मकाण्डादेरपीति, इति "शास्त्रफलं प्रयोक्तरि" "कर्ता शास्त्रार्थवत्त्वात्॥"

"अतिक्रमेण हि सादि शास्त्रान्तरनिरीक्षया।
अन्योन्याश्रयमाप्नोति विना शास्त्रेण साधयन्॥"
"तदेव चेदं कर्मेति शास्त्रमेवानुधावता॥"

इति कर्मकाण्डार्थव्यवस्थायामपि शास्त्रपदप्रयोगो न विरुध्यते; अन्यथा चोदना-शास्त्रयोः पर्यायत्वे "चोदनालक्षणोऽर्थो धर्मः" इत्यतः पृथक् शास्त्रयोनित्वादिति सूत्रं किम्प्रयोजनम्? को वोभयोरर्थभेदः? लक्ष्यभेदो वा? अतो वेदैकदेशस्य वेदत्ववत्, मन्त्रैकदेशस्यापि मन्त्रत्ववत्,

शास्त्रैकदेशस्य शास्त्रत्वमुपपन्नम्। लक्ष्यं तु सर्वत्र साधारणम्—"शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे ज्ञानमि"त्येव ॥

तत्र महावाक्यविधया शास्त्रत्वं तत्त्वमस्यादिवाक्यानाम्, तद्घटकत्वमर्थोपपादकतया, तत्पदार्थोपपादकतया च; शास्त्रैकदेशस्यापि शास्त्रत्वात्, वेदैकदेशस्य वेदत्ववत्; अन्यथा "न स्त्री-शूद्रौ वेदमधीयाताम्" इत्यादौ वेदैकदेशनिषेधे न तात्पर्यं स्यात्, "अनधीयानव्रात्यताऽऽपादकत्वे वा न तात्पर्यं स्यादिति ॥

अतो निर्विशेषमुख्यतात्पर्यकत्वेन तत्त्वमस्यादिवाक्यानामेव मुख्येऽपि शास्त्रत्वे ब्रह्मजिज्ञासेत्यत्र सविशेषब्रह्मणोऽप्य"थातो ब्रह्मजिज्ञासे"त्यत्र ब्रह्मपदेन विवक्षयाऽपि शास्त्रारूढत्वं ब्रह्मजिज्ञासायामुपयुज्यते ॥

"अथातोऽब्रह्मजिज्ञासे"ति विभागोऽपि मीमांसकानाम्'थातोऽधर्मजिज्ञासे'ति न्यायेन

अत्र ब्रह्मसूत्रभाष्यकाराः केचन "अथातोऽब्रह्मजिज्ञासे"त्यपि विभज्य भाषन्ते। एवं व्याख्याने "अथातो धर्मजिज्ञासे"त्यत्राधर्मजिज्ञासाया अपि विवक्षेति मीमांसकानां व्याख्यैव मूलम्—शास्त्रदीपिका, कुतूहलवृत्तिश्चात्र स्पष्टम्। एवमर्थवर्णनेऽपि चोदनापदस्य निषेधपरत्वस्वीकाराद् निषेधवाक्यार्थोऽधर्म इति योजना तत्रापि न व्याहता। शास्त्रदीपिकादिकमप्यत्र भाष्यमूलकमेव। इदं तु परापरब्रह्मविभागं श्रौतं मनसि निधाय। अतो यत्र यत्र हेतुत्वोल्लेखः, तत्र तत्र सगुणपरत्वम्, निर्गुणवाक्यानामेव निर्विशेषपरत्वमिति निष्कर्षः ॥

परत्वम्, अनन्तत्वादिकं चाऽऽपेक्षिकम्; प्रकरणानुसारात् क्वचित् सगुणपरमपि, अतो न विरोधः

परशब्दो हि "अक्षरात् परतः परः" इत्यादौ प्रकृत्यपेक्षः सगुणोऽपि न, क्वचन तु सर्वत्र। यथा च "न स्थानतोऽपि परस्ये"ति परशब्दप्रतिपाद्यं निर्विशेषं तत्त्वमेव व्यवस्थापयति, तथाऽवसरे विवेचयिष्यते। अतः परत्व-परतमत्वादिकमापेक्षिकं सगुणस्यापि वाक्यविशेषगतं न विरुध्यते; तात्पर्यग्राहकप्रकरणात् खलु पदार्थनिर्णयः। न च पदार्थमात्रेण वाक्यार्थव्यवस्था, तेन च "तमीश्वराणां परममि"त्यादावीश्वरपरत्वेनोपक्रमात् परमत्वं सगुणस्याप्यापेक्षिकम्; अन्यथा परमेश्वरशब्दस्य सदाशिव एव रूढत्वात् विष्णुरपि न परं ब्रह्म स्यात् श्रीभाष्यमते ॥

अयमेव न्यायोऽनन्तत्वादिनिर्देशेऽपि। परापरभेदेन ब्रह्मविभागस्तु सविशेष-निर्विशेषाभिप्रायेणेति व्यक्तमाकर एव, न तु निर्विशेषस्यैव पर-शब्दबोध्यत्वेन। सर्वथा तु ब्रह्मजिज्ञासापदघटकब्रह्मपदं निर्विशेषपरमेव; अन्यथा तत्सूत्रवैयर्थ्यादिति विशदमधस्तात्॥

### श्रीभागवत-विष्णुपुराणयोर्निर्विशेषब्रह्मवाद एव तात्पर्यम्

श्रीभागवतमादित आन्तमुपक्रमपरामर्शोपसंहारवशाद् निर्विशेषवाद-मेवोपबृंहयतीत्यद्वैततत्त्वशुद्धौ विस्तृतम्, भूषणसमालोचनावसरेऽत्रापि व्यक्तं भविष्यति॥

किं बहुना? भूषणोक्तानामेवार्थानामुद्गमनमात्रं बहुशास्तत्त्वसुधायाः, इति तत्समालोचनमेव तत्त्वसुधाया अपि बहुषु विशेषेषु। 'एका क्रिया द्व्यर्थकरी'ति हि न्यायः। तत्र ब्रह्मशब्दो निर्विशेषमपि लक्षणया, शक्त्या वा बोधयतीति ब्रह्मशब्दवृत्त्युपपत्तौ विस्तृतम्॥

वस्तुतस्तु—

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्॥"

इति विष्णुपुराणवचनं निर्विशेषे संविन्मात्रे ब्रह्मशब्दं सङ्केतयति, इत्य"थातो ब्रह्मजिज्ञासे"ति ब्रह्मजिज्ञासाप्रतिज्ञा प्राधान्येन निर्विशेषब्रह्म-गोचरैव। द्वितीयसूत्रस्याप्ययमेवाशय इति व्यक्तमधस्तात्॥

### ब्रह्मणोऽभिन्ननिमित्तोपादानत्वमद्वारकं शास्त्रैकगम्यम्, अत एव शास्त्रयोनित्वसूत्रम्

तत्र जन्मादिसूत्रेणाभिन्ननिमित्तोपादानं ब्रह्म विवद्यत इति सम्प्र-तिपन्नम्। अत एव शास्त्रयोनित्वम्; अन्यथा केवलनिमित्तकारणत्वे तस्यानुमानप्रमाणेनाप्यवगमसंभवात् शास्त्रयोनित्वसूत्रं वितथम्॥

तत्रोपादानत्वं जगदात्मना परिणममानाविद्याविषयत्वेनानाद्यविद्याप्रयु-क्तसदादिभेदस्य ब्रह्मणः, यस्यानन्दात्मनाऽपि ज्ञानमेवाखण्डाकारा वृत्तिः तच्च वस्तुगत्या निर्विशेषस्यैव, यावद्ब्रह्मतत्त्वसाक्षात्कारं तु तस्यैवावि-द्योपहितरूपेणोपादानत्वं विवर्तमानत्वरूपम्, अविद्यायास्तु परिणाम्यु-पादानत्वमित्येवाद्वैतसिद्धान्तनिष्कर्षः॥

श्रीभाष्यमते सूक्ष्मचिदचिद्विशिष्टं स्थूल-चिदचिद्विशिष्टावस्थापन्नं तन्नियमनावस्थं कार्यम्। परमात्मनि प्रागसतो स्थूलचिदचिदन्तर्यामितैव

कार्यता नाम। सूक्ष्मावस्था नाम-रूपविभागानर्हचिदचिद्वैशिष्ट्यं कारणत्वम्, नाम-रूपविभागार्हस्थूल-चिदचिदन्तर्यामिता तु कार्यत्वमिति निष्कर्षः ॥

स्थूलावस्थनाम-रूपविभागार्हता तु तच्छरीरसूक्ष्मावस्थचिदचित्परिणामः साक्षात्, तत्सम्बन्धात्तु ब्रह्मण उपचारात्, इति ब्रह्माप्युपादानमिति कथ्यते ॥

तत्र यदि ब्रह्मणः साक्षाद् नोपादानत्वम्, तर्हि कथमभिन्ननिमित्तोपादानता मुख्या? तत्र स्थूल-सूक्ष्मचिदचितोरुपादानत्वमुपादानतावच्छेदकत्वेन, ब्रह्मणस्तु-तदवच्छिन्नत्वेनेति हि विशिष्टोपादानताया व्यवस्था ॥

तत्र प्रकृतिद्वारा ब्रह्मण उपादानत्वं सद्वारकमुपादानत्वम्। अत एव सूक्ष्मचिदचितोरेव विकारित्वम्, न तु ब्रह्मणः। तत्र सद्वारकमुपादानत्वमपि मुख्यमेव; यथा व्रीह्यादिद्वारा यागसम्बन्धेऽपि प्रोक्षणादीनां मुख्यमुपकारकत्वम्, इति नाद्वारकमुपादानत्वं ब्रह्मण इति हि विवेकः ॥

सद्वारकोपादानत्वे ब्रह्मणः, बहुभिरधिकरणैः साङ्ख्यमतनिरासायोगः

निष्कर्षस्त्वद्वारकमुपादानत्वं सूक्ष्मचिदचितोः, सद्वारकमुपादानत्वं ब्रह्मणः ॥

तच्च साङ्ख्यमत इव सूक्ष्माचित एवोपादानत्वे ब्रह्मणो न युक्तम्, अन्यथा साङ्ख्यमतनिराकरणं ब्रह्ममीमांसायां निष्प्रयोजनम्। न च सद्वारकोपादानत्वस्यैव ब्रह्ममीमांसाविषयत्वे "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति मृत्तिकादृष्टान्तः, "परिणामादि"ति सूत्रम् 'कृत्स्नप्रसक्त्यधिकारणादीनि परिणाम्युपादानत्वविवक्षायां श्रीभाष्यमते स्वरसानि ॥

नियामकत्वमात्रं ब्रह्मणो नोपादानत्वम्

तत्र नियामकत्वमात्रमुपादानत्वम्, केवलनिमित्तकारणतावादिनो द्वैतिनः, योगिनः, पाशुपता अपि हि ब्रह्मणो राज्ञ इव विश्वस्य पृथक्सिद्धस्यापि नियामकत्वं स्वीकुर्वन्ति—ब्रह्मणो निमित्तत्वमात्रेण। श्रीभाष्यमपि "भोक्त्रापत्तेरविभागश्चेत्" इति सूत्रे राज्ञः पृथक्सिद्धस्यैव नियामकत्वमनुपादानस्यापि निदर्शयति ॥

तत्र निरीश्वरसाङ्ख्यैर्यद्यपि स्वतः परिणामित्वमेव प्रकृतेरङ्गीक्रियते; तथापि निमित्तकारणत्वमात्रेण नियामकत्वाङ्गीकारात् ब्रह्मोपादानतासम-

र्थने किं प्रयोजनं तन्निरासस्य। साङ्ख्यनिराकरणमिदं योगिमतस्याप्युपलक्षणम् , इति तन्निरासोऽप्यत्र विवक्ष्यते, इति ब्रह्मोपादानताया अपि दृढीकरणमेव साङ्ख्यादिमतनिरासस्य लक्ष्यम् ।।

अत एव कृत्स्नप्रक्त्यधिकरणादिकम् । न च सद्वारकोपादानत्वे पारिभाषिक एवात्र विवक्षिते साक्षाद् ब्रह्मणोऽनुपादानत्वे कृत्स्नप्रसक्त्यादिशङ्का-समाधाने उपपद्येते ।।

'कृत्स्नप्रसक्त्यधिकरण'स्य न किञ्चित्करत्वम् 'न विलक्षणत्वाधिकरण'स्य तु नोत्थानमपि

न चेदं साक्षात् परिणामिनोः सूक्ष्मचिदचितोर्वोपादानत्वनिरासपरम् ; तस्या निरवयत्वत्वाभावेन निरवयवत्वशब्दकोपाभावात्, 'न विलक्षणत्वाधिकरण'स्य तु नोत्थानमपि; सूक्ष्मावस्थचिदचितोः साक्षाद् नाम-रूपविभागार्हस्थूलावस्थायां वैलक्षण्यायोगात् , विशिष्टकारणभावविवक्षायां तु विशिष्टयोर्वैलक्षण्यकथैव न संभवति ।।

सद्वारकोपादानत्वे बहूनामधिकरणानां वैयर्थ्यं श्रीभाष्यमते, अद्वैतमते तु नैवम्

अतः सद्वारकोपादानता, विशिष्टोपादानता च सूत्रस्वारस्यविरुद्धे; बहूनामधिकरणानां वैयर्थ्यापादकत्वात् । अद्वैतमते तु "सदेव सोम्येदमि"-त्यादौ यद्यपि नाम-रूपात्मना विभागानर्हप्रकृतिविशिष्टस्यैव कारणत्वम् ; तथापि न कार्यत्वं विशिष्टस्य किन्तु नाम-रूपविभागवतो जगन्मात्रस्य । अत एव नाम-रूपव्याकरणेन ब्रह्मणो निमित्तकारणत्वमेव, नोपादानत्वम् ; नाम-रूपोपादानत्वं तु प्रकृतेरेव, ब्रह्मणस्तु तदात्मना भानात् विवर्तमानत्वमात्रम् । अत एवाद्वितीयत्वम् । परिणामवादे तु सद्वितीयत्वमेव; परिणाम्युपादानस्य परिणामसमसत्ताकत्वात् , विषमसत्ताकत्वाच्च विवर्तोपादानोपादेययोः ॥

अद्वैतमतेऽपि न विशिष्टकार्यकारणभावः किन्तु जगतो ब्रह्मण्यध्यासमात्रम्

न चाद्वैतमते सूक्ष्मचिदचिद्विशिष्टब्रह्मण एकदेशः कारणतावच्छेदकतया विवक्ष्यते । तत्रापि तस्य कार्यत्वं हि स्थूलाचित उपाधित्वमात्रेण । अतो सूक्ष्मचिदचिद्विशिष्ट-स्थूलचिदचिद्विशिष्टयोरेव कार्य-कारणभावो भगवत्पादानामपि सम्मत इति वादो हठवाद एव । अद्वैतमते हि जगतः, अन्यस्य

वा ब्रह्मण्यध्यास एव, यन्निबन्धनं सत्तादात्म्यमेव, न तु सत्त्ववैशिष्ट्यम्, ब्रह्मणो वा तेन सद्वितीयत्वं नियमेन श्रीभाष्यमत एव, इति कथं वा भगवत्पादस्यापि सद्वितीयत्व एव तात्पर्यं विनाऽध्यारोपेण। "वाचारम्भण-मि"त्यादौ मृत्तिकाद्युदाहरणम्, "परिणामादि"ति सूत्रोपपत्तिश्च पूर्वमुपपादितम्॥

मृत्तिकोदाहरणस्थाने शुक्त्यादिदृष्टान्तासंभवः, श्रीभाष्यमते न मृत्तिकायाः, अन्यस्य वा दृष्टान्तत्वम्

शुक्तिरूप्याद्युदाहरणासंभवस्तादृशानां लोकसिद्धानामानन्त्यात्, एकविज्ञानेन सर्वविज्ञानस्यैकदर्शनेनैव दुरुपपादत्वात्, तेन व्यावहारिकाणामपि ज्ञानस्य साधनासंभवात्, तत्र शुक्त्याद्यवच्छिन्नचैतन्यस्य कारणत्वेन ब्रह्मणोऽकारणत्वेन ब्रह्माद्वितीयताया दुःसाधत्वात्, 'सदेवे'ति प्रस्तुतसत्पदार्थताया शुक्त्याद्यवच्छिन्नचैतन्ये बाधितत्वात्, सृष्टिपूर्वकालीनेदन्तादात्म्यस्य सृष्टिकालीनेश्वरसृष्ट्यादिनिर्णीतस्य शुक्त्यादिनिदर्शनेनासम्भवात्, परिणामपदस्य, विवर्तपदस्य च कार्यमात्रे बहुषु स्थलेषु शतदूषण्यामपि सत्त्वेन "परिणामादि"त्यस्य 'विवर्तादि'ति भाष्यवार्तिकेन व्याख्यानेन च तत्पदमात्रस्याकिञ्चित्करत्वाच्च, इति नानुपपत्तिलेशोऽप्यद्वैतसिद्धान्ते, इति "येनाश्रुतमि"ति प्रपञ्चमिथ्यात्वमेवावलम्ब्य प्रवृत्तम्॥

ब्रह्मविवर्तत्वे प्रपञ्चस्य 'तदनन्यत्वाधिकरणं' मूलम्

तत्र शुक्तिरूप्यादौ शुक्तिज्ञानेन रजतबाधवद् ब्रह्मात्मैक्यज्ञानेनाविद्यायाः, तत्प्रयुक्तानां च बाधस्य "विद्वान्नाम-रूपाद्विमुक्तः"इत्यादिनाऽवगमेनाविद्यान्तबाधं भाविनं सिद्धवत्कृत्य मृत्तिकाद्युदाहरणमपि कार्यमिथ्यात्वोपपादकमेव, तेन चाविद्यान्तब्रह्मव्यतिरिक्तामिथ्यात्वमपि फलति। अतः प्रकृत्यधिकरणं नाद्वैतमतविरुद्धं श्रीभाष्यमत इव॥

तत्र विवर्तमानत्वं ब्रह्म-प्रपञ्चयोर्विषमसत्ताकत्वेन, ब्रह्मव्यतिरेकेणेतराभावस्याद्वितीयत्वस्यानन्यत्वरूपेण, इति तदनन्यत्वसूत्रमेव विवर्तोपादनतासाधकम्, श्रीभाष्यमते तु परिणामित्वप्रयुक्ताभेदसाधनार्थं तत् सूत्रमिति तु न युक्तम्; ब्रह्मणः साक्षादपरिणामित्वेन निष्कृष्टस्य ब्रह्मणो निष्कृष्टे जगति बाधितत्वात्। न ह्यन्यथैकविज्ञानेन सर्वविज्ञानं मृत्तिकाद्युदाहरणेनापि निर्वहति॥

### सद्विद्याया ब्रह्मविवर्तमानत्व एव तात्पर्यम्

न केवलं ब्रह्मज्ञाननिवर्त्यत्वमविद्यान्तस्य प्रकरणान्तरगतैः "विद्वान्नामरूपाद्विमुक्तः" "तमेव विदित्वाऽतिमृत्युमेती"त्यादिश्रुतिभिः, किन्तु सद्विद्यायामपि "सदेवेदमि"तीदन्तादात्म्येन प्रस्तुत्य, "एकमेवाद्वितीयमि"-त्युपसंहारेण, तस्यैव "तदैक्षते"ति पुनः प्रकृत्य "तत् सत्यं स आत्मे"ति सत्पदार्थमात्रं निष्कृष्य च तन्मात्रसत्यत्वबोधनपूर्वकम् "ऐतदात्म्यमिदं सर्वमि"ति व्युत्क्रमेण सत्तादात्म्योपदेशेन बाधायां सामानाधिकरण्यविधया प्रपञ्चमिथ्यात्वस्य बोधनाद् सद्विद्याऽपि विवर्तोपादानतायां प्रमाणमेव, इति "जन्माद्यस्य यतः" इति सुत्रमद्वैतसिद्धान्त एव स्वरसम् ॥

### 'वेदयोनित्वादि'त्यसूत्रणेन शस्त्रयोनित्वादिति सूत्रणस्य तात्पर्यमप्रवर्तकत्वेऽपि प्रामाण्यसूचनम्

तत्र 'वेदयोनित्वात्' इत्यसूत्रणेन, "शास्त्रयोनित्वादि"ति सूत्रणेन चेदमवगम्यते—यद् न चोदनालक्षणवेदार्थत्वोपाधिनाऽत्र विचार्यत्वम्, किन्तु ज्ञेयस्वरूपमात्रपर्यवसायिशास्त्रार्थत्वेनैवेति । अत एवात्र शास्त्रपदम् । तत्रोपनिषत्, शास्त्रमिति चानर्थान्तरम्, इति न फलभेदस्तत्र ॥

"अप्राप्ते शास्त्रमर्थवदि"त्यादिजैमिनिसूत्रेष्वपि शास्त्रपदं बहुशो वर्तत इत्यत्र वक्तव्यं तु पूर्वमेवोक्तम् । अतः प्रमाणान्तराज्ञातार्थबोधनमपि शास्त्रस्य कृत्यम्, न तु प्रवर्तनमात्रम् । प्रवृत्तिस्तु चोदनाकार्यम्, इति शास्त्रपदस्वारस्यमद्वैतमत एव, यत्रैव केवलं ज्ञापकत्वमज्ञातस्यार्थस्य, न प्रवर्तकत्वम् ॥

### समन्वयसूत्रस्वारस्यमद्वैत एव

'समन्वयाधिकरणं' तु पूर्वसूत्रोक्तं शास्त्रयोनित्वं ब्रह्मणो न भवति; प्रवृत्ति-निवृत्त्यन्वयविरहिणो ब्रह्मणः स्वरूपेणापुरुषार्थत्वात्, पुरुषार्थबोधकत्वेनैव शास्त्रप्रामाण्यादिति पूर्वपक्षे, ब्रह्मणः "विज्ञानमानन्दं ब्रह्म" "आनन्दो ब्रह्म" इत्यादिवाक्यैर्निरतिशयानन्दस्वरूपत्वावगमात्, तत्प्रतिपादकानां प्रामाण्यमिति सिद्धान्त इति तत्त्वसुधा लिखति । तत्र पूर्वपक्षे सिद्धान्ते चोपास्यत्वमविप्रतिपन्नम । सति चैवमुपास्यं ब्रह्म नास्ति,

उपासनामात्रं स्वतन्त्रफलार्थं विधीयते, इति ब्रह्मसिद्ध्युपक्षिप्तप्राभाकरपक्षेण पूर्वपक्षः, यत्रोपास्यं ब्रह्म नास्ति, इति वेदान्तानां न तत्र प्रामाण्यम् ॥

सिद्धान्ते तूपासने सफले प्रामाण्येऽपि ब्रह्मण एव फलत्वेनाप्याम्नानात् ब्रह्म सत्यमेवेति निष्कर्षः, य एव प्रतिपत्तिविधिविषयतया शास्त्रविषयः, इति पूर्वपक्षस्य, सिद्धान्तस्य च तत्त्वम्। तथा चोपास्यासत्यत्वेन पूर्वपक्षः, सिद्धान्तस्तूपास्यत्वेन साम्येऽप्यपुरुषार्थत्वेन ब्रह्मणि वेदान्तानामप्रामाण्यापत्तिः, उपास्यं ब्रह्म पुरुषार्थमपि, इति तस्य शास्त्रसिद्धत्वमिति फलभेदः पूर्वोत्तरयोः पक्षयोः। श्रीभाष्यप्रकाशिका हि समन्वयाधिकरणपूर्वपक्षम् "ध्यानविशेषणतयान्वयेऽपि ध्यानस्य ध्येयसत्ताऽनावश्यकत्वेन ध्येयभूतब्रह्मस्वरूपादिसत्यत्वासिद्धिम्, प्रवृत्त्यन्वयस्य प्रवृत्तिव्यतिरेकव्यापकव्यतिरेकप्रतियोगित्वरूपस्य ब्रह्मस्वरूपेऽवगतिसम्भवेन तात्पर्यासम्भवेन" इत्यादिना भूषण्युपक्षिप्तमेव पूर्वपक्षप्रकारं संगृह्णाना, उपास्यत्वाद् ब्रह्मासत्यमिति भूषणीपक्षमेव समर्थयति। अधिकं ब्रह्मसिद्धितोऽवगन्तव्यम् ॥

### समन्वयाधिकरणस्य निर्विशेष एव तात्पर्यम्

तत्र समन्वयपदमुपक्रमोपसंहारादितात्पर्यग्राहकप्रमाणपरम्। अन्वयपदं हि तात्पर्यविषय एवाभिहितान्वयान्विताभिधानवादादौ प्रसिद्धम्। अनुव्याख्यानम्, न्यायसुधादि च तथैव व्याचष्टे। श्रीभाष्यप्रकाशिकाऽपि वेदान्तानां ब्रह्मणि तात्पर्यासम्भवेन पूर्वपक्षम्, तात्पर्यवशात् तत्र पर्यवसानं च विविनक्ति। अतः सर्ववेदान्ततात्पर्यविषयत्वात् ब्रह्मैव वेदान्तार्थ इति निष्कर्षः। यथा च ब्रह्मणः फलव्याप्यत्वाभावेनाननुभाव्यत्वेऽपि संवेद्यत्वं वृत्तिव्याप्यत्वमात्रेण, तथोपपादितमधस्तात्, उपपादयिष्यते चोपरि ब्रह्मणोऽसंवेद्यत्वनिरासप्रकरणे—निर्विशेषमपि चैतन्यं वेदान्तप्रमाणजनितवृत्तिप्रयुक्तावरणनिवृत्तिमात्रेण स्वप्रकाशरूपतयैवावस्थानात् प्रमाविषय; नैवं घटादीनां प्रमेयत्वम्; तेषां जडत्वात्, किन्तु वृत्त्यभिव्यक्तचैतन्यभास्यत्वेन प्रमेयत्वम्; अप्रकाशरूपत्वात्, प्रकाशस्वरूपे तु वृत्त्याऽऽवरणनिवृत्तिमात्रेण स्वप्रकाशमेवावृतानावृतरूपभेदबाधात् स्वप्रकाशमेवावतिष्ठते, इति न निर्विशेषप्रामाण्यासंभवः, प्रमाणजन्यवृत्तेस्तत्रानुपयोगो वा, इति चतुर्लक्षणीप्रतिपाद्यो मुख्यो विषयो निर्विशेषचैतन्यमेव;

अन्यथा षोडशलक्षण्यैव गतार्थत्वात्, स्वतन्त्रा चतुर्लक्षणी शारीकमीमांसाख्या विफला स्यात् ॥

### शतदूषण्या निर्विशेषपरत्वे तदर्थं पञ्चमाध्याय-प्रवर्तनापत्तिशङ्कापरिहारः

सति चैवं यत्तु—शतदूषणी पञ्चमाध्यायविषयत्वं निर्विशेषस्य स्यादिति—वदति, तत्र यदीदं पूर्वोत्तरमीमांसैक्यमादाय, तर्हि तत्र पञ्चमाध्यायस्य कर्मक्रमनिरूपणपरत्वाद् न निर्विशेषविषयत्वापत्तिः, तत्र विंशतिलक्षण्या अपि निर्विशेषार्थविषयत्वाभावे त्वेकविंशाध्यायविषयत्वमेवापादयितुं शक्यम्, शास्त्रभेदे तु चतुर्लक्षण्या एव निर्विशेषवस्तुविषयत्वाद् न पञ्चमाध्यायस्थत्वम्। तत्र शारीरकपञ्चमाध्यायविषयत्वं स्यादित्यापादनं हि शास्त्रैक्यवादे न प्रसरति; शारीरकशास्त्रस्यैव तदाऽभावात्, शारीरकशास्त्रस्य निर्विशेषपरत्वाच्च, इति न निर्विशेषैकमुख्यनिर्णयार्थं तत्र पञ्चमाध्यायस्यापेक्षाऽस्ति। अधिकं भूषणपरीक्षावसरेऽतीते ॥

### सद्विद्याविषयस्ये'क्षत्यधिकरण'स्य श्रीभाष्यमते वैयर्थ्यम्; तन्मते सत्पदेन प्रधानपरिग्रहे साङ्ख्यमतस्यैव स्वीकारेण तन्निरासासंभवात्

एतेन—ईक्षत्यधिकरणमपि—व्याख्यातम्; इदं ह्यधिकरणं वेदान्तवाक्यानां सविशेष-निर्विशेषयोरभिन्ननिमित्तोपादानत्वसमन्वयपरतामाक्षेप्तुं प्रवृत्तम्। तदाशयस्तु सद्विद्यादीनां प्रधानैकपरत्वात्, न निर्विशेषे, सविशेषे वा ब्रह्मणि समन्वय इति साङ्ख्यानां प्रत्यवस्थानं निरसितुम्, न तु वेदान्तवेद्यं ब्रह्म प्रधानविलक्षणं साधयितुम्; ब्रह्म-प्रधानयोः सालक्षण्यस्य साङ्ख्येनाप्यस्वीकारात्, सर्वथा जगत्कारणस्य प्रधानव्यावृत्तिरेवात्र प्रतिपाद्यत इति त्वविप्रतिपन्नम् ॥

तत्राद्वैतमतेऽविद्योपहितस्य कारणत्वात्, तत्रेक्षितृत्वमविद्यावृत्त्याश्रयत्वेन, सर्वप्रपञ्चतादात्म्येन वा, इति तस्य सर्वज्ञत्वम्, सविशेषत्वं च नानुपपन्नम्। इदं ह्यधिकरणमभिन्ननिमित्तोपादानत्वैकदेशनिमित्तकारणत्वस्योपपादनद्वारा ब्रह्मण उपादानत्वस्यापि समर्थनेन साङ्ख्यमतं निरसितुम्; सद्विद्याविषयत्वादस्य ॥

तत्र "सदेवे"ति वाक्यघटकेन सता प्रधानपरिग्रहे तस्य परिणामित्वं यद्यपि संभवति, तथापि सर्वज्ञत्वेन निमित्तत्वं न सम्भवति, इति ब्रह्मपरिग्रहहेतुरुभयमपि सम्भवतीति कृत्वैव प्रधानपरत्वनिरसनमत्र। इदं तु श्रीभाष्यस्यापि सम्प्रतिपन्नम् ॥

इयान् विशेषः—अद्वैतमते ब्रह्मण एव साक्षाद् मुख्यमुपादानत्वमपि सर्वज्ञत्वमिवाबाधम्, श्रीभाष्यमते तु सद्वारकमेवोपादानत्वम्, तदपि तु परिभाषिकं मुख्यमेवेति तत्त्वसुधा। परिणामित्वं तु साक्षात् विशेषणयोः सूक्ष्मचिदचितोरेव; मुख्यं लक्ष्यमत्र ब्रह्मणोऽधिष्ठानत्वेन निर्विशेषत्वमात्रम्, इति ब्रह्मणः सर्वज्ञत्वसाधनेनैव पर्याप्तम्। उपादानत्वसध्रीचीनस्याप्यत्रा लक्ष्यत्वे, तस्य साङ्ख्यैरपि स्वीकारात्, शास्त्रयोनित्वसूत्रेणैव तत्सर्वज्ञत्वस्यापि दृढीकरणाद् व्यर्थमिदमधिकरणम् ॥

### शास्त्रयोनित्वप्रथमवर्णकस्य सर्वज्ञत्वदृढीकरणार्थत्वस्याद्वैतमते नानुपयोगः

एतेन—'शास्त्रयोनित्वाधिकरण'गतं प्रथमं वर्णकमपि—व्याख्यातम्। तेन हि सर्वज्ञत्वमेव दृढीक्रियते निमित्तत्वसमन्वयार्थम्। तत्र विवक्षितमनुमानम्—ब्रह्म, सर्वज्ञम्, सर्वज्ञकल्पवेदकर्तृत्वात्, यो यत्कर्ता, स तदधिकज्ञानवान्, यथा पाणिन्यादिरिति, न तु ऋग्वेदाधिकम्, स्वविषयादधिकज्ञानवदुपादानकमिति। तत्र प्रथमयोजनायां स्वविषयाधिकज्ञानवत्कर्तृकत्वमेव साध्यम्, न तु जगदुपादानत्वम्। अत एव "जगत्कारणत्वमुखेनाक्षिप्तं सर्वज्ञत्वं दृढीकुर्वन्नाह—शास्त्रयोनित्वादि"ति शास्त्रयोनित्वाधिकरणप्रथमवर्णकप्रयोजनतयाऽवतारणं भाष्ये। न चैतावता वेदपौरुषेयत्वापातः; अर्थज्ञानपूर्वकं पूर्वपूर्वानुपूर्व्यपेक्षोच्चारणविषयक्रमकत्वरूपस्य पौरुषेयत्वस्यानिष्टत्वात्। तत्र सर्वज्ञत्वं कारणस्य सविशेषस्यैवेत्युक्तमेव। सर्वथा तु न केवलं तृतीयसूत्रप्रथमवर्णकेन, किन्तु जन्मादिसूत्रेणाप्यभिन्ननिमित्तोपादानतापरेण सर्वज्ञत्वस्य साधनात् श्रीभाष्यमत एवेक्षत्यधिकरणं वृथा। उपादानत्वस्याप्यत्र विवक्षायां तु तस्य सद्द्वारकस्यैवात्र साधनात् द्वारोपादानत्वस्य साङ्ख्यैरपि स्वीकारेण तन्निरसनायोगादपि तदधिकरणवैयर्थ्यं तु दूषणान्तरम्। 'न विलक्षणत्वाधिकरणा'दिसामञ्जस्याभावस्तु पूर्वमेव समर्थितः, इति प्रकृते सूत्रे निर्विशेषोपादानकारणतावाद एव समर्थित इति कृत्वा दूषणोपन्यासाः सर्वेऽप्यनुक्तोपालम्भनान्येव ॥

### श्रीभाष्यमते ब्रह्मणः सद्वारकाद्वारकोभयविधोपादानत्वा- योगः, अद्वैतमते त्वद्वारकोपादानत्वसंभवश्च

तत्र ब्रह्मणः परिणामिकारणत्वं बाधितम् । तत्र परिणामपदार्थः रत्न-पेटिकानुसारी पूर्वावस्थानाशपूर्वकावस्थान्तरप्राप्तिः, उपादानत्वं तु भाव-व्यवस्थाविशेषवतः प्रागवस्थायोगो वेदार्थसंग्रहानुसारेण, इति परिणाम्यु-पादानत्वमुत्तरावस्थानाशपूर्वकपूर्वरूपावस्थेति वक्तव्यम्, तत्र ब्रह्मणः परिणाम्युपादानत्वं यदि भाविकार्यदशायां सूक्ष्मचिदचिदन्तर्यामित्ववि-शिष्टत्वम्, तर्हि स्थूलचिदचितोर्नियामकत्वं यत्किञ्चित्परिणामत्वं विना न सम्भवति ॥

तत्र परिणामत्वं यदि पूर्वावस्थानाशपूर्वकोत्तरावस्थायोगः, तर्हि विकारित्वप्रयोजकं परिणाम्युपादानत्वं सूक्ष्मचिदचितोः, इति परिणामित्वमन्यस्य, उपादानत्वं त्वन्यस्येति फलति ॥

तत्र ब्रह्मणोऽन्तर्यमनमेवोपादानत्वम्, न तु नियम्यावस्थेति न मुख्य-मुपादानत्वम्; उपादानतानवच्छेदकत्वात् । न च सद्वारकमुपादानत्वं मुख्योपादानत्वं व्रीह्यादौ परमापूर्वोपकारकत्वमिव, आरुण्यादेर्द्रव्यपरिच्छेद-विधया क्रयसाधनत्वमिव वा । तत्र द्वार्यङ्गम्, द्वारमङ्गि प्रधानम् । अत्र तु ब्रह्म प्रधानम्, द्वारं तु गुणः, इति विपरीतं सद्वारकमुपादानत्वम् ॥

वस्तुतस्तु ब्रह्मणो न विवर्तोपादानत्वमप्रमाणिकम्; सद्विद्याया अध्या-रोपापवादविधया प्रवृत्ताया ब्रह्मणो विवर्तोपादानत्वं विनाऽनुपपत्तेरित्या-वेदितम् ॥

### "आनन्दादयः प्रधानस्ये"तिन्यायस्य निर्विशेषब्रह्म- विषयकत्वम्

आनन्दमयाधिकरणं तु विवर्तवादिनामेवानुकूलम्, न परिणामवा-दिनाम् । तत्र "आनन्दादयः प्रधानस्ये"ति न्यायोपसंहारः--ब्रह्मणः सदा-द्येकैकस्वरूपमात्रश्रवणैः सर्वेषां स्वरूपाणामुपसंहारः कर्तव्य इत्यभिप्राये-णैव, इति न तत्रोपसनाचर्चाऽपि ॥

### "आनन्दादयः प्रधानस्ये"ति भाष्ये धर्माणामुपसंहारोऽनाद्यविद्या- कल्पितसदादिधर्मभेदपरो निर्विशेषवादे न व्याहन्यते

तत्र "ब्रह्मणो धर्माः सर्वे सर्वत्र प्रतिपत्तव्याः" । कस्मात्? सर्वत्र हि प्रधानं विशेष्यं ब्रह्म, तस्मात् सार्वत्रिकत्वं "ब्रह्मधर्माणामि"ति भगवत्पाद-

तत्र "सदेवे"ति वाक्यघटकेन सता प्रधानपरिग्रहे तस्य परिणामित्वं यद्यपि संभवति, तथापि सर्वज्ञत्वेन निमित्तत्वं न सम्भवति, इति ब्रह्मपरिग्रहहेतुरुभयमपि सम्भवतीति कृत्वैव प्रधानपरत्वनिरसनमत्र। इदं तु श्रीभाष्यस्यापि सम्प्रतिपन्नम् ॥

इयान् विशेषः—अद्वैतमते ब्रह्मण एव साक्षाद् मुख्यमुपादानत्वमपि सर्वज्ञत्वमिवाबाधम्, श्रीभाष्यमते तु सद्द्वारकमेवोपादानत्वम्, तदपि तु परिभाषिकं मुख्यमेवेति तत्त्वसुधा। परिणामित्वं तु साक्षात् विशेषणयोः सूक्ष्मचिदचितोरेव; मुख्यं लक्ष्यमत्र ब्रह्मणोऽधिष्ठानत्वेन निर्विशेषत्वमात्रम्, इति ब्रह्मणः सर्वज्ञत्वसाधनेनैव पर्याप्तम्। उपादानत्वसध्रीचीनस्याप्यत्रा लक्ष्यत्वे, तस्य साङ्ख्यैरपि स्वीकारात्, शास्त्रयोनित्वसूत्रेणैव तत्सर्वज्ञत्वस्यापि दृढीकरणाद् व्यर्थमिदमधिकरणम् ॥

### शास्त्रयोनित्वप्रथमवर्णकस्य सर्वज्ञत्वदृढीकरणार्थत्वस्याद्वैतमते नानुपयोगः

एतेन—'शास्त्रयोनित्वाधिकरण'गतं प्रथमं वर्णकमपि—व्याख्यातम्। तेन हि सर्वज्ञत्वमेव दृढीक्रियते निमित्तत्वसमन्वयार्थम्। तत्र विवक्षितमनुमानम्—ब्रह्म, सर्वज्ञम्, सर्वज्ञकल्पवेदकर्तृत्वात्, यो यत्कर्ता, स तदधिकज्ञानवान्, यथा पाणिन्यादिरिति, न तु ऋग्वेदाधिकम्, स्वविषयादधिकज्ञानवदुपादानकमिति। तत्र प्रथमयोजनायां स्वविषयाधिकज्ञानवत्कर्तृकत्वमेव साध्यम्, न तु जगदुपादानत्वम्। अत एव "जगत्कारणत्वमुखेनाक्षिप्तं सर्वज्ञत्वं दृढीकुर्वन्नाह—शास्त्रयोनित्वादि"ति शास्त्रयोनित्वाधिकरणप्रथमवर्णकप्रयोजनतयाऽवतारणं भाष्ये। न चैतावता वेदपौरुषेयत्वापातः; अर्थज्ञानपूर्वकं पूर्वपूर्वानुपूर्व्यपेक्षोच्चारणविषयक्रमकत्वरूपस्य पौरुषेयत्वस्यानिष्टत्वात्। तच्च सर्वज्ञत्वं कारणस्य सविशेषस्यैवेत्युक्तमेव। सर्वथा तु न केवलं तृतीयसूत्रप्रथमवर्णकेन, किन्तु जन्मादिसूत्रेणाप्यभिन्ननिमित्तोपादानतापरेण सर्वज्ञत्वस्य साधनात् श्रीभाष्यमत एवेक्षत्यधिकरणं वृथा। उपादानत्वस्याप्यत्र विवक्षायां तु तस्य सद्द्वारकस्यैवात्र साधनात् द्वारोपादानत्वस्य साङ्ख्यैरपि स्वीकारेण तन्निरसनायोगादपि तदधिकरणवैयर्थ्यं तु दूषणान्तरम्। 'न विलक्षणत्वाधिकरणा'दिसामञ्जस्याभावस्तु पूर्वमेव समर्थितः, इति प्रकृते सूत्रे निर्विशेषोपादानकारणतावाद एव समर्थित इति कृत्वा दूषणोपन्यासाः सर्वेऽप्यनुक्तोपालम्भनान्येव ॥

### श्रीभाष्यमते ब्रह्मणः सद्वारकाद्वारकोभयविधोपादानत्वा-योगः, अद्वैतमते त्वद्वारकोपादानत्वसंभवश्च

तत्र ब्रह्मणः परिणामिकारणत्वं बाधितम्। तत्र परिणामपदार्थः रत्न-पेटिकानुसारी पूर्वावस्थानाशपूर्वकावस्थान्तरप्राप्तिः, उपादानत्वं तु भाव-ऽव्यवस्थाविशेषवतः प्रागवस्थायोगो वेदार्थसंग्रहानुसारेण, इति परिणाम्यु-पादानत्वमुत्तरावस्थानाशपूर्वकपूर्वरूपावस्थेति वक्तव्यम्, तत्र ब्रह्मणः परिणाम्युपादानत्वं यदि भाविकार्यदशायां सूक्ष्मचिदचिदन्तर्यामित्ववि-शिष्टत्वम्, तर्हि स्थूलचिदचितोर्नियामकत्वं यत्किञ्चित्परिणामत्वं विना न सम्भवति ॥

तत्र परिणामत्वं यदि पूर्वावस्थानाशपूर्वकोत्तरावस्थायोगः, तर्हि विका-रित्वप्रयोजकं परिणाम्युपादानत्वं सूक्ष्मचिदचितोः, इति परिणामित्वमन्यस्य, उपादानत्वं त्वन्यस्येति फलति ॥

तत्र ब्रह्मणोऽन्तर्यमनमेवोपादानत्वम्, न तु नियम्यावस्थेति न मुख्य-मुपादानत्वम्; उपादानतानवच्छेदकत्वात्। न च सद्वारकमुपादानत्वं मुख्योपादानत्वं व्रीह्यादौ परमापूर्वोपकारकत्वमिव, आरुण्यादेर्द्रव्यपरिच्छेद-विधया क्रयसाधनत्वमिव वा। तत्र द्वार्यङ्गम्, द्वारमङ्गि प्रधानम्। अत्र तु ब्रह्म प्रधानम्, द्वारं तु गुणः, इति विपरीतं सद्वारकमुपादानत्वम् ॥

वस्तुतस्तु ब्रह्मणो न विवर्तोपादानत्वमप्रमाणिकम्; सद्विद्याया अध्या-रोपापवादविधया प्रवृत्ताया ब्रह्मणो विवर्तोपादानत्वं विनाऽनुपपत्तेरित्या-वेदितम् ॥

### "आनन्दादयः प्रधानस्ये"तिन्यायस्य निर्विशेषब्रह्म-विषयकत्वम्

आनन्दमयाधिकरणं तु विवर्तवादिनामेवानुकूलम्, न परिणामवा-दिनाम्। तत्र "आनन्दादयः प्रधानस्ये"ति न्यायोपसंहारः—ब्रह्मणः सदा-द्येकैकस्वरूपमात्रश्रवणैः सर्वेषां स्वरूपाणामुपसंहारः कर्तव्य इत्यभिप्रायै-णैव, इति न तत्रोपसनाचर्चाऽपि ॥

### "आनन्दादयः प्रधानस्ये"ति भाष्ये धर्माणामुपसंहारोऽनाद्यविद्या-कल्पितसदादिधर्मभेदपरो निर्विशेषवादे न व्याहन्यते

तत्र "ब्रह्मणो धर्माः सर्वे सर्वत्र प्रतिपत्तव्याः"। कस्मात्? सर्वत्र हि प्रधानं विशेष्यं ब्रह्म, तस्मात् सार्वत्रिकत्वं "ब्रह्मधर्माणामि"ति भगवत्पाद-

भाष्यं त्वनाद्यविद्याकल्पितसदादिभेदधर्माणां सर्वत्रोपसंहारपरम्। तेन चाखण्डार्थत्वमानन्दादिवाक्यानामावृतानावृतरूपभेदशून्यपरत्वं तत्तत्कल्पितभेदशून्यत्वेनेति फलति; अन्यथा सर्वेषां व्यवहारदशायामविद्याकल्पितानामनुपसंहारेऽनुपसंहृतात्मना ब्रह्माऽऽवृतमेवेत्यापत्त्याऽऽवृतानावृतभेदशून्याखण्डार्थत्वम् "आनन्दो ब्रह्मेति व्यजानादि"त्यादीनां न स्यात्, तेन चाखण्डार्थत्वं सिध्यति। तत्र तत्तद्गुणोपसंहारी निर्गुणः' अद्वितीयमिति वाक्यापेक्षितनिषेध्यसमर्पकतया, इत्यखण्डार्थत्वनिर्वाहः॥

तत्र यावदखण्डाकारसाक्षात्कारमनाद्यविद्याकल्पितत्वादनादीनां धर्मत्वव्यपदेशमात्रम्, न तावता सविशेषमेव ब्रह्म, न निर्विशेषम्। आनन्दमयाधिकरणपूर्वाधिकरण ईश्वरेक्षणादिगुणाम्नानमपि यावदखण्डाकारसाक्षात्कारमविद्या-तत्प्रयुक्तधर्माणामनुवर्तमानत्वात्, सगुणस्यैव कारणत्वाच्च न व्याहतम्॥

### ब्रह्ममीमांसायाः सगुणपरत्वं क्वचन न विरुद्धम्

तत्र सन्दिग्धानि कानिचन निर्गुणपराणि, सगुणपराणि च सङ्गतिविशेषमपेक्ष्य निबद्धानि, इति नात्रोपक्रमोपसंहारन्यायः॥

### जन्माद्याधिकरणाद्यनन्दमयाधिकरणान्तस्य सच्चिदानन्दब्रह्मस्वरूपस्य संग्रहात्मकजिज्ञासा, ततो विस्तृता ब्रह्मजिज्ञा प्रथमाध्याय इति व्यवस्था

वस्तुतस्तु—जन्माद्यधिकरणम्, शास्त्रयोनित्वाधिकरणं च सच्चिदंशपरवाक्यमधिकृत्य प्रवृत्तम्; सच्चिदात्मना ज्ञायमानस्यैव कारणत्वात्, तटस्थलक्षणविधया कारणवाक्यान्यावृतावस्थामादाय हि प्रवृत्तानि, इति तस्यैवेक्षत्यधिकरणेनापि स्थूणानिखननन्यायेनोपसंहारः॥

ततस्तु "आनन्दो ब्रह्मेति व्यजानादि"ति विषयवाक्यमधिकृत्य संविदंशपरवाक्यानामप्युपसंहारेणाखण्डस्वरूपं बोधयितुमानन्दमयाधिकरणम्, इति "जन्माद्यस्य यतः" इत्यारभ्य, आनन्दमयाधिकरणान्ता सच्चिदानन्दात्माखण्डस्वरूपनिरूपणपरा संग्रहात्मिका ब्रह्ममीमांसा, तेन च जिज्ञास्यत्वेन प्रतिज्ञातं ब्रह्मस्वरूपमप्यखण्डं ब्रह्मैवेति फलति॥

अत एव ब्रह्मपदं प्राधान्येन निर्विशेषपरम्, इतोऽमुमेव क्रममनुसृत्य "अन्तस्तद्धर्मादि"त्यारभ्य "ज्योतिश्चरणादि"त्यन्तमीक्षत्यधिकरणान्त-

प्रतिपाद्यार्थसंकलनम् , "प्राणस्तथानुगमादि"त्यनेन "शास्त्रदृष्ट्या तूपदेशो वामदेववदि"ति न्यायमप्यनुसन्धाय "अहं ब्रह्मास्मि" "तत्त्वमसी" ति महावाक्यार्थोपसंहारः ॥

### ब्रह्ममीमांसाया उपक्रम-परामर्शोपसंहारा अपि निर्विशेषवादमेवोपबृंहयन्ति

अयमत्र निष्कर्षः—प्रथमाध्यायप्रथमपाद एकादशाधिकरणानि । तत्र प्रथमाधिकरणं निर्विशेषब्रह्मपरम् , षष्ठं मध्यममानन्दमयाधिकरणं निर्विशेषब्रह्मपरम् , अन्तिममिन्द्रप्रतर्दनाधिकरणं निर्विशेषनिरूपणपरम् । एवमेव प्रथमाध्यायद्वितीयपादादावपि, इति सूत्राणाम् , अधिकरणानां चोपक्रमपरामर्शोपसंहारा अद्वैतवादमेवोपबृंहयन्ति । अधिकं भाष्यप्रदीपतोऽधिगन्तव्यम् ॥

### "गौणश्चेन्नात्मशब्दादि"त्यत्रात्मपदमपि ब्रह्ममीमांसाया निर्विशेषवादस्य समर्थकम्

तत्रेक्षत्यधिकरणेऽपि "गौणश्चेन्नाऽऽत्मशब्दादि"त्यत्रात्मपदं स्वरूपपरम्, न तु चेतनपरम् । तच्च "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्ये"ति जीवपदात् पृथगात्मपदाम्नानात् सत्पदार्थस्येक्षितुश्चेतनस्य स्वरूपं जीवात्मानं बोधयति । तत्तु जीवस्यौपाधिकस्य निर्गलितोपाधिदशामाश्रित्य कारणात्मत्वं बोधयत् प्रधानस्वरूपत्वाभावात् जीवस्य प्रधाननिरासे समर्थम् , इति तत्रात्मपदं निर्विशेषपर्यवसानं सद्विद्यायाः सूचयति ॥

### आनन्दमयाधिकरणस्य पुच्छब्रह्मवाद एव स्वारस्यम्

यथा च "भेदव्यपदेशाच्चे" त्यादिसूत्राणि पुच्छब्रह्मवादमेव बोधयन्ति, तथा व्यक्तं न्यायरत्नामण्यादौ । तत्राद्वैतमते ब्रह्मशब्दस्यैव साक्षादभ्यासात् पुच्छब्रह्मवाद एव स्वरसः, श्रीभाष्यसिद्धान्ते तु--आनन्दमयः, परमात्मा, निरतिशयदशाशिरस्काभ्यस्यमानानन्दवत्त्वादिति हेतुसमर्पणपरमभ्यासादिति पदम् । इदं चाकामहतश्रोत्रिये व्यभिचारि; "स एको ब्रह्मण आनन्दः" इत्यस्यानन्तरमपि हि स वाक्यशेष आम्नायते ॥

### गुणोपसंहारः सर्वेषु कारणवाक्येषु, अन्यत्र च ब्रह्ममीमांसायामखण्डार्थत्वोपपादनार्थः

अद्वैतमते त्वानन्दमयपदं भृगुवल्ल्या आनन्दवल्ल्याश्चोभयोरपि तात्पर्यविवेचनार्थमानन्दमयाधिकरणे । तत्र यद्यपि "ब्रह्मणो धर्माः सर्वे

सर्वत्र प्रतिपत्तव्याः; कस्मात्? सर्वत्र हि प्रधानं विशेष्यं ब्रह्म, तस्मात् सार्वत्रिकत्वं ब्रह्मधर्माणाम्" इति भगवत्पादभाष्यगतमानन्दाधिकरणवाक्यमपि सविशेषपरमिति प्रतीयते; तथाप्यत्र ब्रह्मधर्मत्वं सत्त्व-चित्त्वादीनां सर्वेषां धर्माणामेकत्र यावदुपसंहारमखण्डात्मना भानासम्भवात् तेषामविद्याकल्पितत्वेन धर्मत्वमिव, सर्वेषामेकत्रोपसंहारे त्वावृताकारः कोऽपि न स्यात्, इत्यखण्डाकारज्ञानं भवति। अतः सर्वेषां कल्पितानां धर्माणामुपसंहार आवृतानावृतरूपभेदनिवर्तकं तत्त्वज्ञानमुदेतीति सूचनार्थमेव सर्वेषां धर्माणामेकत्रोपसंहारः॥

अत एव "सदेव सोम्येदमि"त्यादौ केवलसदाद्यात्मजा सद्वितीयत्वं प्रथमवाक्ये, सदित्यस्यानुषङ्गेण "एकमेवाद्वितीयमि" ति वाक्यान्तरे सता साकमानन्दादिरूपताया अपि विवक्षणादद्वितीयत्वम्, इत्युपादानत्वं सदात्मतामात्रेण, निर्विशेषता त्वखण्डात्मनेति फलति; अन्यथा तत्तद्वाक्ये गुणान्तरानुपसंहारेण वाक्यार्थे विवक्षिते, आवृतानावृतरूपभेदशून्यस्वरूपं न सिध्यति॥

तत्र "जन्माद्यस्य यतः" "शास्त्रयोनित्वात्" "तत्तु समन्वयात्" "ईक्षतेर्नाशब्दम्" "आनन्दमयोऽभ्यासादि" ति पञ्चाधिकरणानि ब्रह्ममीमांसायाः संग्रहः, 'अन्तस्तद्धर्मादि" त्यारभ्य कारणतामुखेन "जन्माद्यस्य यतः" इत्यधिकरणार्थस्य कोष्ठशोधनिकान्यायेन, "प्राणस्तथाऽनुगमात्" इत्यनेन तु निर्विशेषोपसंहारः॥

अयं भावः—"अथातो ब्रह्मजिज्ञासे"ति "तद्विजिज्ञासस्व तद् ब्रह्मे" ति प्रस्तुतम्, सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिते"ति कारणविधयोपक्रान्तस्य, अखण्डात्मनोपसंहृतस्यैव संग्रहो "जन्माद्यस्य यतः" इत्युपक्रान्तस्य "आनन्दमयोऽभ्यासादि" त्यन्तेनोपसंहारः, इति श्रुतसूत्रयोरुपक्रमोपसंहारौ॥

तेन च जिज्ञास्यतया प्रतिज्ञातं ब्रह्मान्नमयादिमुखेनोपदिष्टं निर्विशेषस्वरूपमेव। तत्र कारणवाक्येन स्थूलारुन्धतीन्यायेन तस्यैव ब्रह्मवल्ल्यां भृगुवल्ल्यां चोपदेशात् तत्र कारणवाक्यैरिव सद्रूपस्य, शास्त्रयोनित्वसूत्रेण विशिष्य सर्वज्ञत्वस्य प्रथमवर्णकेन साधनात्, सर्वज्ञत्वस्य सर्वप्रपञ्चतादात्म्यापन्नचिद्रूपत्वपक्षस्यापि सिद्धान्तलेशसंग्रहेण स्थापनात् आनन्दमयाधिकरणेनानन्दरूपत्वस्याप्युपपादनात्, सर्वस्य सर्वत्रा"नन्दादयः प्रधा-

नस्ये"ति न्यायेन निर्णयाच्चाखण्डब्रह्मसिद्धिः। सर्वं चेदमा"नन्दादयःप्रधानस्ये"ति न्यायं विना न सिध्यति ॥

अत्रा"नन्दादयः प्रधानस्ये"ति सूत्रे प्रधानपदप्रयोगेण ज्ञेयप्रकरणमेवात्रानुसन्धीयते। तत्रैव हि विशेष्यभावादिव्यपदेशः। अत एव भाष्ये 'प्रधानं विशेष्यं ब्रह्मे'ति व्याख्यातम् ॥

तत्र तत्रोपासनाप्रकारमात्रे विवक्षिते सर्वेषूपासनेषु ब्रह्मणः स्वतः प्राधान्यात् सर्वेषां गुणानां सर्वत्रोपसंहरापत्तिः, इत्युपासनाभेदस्तत्र तत्र गुणोपसंहारपादेन व्यवस्थापितोऽसङ्गतः स्यात्। अत एव सद्विद्या-परविद्याऽऽनन्दमयविद्यादयः सर्वेऽप्येकार्थाः; सविशेषमुखेन निर्विशेषस्योपस्थापनात् ॥

"ब्रह्मणो धर्माः सर्वे सर्वत्र प्रतिपत्तव्याः" इत्युपसंहरणयोग्यानां ब्रह्मधर्मत्वमिति व्यपदेशस्तु "आनन्दादयः प्रधानस्य" इति सूत्रे भगवत्पादानामवान्तरवाक्यदशायां सदाद्येकपदबोध्यत्वदशायामनाद्यविद्याप्रयुक्तानादिसदादिभेदस्य, तद्धर्माणां चात्राबाधितावस्थामादाय, न त्वखण्डाकारवृत्तिदशामाश्रित्येति न विरोधः ॥

तत्र सद्विद्यादीनामुपक्रमोपसंहारादितात्पर्यलिङ्गवशेनाखण्डस्वरूपपर्यवसायित्वं ब्रह्ममीमांसायामपि पूर्वोक्तविधया ब्रह्मपदेन निर्विशेषस्योपक्रमः, आनन्दमयाधिकरणेन तस्यैवोपसंहारश्च। अत एव जन्माद्यधिकरणे भाष्ये कारणत्वस्याऽऽपाततो लक्षणत्वेऽपि तद्विनिर्मुक्तस्वरूपमात्रनिर्णय एवास्य लक्ष्यम्, इत्यन्ते"नित्य-शुद्ध-मुक्तस्वभावस्वरूपविषयाण्यपि वाक्यान्युदाहर्तव्यानी"ति निर्णीतम्, इति संग्रहात्मकब्रह्ममिमांसाया उपक्रमोपसंहारादिकं सूत्राणामद्वैतवाद एव स्वारस्यमिति ज्ञायते। सर्वं चेदं शारीरकभाष्यमीमांसाभाष्यवार्तिके व्यक्तीकृतम् ॥

### तत्र तत्र सगुणविचारो न निर्गुणवादस्य विरोधी, न वा तत्र तत्र भेदव्यपदेशः

सति चैवमानन्दमयाधिरणानन्तरम् "अन्तस्तद्धर्मोपदेशादिति" सगुणब्रह्मप्रतिपादनं न विवर्तवादस्य प्रतिकूलम्, प्रत्युतानुकूलमेव। न हि निर्विशेषवादः सगुणवादम्, तदुपासनप्रामाणिकतां वा सर्वथा निराचष्टे, किन्तु निर्विशेषसाक्षात्कारोपकारकममात्रं मन्यते। न च जीव-ब्रह्मैक्य-

रूपं निर्विशेषं व्यावहारिकेण जीवेनाऽन्येन वा न भिन्नम्, नापि जीवो व्यावहारिक ईश्वरो वा परस्परं निर्विशेषेण, तथा, इति "भेदव्यपदेशाच्चे" त्यादिभेदव्यपदेशपराणि सूत्राण्यपि नाद्वैतवादस्य परिपन्थीनि, इति— "भेदव्यपदेशाच्चे"ति भेदव्यपदेशं सिद्धान्तविरुद्धं हेतुं वदता सूत्रकारेणै-क्यव्यपदेशस्य पूर्वपक्षहेतुत्वमवगम्यत इति श्रुतप्रकाशिकाऽपि—परास्ता ॥

अतोऽत्र ब्रह्मण्यभ्यास आनन्दपदस्य ब्रह्मपर्यायस्यैव, नानन्दमय-पर्यायस्य। अत एव भृगुवल्ल्यां प्रक्रान्तं ब्रह्म "आनन्दो ब्रह्मेति व्यजा-नात्"इत्यानन्दपदेनैवोपदिश्य समाप्यते ॥

तत्रानन्दपदेनानन्दमयविवक्षायां किमिति भृगुवल्ल्यां पञ्चस्वपि पर्यायेषु मयटः परित्यागः? कुतो वाऽन्नमयादिपर्यायेष्वपि "अन्नाद्वै प्रजाः" इत्यादौ भृगुवल्ल्यामवतारयिष्यमाणस्यान्नमयप्रकृतेरन्नस्यैव श्लोके प्रशंसा ॥

अतो विधिपुनःश्रवणमात्रमभ्यासस्तात्पर्यग्राहकलिङ्गमेवात्र विवक्ष्यते, तथा च विधेयाविधेयभावेन ज्ञानोपासनयोर्भेदः, विधेयत्वेऽपि प्रमाण-तन्त्रत्व-पुरुषतन्त्रत्वनिबन्धनो ज्ञानोपासनयोर्भेदः, तथाऽऽकरे व्यक्तम्। तथा च भूषणी नोपासनं न ज्ञानमेवेति वदति, किन्तु तत् प्रमाणतन्त्रं न ज्ञानम्, यदेव श्रोतव्यादिवाक्यार्थ इति व्यक्तमविधेयज्ञानवादसमर्थनाव-सरे। अधिकं तत्रैव द्रष्टव्यम् ॥

### उपासनाया अपि पुरुषतन्त्रज्ञानत्वमिति भामतीसिद्धान्तः

तत्र ज्ञानं न क्रियेति न भूषणीवादः कुत्रापि। व्यक्तं चैतद् भाम-त्याम्—"ननु ज्ञानं नाम मानसी क्रिया, न; विलक्षणत्वादि"त्यत्र—'सत्यं ज्ञानं मानसी क्रिया, परन्तु न पुरुषतन्त्रक्रिया, किन्तु प्रमाणतन्त्रे'त्यादिना। नारायणसरस्वतीवार्तिकस्याप्ययमेवाशयः। मधुसूदनसरस्वत्या उपासनस्य ज्ञानत्वमेव नास्तीति वचनस्य पुरुषतन्त्रस्य प्रमाणतन्त्रत्वं नास्तीत्येवाशयः। तत्रोपासनाया ज्ञानत्वं नास्तीति तु प्रस्थानानन्तरम्, फलतस्तु न विशेषः ॥

### ध्यानत्वं वस्तुतन्त्रज्ञानस्याप्यभ्यस्यमानस्य। अतो ब्रह्मवेदनं पुरुषतन्त्रमुपासनम्, तेन च निर्भेदब्रह्मभावोऽत्र फलम्

"विज्ञाय प्रज्ञां कुर्वीते"त्यत्र तु 'विज्ञाये'ति प्रमाणतन्त्रपरोक्षज्ञाना-भ्यासो भावनातिशयापरपर्यायः, अपरोक्षो वाऽभ्यस्यमानः श्रवणादिनिब-न्धनः। स्मृतित्वं तु तस्य समानविषयकज्ञानान्तरमूलकत्वमात्रेण, इति श्रवणजन्यं ज्ञानं धारावाहिकमेव ध्यानपदवाच्यं स्मृतिपदेनाप्युच्यते,

तदपि प्रमाणजन्यमात्रस्याप्युपासनस्यैवानुष्ठाननिरपेक्षस्य। अतो "ब्रह्मविदाप्नोति" इत्यत्र वेदनं नोपासनम्, किन्तु श्रोतव्यादिवाक्याधीनसाक्षात्कार एव। इदमेवाभिप्रेत्य ब्रह्मसिद्धिः—"भावनाविशेषाद्ध्यननुभूतमप्यनुभवमापद्यते" इति। अनेन हि शब्दजन्यपरोक्षज्ञानाभ्यासेनाप्यपरोक्षसाक्षात्कारो द्रष्टव्यपदोपात्तो न विरुध्यत इत्येवोच्यते, न तु विज्ञानं प्रज्ञानं वोपासनमेवेति। सर्वथा तु ब्रह्मवल्ल्यां भृगुवल्ल्यां च नानुष्ठानापेक्षमुपासनं ब्रह्मविषयकं मोक्षसाधनं दृश्यते। "यदा ह्येवैष एतस्मिन्ननात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते" इत्यत्र प्रतिष्ठापदं हि तदात्मना साक्षात्कारमेव बोधयति, न तूपासनं भेदापेक्षम्॥

अत एव "उदरमन्तरं कुरुतेऽथ तस्य भयं भवति" इति भेदानुसन्धानस्य निषेधः। तत्र प्रतिष्ठा = तन्निष्ठैव। निष्ठा च तदात्मनाऽवस्थितिः = तद्भावो वा "अवस्थितेरिति काशकृत्स्नः" इति सूत्रोपात्तस्तदात्मतैव। तत्र "तन्निष्ठस्य मोक्षोपदेशादि" ति सूत्रमादितः क्रमशः सप्तमम्, "अवस्थितेरि" ति सूत्रं त्वन्ततो व्युत्क्रमेण सप्तमम्, तेन चोभयोरेकार्थताऽवसीयते, इति नात्र प्रतिष्ठोपासनं नाम॥

जीव-ब्रह्मभेदज्ञानं मोक्षसाधनमिति श्रुति-स्मृति-पुराणादि-सूत्रादिविरुद्धमिति तत्र तत्र प्रकरणे व्यक्तीकरिष्यते, इत्यलं प्रासङ्गिकेन विचारेण॥

### आनन्दमयब्रह्मतावादे पञ्चकोशोपनिषदादिविरोधः

"आनन्दमयोऽभ्यासादि" ति तत्पर्यायपरं तत्पर्यायघटकपुच्छब्रह्मवाक्यमेव। सन्दिग्धं खलु पक्षः। न चानन्दमये सन्देहः। तत्रानन्दमयब्रह्मतायां चत्वारः कोशा इति कोशचतुष्टयवादः, पुच्छब्रह्मप्राधान्ये तु पञ्चकोशवादः = पञ्च कोशाः, न तु चत्वार इति बहुषूपनिषत्सु व्यक्तम्; विशिष्य च पञ्चकोशोपनिषदि, इत्यानन्दमयब्रह्मतावादो बहुश्रुतिविरुद्धतया हेयः। अत आनन्दमयो न पक्षः, किन्तु पुच्छं ब्रह्मैव। तदेव तु सर्वान्तरमपि। तदेव हि "तस्यैष एव शारीर आत्मा" इति वाक्यस्य विषयः, अन्यथा तद्वाक्यमनर्थकं स्यात्। चिन्मात्रप्रमाणावेद्यत्वविषयमादाय चर्वितमेव चर्वयति तत्त्वसुधा। सर्वं चेदं विशदीकरिष्यते॥

किं बहुना? आनन्दमयाधिकरणमधिकृत्य वेदान्तरत्नमणिद्वीतीयभागे, अत्रैव प्रकरणे भूषणसमालोचनप्रसङ्गे च बहु परीक्षितम्। तत्त्वसुधा हि

प्रायेण भूषणमेव शब्दान्तरेणानुवदति; तथापि कांश्चन विषयानत्रोल्लेखितान् परीक्ष्येमं विषयं समापयितुमिष्यते ॥

### शब्दप्रामाण्यं तात्पर्यवशेनैव, तच्च निर्विशेषे जागर्ति

तत्र प्रासङ्गिकानपि विषयान् द्वित्रान् परीक्ष्यानन्दमयाधिकरणमेवानुकृष्य किञ्चित् परीक्ष्यते । तत्र तत्त्वसुधा वदति—निर्विशेषविषयकबोधः शब्दादपि तात्पर्यलिङ्गवशेनापि न भवति—इति । तत्र दर्शनान्तरसम्मतमेव शास्त्रेण बोधनीयमिति न नियमः; 'आम्नायस्य गतिं वक्तुं प्रभवामः, नाम्नायं पर्यनुयोक्तुमि'ति हि न्यायः । शब्दार्थनिर्णये तात्पर्यग्राहकाणि लिङ्गानि दूरीकृत्य वाक्यार्थवर्णनं कस्य वा शोभेत ? चिदचिद्विशिष्टब्रह्मण एव कार्य-कारणभावो न कस्यापि दर्शनस्य संमतः । शब्देन प्रमाणेन तात्पर्यलिङ्गोपेतेन सिद्धोऽप्यर्थः शशशृङ्गायमाण इति कथामात्रमेव । विवेचितं हि पूर्वं शक्त्या, लक्षणया वा, अभिहितान्वयवादेन वा वेदान्तानां तात्पर्यवशाद् वेदान्तमुख्यतात्पर्यविषयो निर्विशेषं संविन्मात्रमिति ॥

### अभिहितान्वयवादस्वरूपनिष्कर्षः

यत्तु—तत्त्वसुधाऽभिहितान्वयवादस्वरूपमेव शतभूषणी न जानातीति लिखति । तत्र अभिहितान्वयवादः पदैरभिहितानामर्थानामेव वाक्यार्थबोधकत्वम् , न तु पदानामिति तत्र तत्र भूषणी विशदयति ॥

"न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेषु पदानि नः ।"

इति तु नाभिहितान्वयवादः । तत्त्वसुधाऽपि—"तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वादि"ति पदार्थस्यैव वाक्यार्थे निमित्तत्वमिति पदार्थप्रामाण्यवादं स्वयमेव संगृह्णातिः ॥

"अशाब्दे चापि वाक्यार्थे न पदार्थेष्वशब्दता ॥"

इति हि परम्परया शब्दस्य वाक्यार्थे प्रामाण्यम् , न साक्षादित्यभिहितान्वयवाद एव । समर्थितश्चायमेवाशयः शतभूषण्या अप्यभिहितान्वयमधिकृत्य, इत्यलमनेन विचारेण । अभिहितान्वयवादस्तु प्रसिद्ध एव, यत्र पदार्था एव वाक्यार्थे प्रमाणम्, न तु पदानि । तेषामर्थाभिधानमात्रे व्यापारात् । तत्र पदार्थगता शक्तिः स्वरूपसती तात्पर्यवशात् वाक्यार्थमनुभावयतीत्येतावदेवात्र पर्याप्तम् ॥

### ब्रह्मणि निर्विशेषे संकेतवशात् शब्दवाच्यत्वम्

"प्रत्यस्तमितभेदं यत्" इति न शुद्धप्रत्यगात्मविषयम्; तस्याप्रस्तुतत्वात्, चतुर्विधब्रह्मण एवात्र प्रकृतत्वात्, तस्य प्रत्यस्तमितभेदत्वस्य संकोचायोगेन भेदसामान्यनिषेधपरत्वस्यैव युक्तत्वात्, सर्वथा वाच्यस्य तस्य वागगोचरत्वाभावात्, ब्रह्मशब्दसंकेतस्याप्यनपेक्षितत्वाच्च ॥

### भगवच्छब्दवाच्यत्वं सगुणस्य वासुदेवस्य नाद्वैतवादेऽपि विरुद्धम्

तत्र भगवच्छब्दस्य शक्तस्य सगुणवासुदेवपरत्वं तु नाद्वैतिनोऽपि वारयन्ति । सति चैवमत्र प्रसङ्गे ब्रह्मानन्दस्वरूपमात्रम्, नानन्दि ॥

"श्रुतिवाक्योदितं ब्रह्म तद्विष्णोः परमं पदम् ।
तदेव भगवद्वाच्यं स्वरूपं परमात्मनः ॥"

इत्यादिवचनानि नासङ्गतानि । आस्तां तावद् प्रासङ्गिकीयं कथा । तत्र "आनन्दो ब्रह्मेति व्यजानात्" इति जगत्कारणत्वलक्षणं स्थूलारुन्धतीन्यायेन ऽऽनन्द उपसंहृतम्, तत्रैव प्रतिष्ठितं च । अत एव "सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता" इति तटस्थलक्षणस्यानन्दस्वरूपे पर्यवसानमिति ज्ञायते । न चात्र तटस्थलक्षणविधया प्रतिष्ठितस्यानन्दस्य ज्ञातृत्वाऽऽनन्दत्वादिकं धर्म इत्यद्वैतिनः । न वा शुद्धं सधर्मकम् । अतः लघुचन्द्रिकाकृतां शुद्धे न कोऽपि धर्म इति साध्योल्लेखः कथं प्रकृतसिद्धान्त परिपन्थी ?

### सर्वस्य ब्रह्मवल्लीप्रकरणस्याद्वैत एव प्रतिष्ठा

तत्र "ब्रह्मविदाप्नोति परमि"त्यत्र वेदनमुपासनमेवेति कृत्वा ब्रह्मप्राप्त्यादीनां ब्रह्मभावरूपत्वं नास्तीति वर्णनं हि "ब्रह्मविद् ब्रह्मैव भवति" इति ज्ञानमात्रेण गतिनिरपेक्षेण ब्रह्मभावस्योक्तत्वात्, "आनन्दमयमात्मानमुपसंक्रम्ये"ति प्रस्तुतस्यानन्दमयस्य ब्रह्मत्वाभावात्, वेदनस्य पुरुषतन्त्रस्योपासनात्वेऽपि प्रमाणतन्त्रस्योपासनारूपत्वाभावात, "ब्रह्मविद् ब्रह्मैव भवती"त्यनुष्ठानानपेक्षज्ञानमात्रेण ब्रह्मभावस्याम्नातत्वात्, "अत्र ब्रह्म समश्नुते" इति गतिनिरपेक्षं ब्रह्मभावस्य फलस्य श्रवणाच्च सर्वं ब्रह्मवल्लीप्रकरणमद्वैतवाद एवानुगुणमिति ज्ञापयति ॥

अतः "अथातो ब्रह्मजिज्ञासे"ति प्रस्तुतं ब्रह्म सत्य-ज्ञानादिस्वरूपं निर्विशेषं सविन्मात्रमेव:, अधिकं तूत्तरत्र तत्तत्प्रकरणे विवेचयिष्यतेऽवि-

धेयतोपपत्त्यादिप्रकरणेषु, आनन्दमयाधिकरणे, पूर्वोत्तरमीमांसैक्यवादे च। शास्त्रयोनित्वप्रथमवर्णकादिवैयर्थ्यशङ्कायां तु वक्तव्यं सर्वमन्यत्रात्रैव व्यक्तम् ॥

### पूर्वोत्तरमीमांसैक्यवादे शास्त्रयोनित्वप्रथमवर्णकादिवैयर्थ्य-शङ्काया नोत्थितिः

तत्र तत्त्वसुधा—वेदापौरुषेयत्वस्य पूर्वतन्त्रान्तिमाधिकरणेन सिद्धत्वात् पृथक् साधनं नापेक्षितमिति—वदति। तदिदं पूर्वोत्तरमीमांसयोरैक्यवासनामूलकं नोपपद्यते; शास्त्रभेदस्यात्र साधितत्वात्, तदपि स्वयं बादरायणेन सूचनीयमेव; अन्यथाऽपशूद्राधिकरणसूत्रं किमर्थम्? शास्त्रप्रामाण्यमपि "चोदनालक्षणोऽर्थो धर्मः" इत्यनेन समर्थितम्, ब्रह्म च वेदार्थ इति सम्प्रतिपन्नम्, इति वेदार्थस्य धर्मस्य क्रियारूपस्येव ब्रह्मणोऽप्यनुमानादि-प्रमाणान्तरगम्यत्वशङ्काया अभावात् व्यर्थं तदधिकरणं श्रीभाष्यमते, अद्वैतमते तु ब्रह्मजिज्ञासाविषयो ब्रह्म क्रियारूपो धर्म इव साक्षात्, परम्परया वा दध्यादिवन्न चोदनातन्त्रम्; तस्य, तज्ज्ञानस्य वा विध्यविषयत्वादिति सूचनार्थं शास्त्रयोनित्वसूत्रमावश्यकम् ॥

### अद्वैतवादाभिमत सांवृतसत्यत्ववादः सृष्ट्यादेरनुकूलः

यत्तु—शाङ्करमते सांवृतसत्यस्येश्वरसृष्टत्वमेव न सम्भवति—इति, तदिदं सांवृतसत्यत्वं ज्ञाननिवर्त्याज्ञानप्रयुक्तत्वनिबन्धनमज्ञानविषयब्रह्मविवर्तत्वं विना नोपपद्यते, इति तत् सृष्टेरनुकूलम्, न प्रतिकूलम्, बौद्धागम-तुल्यत्वमद्वैतवादस्येति चर्वितचर्वणम्। तत्र व्यावहारिक-पारमार्थिकविभागः शास्त्रमूलकः ॥

### वेदैकगम्यं ब्रह्म वेदस्य स्वरूपतो मिथ्यात्वेऽपि न तदप्रमेयम्, न वा शशशृङ्गायमाणम्

"तस्माद् यन्नास्ति तन्नास्ति यत्त्वस्ति परमार्थतः।
तत्सत्यमन्यद् मिथ्येति न सत्यद्वयकल्पना ॥"

इति त्वद्वैतवादमेव समर्थयति। यतस्तत्रैवैकं ब्रह्मैव सत्यम्, अन्यद् मिथ्येति मन्यते। न च तत्र सत्यद्वयकल्पना; वेदान्तस्य स्वरूपतो व्यावहारिकस्यापि विषयस्याबाधाद् न प्रामाण्यं विरुद्धमिति बहुशः शतभूषण्यादौ सोपपत्तिकमुपपादितम् ॥

सर्वप्रमाणाप्रमाणतात्त्विकत्वं तु प्रमेयबाधनिबन्धनम्। तत्तु ब्रह्मेतर-प्रमाणानाम्। तदपि बाधनिश्चयानन्तरमेव। अतो निर्विशेषपरवेदान्त-वाक्यानां नाप्रामाण्यम्, इति सर्वप्रमाणातात्त्विकत्ववादो नाद्वैतमते, येन निर्विशेषं ब्रह्म शशशृङ्गायमाणं स्यात्॥

तत्र श्रीभाष्यमते सर्वप्रमाणतात्त्विकत्वेऽपि न श्रोत्रं रूपे प्रमाणम्, किन्तु तत्तत्प्रमाणयोग्य एव तत्तत्प्रमाणस्य प्रमाणत्वम्। ब्रह्म त्वभिन्ननि-मित्तोपादानं सूक्ष्मचिदचिद्विशिष्टम्, उपास्यं नानुमानादिगम्यम्, इति शास्त्रयोनित्वसूत्रमनुमानप्रमाणागम्यत्वसूचनार्थम्; अन्यथा धर्मस्याप्य-नुमानगम्यत्ववारणार्थं "चोदनालक्षणोऽर्थो धर्मः" इति सूत्रमित्यापद्येत॥

अद्वैतमते तु निर्विशेषस्य प्रमाणान्तरगम्यत्वशङ्काया अप्यभावात्, किं बहुना? वेदस्यापि चोदनापरस्य तत्राप्रवृत्तेर्वस्तुस्थितिकथनार्थं शास्त्र-योनित्वसूत्रं सार्थकम्। अतो न निर्विशेषे वस्तुनि प्रमाणाभावः, तस्य चतुष्कोटिविनिर्मुक्तत्वं वा। अस्तु, आनन्दमयाधिकरणं प्रस्तुतं परि-त्यज्य परकालमठीयकृतिः कुत्रापि कुत्राप्यन्यत्र बम्भ्रमीति, किमेते-नाऽप्रस्तुतचर्वणेन॥

### आनन्दमयाधिकरणगतं प्राचुर्यं वृत्तिकारमतं भगवत्पादनिरस्तं श्रीभाष्यसिद्धान्तस्य प्रतिकूलम्, अकामहत-श्रोत्रिये व्यभिचारात्

प्रकृतमानन्दमयाधिकरणमधिकृत्य विचारः प्रक्रम्यते। तत्र तत्त्वसुधा "प्राचुर्यादि"तिहेतुमधिकृत्येदं वदति—आनन्दप्रचुरत्वं च ब्रह्मणो मनुष्य-त्वमारभ्योत्तरोत्तरस्मिन् शतगुणितानन्द इत्युक्त्वा ब्रह्मानन्दस्य निर-तिशयत्वावधारणपरं भगवत्पादभाष्यं स्वानुकूलं मन्यते, परन्तु नेदं भाष्यं निर्विशेषब्रह्माधिकृत्य, किन्तु वृत्तिकारमतमभिप्रेत्य, यदेव श्रीभाष्य-स्य, मूलम्, यत्तु भगवत्पादाः—"इदं त्विह वक्तव्यमि" त्यादिना निरस्य-न्ति—आनन्दमयपदं जीवपरमेव, न परमात्मपरमित्यादिनिरूपणेन, इत्यहो भगवत्पादानां पूर्वपक्षं स्वानुकूलं मन्यते तत्त्वसुधा!!!

अत एव अकामहतश्रोत्रियेऽप्यानन्दप्राचुर्यं वर्तते, इति तस्य तत्र व्य-भिचाराद् न ब्रह्मसाधकत्वमिति वर्णितम्॥

तत्र हि-"स एको ब्रह्मण आनन्दः" इत्यस्यानन्तरमेव न "यतो वाचो निवर्तन्ते"इति वाक्यम्, किन्तु तदनन्तरं "श्रोत्रियस्य चाकामहतस्ये"त्य-परमपि मध्य एकं वाक्यं वर्तते। तत्तु तत्त्वसुधा कुतो वा पिदधाति?

तत्र यदि ब्रह्मण आनन्दः प्राजापत्यानन्दशतगुणितानन्दः, तर्हि स एव श्रोत्रियस्याकामहतस्यापि, इति कथं न तत्र व्यभिचारः, यदि तदेव ब्रह्मानन्दमयः ?

परमार्थतस्तु—'स एको ब्रह्मणः' इत्यनन्तरं श्लोको यदि सविशेषब्रह्म-व्यतिरिक्तं निर्विशेषमानन्दस्वरूपमेवाधिकृत्य, "यतो वाचो निवर्तन्ते" इति वाक्यम् ; तर्हि "आनन्दं ब्रह्मणः" इति षष्ठी ह्यभेदे—"आनन्दो ब्रह्मे"ति वचनैकवाक्यतया, इति प्राचुर्यमत्र प्रकृतमकामहतश्रोत्रियसाधारणम् , इति न व्यभिचारः; अन्यथा त्वकामहतश्रोत्रिये व्यभिचारो दुष्परिहरः ॥

अभ्यास-प्राचुर्ययोः सौत्रयोरैक्यं श्रीभाष्यमते भृगुवल्ली-ब्रह्मवल्ल्यो-रन्नमयादिक्रमेणोपदेशवैलक्षण्यं नानन्दमयाब्रह्मत्वगमकम्

तत्राभ्यासपदार्थोऽपि तत्त्वसुधया निरतिशयदशाशिरकाभ्यस्यमाना-नन्दवत्त्वमेव मन्यते, प्राचुर्यशब्दार्थोऽप्यत्र स एव, इति कथं "प्राचुर्यादि"-ति सूत्रं नो वितथम् ॥

एतेन—पूर्वत्र – आनन्दमय इति पक्षवाचकशब्दबलादर्थाभ्यासपरम्, "विकारशब्दान्नेति चेन्ने" ति सूत्रे तु विकारशब्दादित्याक्षेपपरिहाराय "प्राचुर्यादि" त्यत्र प्राचुर्यार्थकशब्दादित्येव, इति प्राचुर्यार्थकमयट्प्रत्यय-युक्तमानन्दमयपदमिति भेदाद् न व्यर्थं द्वितीयं सूत्रमिति—पारस्तम् ; यदि प्रथमसूत्र आनन्दमयपदमर्थपरम् , तर्हि तस्यैव सर्वत्रानुषङ्गादर्थपर-त्वमेव भवितुं युक्तम् , अन्यथा वैरूप्यं स्यात् , आकाशाधिकरणादौ सूत्र-निर्णेयं तत्तत्पदमेव, न त्वर्थपरं किमपि पदम् , इति पक्षभेदकल्पनं न सम्भवति ॥

सर्वथा तु द्वितीयसूत्रे शब्दपरत्वेऽङ्गीकृतेऽपि ब्रह्मपरत्वमेव साध्यं तुल्यवित्तिवेद्यतया, इति फलतोऽर्थगतं प्राचुर्यमेव, इति न तावता वैयर्थ्य-परिहारः । न्यायैक्यपरत्वात् सूत्रद्वयस्य ॥

सर्वथा तु—अभ्यास-प्राचुर्ययोरैक्यं श्रीभाष्यमते दुरपह्नवम् । तत्र पञ्चमपर्यायत्वमानन्दमयानन्दयोर्नैकरूप्यविवक्षया, किन्तु भृगुवल्ल्यां मय-ट्परित्यागेनाऽऽनन्दमयाधिष्ठानपरता, ब्रह्मवल्ल्यां तु तदधिष्ठेयपरतेति ध्येयम् ॥

अत एवानन्दमयस्य न ब्रह्मत्वम् , किन्तु ततोऽतिरिक्तस्य पुच्छब्रह्मण एवेत्यवगम्यते ॥

### श्लोकानां पुच्छवद्विषयकत्वमद्वैतवाद एव, न श्रीभाष्यमते

यत्तु—श्लोकानां पुच्छवद्विषयकत्वम्—इति, तदिदं श्लोकेषु सर्वेषु पुच्छवतोऽन्नमयादेरपि कारणस्याऽन्नादेरेव श्लोकनात्, भृगुवल्ल्यामपि "अन्नं ब्रह्मेति व्यजानात्" इत्यादिक्रमेण तत्तत्प्रकृतेरेव ब्रह्मत्वमिति "वाचारम्भणमि"ति न्यायेन श्लोकनाच्च पुच्छवतो विकारस्य न ब्रह्मत्वम्, किन्तु तत्कारणस्यैवेति तात्पर्यस्य ज्ञापनादद्वैतवादाभिमतपुच्छब्रह्मविषयकत्वमेवाऽऽश्लोक उपबृंहयति। अधिकं तु भूषणपरीक्षाप्रसङ्गे विवेचितम्, इति प्रायेण तदनुकरणमात्रत्वात् तत्त्वसुधायाश्चर्वितचर्वणाद् विरम्यते ॥

### सूत्राणां यथासंभवं सगुण-निर्गुणोभयविषयकत्वम्

तत्र तत्त्वसुधा—सूत्रनिर्णीतार्थोऽवान्तरतात्पर्यविषयो न भवितुमर्हतीति—लिखति, परन्त्ववान्तरतात्पर्यविषयवाक्यविचारपरत्वे सूत्राणामवान्तरतात्पर्यविषयार्थकत्वम्, अन्यथा तु महातात्पर्यविषय एव सूत्रार्थः; अन्यथा वियत्पादादेः, साधनाध्यायादेश्चासाङ्गत्यापत्तेः। न चैवं सति शून्यमपि परमतात्पर्यविषयः स्यात्। यदि तत्र। सूत्रकारैः शून्यमपि निर्णेयमिति कृत्वाऽयं तत्त्वसुधायाः प्रश्नः, उत शून्यवादिनां दृष्ट्या। उभयमपि बाधितम् तत्र शून्यवादोऽप्रामाणिक इति सम्प्रतिपन्नम्; अन्यथा कथं वा सविशेषं ब्रह्मापि प्रामाणिकं स्यात्?

अयमेव न्यायः सर्वत्र। अत्र तत्त्वसुधा परमार्थभूषणोक्तमेव शब्दमात्रपरिवर्तनेन लिखति, इति प्रकरणेऽत्र, अन्यत्र च तदीयाशयनिरसनमेव पर्याप्तम्, यतो भूषणमेव तत्त्वसुधाऽनुकरोति; तथापि पूज्यश्रीपरकालमठाधिपश्रीस्वामिपाददयापूर्णपवित्रदृष्ट्या तत्त्वसुधोक्तरीत्या साऽनुगृहीता, इति तत्र जोसम्भावावलम्बनं महतेऽपराधाय स्यात्, इति संग्रहेण यथासंभवं साऽपि समीक्षिता। प्रायेण सर्वेऽपि विषयाः शतभूषण्यादिषु परमार्थभूषणं प्रधानं लक्ष्यं मत्वाऽत्र च तत्तदवसरे परीक्षिताः। तत्र 'इन्द्रप्राणाधिकरणादौ' शास्त्रदृष्ट्यादिविषये, मनु-वामदेवादीनां परस्परं शरीर-शरीरिभावादौ च भूषणसमालोचनावसर एव वक्तव्यमुपपादितम् ॥

### ब्रह्मसूत्राणामद्वैतस्वारस्यपरीक्षायाः संग्रहः

अयमत्र संग्रहः—"अथातो ब्रह्मजिज्ञासे"त्यत्र सर्वाधिष्ठानं ब्रह्मैव प्राधान्येन प्रस्तुतम्। सर्वाधिष्ठानत्वं च सर्वेषां तत्राध्यारोपेण, तत एव

सर्वं सदात्मकम्। न च सर्वात्मत्वमन्यथा ब्रह्मणः साक्षात् केनाऽपि प्रकारेणोपादानत्वाभावे युज्यते ॥

आनन्दमयाधिकरणं 'स्थूलारुन्धतीन्यायेन प्रथमं कार्यमुखेन, ततः कारणमुखेन च ब्रह्मस्वरूपं निश्चेतुं प्रवृत्तम्; अनाद्यविद्याकल्पितसदादिभेदस्य, तत्प्रयोजकस्याज्ञानस्य च निवर्तकतत्त्वज्ञानविषयमावृतानावृतसदादिभेदशून्यमखण्डमेव विचारपरकाष्ठाविषयं व्यवस्थापयति ॥

आनन्दमयविद्यापरीक्षासंग्रहः

अत एव "असन्नेव स भवती"ति ब्रह्मविषयक एव श्लोकः, नाऽऽनन्दमयविषयकः। अन्नमयादिपर्याये हि श्लोको नाऽन्नमयं स्वरूपेण स्तौति, किन्तु तत्कारणमुखेन—"अन्नाद्वै प्रजाः" "प्राणं देवा अनुप्राणन्ति" "विज्ञानं यज्ञं तनुते" इत्यादिरूपेण ॥

अयमेव न्यायो ह्यानन्दमयपर्यायेऽपि, तर्हि आनन्दमयस्यापि प्रकृतिस्ततोऽतिरिक्तमेव ब्रह्म "असन्नेवे"ति श्लोकयतीति वक्तव्यम्। तच्च पुच्छमधिष्ठानं ब्रह्मैव। अत एव प्रतिपर्यायं प्रतिष्ठास्थानमेव पुच्छपदेनाम्नायते। यथा च सर्वा ब्रह्मवल्ली, भृगुवल्ली चाद्वैतवादे एव सुसङ्गता, तथा व्यक्तमधस्तात्। अत एव "मान्त्रवर्णिकमेव च गीयते" इति नपुंसकलिङ्गेनैवाऽऽनन्दमयप्रकरणेनोपदेशः ॥

सद्विद्यादिपरीक्षासंग्रहः

सद्विद्याया निर्विशेषवाद एवोपक्रमादिस्वारस्यमित्याद्यपि विवेचितं सविस्तरम्। अविरोधाध्यायो हि साङ्ख्यादीनीव श्रीभाष्यमूलं पाञ्चरात्रमपि निरस्यति, न तु विवर्तवादम्। न च सौगतमतमेवाद्वैतमतम्। न ह्यत्र सौगतमतनिरसनावसरे तन्निरासार्थमुपष्टब्धासु युक्तिष्वेकाऽप्यद्वैतविषये सूत्रेषु दृश्यते, येन सौगतमतनिरसनं न्यायसाम्यादद्वैतस्यापि निरासपरं स्यात्। "वैधर्म्याच्च न स्वप्नादिवदि"ति सूत्रं श्रीभाष्यस्यापि समर्थनपरम्; तत्र वैधर्म्याभावेन तेन सौगतस्य निरसायोगात्, तत्र प्रवेशानापत्तेश्च। प्रक्रियाभेदस्त्वद्वैतेऽपि समानः। 'सर्वथाऽनुपपत्ति'स्तु श्रीभाष्यमत एव, न तु सर्वथोपपद्यमानेऽद्वैतवादे ॥

अविद्यावादपरीक्षासंग्रहः

अविद्यावादस्तु सौगतानामन्यद्, वासनाऽपरपर्यायम्, मिथ्याज्ञानम्, संस्कारो वा यत्रालम्बनम्, अद्वैतवादे त्वावरण-विक्षेपशक्तिमत् प्रकृत्यादिशब्दवाच्यं श्रौतं भावरूपं वस्तु बोध्यमिति ॥

तत्र श्रीभाष्यमते परिणामित्वात् प्रकृतिर्विक्षेपशक्तिमती स्वीकृतैव; अविद्याकार्यस्य कर्मण आवरकत्वस्वीकाराद्, अविद्याया आवरणशक्तिरप्यर्थसिद्धैव तन्मते; अन्यथा कर्मणोऽप्यावरणशक्तिः कथम्? अधिकं चात्र वक्तव्यं पूर्वमेवोक्तम् ॥

### तर्कपादे पाञ्चरात्रप्रामाण्यसमर्थनानौचित्यं द्वैतिनामपि सम्मतम्

तत्र तर्कपादेन "साङ्ख्यं योगः पाञ्चरात्रमि"ति वचनगृहीतानां सर्वेषां दर्शनानां वेदविरुद्धांशेऽप्रामाण्यं व्यवस्थापितम्। अयमेव न्यायः पाञ्चरात्रेऽपि युक्तः ॥

### योगदर्शनस्यापि श्रौतब्रह्मनिष्ठोपादानकत्वाभावेन तर्कपादेन साङ्ख्यन्यायेन निरासात् प्रामाण्यायोगः

तत्र द्वितीयप्रथमे पादे साङ्ख्यमतनिरसनानन्तरम्—"एतेन योगः प्रत्युक्तः" इति योगदर्शनमप्यतिदेशेन निरस्तम्। तत्र च नानेन योगशास्त्रस्य हैरण्यगर्भपाञ्चरात्रादेश्च सर्वथा प्रामाण्यं निराक्रियते, किन्तु जगदुपादानत्वादिमात्रगोचरं प्रामाण्यं नास्तीत्युच्यते, इति भामत्यादौ निरूपितम्, इति पृथगत्र योगदर्शनस्य निरासाभावेऽपि न्यायसाम्यादत्राप्युपादानत्वविषयमादायैव योगदर्शनस्यापि निराकरणात् प्रथमपाद इवाधिकशङ्काया अभावाच्च साङ्ख्यपराकरणं योगपराकरणस्याप्युपलक्षणम् ॥

अतो द्वितीयद्वितीये योगदर्शनस्यापि निराकरणं न्यायसिद्धमेव। अत एव बादरायणस्य तदर्थं न पृथक् प्रयत्नः। न चैतावता बादरायणस्य योगदर्शनमप्युपादानत्वांशेऽपि प्रमाणमिति कल्पना सम्भवति; अन्यथा श्रीभाष्यसंमतमभिन्ननिमित्तोपादानत्वमपि भज्येत। 'ब्रह्मनिष्ठश्रौतोपादानत्वपरिपन्थिनामत्र निरसनीयत्वमि'ति वदत्यास्तत्त्वसुधाया अपि योगदर्शनस्यापि ब्रह्मोपादानत्वपरिपन्थित्वात् योगदर्शनाप्रामाण्यमपि द्वितीयपादविषयः, इति तन्निरसनीयकोटिप्रविष्टत्वं योगदर्शनस्यापि सम्प्रतिपन्नम्। अत एव पाञ्चरात्रदर्शनमपि श्रौतब्रह्मनिष्ठोपादानत्वपरिपन्थि, इति द्वितीयाध्यायद्वितीयपादनिरस्यकोटिमेवार्हति—यदि तद्विषयागामपि चिन्ताऽत्र स्यात्, इति कृत्वैव शाक्तमतनिराकरण एव तात्पर्यं युक्तमिति न्यायसुधा, यत्र ब्रह्म केवलं निमित्तकारणम्, नोपादानम्, पाञ्चरात्रमपि तत्रैव प्रमाणमिति च व्यवस्था ॥

ब्रह्मोपादानत्वं न पाञ्चरात्रेऽपीति द्वैति-
नामाशयः, प्रकृतविषयोपसंहारश्च

अतः पाञ्चरात्रप्रामाण्यं नास्य पादस्य लक्ष्यम्। यथाच श्रीभाष्याभिमतं ब्रह्मोपादानत्वं न श्रौतम्, तथोपपादितमधस्तात्, उपपादयिष्यते च। तत्त्वसुधाऽपि सद्द्वारकमेव परिणाम्युपादानत्वं ब्रह्मणोऽभिप्रैति, तच्च बाधितम्, अबाधितं वा पारिभाषिकमेव स्वीकरोति साक्षाद् सद्वीतीयत्वोपपादकम्। अतः श्रौतोपादानत्वं श्रीभाष्यमते ब्रह्मणो बाधितम्। तत्र पाञ्चरात्रं श्रीभाष्याभिमतं पारिभाषिकमप्युपादानत्वं नाभिप्रैतीति ह्यनुव्याख्यान-न्यायसुधादयः, इति कथं ब्रह्मोपादानत्वं तत्त्वसुधाभिमतं पाञ्चरात्रीयमपि सम्प्रतिपन्नं पाञ्चरात्रप्रामाण्यवादिनां दृष्ट्याऽपि ? यथा च पाञ्चरात्रस्य न सर्वात्मना वेदविरुद्धत्वम्, तथा भूषणसमीक्षावसरे विवेचितमित्यलमेतावता साम्प्रतम्॥

अहमर्थविचारे गुणोपसंहारनये, सद्विद्याऽक्षरविद्यात्मस्वरूपादौ च भूषणसमीक्षावसरे वक्तव्यं सर्वमुपपादितम्, उपरि च तत्तत्प्रकरणे विवेचयिष्यते। साम्प्रतं तु ब्रह्मसूत्राणामद्वैत एव स्वारस्यमिति प्रकरणमत्रैव समाप्यते—ग्रन्थविस्तरो महानितोऽप्यधिकं मा भूदिति॥

॥ इति ब्रह्मसूत्राणामद्वैत एव स्वारस्यम्॥

———

## ब्रह्मशब्दवृत्त्युपपत्तिः

### ब्रह्मणि शब्दमात्रवृत्त्युपपत्तिं मनसि निधायाखण्डार्थ-वादस्याप्यत्राऽऽलोचनम्

इदं हि प्रकरणं ब्रह्मशब्दस्य वृत्त्यनुपपत्तिपरमिति भूषणम्, शत-भूषणी तु निर्विशेषस्य सत्य-ज्ञानादिसर्वशब्दवृत्त्यनुपपत्तिमापाद्यामभिप्रेत्य नाम्ना ब्रह्मणि शब्दवृत्त्यनुपपत्तिप्रकरणमिदं प्रस्तौति। यदि भूषणं ब्रह्म-शब्दमात्रस्यानुपपत्तिमेव शतदूषण्यापाद्यां मन्यते, तर्हि शब्दान्तराणां तत्र वृत्तिर्यदि भूषणानुमता, तर्हि तेनैव नयेन ब्रह्मशब्दवृत्त्युपपत्तिरप्यर्थ-सिद्धैव, इति ब्रह्मशब्दवृत्त्यनुपपत्तिनाममात्रं ब्रह्मणो वेदान्तबोध्यत्वमान-न्दादिशब्दान्तरेण समर्थयति, इति स्वयमुत्पतदेव भूषणं हन्यते॥

ब्रह्मशब्दमात्रस्य वृत्तिरपि—

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मशब्दितम्॥"

इति विष्णुपुराणे सङ्केतात् सुस्थितैव। व्यक्तीकरिष्यते चेदमुत्तरत्रा-त्रैव प्रकरणे भूषणोक्तीनां समालोचनेन॥

न चाद्वैतसिद्धान्ते ब्रह्मणि शब्दमात्रस्य वृत्तिमात्रस्यानुपपत्तिः। शत-भूषणी तु यदि न ब्रह्म वेदान्तगम्यमिति भावो भूषणस्य, तर्हि तत्र तात्पर्य-वशात् तत्त्वमस्यादिवाक्यानां प्रामाण्यमुपपादयितुमखण्डार्थविचारमपि प्रकरोति—ब्रह्मशब्दवृत्त्यनुपपत्तिरित्यत्र शब्दमात्रस्य ब्रह्मणि वृत्त्यनुपप-त्तिर्वा ब्रह्म शब्दस्य वृत्त्यनुपपत्तिर्वेति विकल्पं मनसि निधाय, प्रथमपक्ष-निरासमेव प्रधानं लक्ष्यं मत्वा ब्रह्मणः शब्दवृत्त्यनुपपत्तिं प्राक्रमत। द्वितीयविकल्पमादाय ब्रह्मशब्दमात्रस्य वृत्तिरपि तत्रोपपादितैव॥

### "व्याप्तेश्चासमञ्जसमि'ति सूत्रगतशाङ्करभाष्यं "तत्त्वमसी"त्यत्राभेदे सामानाधिकरण्यं वारयति, इत्यगत्या विशेषण-विशेष्यभावे सामानाधिकरण्यमेव युक्तमिति भूषणाक्षेपः

तत्र भूषणम्—"तत्त्वमसी"ति सामानाधिकरण्यमखण्डार्थत्व उपपद्यते वा, न वेति विचारं प्रस्तुत्य, तत्र लोके समानाधिकरणवाक्यानां विशिष्टै-कार्थपरत्वमेवाऽऽनुभाविकम्, आनुशासनं चेति निष्कृष्य चाद्वैतमते संवि-

न्मात्राभेदाभिप्रायत्वे 'व्याप्तेश्चासमञ्जसम्' इति सूत्रे भगवत्पादभाष्यविरोधमेवमुपपादयति—तत्र हि सामानाधिकरण्यमध्यासापवादैकत्व-विशेष्यविशेषणभावनिबन्धनं चतुर्धा भवति। तत्राध्यासो द्वयोर्वस्तुनोरनिवर्तितायामेवान्यतरबुद्धावन्यतरबुद्धिः—यथा नाम्नि ब्रह्मदृष्टिः प्रतीकोपासनम्, अपवादस्तु यत्र कस्मिंश्चन वस्तुनि पूर्वनिर्दिष्टबुद्धिर्मिथ्यात्वेनावसीयते—यथा देहेन्द्रियादावात्मबुद्धिः, स्थाणौ चोर इति बुद्धिर्वा, एवं यत्र द्वयोरनतिरिक्तत्वम्, यथा "वैश्वदेव्यामिक्षे"त्यादावेकस्मिन्नर्थे शब्दद्वयप्रयोगेण। विशेषणं तु विशेष्ये कस्यचन विशेषस्य समर्पणम्, यथा नीलमुत्पलमित्यादौ। गौणी बुद्धिरध्यासे, मिथ्याबुद्धिरपवादे, अभेदबुद्धिरैक्ये, विशेषणविशेष्यभावे सामानाधिकरण्यमिति निष्कर्षः॥

तत्रापवादः "तत्त्वमसी"त्यादाविति भाषितम्। अनेन चावगम्यते—"तत्त्वमसी"त्यादौ नाभेदे सामानाधिकरण्यम्, न चाध्यासे; जीवे ब्रह्मत्वोपासनायाः समन्वयाधिकरणे भाष्ये स्वयं निराकरणात्, ऐक्यपक्षे तु पदद्वयवैयर्थ्यम्, इति परिशेषात् विशिष्टैकार्थपरत्वमेव शाङ्करभाष्यमपि प्रमाणयति—इति॥

### "व्याप्तेश्चासमञ्जसमि"त्यत्रत्यभाष्यस्थाभेदे सामानाधिकरण्यपक्ष एव विवक्षितः। अतो लक्ष्यार्थाभेदपरत्वमेव 'तत्त्वमसि'वाक्यस्य न च पदद्वयवैयर्थ्यम्

"इदं तु भगवत्पादभाष्यस्य विपरीतार्थवर्णनम्। तत्र हि 'अहं गौरः, स्थूलः' इत्यादिदेहात्मत्वबुद्धेरपवादे सामानाधिकरण्योपपादनावसरे प्राथमिकदेहात्मत्वबुद्धेः "तत्त्वमसी"त्यनेन बाधात् "इदं रजतमि"त्यादाविव बाधायां सामानाधिकरण्यमुपपादयितुं बाधकज्ञानं निर्देष्टुमुदाहृतं "तत्त्वमसी"ति वाक्यमेवापवादे सामानाधिकरण्यस्याप्युदाहरणं विभ्रम्य भूषणं भाष्यविरोधमत्र प्रस्तौति॥

वस्तुतस्तु—"तत्त्वमसी"ति लक्ष्यार्थैक्यनिबन्धनमभेदे सामानाधिकरण्यमेव। ऐक्ये सामानाधिकरण्यं ह्येकस्मिन्नर्थे पदद्वयप्रयोग इति भामती विशदयति। सामानाधिकरण्यं वाक्यार्थो भिन्नप्रवृत्तिनिमित्तकसमानविभक्तिकपदद्वयं विना नोपपद्यते, इति पदद्वयवैयर्थ्यापादनं सामानाधिकरण्यपक्षे व्याहतम्। यथा च "तत्त्वमसी"त्यत्र न पदद्वयवैयर्थ्यम्, तथोत्तरत्राखण्डार्थवादे विशदीभविष्यति॥

न चात्र विशेषण-विशेष्यभावः; व्याहतत्वात्। अध्यासापवादपक्षौ तु बाधितौ। न च "तत्त्वमसी"ति सामानाधिकरण्यबाधकं किमपि प्रमाण-जन्यज्ञानमस्ति, येनाभेदस्य बाधितत्वादपवादे सामानाधिकरण्यं "तत्त्वमसी"त्यत्र स्यात्॥

"तत्त्वमसी"त्यस्यापवादे, विशेषण-विशेष्यभावे वा सामानाधिकरण्ये भाष्यस्यातात्पर्यम्, पदद्वयावैयर्थ्यं चाद्वैतवादे

एतेन—"व्याप्तेश्चासमञ्जसमि"तिसूत्रगताद् भगवत्पादभाष्यादंश-द्वयं ग्राह्यम्—एकस्तावत् "तत्त्वमसी"त्यत्रापवादे सामानाधिकरण्यम्, अन्यश्च विशेषणपक्षः श्रेष्ठः। यदि तत्त्वम्पदाभ्यां स्वरूपमात्रं विवक्षणीय-मिति भाष्यकृदाशयः, तर्हि एकत्वपक्षे "तत्त्वमसी"त्येतन्निर्दिशेदिति—परा-स्तम्; उक्तभाष्येऽपवादे सामानाधिकरण्ये तत्त्वमसिवाक्योदाहरणताया अनङ्गीकारात्, तस्य बाधकज्ञानतया निर्देशेनैव स्वरूपमात्रपरत्वस्य, ऐक्ये सामानाधिकरण्यस्य चोक्तप्रायत्वात्, शोधितत्वम्पदार्थज्ञानमात्रस्य, तादृ-शतत्पदार्थज्ञानमात्रस्य वा तत्तदुपाध्यधिष्ठानज्ञानत्वाभावेनोपाधिद्वयाधिष्ठा-संविन्मात्रज्ञानस्यैवाज्ञाननिवर्तकत्वेन पदद्वयसार्थक्यस्य व्यक्तीकरिष्य-माणत्वाच्च॥

श्रीभाष्यमते तत्पदवैयर्थ्यम्

श्रीभाष्यमत एव तु "तत्त्वमसी"त्यत्र त्वम्पदेन शुद्धप्रत्यगभिन्नब्रह्म-स्वरूपबोधनात् तत्पदवैयर्थ्यम्, चिद्विशिष्टस्य त्वम्पदेन, अचिद्विशिष्टस्य-तत्पदेन ग्रहणे तु तत्पदार्थस्य चिदचिद्विशिष्टस्वभावत्वभङ्गः, "सदेवे"त्या-दावचिद्विशिष्टस्यैव ग्रहणे चिदचिदविशिष्टकारणताबाधः, तस्योपलक्षणत्वे त्वम्पदस्याप्युलक्षणत्वेन तत्पदवैयर्थ्यतादवस्थ्यम्॥

"वैश्वदेव्यामिक्षे"त्यत्राभेदे सामानाधिकरण्यन्यायो न 'पिकः कोकिल' इत्यादावपि

यत्तु-भामत्यां "वैश्वदेव्यामिक्षे"त्युदाहरणम्, तदिदं स्वरूपैक्यमादा-यैव "साऽमिक्षेति" तच्छब्देनाऽऽमिक्षायाः सामानाधिकरण्यं ह्यामिक्षा-याः पयोरूपतामादाय तच्छब्दामिक्षापदयोः सामानाधिकरण्यमभेद एव, न तु विशेषण-विशेष्यभावे। 'पिकः कोकिलः' इत्यप्यत एव व्याख्यातम्। न हि नैल्यमिव पिकत्वं साधारणो धर्मः, विशेषणं चात्र, इति न तत्रापि विशिष्टबुद्धिः॥

"सत्यं ज्ञानमि"त्यादौ प्रवृत्तिनिमित्तभेदसत्त्वादभेदे सामानाधिकरण्याविरोधः

अयमेष न्यायः—"सत्यं ज्ञानमि"त्यादावपि; लक्ष्यस्वरूपैक्येऽपि "सत्यं ज्ञानमि"त्यादौ प्रवृत्तिनिमित्तस्य वाच्यतावच्छेदकस्य भेदो न दण्डवारितः ॥

"तत्त्वमसी"त्यत्रापवादे सामानाधिकरण्याभावोपसंहारः

तदविवक्षामात्रेण हि सामानाधिकरण्यमभेदे सामानाधिकरण्यम् । सा च प्रकरणादितात्पर्यग्राहकमहिम्नेति व्यक्तमखण्डार्थवादपरीक्षायाम् । व्यक्तं चैतत् कल्पतरौ । तत्र कल्पतरुः स्वसिद्धान्तवासनया यथार्थयति वा, भूषणमेव स्वीयवासनया तम्, भामतीं चान्यथय्य दूषयति वेति भूषणमेव भूषणदृष्ट्या स्वयं विमृशतु । सर्वथा तु—"व्याप्तेश्चासमञ्जसमि"ति सूत्रे "तत्त्वमसी"त्युदाहरणं नापवादपक्षेण; देहात्मतादिबुद्धेरेव तदुदाहरणताया भाष्यार्थत्वात् ॥

"अहं ब्रह्माऽस्मी"ति त्वपवादे सामानाधिकरण्यमिति प्रस्थानान्तरम्

तत्र "तत्त्वमसी"ति देहेन्द्रियादिसङ्घातो बाध्यते; तदधिष्ठानस्वरूपमात्रबुद्ध्या, यथा शुक्तितत्त्वरूपाधिष्ठानसाक्षात्कारेण रजतम् । न चेश्वराभेदस्तत्र वाक्यार्थः; जीवत्वेश्वरत्वोपलक्षितैक्यबोधेऽपि तद्विशिष्टैक्यस्य तत्राबोधात् । विशेषणपक्षस्तु विरुद्धधर्मत्वाद् बाधितः । अतो"ऽहं ब्रह्माऽस्मी"ति बाधायां सामानाधिकरण्यमिति नैष्कर्म्यसिद्धिस्तु प्रस्थानान्तरं नोक्तभाष्यमूलकम्, किन्त्वहमर्थ आभास एवेति पक्षान्तरमूलकम् ॥

जीवेश्वरैक्यवादोऽनेकजीववादे मुक्तात्मेश्वरत्ववादे वा, सर्वोपाधिविलये तु संविन्मात्रता

न हीश्वरस्य संसार्यात्मत्वं प्रतिपाद्यते, किं तर्हि ? संसारिणः संसारित्वापोहेनेश्वरात्मत्वं प्रतिपिपादयिषितम् । भाष्यं हीश्वरपदेन संविन्मात्रमभिप्रेत्य, बिम्ब-प्रतिबिम्बभावे जीवेश्वरयोरनेकजीववादे मुक्त्यवस्थायामीश्वभावमभिप्रेत्य वा । अत एव संसारित्वापोहेनेश्वरात्मत्वं तत्रोक्तम् । तेन हि मुक्तौ जीवभावः, अहमर्थता वा सर्वात्मना निवर्तत इत्येवाभिप्रेयते, न तु जीवस्य सत ईश्वरेणैक्यम् । सामानाधिकरण्यं तु तत्रापि पक्षे तत्तदुपाध्युपहितस्वरूपैक्यमादायोपाधिभेदाविवक्षया । उक्तं च सिद्धान्तलेशसंग्रहे—'ईश्वरोपादानत्वं मायोपहितचैतन्यांशेनैव,

न तु विशिष्टेन रूपेण, इति सर्वजीवोपाधिविलयः संविन्मात्रसाक्षात्कारेणैव ॥

अनेकजीववादे जीवस्येश्वरभावः, न त्वीश्वरस्य जीवभावः

मुक्तावस्थायां जीवोपाधिविलयेन जीवस्येश्वरात्मत्वं तदुपाधिभूतायाः मूलाविद्याया अनिवृत्तावपि जीवोपाधितदवस्थामात्रविनाशात्। ईश्वरस्य तु न जीवत्वम्; तदुपाधिविनाशेन जीवस्वरूपस्यैवाभावात्, इति नेश्वरभावो मुक्तात्मन इति पक्षे भूषणापादितमीश्वरस्यापि जीवात्मत्वापादनं न चोदक्षमम् ॥

मुक्तौ जीवेश्वरैक्याभिधानमीश्वरातिरिक्तजीवस्वरूपाभावेन। न चात्र जीवातिरिक्तेश्वराभावः; मूलाविद्याया अनिवृत्तत्वेन, जीवोपाधेर्निवृत्तत्वेन च, जीवस्वरूपस्यैव निवृत्त्येश्वरस्वरूपानिवृत्तेः लक्ष्यार्थमादायाभेदेऽपि प्रवृत्तिनिमित्तस्य वाच्यतावच्छेदकस्य भेदो न किञ्चित्करः; तस्याविवक्षितत्वात् ॥

यत्र धर्मस्य प्रकृतधर्म्यतिरिक्तधर्मिसाधारण्यम्, तत्र विशेषणपक्षः, यत्र तु तद्धर्मिमात्रवृत्तित्वम्, तत्रैकत्वपक्षः, सर्वथा तु विशिष्टपरत्वमेवोभयत्रेति विवेकस्तूभयत्र विशेषणपक्षत्वस्यैव स्वीकारादेकत्वपक्षो दण्डेन वार्यते। कृत्वाचिन्तयाऽप्युच्यते—"तत्त्वमसी"त्यादौ किञ्चिद्ज्ञत्वस्य जीवमात्रधर्मत्वात्, सर्वज्ञत्वस्य चेश्वरमात्रधर्मत्वात् यद्यैक्यपक्षो मन्यते, तर्हि सामानाधिकरण्यं वह्निः शीत इति वाक्यवत् बाधितार्थत्वादप्रमाणं स्यात्। प्राथमिकबोधे बाधितेऽपि, सति सम्भवे लक्षणया निर्वाहेण विरोधिधर्माविवक्षया तात्पर्यग्राहकप्रमाणानुसारेण, धर्मद्वयस्याप्यविवक्षया वा सामानाधिकरण्यपक्ष एव ॥

अध्यासैक्यपक्षयोः सोदाहरणं स्वरूपविवेकः

अध्यासपक्षस्तु "व्याप्तेश्चासमञ्जसम्" इति सूत्रोपपादित अहार्यारोपमात्रम्, सोऽप्युपासनाकालिकमादायैव, वाक्ये तु "मनो ब्रह्मेत्युपासीत" इतीतिशब्दप्रयोगात् लक्षणां विनैव निर्वाहः ॥

ऐक्यपक्षो हि स्वरूपैक्यमादायाबाधे भवति, न बाधे। "तत्त्वमसी"-त्यत्र हि जीवत्वेश्वरत्वयोरौपाधिकत्वात्, स्वरूपमात्रस्य तत्र पारमार्थिकत्वात्, संविद्रूपैक्यमबाधितम्, न त्वेवं घट-पटयोः। यदि तत्रापि द्रव्यत्वेनैक्यम्, तर्हि त्वभेदेऽप्यत्र सामानाधिकरण्यम् ॥

"तत्त्वमसी"त्यादौ विशेषणमिथ्यात्वनिर्णयस्य परोक्षत्वेऽप्यभेदे सामानाधिकरण्योपपत्तिः

"तत्त्वमसी"त्यत्र किञ्चिज्ज्ञत्व-सर्वज्ञत्वयोरौपाधिकयोः, तत्तदुपाध्योर्षाऽविवक्षा; स्वरूपस्य तयोर्मिथ्यात्वात्। अत एव "एकमेवाद्वितीयमि" त्यादिश्रुतयः। तन्मिथ्यात्वनिर्णयस्तु यद्यपि वाक्यार्थसाक्षात्कारानन्तरमेव; तथाप्यैक्यस्य विवक्षामात्रमविरुद्धम् ॥

मिथ्यात्वबोधः परोक्षस्तु तत्र यद्यप्युपबृंहकः; तथाप्यधिष्ठानतत्त्वसाक्षात्कार एव तदभावस्य साक्षात्कारः, इत्यैक्यबोधानन्तरं तदन्यथाऽनुपपत्त्या विशेषणमिथ्यात्वनिर्णयः, प्राक् तु तदविवक्षामात्रम्. ऐक्यबोधो हि स्वरूपमात्रस्य विशेषणाविवक्षामात्रेण भवति, इति न तदर्थं तन्मिथ्यात्वनिर्णयोऽपेक्ष्यते ॥

या त्वैक्यान्यथानुपपत्त्या तत्तदुपाधीनां मिथ्यात्वमर्थापत्त्या सिद्ध्यतीति व्यवस्था, सा संविन्मात्राधिष्ठानसाक्षात्कारेणोपाधीनां बाधं भाविनम्, भूतं वाऽभिप्रेत्य ॥

"आदित्यो यूपः"इत्यादौ न "तत्त्वमसी"ति वाक्यन्यायः

न चायं न्यायः—"आदित्यो यूपः" इत्यादिवाक्येषु प्रसरति; तयोरधिष्ठानारोप्यभावाभावेन स्वरूपैक्यासंभवेन विशेषणाविवक्षानियामकाभावेन, यूपप्रशंसापरस्य तस्याऽऽदित्याभेदे तात्पर्याभावेन तदभेदायोगेन च तन्न्यायवैलक्षण्यात्। अत एव तत्र तत्सिद्धिपेटिकायां गौणं सामानाधिकरण्यं व्यवस्थापितम्। यथा चात्राद्वितीये निर्विशेषे ब्रह्मण्येव वेदान्तानां तात्पर्यम्, तथोत्तरत्र विशदीभविष्यति ॥

"जक्षन् क्रीडन्नि"त्यादौ गौणमुक्तिः, "अथ संपत्स्ये" इति तु मुख्या मुक्तिः, "निरञ्जनः परमं साम्यमुपैती"त्यपि तदभिप्रायमेव

तत्र "जक्षन् क्रीडन्"इत्यादौ गौणी मुक्तिः, 'सम्पत्स्ये' इति सम्पत्तिस्तु मुक्तिर्ब्रह्मभाव एवेति "अविभागो वचनात्" "अविभागेन दृष्टत्वादि" ति समालोचनेन विशदीकृतम् ॥

अत एव "निरञ्जनः परमं साम्यमुपैति"इति परमत्वविशेषणम्। "जक्षन् क्रीडन्"इत्यादै तु साम्यमात्रम्, न तु परमं साम्यम्। अत एव "जगद्व्यापारवर्जमि"त्यधिकरणे "भोगमात्रसाम्यलिङ्गाच्चे"ति साम्यमात्रं सूत्रितम्, न तु परमं साम्यम् ॥

एतेन—"मम साधर्म्यमागताः" इत्यादिकमपि—व्याख्यातम्। इदं हि "जगद्व्यापारवर्जमि"ति गौणमुक्त्यभिप्रायमिति भगवत्पादानां राद्धान्तः। यथाच 'ब्राह्माधिकरण'मद्वैतसिद्धान्त एव स्वरसम्, तथा पूर्वमेव विवेचितम्॥

### मुक्तौ तत्क्रतुन्यायोऽद्वैतमत एव, न श्रीभाष्यमते

तत्क्रतुन्यायस्तु मुक्तौ जगत्कारणत्वस्यापि स्वीकार एव भवति, इत्यभिप्रेत्यैवानेकजीववाद ईश्वरभावो मुक्तिरिति सिद्धान्तितम्। इदं त्वज्ञानोपहितस्वरूपैक्यसाक्षात्कारस्य निदिध्यासनाधीनस्य मोक्षसाधनत्व एवोपपद्यते। निदिध्यासनमङ्गि, श्रवणादिकमङ्गमिति पक्षेऽपि तत्क्रतुन्यायोऽबाधः। श्रीभाष्यमते तु तत्क्रतुन्यायेन मुक्तस्य जगत्कारणत्वमप्यापद्येत, इति कथं "जगद्व्यापारवर्जमि"ति सूत्रम्?

कुतो वा मुक्तौ जगद्व्यापारवर्जं ब्रह्मभावः तत्क्रतुन्याये जाग्रति? प्रत्यक्षम्, अनुमानम्, औपनिषदः शब्दो वा जगद्व्यापारवर्जं ब्रह्मभावे न प्रमाणम्, तत्र मुक्तौ प्रत्यक्षमनुमानं वा न प्रमाणम्। श्रुतिस्तु "ब्रह्मवित् ब्रह्मैव भवति" इति ब्रह्मभावं ब्रह्मध्यानफलं श्रावयति। ब्रह्म तु जगत्कारणस्वभावमिति तु श्रीभाष्यसिद्धान्तः, इति स्थिते कुतो वा मुक्तानां न जगदभिन्ननिमित्तोपादानत्वमपि?

अथ यदि तद् न स्वभावः, तर्हि कथं जन्माद्यधिकरणं श्रीभाष्यमते स्वरूपलक्षणम्, न तटस्थलक्षणम्? अद्वैतमते तु सर्वमुक्तावेव निर्विशेषात्मतायाः सिद्धान्तात्, तत्र च जगत्कारणत्वस्याभावात्, तस्य तटस्थलक्षणपरत्वम्, स्वरूपलक्षणं तु सत्य-ज्ञानादिकम्। यावत्सर्वमुक्ति जगत्कारणत्वं ब्रह्मण इव मुक्तस्यापि तत्क्रतुन्यायसिद्धम्, इति "जन्माद्यस्य यतः" "जगद्व्यापारवर्जमि"त्युपक्रमोपसंहारस्वारस्यं न श्रीभाष्यमते, किन्त्वद्वैतमत एव॥

### तत्क्रतुन्यायो न मुक्तविषय इत्यत्र "विकारावर्ति चे"ति सूत्र-भाष्य-भामत्यादिप्रमाणनिर्देशः

अत एव—"विकारावर्ति चे"ति सूत्रे भाष्यम्—"विकारावर्ति च" नित्यमुक्तं पारमेश्वरं रूपम्। न केवलं विकारमात्रगोचरसवितृमण्डलाद्यधिष्ठानम्। तथा ह्यस्य द्विरूपां स्थितिमाम्नाय "एतावनस्य महिमा। ततो ज्यायाँश्च पुरुषः। पादोऽस्य सर्वा भूतानि। त्रिपादस्यामृतं दिवि" इत्येव-

मादि: । न च तन्निर्विकारं रूपमितरालम्बनाः प्राप्नुवन्तीति शक्यं वक्तुम्, अतत्क्रतुत्वात् तेषाम् , यथा च द्विरूपे ब्रह्मणि निर्गुणं रूपमनवाप्य सगुण-एवावतिष्ठते, एवं सगुणोऽपि निरवग्रहमैश्वर्यमनवाप्य सावग्रह एवाव-तिष्ठते" इति ॥

अत्र भामती—"तत्त्वोपासनासु पुरुषक्रतुत्वम् , उपासकस्य तु तदक्र-तुत्वमि"ति । अनेनेदमेव सूच्यते निर्विशेषज्ञाने निर्विशेषमेव ज्ञेयम् , तद्वि-ज्ञानेन चाविद्यैक्यपक्षेऽविद्यानुपहितावस्था मुक्तस्य भामतीमते, विवरण-मते तु मूलाविद्योपहितस्यैव ज्ञानात् , उपहितांशचिद्रूपत्वेनैक्यात् ; उपा-धिनिवृत्तौ जगत्कारणत्वमपि यावत्सर्वमुक्ति ॥

जगत्कारणत्वं तु ब्रह्मणोऽस्वभावः सविशेषस्य सत्यकामत्वादिकमिव, अतो नोपास्यमिति । अतः सविशेषस्यापि न जगत्कारणत्वं नोपास्यत्वा-भिप्रायेण, किन्तु निर्विशेषस्वरूपज्ञानद्वारत्वेनैवेति प्रतीयते । इदं त्वद्वैतमत एव स्वरसम् । श्रीभाष्यमते ह्युपासनागुणोपसंहारपादे 'सर्ववेदान्तप्रत्यय' न्यायेन जगत्कारणत्वस्यापि स्वभावत्वे, सर्वासु विद्यासूपसंहर्तव्यत्वे च कथं तत्क्रतुन्यायेन जगद्व्यापारोऽपि न मुक्तस्य सेत्स्यति ? यद्यनुपा-स्यत्वात् , तर्हि न तस्य ब्रह्मस्वभावत्वम् , यद्युपास्यत्वम् , तर्हि तु जग-द्व्यापारोऽपि मुक्तौ । ब्रह्मापृथक्सिद्धतयाऽस्वातन्त्र्ये तु प्रकृतेरिव मुख्यं कारणत्वं शुद्धप्रत्यगात्मन एव स्यात् न ब्रह्मणः । अतो ब्रह्मकारणत्वं वा त्यज्यताम् , मुक्तात्मनोऽपि जगत्कारणत्वं वा । तत्राद्वैतमत ईश्वरभावो मुक्तिरिति विवरणमतेन, भामत्यादिमतेन संविन्मात्रता, इति प्रस्थानभेदात्, अच्युतकृष्णेनैकस्य, अपरशङ्करावताराप्पय्यदीक्षितैरप्यस्य च स्वस्वमत-स्थापनेन व्यवस्थापनेऽपि नान्यतरस्याप्यप्रामाण्यम् , अद्वैतसिद्धान्तस्य मुखभेदमात्रत्वात् तयोः कल्पयोः ॥

प्रस्थानभेदः श्रीभाष्यसिद्धान्तेऽपि समानः, इत्यकिञ्चित्करः

एवं प्रस्थानभेदः श्रीभाष्यसिद्धान्तेऽपि श्रीदेशिकचरण-महाचार्या-दीनां वर्तत एव, इति सूचयितुमेव चण्डमारुतं बहुषु स्थलेषु शतदूषणीमपि निरस्यतीति शतभूषण्याशयः ॥

एतेन—स्थितप्रज्ञविषयः सिद्धावस्थ-साधकावस्थभेदेन रूपभेदोऽपि—व्याख्यातः; प्रस्थानभेदत्वात्तेषाम्, अवस्थाभेदमात्रत्वाद्वा, इति बहुषु स्थ-लेषु भामती-परिमलादिषु स्वस्वाभिमतप्रस्थानभेदसमर्थनपरः प्रस्थानान्तर-

निरासप्रकारमात्रेणाद्वैतसिद्धान्ताप्रामाण्यव्यवस्थापनं श्रीभाष्यादिसम्प्रदायानुसारिणामिवाकिञ्चित्करम्; 'यश्चोभयोः समो दोषः' इति न्यायात्॥

ईश्वरभावे मुक्तौ दरिद्रस्य धनिकत्वप्राप्तीच्छया
धनिकस्य दरिद्रीकरणमिति शङ्का

एतेन—अखण्डचैतन्यस्वरूपाविर्भावलक्षणत्वे मोक्षस्य तदर्थं मुमुक्षूणां प्रवृत्त्यनुपपत्तिः, ब्रह्मभावार्था प्रवृत्तिर्हि दरिद्रस्य स्वोपास्यधनिकत्वप्राप्त्यासक्तस्य धनिकस्यापि दरिद्रीकरणमेव। अतः संसारभ्रमणमेव वरम्, यदीश्वरोऽपि नित्यानन्दप्रचुरोऽनया प्रवृत्त्या स्वरूपतोऽपि नश्यतीत्यादि भूषणमपि—परास्तम्॥

ब्रह्मभावे मुक्तौ भिक्षुकस्य न धनिकभिक्षुकीकरणन्यायः

बन्धनिवृत्तिर्हि मोक्षो नाम। तत्र बन्धो नामानन्दस्वरूपस्य जीवस्याहङ्कारादितादात्म्यानुभवः। स च ब्रह्माश्रितमूलाविद्याप्रयुक्तो मायातीतपरमात्मस्वरूपसाक्षात्कारेण केवलं निवर्तमान आनन्दप्रचुरेश्वरभावात्मेति पक्षे नास्य प्रत्युत्थानस्यावसरोऽपि; अनेकजीवाश्रितानेकाविद्यावादे तु तत्तदानन्दरूपतयाऽवस्थानप्रतिबन्धकाज्ञाननिवृत्तौ तत्तदज्ञानावृतब्रह्मस्वरूपस्यैव मुक्ताऽऽत्मभावत्वात्। अज्ञानमात्रनिवृत्तावपि नोपहितस्वरूपस्य ब्रह्मणो निवृत्तिः। तद्भावापत्तिश्चानन्दरूपताप्तिरेव, इति नात्रोभयत्रापि स्वोपास्यधनिकस्य दरिद्रीकरणम्॥

"तत्त्वमसी"त्यत्र विशेषणाविवक्षयाऽभेदपरत्वपक्ष एव युक्तः

तत्र मुक्तिब्रह्मभावरूपतायाम्, ईश्वरभावरूपतायां वाऽनुपहितस्वरूपमात्रज्ञानमज्ञानस्य, तदवस्थामात्रस्य वा निवर्तकम्, इति, जैवविशेषणांशाऽविवक्षा समाना; तत्रैव श्रुति-सूत्रादितात्पर्यात्। "सदेवेदमि"ति सामानाधिकरण्यं "एकमेवाद्वितीयमि"ति वाक्यैकवाक्यतापन्नं बाधायां सामानाधिकरण्यमेवाभिप्रैति, इति "अविभागो वचनादि"ति सूत्रं विवेचयति। अत उपक्रमानुगुणं विवरणं "तत्त्वमसी"त्यत्र विशेषणाविवक्षयैव; अन्यथा हि न तत्स्वरूपं सूपपादम्॥

प्रसिद्धिमात्रेण निर्विशेषवाक्यानां श्रीभाष्यादिमते
सविशेषवाक्यानामिव बोधकत्वम्

तत्र निर्विशेषस्य प्रसिद्धिर्विशेषाणां "नेति नेती"ति निषेधेनार्थसिद्धा। यथाच निर्विशेषपरत्वेऽप्यैक्यपक्षे सामाधिकरण्यमविरुद्धम्, तथोपपादि-

तमधस्तात् । निषेधवाक्यानि हि विशिष्टमनूद्य विशेषणमात्रनिषेधेन निर्विशेषं स्वरूपमात्रं कोष्ठशोधनिकान्यायेन परिशेषयन्ति कथं न तत्र प्रमाणम् ?

यत्तु—अप्रसिद्धमपि "तत्त्वमसी"त्यनेन बोधयितुं शक्यते इत्युक्तम्, तदिदं लोकाप्रसिद्धिम्, वेदान्तेतरप्रमाणान्तराप्रसिद्धिं वाऽपेक्ष्य । वस्तुतस्तु—लोकाप्रसिद्धमपि यूपाहवनीयादि, स्वर्गादिरूपं वा कर्मकाण्डेन ज्ञाप्यते, तथा वेदान्तेष्वपि कर्मकाण्डाप्रसिद्धं सत्यकामत्वादिविशेषितं सविशेषवाक्यैर्बोध्यते । निर्विशेषवाक्यैस्तु निर्विशेषं ज्ञाप्यत इति को नामात्र विरोधः ? तत्र प्रतिपादनं केषाञ्चन वाच्यविधया, केषाञ्चन लक्ष्यविधया ॥

तत्र स्वर्ग-वैकुण्ठादिलोके, तत्रत्यविशेषेषु च तत्तत्पदानां शक्तिग्रहः किं व्यवहारतो गवादीनामिव, उत कोशेन, व्याकरणादिना, उत समभिव्याहारेण, वाक्यार्थविधया वा । तत्र यदि समभिव्याहारेण, वाक्यार्थविधया च, तर्हि ब्रह्मणोऽपि तत्तद्वाक्यगतपदविशेषाणां वाचकत्वेन तद्घटितवाक्यार्थविधया च निर्विशेषज्ञानमपि नाबाधितम् ॥

निर्विशेषवाक्यानां निर्विशेषे प्रामाण्योपपत्तिः

निर्विशेषवाक्यानि विशेषान् तत्तत्पदार्थानादायैव वाक्यविधया निर्विशेषं बोधयन्ति । तत्र "एकमेवाद्वितीयमि"त्यत्रैकपदम्, एवपदम्, अद्वितीयपदं वाऽवाचकमिति को ब्रूते ? तावतैव निर्विशेषं ब्रह्म कथं न वाक्यार्थः ॥

एतेन—"सत्यं ज्ञानमनन्तं ब्रह्मे"ति वाक्यमपि "ब्रह्मविदाप्नोती"ति प्रस्तुतं ब्रह्मशब्दार्थं सत्य-ज्ञानादिपदघटितवाक्यार्थविधया यदि निर्विशेषं बोधयति, तर्हि का नामाऽनुपपत्तिः ? सविशेषो नारायण एव ब्रह्मपदार्थ इति किं ब्रह्मपदमात्रेणावगम्यते ? यदि तत्र पूर्वापरसन्दर्भानुसारिवाक्यार्थमर्यादया, तर्हि तयैव मर्यादया निर्विशेषमपि कथं न ब्रह्मशब्दार्थः ? इति कथं ब्रह्मशब्दमात्रस्यापि निर्विशेषे ब्रह्मणि शब्दवृत्त्यनुपपत्तिः ?

वाक्यप्रामाण्यं हि यथा वाक्येनावगम्यते—यथा उद्देश्य-विधेयभावेन, विनाप्युद्देश्यभावं स्वरूपमात्रपरतया वा यथायथं तात्पर्यविषयार्थबोधकत्वेन, तथा तथैव संप्रतिपन्नम्; अन्यथा "तत्त्वमसी" त्यत्र श्रीभाष्यमतेऽपि नात्रोद्देश्य-विधेयभावविवक्षा, तथापि प्रामाण्यं कथं ?

एतेन—"तत्त्वमसी"तिवाक्यस्याखण्डपरतत्वं न संभवति; उद्देश्य-विधेयभावापन्नार्थबोधनेनैव वाक्यस्य प्रमाणत्वादिति भूषणम्—परास्तम्; स्व-

सिद्धान्तविरोधाच्च; अन्यथा तत्त्वमस्यादिवाक्यानां तन्मतेऽपि प्रामाण्यहानिरेव स्यात् ॥

## अभिहितान्विताभिधानवादाभ्यामपि तात्पर्यविषयत्वाद् निर्विशेषस्य वाक्यार्थत्वम्

वस्तुतस्तु विशिष्टार्थपराणामपि पदानां पदार्थमात्रोपस्थापकत्वम् । वाक्यार्थस्तु पदार्थेभ्य एव । पदार्थानामेव मुख्यं प्रामाण्यम्, पदानां तु प्रयोजकतयैव प्रामाण्यव्यपदेश इत्यभिहितान्वयवादे पदानां सविशेषपरत्वेऽपि तात्पर्यानुसारेण वाक्यार्थस्य निर्विशेषस्य लक्ष्यत्वे न विरोधः ॥

"सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति नः स्थितम् ।"

इति हि मीमांसकाः । तत्रान्विताभिधानवादो वा भवतु, अभिहितान्वयवादो वा, तात्पर्यविषयवाक्यार्थलक्ष्यतायां न विशेषः । इयान् विशेषः— पदशक्तिरज्ञाता प्रथमे मते लक्षणापदेनोच्यते, इतरत्र त्वर्थगतेति । तत्र प्रथमे समभिव्याहृतपदद्वयगतकुञ्जशक्तिगम्यस्यान्वयस्य पदशक्यत्वेऽपि नान्वयविशेषस्य तत्रापि शक्यते बोधः । अन्वयविशेषस्य हि न पदेन, किन्तु पदसमुदायेन बोधः । अतः स कस्यापि पदस्य न वाच्यः, किन्तु लक्ष्य एव, तत्राप्यन्वयशब्दोऽपि तात्पर्यविषयपर एव, इत्यन्विताभिधानवादेऽप्यखण्डार्थत्वमेव ॥

## तात्पर्यविषयान्वयविशेषबोधकत्वमन्विताभिधानादिवादे न्यायचन्द्रिकादिसिद्धम्

न्यायचन्द्रिका ह्यन्विताभिधानमेव साधु समर्थयन्त्यप्यखण्डार्थतां तत्त्वमस्यादिवाक्यानां साधयति, यदेवाधिकृत्य ब्रह्मानन्दसरस्वत्योऽप्यन्वयपदमत्र तात्पर्यविषयपरम्—व्याचक्षते बिन्दुटीकायाम् । वाक्यार्थाऽऽनुभाविकी शक्तिः विशिष्टार्थगताऽपि तात्पर्यविषयमात्रं बोधयिष्यतीति खलु तेषां मर्यादा, इति तदादिपदार्थस्य सखण्डत्वेऽपि शक्त्या तत्र सखण्डनिष्ठस्यापि तात्पर्यानुसारेणाखण्डार्थबोधो न विरुध्यते । विशिष्टवाचकानां सति विशेषणान्वयबाधे विशेष्यमात्रबोधकत्वं हि 'सोऽयं देवदत्तः' इत्यादौ दृष्टम् ॥

तत्र लक्षणा पद-पदार्थन्यतराश्रिता बोधकत्वशक्तिः, लक्ष्यत्वं वाक्यार्थस्य, इति वाक्यार्थस्य लक्षकत्वमेव स्यात्, न लक्ष्यत्वमिति वादो न युक्तः ॥

यत्तु—अद्वैतसिद्धौ "वृत्त्या हि पदार्थोपस्थितिः, न तु सैव वृत्तिः" इत्युक्तम्, तदपि बोधकत्वशक्तिर्वृत्तिः, बोध्यत्वं तु लक्ष्यत्वमित्यभिप्रायमेव। अन्विताभिधानाभिहितान्वयवादपदयोरन्वयपदं तात्पर्यविषयार्थपरम्, इति नोभयत्राप्यन्वयपदत्यागोऽद्वैतमत इति न्यायरत्नदीपावल्यादौ व्यक्तम्। इदं तत्त्वमसिवाक्यसाधारणं मत्वा ॥

### तत्त्वमसिवाक्यस्य महावाक्यविधया सर्ववेदार्थबोधकत्वम्

वस्तुतस्तु—"तत्त्वमसी"त्यत्र त्वम्पदं कर्मकाण्डप्रसिद्धं जीवात्मानं कर्मोपासनाधिकारिणं विशिष्टम्, तत्पदं चोपासनाकाण्डमात्रतात्पर्यविषयं सविशेषं ब्रह्म प्रथमतो वाच्यमर्यादया गृहीत्वा, तयोरैक्यस्य बोधात् कर्मोपासनाकाण्डयोर्ज्ञानकाण्डशेषत्वेन तयोस्तत्र मुख्यतात्पर्याभावात्,

"स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया ॥
वाक्यानामेकवाक्यत्वं पुनः संहृत्य जायते ॥"

इत्युक्तरीत्या सर्ववेदार्थसंकलनात् "तत्त्वमसी"ति वाक्यं वाक्यैकवाक्यतापन्नं महावाक्यविधयाऽप्यखण्डार्थबोधकमेव, वेदान्तैकदेशत्वं तु तस्य पाठतः, अर्थतस्तु तस्य महावाक्यत्वमेव ॥

### निर्विशेषपदार्थत्वं सर्वविशेषाभावरूपत्वे तत्र न वार्यते, वाक्यार्थत्वमेव तस्य लक्षणाविधया; वाक्यार्थे वाच्यतावच्छेदकस्य सविशेषत्वस्य न भानमित्येवाद्वैतमतम्

तत्र च निर्विशेषस्य निर्विशेषपदवाच्यत्वं न विरुध्यते, लक्ष्यत्वं तु तत्त्वमादिपदलक्ष्यत्वाभिप्रायेणैव, इति ब्रह्मणः शब्दमात्रवाच्यत्वेऽपि वाक्यार्थविधया लक्ष्यत्वम्, निर्विशेषपदवाच्यत्वं तु तस्याव्याहतम् ॥

तत्त्वम्पदार्थशोधनपराणि प्रकरणानि तत्तन्मात्रं निर्विशेषं बोधयन्ति, तत्त्वमसिवाक्यं तु तयोरैक्यं सामानाधिकरण्येन बोधयति। अत एव तद् महावाक्यं नाम इति निर्विशेषस्य निर्विशेषपदवाच्यत्वम्, तत्त्वमादिपदलक्ष्यत्वं च न विरुद्धम्। न केवलं तत्त्वमसीतिमहावाक्यम्, किन्तु सत्यज्ञानाद्यवान्तरवाक्यमपि लक्ष्यविधया निर्विशेषपरमेव। इदमेवाश्रित्य सुरेश्वरवार्तिकम्—

"शब्दात्प्रतीयते तावत् सङ्गतिर्धर्म-धर्मिणोः।
मानान्तरादपोहस्तु न शाब्दस्तेन संस्मृतः॥
स्वार्थार्पणप्रणाड्या तु परिशिष्टौ विशेषणम्।"

इत्यादिकं सत्यादिवाक्यानां प्रथमतो विशिष्टार्थपरत्वेऽपि वस्तुगत्या मानान्तरविरोधपरिहारार्थं विशेषणत्यागेन स्वरूपमात्रपरत्वं गमयति। इद-मेवाभिप्रेत्य—

"सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः।
पश्चादेव विशेषणेतरतया पश्चाद्विरोधोद्भवः॥
उत्पन्ने च विरोध एकरसके वस्तुन्यखण्डार्थधीः।"

इति॥

### चिदचिद्विशिष्टपरत्वेऽपि श्रीभाष्यमते निष्कर्षकविधया विशेषणांशत्यागेन ब्रह्मपदप्रयोगवदद्वैतमतेऽपि निर्विशेषस्यापि वाक्यार्थस्य पदबोध्यत्वं न विरुद्धम्

तथा च चिदचिच्छरीरकत्वम्, निरस्तसमस्तदोषत्वादिकं च यथा ब्रह्म-शब्दवाच्यतावच्छेदककोटिप्रविष्टम्, एवमपि प्रकरणबलात् ब्रह्मधर्मः; ब्रह्मपदप्रवृत्तिनिमित्तं वा श्रीभाष्यमते, एवं प्रकरणवशात्, तत्त्वमादि-पदानामपि स्वरूपमात्रपरत्वमिति समानम्, ब्रह्मशब्दस्यापि निर्विशेष-परत्वं च॥

### ब्रह्मपदार्थत्वस्य निर्विशेषसाधारण्यम्

बृहिधात्वर्थस्य व्यापकत्व-नित्य-शुद्ध-बुद्धस्वभावत्वादेर्निर्विशेषसाधा-रण्यमपीति भाष्ये व्यक्तम्; "ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्य-शुद्ध-त्वादयोऽर्थाः प्रतीयन्ते; बृहतेर्धातोरर्थानुगमादि"ति। "तत्त्वमसी"त्यत्रापि नित्य-शुद्ध-मुक्तस्वरूपं संविन्मात्रमेव विवक्ष्यते, इति न तत्रापि ब्रह्मपदार्थ त्यागः। सत्यकामत्वादियुक्तं सविशेषवाक्ये विवक्षितम्, निर्विशेषवाक्ये तु विशेषपदेन तदनूद्य निरस्यते। तेषां मिथ्यात्वं च ततोऽर्थसिद्धमिति ह्यद्वैतिनां प्रक्रिया॥

### "यतो वाचः" इति श्रुतिवाक्यार्थो मुख्यो न विशेष इत्येव सिद्धान्तः

एतेन—"यतो वाचो निवर्तन्ते" इति श्रुतिरपि—व्याख्याता; तस्य-वाच्यविधया ब्रह्माबोधकत्व एव तात्पर्यमितीष्टसिद्ध्यादौ व्यक्तम्। ब्रह्म-शब्दस्य, तत्त्वम्पदयोः, अन्येषां च पदानां वाच्यार्थः सविशेषस्वरूपं यदि वर्तते, तावतैव शब्दस्यार्थप्रत्यायकत्वम्, व्यवहारो वा निर्वहति। न हि तावता लक्ष्यार्थबोधकत्वं शब्दानां विहन्यते, व्यवहारस्तु सफला प्रवृत्तिः वाक्यजज्ञानस्य विधेयत्वे। ज्ञानं तु विना प्रवृत्तिं स्वत एवाज्ञाननिवृत्त्या

सफलम् , इति न प्रमाणमात्रस्य व्यवहारप्रयोजकत्वेनैव प्रामाण्यमिति 'न हन्यादि'ति वाक्यदृष्टान्तेन समन्वयसूत्रे भाष्य-भामत्यादौ व्यक्तम् ॥

तत्र वाक्यार्थस्य वाच्यार्थनिषेधेन लक्ष्यवाक्यार्थघटितार्थमात्र-विवक्षायामविरोधोपपादनं निर्विशेषवाक्यानां तात्पर्यविषयार्थबोधकत्व-निर्वाहार्थम् , अपच्छेदन्यायादिना निर्विशेषवाक्यप्राबल्यादि—इत्यु-क्तम्। तत्र मनसो निवृत्तिस्तु निर्विशेषविषयाज्ञाननिवृत्तिपर्यन्तमेव मनसो व्यापारात् ब्रह्मणः फलाव्याप्यत्वाभिप्रायेण। तदप्युक्तं भाष्ये—"अज्ञाननिवृत्तिपरत्वाच्छास्त्रस्ये"त्यत्र ॥

### मनन-निदिध्यासनविषयत्वमपि सविशेषस्येदन्तया, न निर्विशेषस्य

अनेन-मन्तव्यत्व-निदिध्यासितव्यत्वादिकमपि—व्याख्यातम्। "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वानि"ति वाक्ये ब्रह्मपदं "स एको ब्रह्मण आनन्दः"इति वाक्यगतब्रह्मपरं न भवितु-मर्हति; तस्य प्रजापत्यानन्दशतगुणितानन्दवत्तया परिच्छिन्नानन्दस्य वाङ्मनसागोचरत्वोक्तिविरोधात् , किन्तु "आनन्दो ब्रह्मेति व्यजानात्'-इति श्रुत्युक्तानन्दस्वरूपब्रह्मण एव वाङ्मनसागोचरत्वं वक्तव्यम्। सति चैवम्—'ब्रह्मण आनन्दमि'त्यभेदे षष्ठ्यभिप्रायमेव, इति न वैय-धिकरण्यम् ॥

### वाक्यार्थोऽपि ब्रह्म निष्कर्षकविधया ब्रह्मशब्दार्थः संकेतवशात्

तत्र ब्रह्मपदमपरब्रह्मपदम्, परब्रह्मपरं वेति बहुश आवेदितम्। तत्र परं ब्रह्म मुख्यं न वाच्यविधया वेदान्तवेद्यम् , किन्तु लक्ष्यविधया परमतात्पर्य-विषयत्वेन। इदमेवाभिप्रेत्य भाष्ये "परं हि ब्रह्मशब्दस्य मुख्यमालम्ब-नमि"त्युक्तम्। तत्र मुख्यत्वम् , गौणत्वं च मुख्यावान्तरतात्पर्यविषयत्वेनै-वेति इति न विरुद्धम् ॥

अस्तु वा तत्र ब्रह्मशब्दस्य मुख्यवृत्त्या प्रवृत्तिः। तत्र हि भगवत्पादा निर्विशेषमेव ब्रह्म प्रतिपद्यन्ते। सति चैवम्—

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मशब्दितम् ॥"

इति स्मृतिर्ब्रह्मशब्दमात्रस्यापि ब्रह्मणि मुख्यवृत्तिमेवाभिप्रैति, इतीदं वाक्यमेकमेव पर्याप्तं ब्रह्मशब्दमात्रस्य ब्रह्मणि न वृत्त्यनुपपत्ति-रिति । उपपादितश्चायमाशय आदावेवात्रैव प्रकरणे, शतभूषण्यां चास्मिन् प्रकरणे ॥

### कार्याधिकरणं सविशेषविषयमेव, परं तु निर्विशेषमेव जैमिनिमते

तत्र कार्याधिकरणे कार्यस्य हिरण्यगर्भत्वेऽपि "परं जैमिनिरि"त्यत्र ब्रह्मपदार्थो न सविशेषः, स तु विष्णुर्वाऽन्यो वा इत्यन्यदेतत् । गत्युप-पत्त्यनुपपत्तिभ्यां खलु तत्र पूर्वोत्तरौ पक्षौ । तत्र गत्युपपत्तिः श्रीभाष्य-मते सविशेषब्रह्मणि विष्णावेव; तत्प्राप्तावपि गतिसापेक्षताया वर्णनात्, न तु निर्विशेषं ब्रह्म। व्यक्तं चैतत् भाष्ये—"कार्यं बादरिरस्य गत्युपपत्तेरि"-त्यस्यैव सिद्धान्तसूत्रत्वम् "परं जैमिनिर्मुख्यत्वात्" इति सूत्रस्य पूर्वपक्षत्व-वर्णनावसरे । तत्र भगवत्पादमतमेव समीचीनमित्यद्वैतमार्तण्डे विशदम् ॥

### "परं जैमिनिरि"त्यत्र परपदं न विष्ण्वादिपरम्

अत एव तत्र परपदम् । तेन हि परविद्याप्रतिपाद्यमदृश्यत्वादिगुणकं परं निर्विशेषमेव विवक्ष्यते, न तु सविशेषम् । तत्र यद्यपि कार्यप्रतिद्वन्द्वितया कारणमेव परपदार्थः प्रतीयते; तथापि गत्युपपत्तेः कार्यपरत्वहेतुत्वोक्त्या तत्प्रतिद्वन्द्वि निर्विशेषमेवात्र परपदार्थो भाष्याभिप्रेत इति भाष्य एव विशदम् ॥

एतेन—कारणस्य कार्यप्रतिद्वन्द्विनो विष्णु-नारायणादिशब्दवाच्यस्य ब्रह्मणः सर्वगतस्याविद्याशबलस्य सर्वगततया तत्प्राप्तयेऽपि गन्तव्यदेश-प्रतीक्षाविरहात् चतुर्मुखलोकप्राप्तिरेव युक्तेति भाष्याभिप्राय इति—परा-स्तम्; उद्भाष्यत्वादस्याः कल्पनायाः। सर्वथा तु श्रीभाष्यसिद्धान्ते सविशे-षकारणब्रह्मलोकप्राप्तयेऽपि गन्तव्यदेशप्रतीक्षायाः सत्त्वात्; गतिव्यवस्था-पनाच्च नात्र परब्रह्मपदार्थनिर्वाहः। अतः कार्याधिकरणगतजैमिन्यभिमतं स्वरूपमपि न श्रीभाष्याभिमतं स्वरसम्। प्रासङ्गिकमपीदं नात्र विस्तार-मर्हति। जैमिनिमतब्रह्मप्राप्तिः, तत्सम्पत्तिरूपा निर्विशेषब्रह्मभाव एवेति भाष्ये व्यक्तम् ॥

तत्रार्चिरादिमार्गसम्बन्धस्यैवायोग्यत्वात् "स एनान् ब्रह्म गमयती"-त्यत्र न ग्रहणयोग्यतेति कृत्वैव कार्यब्रह्मपक्ष एव सिद्धान्तः; अन्यथा "स एनान् ब्रह्म गमयती"त्यादिसन्दर्भोऽत्यन्तमेव विरुद्धः स्यात्। तत्र जैमि-

निना निर्विशेषब्रह्मपक्षोऽपि विवक्षित इति भगवत्पादाशयः। स तु जैमिनिर्न पूर्वमीमांसाकर्ता, किन्तु ततोऽन्यः, यः पूर्वमीमांसायामेव पूर्वपक्षितया गृहीत इति त्वन्यदेतत्। अतोऽत्र न जैमिनिमतसिद्धान्तताऽयुक्ता॥

सति चैवं यदि पूर्वोक्तरीत्या निर्विशेषं ब्रह्मापि वाच्यम्, तर्हि स्वागतम्, येन ब्रह्मशब्दवृत्त्युपपत्तिरेव समर्थिता भवति, इति विष्णुपुराणवचनोल्लेखोऽपि शतभूषण्या निर्विशेपस्यापि सङ्केतेन ब्रह्मशब्दवाच्यत्वं समर्थयितुं नासाम्प्रतम्। शतभूषणी हि निर्विशेषस्य वाच्यत्वं तत्त्वमादिपदेषु ब्रह्मशब्देषु तद्वाच्यत्वमित्येव ज्ञापयति, इति नास्य पक्षान्तरस्य व्याहतिः॥

### ब्रह्मादिशब्दबोध्यसविशेष-निर्विशेषस्वरूपविवेकः

एवं मन्यमाना शतभूषणी सद्ब्रह्मादिशब्दा न सविशेषवाचिन इति-वदति, किन्तु निर्विशेषवाचिनः, तद्बोधकाश्चेति। निर्विशेषं स्वरूपमनावृतं संविन्मात्रम्, स्वप्रकाशम्, यदेवावृतं सत् सर्वेषामधिष्ठानमविक्षेपहितात्मना, यत् सखण्डमपि यावद्वृत्त्युपधानम्, अविद्योपधानं वा शब्दस्य वाच्यम्, लक्ष्यं वा तत्तत्पददृष्ट्या, परन्तु घटादिवद् नेदन्तया फलव्याप्यमिति त्वन्यत्। इदमेवाभिप्रेत्य विष्णुपुराणम्—

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तद् ज्ञानं ब्रह्मशब्दितम्॥"

इति-तत्र डित्थ-डवित्थादिशब्दानां सांकेतिकानां श्रोत्रगृहीतत्वात् व्यावर्तकतया यथोपलक्षणत्वम्, एवमेवात्र ब्रह्मशब्दस्य श्रोत्रगृहीतस्योपलक्षणतया व्यावर्तकत्वम्। प्रत्यस्तमितभेदादिशब्दानां प्रसिद्धार्थकानां स्वरूपमात्रोपस्थापकत्वं वाच्यार्थविधया, लक्ष्यार्थविधया वा नानुपपन्नम्। उक्तस्वरूपे ब्रह्मणि सङ्केतवशात् ब्रह्मशब्दवृत्तिः, सविशेषे तु "बृहन्तोऽस्मिन् गुणाः"-इति व्युत्पत्तिविधया, इत्यनेकार्थत्वेऽपि ब्रह्मशब्दस्य प्रकरणवशात् यथायोगमन्वयः, इति "प्रत्यस्तमितमि"त्यादीनां नियमेन ब्रह्मशब्दप्रयोगस्थले सर्वदाऽनुपस्थितावपि न दोषः, इति ब्रह्मशब्देन संवित्स्वरूपमात्रभानमपि न विरुध्यते॥

### निर्विशेषे ज्ञानत्वादीनामपि न धर्मत्वम्

अत्र प्रत्यस्तमितभेदत्वाद्युपलक्षितसंवित्स्वरूपमात्रं ब्रह्मशब्दार्थः। न च ज्ञानत्वमपि तस्य धर्मः; निर्विशेषे तत्र ज्ञानत्वरूपधर्मस्याप्यभावात्।

ज्ञानपदार्थो हि मुख्यमेकं संविद्रूपमेव; स्वरूपज्ञानस्याद्वैतमत एकत्वात्, इति ज्ञानस्वरूपत्वस्याप्यनेकसाधारण्यात् नानेकेषां ज्ञानानां ब्रह्मशब्द-वाच्यत्वम्, न वा तदर्थं व्यावर्तकधर्मान्तरापेक्षा। न चैतावता नाना-धर्मत्वं ब्रह्मणः; तत्तदुपलक्षितैकस्वरूपस्यैव ब्रह्मशब्दार्थत्वात् ॥

इदमेवाभिप्रेत्य भगवत्पादाः कार्याधिकरणे "परं हि ब्रह्म ब्रह्मशब्दस्य मुख्यमालम्बनमि"ति भाषन्ते। तत्र मुख्यत्वं यदि महातात्पर्यविषयतया, गौणत्वं चावान्तरतात्पर्यविषयतया, तर्हि कूटस्थमारभ्य सर्वैरद्वैतिभि-र्ब्रह्म गोऽवाच्यत्वम्, ब्रह्मशब्दमात्रस्य तु निर्विशेषशब्दबोध्यत्वं च। विष्णु-पुराणदृष्ट्या स्वीक्रियते, इति न कोऽपि विरोधः। ब्रह्माऽऽत्मादिशब्दानां पर्यायत्वादात्मशब्देऽप्ययमेव न्यायः ॥

### विष्णुपुराणे ब्रह्मपदसंकेतस्तत्पर्यायमात्रविषयः

विष्णुपुराणे ब्रह्मशब्दस्तूपलक्षणम्। अत एव मूर्तामूर्तपरापरभेदेन चतुर्विधं ब्रह्म प्रस्तुत्यापि मुक्तात्मपरत्वं प्रत्यस्तमितभेदवाक्यस्य स्वी-क्रियते। इदञ्च मुक्तात्मनोऽपि ब्रह्मस्वरूपत्व उपपद्यते, न तु ब्रह्मशरीरत्वे। मूर्तपरब्रह्मणः, मूर्तापरब्रह्मणो वा ब्रह्मस्वरूपस्य कथं श्रीभाष्यमते ब्रह्म-शरीरत्वम्? इति प्रायपाठोप्यत्राद्वैतमत एव स्वरसः। न चात्मशब्दोऽपि सविशेषमात्रपरो ब्रह्मशब्द इव, किन्तु प्रकरणवशात् वाच्यविधया, लक्ष्य-विधया वा निर्विशेषपर एव ॥

### परापरब्रह्मविभागो न भगवत्पादसिद्धान्तेऽपीति भूषणानु-वादो भाष्य-तद्विवरणादिविरुद्धः

इदमेवाभिप्रेत्य भाष्यम्—"अस्ति तावद् ब्रह्म नित्य-शुद्ध-बुद्ध-मुक्त-स्वभावं सर्वज्ञं सर्वशक्तिसमन्वितं चे"ति। तत्र ब्रह्मशब्दः सविशेषपर इव निर्विशेषपरोऽपीत्युक्तत्वात् न सर्वज्ञत्वादिविशिष्टार्थप्रतीतिरपि प्रक-रणवशाद् दण्डेन वार्यते। यद्यपि भाष्येऽत्र "समन्वितं"चेति चशब्दो नास्ति, तथापि भामत्याम्—तदेवमत्रौपाधिकं ब्रह्मणो रूपमुक्त्वा सोपाधिकं रूपमाह–"सर्वज्ञं सर्वशक्तिसमन्वितमि"त्येवं विवरणात्, 'तत्त्व-मसि'वाक्यनिर्दिष्टलक्ष्यप्रसिद्धिमुक्त्वा वाच्यप्रसिद्धिमाह—अविद्योपाधिक-मि"ति कल्पतरुणोक्तभामत्यवतरणात्, परिमलेऽपि सविस्तारमस्यैवार्थस्य विशदीकरणात्, भाष्यभावप्रकाशिकायामपि भामतीवदेवावतरणात्, पञ्चपादिकायाम्—"सर्वज्ञं सर्वशक्तिसमन्वितं च तत्"इति चशब्दघटित-

तयैव भाष्यस्यानुवादाच्च नात्रोद्भाव्यं शतभूषणी किमपि लिखति । ब्रह्माद्वैतं त्वानन्दमयाधिकरणभूमिकायम्—"द्विरूपं हि ब्रह्मावगम्यते" इत्यादिना स्वयं भाष्यकारैरेव विशदीकृतमि"ति सर्वविदितम् , इति न श्रीभाष्य-भगवत्पादभाष्ययोरत्रैकमत्यं भूषणोक्तरीत्या ॥

सर्वेषां गुणानामाविद्यकत्वात् श्रीभाष्यसिद्धान्तोऽपि निर्विशेषसिद्धान्त एव, इति । कथं न सोऽप्यद्वैतसिद्धान्तः

तत्र यदि भाष्ययोरनयोरैकमत्यं सम्पादनीयमित्याग्रहो भूषणस्य, भगवत्पादाः स्वसिद्धान्ते अपि प्रमाणीकर्तव्या इत्याशयेन, तर्हि ब्रह्मगतानां सर्वेषां विशेषाणामाविद्यकत्वेन दोषत्वात् , निरस्तनिखिलदोषपदेन मुख्यं निर्विशेषस्वरूपम् , अनवधिकातिशयासङ्ख्येयकल्याणगुण इत्यनेन विनैव च शब्दं भामत्यादिवद्योजनेनैकमत्यं सम्पाद्य , अद्वैतवादमादायैव शान्त्या विरम्यताम् । न हि भगवत्पादाः सविशेषं पुरुषोत्तमम् , सदाशिवम् नारायणं वा विद्विषन्ति, निर्विशेषमिवाऽन्ये ॥

श्रीभाष्याद्वैतभाष्ययोर्न सिद्धान्तैक्यं भूषणोक्तदृष्ट्या

एतेन—"बृहत्त्वञ्च स्वरूपेण, गुणैश्च यत्रानवधिकातिशयत्वम् , सोऽस्य मुख्योऽर्थः" इति भामत्यपि—व्याख्याता; तत्र बृहत्त्वं स्वरूपेणेत्यनेन नित्य-शुद्ध-मुक्तस्वभावत्वम् , गुणैरनवधिकातिशयं चेति सविशेषाभिप्रायमित्येव पूर्वोत्तरसन्दर्भानुसारेण विवक्षितोऽर्थः, इति न शतभूषण्यभिमतोऽर्थोऽद्वैतमतप्रतिकूलः, किन्तु तद् भामती-पञ्चपादिका-विवरणादिव्याख्यानुसारी, भाष्यानुसारी च ॥

सर्वथा तु न भगवत्पादभाष्यानुसारि श्रीभाष्यम् । तत्र सविशेषस्य वाच्यार्थत्वमादाय यदि श्रीभाष्यं मन्यते, तर्हि कामं मन्यताम् , को वा विसंवदते सविशेषब्रह्मवादे ? तत्रापि सविशेषस्य ब्रह्मशब्दवाच्यत्वे च ? विसंवादस्तु निर्विशेषे ब्रह्मणि, तस्य वाच्यत्वे, लक्षणया वेदान्त-महातात्पर्यविषयत्वे च । तत्र तु नैकमत्यमुभयोः, शतभूषणी-भूषणयोर्वा ॥

चिदचिच्छरीरकत्व-निरस्तसमस्तदोषत्व-सत्यकामत्वविशिष्टे प्राकरणिके सविशेषे ब्रह्मशब्दवाच्यत्वं भूषणमपि स्वीकरोति । सति चैवं ब्रह्मणि सगुणे, निर्गुणे वा शब्दानां मुख्यवृत्तिः समानेति वदन्त्या शतभूषण्या किमपराद्धम् ? पूर्वोत्तरसन्दर्भानुल्लेखेन—ब्रह्मणि सगुणे, निर्गुणे वा

शब्दानां मुख्यवृत्त्यनुपपत्तिः, अशंमात्रग्रहणेन व्यवस्था च न साम्प्रतम् ॥

### विशिष्टवाचकस्यापि तात्पर्यवशाद् विशेष्यमात्रपरत्वं निष्कर्षकविधया, संकेतेन वा युज्यते

तत्र निर्विशेषस्य ब्रह्मशब्दवाच्यत्वम् , तत्त्वम्पदवाच्यत्वम् , तत्तत्पदलक्ष्यत्वमेवेति च विवेके सति निर्विशेषस्य वाच्यत्वोक्तिः, वाक्यार्थनिर्विशेषपरेत्युक्तिः कथं व्याहता ? सर्वथा तु निर्विशेषस्य ब्रह्मेतरशब्दावाच्यत्वम् , ब्रह्मशब्दमात्रवाच्यत्वं च कथमयुक्तम् ? संकेतोऽयं ब्रह्मशब्दस्य विष्णुपुराणसिद्धः, न केवलमाधुनिकैः किन्तु कूटस्थैरपि 'कार्याधिकरणे भूषणोक्तदिशा प्रयोक्तुं शक्यत एव, प्रायुज्यत, प्रयुज्यते, प्रयोक्ष्यते च ॥

तत्र विशिष्टशक्तस्यापि विशेष्यमात्रपरत्वं तात्पर्यानुसारेण तत्त्वमादिपदेषु, ब्रह्मशब्दमात्रस्यार्थस्तु यथाग्रथं वाच्यो वा, लक्ष्यो वा, नात्र नैर्भर्यम् ॥

### विनाऽपि लक्ष्यतावच्छेदकं लक्षणया स्वरूपमात्रपरत्वं वा पदान्तरावाच्यस्यापि लक्ष्यत्वम्

यत्तु—पदान्तरावाच्यस्यापि लक्ष्यत्वं पदार्थतत्त्वनिर्णयानुसारेणेति शतभूषण्यामुक्तम् , तदिदं निर्विशेषस्य लक्ष्यत्वमेव, न तु वाच्यत्वमपीति केषाञ्चनाग्रहमपि निरसितुम् । तत्रेक्षु-क्षीरमाधुर्यादीनां मिथो भिन्नतयाऽनुभूयमानानामिदमित्थमिति तत्र रूढेन शब्देन व्युत्पादयितुं न शक्यत इत्येवमाशयेन ॥

### इक्षु-क्षीरमाधुर्यादीनामशक्यवचनत्वं भूषणस्यापि संमतम्

"इक्षु-क्षीर-गुडादीनां माधुर्यस्यान्तरं महत् ।
तथापि न तदाख्यातुं सरस्वत्याऽपि शक्यते ॥"

इति दण्डिवचनतात्पर्यमिति लिखद् भूषणमप्यवाच्यमपि लक्ष्यमित्येव गमयति । यद् वक्तुं न शक्यते, तस्योक्तिस्तु लक्षणां विना न भवति, उच्यते च माधुर्यविशेषः, इति पदार्थतत्त्वनिर्णयोक्तेः कथं नाम नात्रावसरः ? तत्रेक्षुमाधुर्यत्वं लक्ष्यतावच्छेदकम् , अत्र तु लक्ष्यस्वरूपमात्रं लक्ष्यम् । यथा विना तत्र वाच्यतावच्छेदकमाकशपदात् आकाशप्रतीतिः; एवं विना लक्ष्यतावच्छेकं लक्षणा न विरुध्यते ॥

### मानान्तरामेयस्यापि श्रुत्या मेयत्वाविरोधः प्रसिद्धिमात्रेणेष्टनिर्वाहात्

एतेन—मानान्तरमेयस्यैव लक्ष्यत्वमित्यपि—परास्तम्; तत्र मानान्तरामेयं सविशेषं ब्रह्म, यूपाहवनीयादिकं वा यदि वाच्यम्, तत्तत्प्रमाणमात्रवेद्यत्वेन, तथा निर्विशेषमपि वाक्यरूपप्रमाणमात्रगम्यं लक्ष्यत्वेनैवेति कथं न संभवति ?

### सौषुप्तानन्दानुभवोऽप्यवाच्यस्य, अप्रमेयस्य च लक्ष्यत्वे मानम्

अयमेव न्यायः सौषुप्तानन्देऽपि। न हि तत्रापि तदानन्दविशेषवाचकः शब्दः, प्रमाणान्तरं वा सौषुप्त्यानुभवमतिरिच्य किमपि वर्तते; तथाप्याभिलप्यत इति सोऽप्यवाच्योऽप्रमेयश्च लक्ष्य इत्यत्र निदर्शनमेव। इदं त्ववाच्यम्, अप्रमेयं च लक्ष्यतामर्हतीत्युपपादयितुमेव, न तु निर्विशेषमपि प्रतिपादयितुम्॥

वस्तुतस्तु—सुषुप्तावप्यविद्योपहितः स्वरूपानन्द एव प्रकाशते। इयान् विशेषः—अखण्डाकारवृत्तिदशायां वृत्तिः प्रमाणजन्या, सुषुप्तौ त्वविद्यावृत्तिः; उपाधित्वमात्रं तूभयत्राविद्या-तद्वृत्त्योरेव। अत एव तस्य 'सुखमहमस्वाप्समि'ति प्रतिसन्धानम्। तत्र सुखं निर्विशेषमित्युक्तिस्तु तत्सविशेषत्वोपपादकानां विषयाणां तत्रोपरमाभिप्रायेण॥

तत्राविद्यावृत्तेः सुखविषयिण्याः प्रमाणजन्यत्वाभावाद् न मानान्तरवेद्यत्वम्। स्मरणं त्वविद्यवृत्तिविषयत्वेऽपि न विरुद्ध्यते; प्रमितस्यैव स्मरणमित्यनियमात्॥

तत्र यद्यप्यहमर्थोऽप्यविद्योपहितरूप एव भासते; अहंकारस्य तदा लीनस्य तदुपादानाविद्यात्मत्वात्, तथापि न तदा स्वप्रकाशमात्रानन्दस्वरूपत्वं तस्य, इति न 'सुखमहमि'त्यत्र पौनरुक्त्यम्। तत्र ह्यविद्यावृत्त्या तत्प्रतिफलितानन्दांशेनैव ब्रह्मणो भानम्, नाखण्डात्मनेति वस्तुगत्या निर्विशेषत्वात् तस्य लक्ष्यत्वम्। असत्यपि विषयानुभवे, असत्यपि चान्तःकरणे सुषुप्तावानन्दानुभवोऽलौकिको ब्रह्मानन्दानुभव एव, न सांसारिका-नन्दानुभवः। सर्वं सुखं प्रमातृचैतन्यरूपसाक्षिवेद्यमित्यद्वैतसिद्धान्तेऽपि सुषुप्तौ प्रमातृरूपस्याहमर्थस्य विलयात्, अविद्योपहितानन्दस्वरूपमात्रस्यैवात्र भानाद् न सुषुप्तौ साक्षिवेद्यत्वम्-अथान्तकरणोपहितमेव साक्षि चैतन्यम्। अविद्योपहितचैतन्यमेव साक्षि, इति मते तु सौषुप्तानन्दोऽपि साक्षिवेद्य एव॥

### सविशेषवाचिनामपि जहदजहल्लक्षणया निर्विशेषबोधकत्वं प्रकृष्टप्रकाशवाक्य इव गोसदृशो गवय इत्यत्रेव च

सविशेषवाचिनामपि जहदजहल्लक्षणया निर्विशेषपरत्वेऽपि नावाचकत्वेन ब्रह्मालक्षणम्। न च लक्ष्यवाचकपदान्तरनियमः। ब्रह्मशब्दवृत्त्यनुपपत्तिस्तु नात्र प्रसरति। 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यत्रापि प्रकृष्टप्रकाशोपलक्षितचन्द्रस्वरूपमात्रं लक्ष्यमेव, न चन्द्रपदवाच्यस्तत्त्वतः स्वरूपविशेषः। चन्द्रपदवाच्यः कश्चन ज्ञायते, स प्रकाशस्वभाव इति च, परन्तु पुरतो दृश्यमानेषु प्रकाशमानेषु को वा चन्द्र इति तत्र प्रश्नार्थः। तत्र प्रकर्षोपलक्षितप्रकाशस्वरूपमात्रमेवोत्तरार्थः। तच्च स्वरूपमात्रम्, न चन्द्रपदवाच्यम्॥

"गोसदृशो गवयः" इत्यत्र यथा सादृश्यं न शक्यतावच्छेदकम्, एवं प्रकृष्टप्रकाशत्वमपि न शक्यतावच्छेदकमिति भूषणमपि स्वीकरोति, परन्तु—गोसादृश्यस्य शक्यतानवच्छेदकत्वेऽपि शक्योपसर्जनतया भानं स्वीक्रियते, न तथा प्रकृष्टप्रकाशस्यापि तद् भवितुं योग्यमिति भूषणं लिखति। तत्र गवयपदेन तद्व्यतिरिक्तः कोऽपि गोसादृश्योपहिततयैव ज्ञायते। उपमानस्य शक्तिग्राहकत्वेऽपि व्यक्तिः सदा तत्सादृश्येनैव प्रतीयत इति त्वनुभवविरुद्धम्। तथाप्यभ्युपगम्यापि तदीयं नियममत्रोच्यते। तात्पर्याभावात्तु न प्रकृष्टप्रकाशत्वस्य तत्र विवक्षा। वस्तुतश्चन्द्रे तत्सत्त्वं तु चन्द्रवत् तद्धर्मस्यापि व्यावहारिकत्वान्न विरुध्यते। सविशेषवाक्यलक्षिते निर्विशेषे त्वविवक्षितानां विशेषाणां मिथ्यात्वाद् न तत्र सत्त्वमपीति विशेषः। अत्र प्रकृष्टप्रकाशत्वस्योपलक्षणतयैव व्यावर्तकत्वम्, न तु विशेषणत्वेन; स्वरूपमात्रपर्यवसानादिति तु निष्कर्षः॥

### अवाचकस्यालक्षकत्वनियममप्यभ्युपगम्य तु भूषणी, यदि भूषणं तन्नियमं न स्वीकरोति, तर्हि स्वागतम्

अयमत्र निष्कर्षः—शतदूषणी शब्दस्य यत्किञ्चिद्वाचकत्वानङ्गीकारे लक्षकत्वं न युक्तमिति लिखति, शतभूषण्यपि येषां शब्दानां ब्रह्मलक्षकत्वम्, तेषामपि यत्किञ्चिद्विशिष्टवाचकत्वं निरूपयति। तत्र लक्ष्यस्यापि विशेषस्य शब्दविशेषवाच्यत्वनियमो यदि शतदूषण्या न विषयः, तर्हि कामं मा भवतु, शतभूषणी तु तमपि नियमं केषाञ्चनाभिप्रेत्य तन्निरासार्थं प्रवृत्ता। यदि तत्र न निर्भरः शतदूषण्याः, भूषणस्य च, तर्हि स्वागतमेव, लक्षकस्य यत्किञ्चिद्वाचकत्वनियमस्तु निर्विशेषवादे न कथमपि प्रतिकूलः॥

न हि ब्रह्मलक्षकाणि तदादिपदानि कस्याप्यर्थस्यावाचकानीत्यद्वैतसिद्धान्तः। अत एव तदादिशब्दानां जहदजहल्लक्षणाम्, विशिष्टवाचकानामेव तात्पर्यवशात् स्वरूपमात्रलक्षकत्वं वेत्यद्वैतसिद्धान्तः॥

### जातिशक्तिवादे व्यक्तेः, व्यक्तिशक्तिवादे व्यक्त्यन्तरस्य चावाच्यस्य लक्ष्यत्वं सर्वसम्मतम्

यत्तु—आकृतिशक्तिवादिनो मीमांसका व्यक्तिलक्षणयैव 'घटमानये'त्यादावर्थमवगच्छन्ति, तथा व्यक्तिशक्तिवादिनोऽपि 'घटमानये'त्यादौ व्यक्तिविशेषं लक्षणयैवावगच्छन्तीति शतभूषणी—लिखति, तदिमवाच्यस्य न लक्ष्यत्वमिति नियमनिरासाभिप्रायेण। तत्र भूषणं न तन्नियमं स्वीकरोति, न वा शतभूषण्यत्र विसंवदते। तत्र व्यक्तिशक्तिवादेऽपि व्यक्तिसामान्ये शक्तिः, व्यक्तिविशेषस्य तु भानं न लक्षणां विना; अन्यथा तु तद्व्यक्तिमात्र एव शक्तिस्वीकारात् घटव्यक्त्यन्तरे घटशब्दोच्चारणेऽपूर्वे शक्तिग्रहाभावात् तस्या वाक्यार्थे भानमेव न स्यात्। तत्र जातिशक्तिवादे व्यक्तेरवाच्याया लक्ष्यत्वं भूषणमप्यनुमोदते॥

यत्तु—"अत्राद्वैतसिद्धिकारोऽपी"त्युपक्रम्य——जाति-व्यक्त्योरुभयोरपि तार्किकैर्गोपदार्थत्वाभ्युपगमादिति वाच्यत्वं वर्तत इति वर्णितम्, काममिदमास्ताम्, मतान्तरे लक्ष्यत्वोक्तिः कथमेतावता न व्याहन्यते?

एतेन—विशिष्टवाच्यत्वपक्षोऽपि—व्याख्यातः; तत्र हि पूर्वोक्तरीत्या 'घटोऽनित्यः' इत्यादावेकदेशान्वयो लक्षणयैवेति भूषणमपि स्वीकरोति। सर्वमिदं भूषण्या स्वानभ्युपगतनियमस्यापि यदि निरासार्थम्, तर्हि तस्य निरासार्थमेव पुनरपीक्षु-क्षीररसोदाहरणप्रपञ्चः॥

तत्र न्यायपरिशुद्धिग्रन्थसन्दर्भो यदि भूषणोक्तरीत्या घटादेरपीक्षुक्षीररससादृश्यस्यानुभवैकगम्यस्य वक्तुमशक्यस्य स्वयमिदन्तयाऽनिर्वचनमात्रेण न पदार्थापलापो वक्तुं शक्यत इत्येवमर्थमात्रपरः, तावता त्विदमवचनसिद्धम्, यद् निर्विशेषमपि नापलपितुं शक्यं तद्वाचकपदाभावमात्रेण। शतभूषण्यप्यत्र निर्विशेषवाचकशब्दाभावेऽपि तस्य लक्षणया बोधो न विरुद्ध इक्षु-क्षीरमाधुर्यादेरिव, घटविशेषस्येव वा न्यायसाम्यादित्येवाभिप्रैति॥

तत्रेक्षु क्षीरमाधुर्यविशेषाणामवाच्यानामपि लक्षणया व्यपदेशवत् पदार्थतत्त्वनिर्णयाद्युक्तरीत्या वेदान्तवाक्यैर्लक्षणया बोधनं न विरुद्धम्,

इति मुख्यार्थस्य विवक्षितस्य न काऽपि हानिः। तत्र यदि न्यायपरिशुद्धि-सन्दर्भस्य "लक्षणस्यैव केवलव्यतिरेकितया वस्तुव्यवस्थापकत्वमिति मतनिरासाय लक्षणोक्तिं विनाऽपि विवेकसत्त्वप्रदर्शनायेक्षु-क्षीरमाधुर्यादि-विषये दण्ड्युक्तं दर्शयिष्यतो घटादावपि तदिदं वक्तुं शक्यमित्येव तात्पर्यम्, तर्हि दण्डिवाक्यस्य. इक्षु-क्षीरमाधुर्यवाक्यस्य वा तात्पर्यमादा-यात्रापि लक्षणस्य केवलव्यतिरेकितया वस्तुव्यवस्थापकत्वमतं निरसितु-मेवोक्तमवतार्यते ॥

अवाचकस्य, अवाच्यस्य वा न लक्षकत्वम्, लक्ष्यत्वं वेति नियमः

दण्डी हि गौड-वैदर्भकाव्यभेदानां विशिष्य स्वरूपम्, लक्षणं वा वक्तुं न शक्यत इक्षु-क्षीर-गुडादीनामिवेति वर्णयन् गौड-वैदर्भादिभेदस्तु तद्वाचकशब्दाभावाद् लक्षणयैवोच्यत इत्यभिप्रैति; अन्यथा गौड-वैदर्भवि-शेषाणां निरूपणं कथं तस्य युज्यते? इत्यभिप्रेत्यैव पदार्थतत्त्वनिर्णयादीनां प्रवृत्तिः ॥

सर्वथा तु 'तत्त्वमस्या'दिपदानाममुख्यवृत्तित्वेऽपि साधुत्वमव्या-हतम्। तत्र साधुत्वं पदानां व्याकरणाभ्यासजनितसंस्कारव्यङ्ग्यजाति-विशेषः। यत्तु—'अवाचकस्य लक्षकत्वं न भवतीति परैरुक्त्यम्, तदिदं ब्रह्मलक्षकाणामपि यत्किञ्चिदर्थवाचकत्वस्योपपादनाद् नोपपन्नम् ॥

यत्तु—यद्यपि ब्रह्मशब्दोऽवाचकः; तथापि लक्षक एवेति शतभूष-ण्यामुक्तम्, तदिदमवाच्यस्य न लक्ष्यत्वमिति मतनिरासाभिप्रायम्। सविशेषवाचकत्वमादाय ब्रह्मलक्षकत्वं हि शतभूषणी बहुशो निरूपयति। न चात्र भूषणग्राहितं किमपि नूतनं वस्तु, यत् शतभूषण्या नोपपादितम् ॥

वस्तुतस्त्ववाचको न लक्षक इत्येकान्तो न संभवति; "विषं भुङ्क्ष्व" "वायुर्वै क्षेपिष्ठा देवता" इत्यादौ वाक्यस्यावाचकस्यापि लक्षकत्वेन तत्र व्यभिचारात्। यद्यवाचकं पदं न लक्षकमित्याशयः, यदि च प्रकृतशब्द-स्यापि सविशेषपरत्वं भूषणेन ग्राहितम्, तर्हि कुतो वा ब्रह्मशब्दवृत्त्य-नुपपत्तिः? कं वाऽऽशयमनुसृत्य शतदूषण्णी, भूषणं वाऽत्र प्रकुरुते? यद्यद्वैतमते ब्रह्मशब्दस्य लक्षकत्वमेव स्वीकृतमिति मत्वा, तर्ह्यपसिद्धान्तः ॥

ब्रह्मशब्दोऽपि संकेतवशाद् वाचकः, एवं ब्रह्मापि वाच्यमेव, इति ना-वाचकस्य, अवाच्यस्य वा लक्षकत्वम्, लक्ष्यत्वं वाऽत्र

एतेन—"प्रत्यस्तमितभेदमि"ति विष्णुपुराणमपि—व्याख्यातम्। तेनापि हि ब्रह्मशब्दस्य कुत्रचनार्थे संङ्केतः क्रियत एव। स च श्रीभाष्य-

सिद्धान्तदृष्ट्या शुद्धप्रत्यगात्मा वा भवतु, अद्वैतदृष्ट्या निर्विशेषं संविद्रूपं वा, जीव-ब्रह्मोभयस्वरूपानुगतं वा, सर्वथाऽपि परमात्मप्रकरणे तस्य परमात्मपरत्वं लक्षणया कथं न भवति ? मुक्तात्माऽपि परामूर्तः, अद्वैतदृष्ट्या सविन्मात्रं वा निर्विशेषं वस्तु, इति त्वन्यदेतत् ॥

वस्तुतस्तूक्तविष्णुपुराणवचनं शुद्धप्रत्यगात्मपरमिति श्रीभाष्यानुयायिनां मते "ब्रह्मविदाप्नोति परमि"त्यादौ सविशेषब्रह्मण्यपि ब्रह्मशब्दस्य वृत्त्यनुपपत्तिः ॥

अवाचकत्वेऽपि साधुत्वोपपत्तिः

यत्तु—"अवाचकत्वेऽपि साधुत्वं ब्रह्मादिशब्दानामि"ति शतभूषणी लिखति, तदिदं ब्रह्मशब्दस्य लक्षकत्वमेवेति मत्वा ब्रह्मशब्दवृत्त्यनुपपत्तिपरिहाराभिप्रायेण । वाचकत्वं साधुत्वञ्च नैकमिति कृत्वैव व्याकरणाभ्यासजनितसंस्काराभिव्यङ्ग्यजातित्वं साधुत्वमिति लक्षणान्तरमभिप्रेत्य साधुत्वं व्यवस्थापि । लक्षणान्तरं हि नान्यथा सप्रयोजनम् ॥

साधुत्वलक्षणान्तरवर्णनप्रयोजनम्, येनापभ्रंशव्यावर्तनमपि

यत्तु—अपभ्रंशानां साधुत्वं मा भूदिति लक्षणान्तरमिति—भूषणम्, तदिदमपभ्रंशानां साधुशब्दोपस्थापनद्वारैव बोधकत्वम्, न स्वतोऽर्थवत्त्वमिमि न वाचकत्वमपि; अन्यथाऽपभ्रंशानामप्यर्थवत्त्वात् कथं न प्रातिपदिकत्वम्, कथं वा न सुबादिश्च ततः । अतो यदि कश्चन ब्रह्मादिपदानां निर्विशेषबोधकत्वमपि लक्षणयेति वदेत्, तं प्रत्यपि साधुत्वं तेषां सुनिरूपमित्यभिप्रेत्यैवावाचकत्वेऽपि साधुत्वमपशब्दव्यावर्तनेन निरूपयितुं साधुत्वस्य लक्षणान्तरेणात्र समर्थनम् ॥

वाचकत्वस्यैव साधुत्वे ब्रह्मशब्दस्यापि साधुत्वार्थं
काचन वृत्तिः स्वीकर्तव्या

तत्र यदि साधुशब्दानामपभ्रंशानामिव वाचकत्वापलपो नेति मन्यते, तर्हि ब्रह्मशब्दस्यापि साधुत्वनिर्वाहार्थं वृत्तिः काचन स्वीकर्तव्या, इति कथं ब्रह्मशब्दवृत्त्यनुपपत्तिः ? तत्र शतदूषणी ब्रह्मशब्दवृत्त्यनुपपत्तिवादे ब्रह्मशब्दसाधुत्वासाधुत्वविचारं किमित्याद्रियते, यदि निर्विशेषपरत्वेऽसाधुत्वापत्तिरित्यभिप्रेत्य, तर्हि तस्यार्थान्तरवाचकत्वाङ्गीकारात् कथमसाधुत्वचर्चाऽत्र ? यद्यद्वैतसिद्धान्ते निर्विशेषमात्रवाचकत्वं तस्य, तच्च न संभवतीति मत्वा तदसाधुत्वापादनम्, तर्ह्यनुक्तोपालम्भनम्, तथापि

कृत्वाचिन्तयाऽवाचकत्वेऽपि साधुत्वं सुनिरूपमित्यभिप्रेत्यैवात्र साधुत्वलक्षणान्तरस्वीकारेणोपपत्तिः शतभूषण्याम्। "प्रत्यस्तमितभेदमि"त्यस्य शुद्धप्रत्यगात्मपरत्वनिरासो न केवलं वेदान्तरक्षामणौ, किन्तु शतभूषण्यामपि सविस्तरं विशदीकृतः। यथावसरं भूषणमपि तत्र परीक्षिष्यते। वेदान्तरक्षामणिखण्डनं तु किं वा केन वा कृतमिति नेदानीमपि दृष्टिपथं गतम्। यदि कदाचन तदपि दृष्टिपथमायास्यति, तदा तत्रापि वक्तव्यं सर्वं विशदीकरिष्यते ॥

ब्रह्मशब्दस्य।चिदचिद्विशिष्टपरत्वे विशेष्यमात्रपरत्वेऽपि
श्रीभाष्यमतेऽनुपपत्तिः

तत्र ब्रह्मपदम्, सदाशिवपदं वा यदि "यतो वे"त्यादिवाक्यगतं विशेष्यमात्रपरम्, तर्हि विशिष्टब्रह्मणो न कारणत्वम्। विशेष्यमात्रस्य ब्रह्मणोऽपि गौणमेव तत्र तत् स्यात्। यथा चेतनाचेतनादिपदानां विशिष्टपरत्वे विशेषणमात्रपरत्वे च ॥

एतेन—विशेष्यमात्रस्य निमित्तकारणत्वम्, विशिष्टस्य तूपादानकारणत्वमिति भूषणानुवादोऽपि—परास्तः; इदं हि "यतो वे"ति वाक्ये "तद् ब्रह्मे"ति ब्रह्मशब्देन विशिष्टस्य ग्रहणे नोपपद्यते; विशेष्यमात्रपरत्वे तु ब्रह्मणोऽपि विशिष्टस्यानुपादानत्वात् कथं विशिष्टब्रह्मोपादानतावादः, विशेष्यमात्रनिमित्तकारणता वा ?

श्रीभाष्यमते सद्विद्यादौ सदादिपदानां न विशिष्टपरत्वम्, विशेषणपरत्वं वा,
अद्वैतमते तु सविशेषपरत्वमपि निर्विशेषपरत्वमपि विवरण-
भामतीप्रस्थानभेदेन

एतेन—चेतनाचेतनानामेव विशिष्टवाचित्वं मुख्यम्, विशेष्यवाचित्वं च गौणम्, न तु परमात्मवाचिनां विशिष्टवाचित्वम्, विशेष्यपर्यन्तत्वं वेति—परास्तम्; तत्र हि "सदेवे"त्यादिवाक्यानां परमात्मपराणां कथं चिदचिद्विशिष्टब्रह्मपरतया विशिष्टकारणत्वोपक्रमः? "यतो वे"ति वाक्ये वा कथं ब्रह्मशब्देन विशिष्टोपस्थितिः ॥

अद्वैतमते तु शुद्धमिवोपहितमपि स्वरूपतो ब्रह्मैव, परन्तु निर्विशेषप्रकरणेऽनुपहितस्य ग्रहणम्, सविशेषप्रकरणे तूपहितस्य; तत्रोपाधित्वाद्यविद्याया न वाच्यतावच्छेदकता, किन्तु सत्तामात्रेण व्यावर्तकत्व-

मिति विशेषः, इति "अथातो ब्रह्मजिज्ञासे"त्यत्र शुद्धब्रह्मणो ग्रहणं न विरुद्ध्यते। तत्रोभयस्यापि ब्रह्मशब्दार्थत्वेऽपि प्रकरणवशान्निर्णय इति प्रागुक्तमेव ॥

तत्र विवरणमते निर्विशेषस्यैव शास्त्रतात्पर्यविषयत्वम्, भामतीमते तूपहितं ब्रह्म शास्त्रप्रतिपाद्यम्। तत्रोपहितस्यैव ब्रह्मशब्दवाच्यत्वेऽपि तज्ज्ञानमज्ञाननिवर्तकतया श्रुतिविवक्षितमुपहितविषयकत्वेनोच्यमानमपि स्वरूपमात्रविषयकम्, नोपाधिविषयकमपि; "शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वोपहितं गृह्णाति स्वाविषया; स्वस्याप्युपाधित्वाविशेषादि"ति कल्पतरूक्तेः। न च तत्रोपाधिः, उपहितत्वं वा तत्त्वज्ञानविषयः, येन तस्यातत्त्वविषयकत्वं स्यात् ॥

### विशेषणोपाध्युपलक्षणानां भेदमगृहीत्वा भामतीमतोपक्षेपो भूषणस्य तन्निरासश्चानुक्तोपालम्भनम्

तत्र भूषणमेवं लिखति—भामतीकाराणां मतं यद्वा भवतु, शतदूषणीकृतां तु विशेषण-विशेष्योभयविषयकत्वरूपोपहितविषयकत्वाभिप्राय एव विकल्पः—इति। एवं वदत् भूषणम्—न शतदूषणी भामतीमतं निरस्यति, न वा विवरणमतम्, किंतु स्वमतिमात्रविजृम्भितं किमप्यद्वैतमतं कृत्वाचिन्तयेति स्वयमनुक्तोपालम्भनत्वं स्वाचार्याणामपि मुक्तकण्ठमाविष्करोति ॥

अत्र भामती—'उपाधिपदं कार्यानन्वयि सत्तामात्रेण व्यावर्तकमभिप्रैति, न तु कार्यान्वयि सत्तामात्रेण व्यावर्तकम्, परिचायकत्वमात्रमुपाधिशब्दार्थः, न तु विशेषणम्। उपहितपदमपि विशिष्टपरमेवेति यथेच्छं किमपि भामतीमतं कृत्वा भूषणं चिन्तयति। 'कार्याधिकरणे' कल्पतरुः—स्पष्टमिदं वदति—न विशेषणमविद्या, नाप्युपलक्षणम्, किन्तूपाधिः। कः पुनरेषां भेदः ? कार्यान्वयित्वेन विभेदकं विशेषणम्, नैल्यमिवोत्पलस्य, अनन्वयित्वेन तु भेदकमुपाधित्वम्, उपलक्षणत्वं चेति ॥

निष्कर्षस्तु—

"यावत्कार्यमवस्थाय भेदहेतोरुपाधिता।
कादाचित्कतया भेदधीहेतुरुपलक्षणम् ॥"

इति सर्वथा तु भामतीसंमतमुपाधिलक्षणतो भिन्नम्, अन्येषामुपाधिलक्षणं मत्वाऽन्यथा भामतीमतनिरसनं स्वस्थाने ॥

### कुत्रचनोपाध्युपलक्षणयोरैक्यव्यवहारस्तूभयोरपि कार्यानन्वयित्वेन साम्यमात्रेण, न तावता विशेषणोपाध्योरप्यैक्यम्

तत्र संक्षेपशारीरक-विवरण-वार्तिकादिसंमतस्योपादानत्वस्य फलतो न विरोधः, न वाऽन्तरधिकरणसिद्धान्तविरोधः इति तत्तत्सिद्धान्तनिष्कर्षस्ततस्तत एवावगन्तव्यः। सर्वथा तूपहितत्वं नात्र विशिष्टत्वम्। उपाधिलक्षणं हि कार्यानन्वयित्वेन। अत उपहितविषयकम्। अत एव भामती—"जिज्ञास्यमुपहितं ब्रह्मे"ति। तत्र कारणत्वोपलक्षितव्यक्तिज्ञानादपवर्ग इत्युक्तिस्तु कल्पतरूक्तमुपाध्युपलक्षणयोः कार्यानन्वयित्वमात्रमभिप्रेत्य, मुख्योपलक्षणलक्षणं तु निवर्तकज्ञानस्वरूपेऽप्रयोजकमित्याशयमेव॥

न चात्र निर्विशेषं विषय इति विवरणमतादविशेषः। अत एव न निर्विशेषं विषयः, उपहितं विषय इति व्यवहारश्च। विषयस्तूभयत्र संविन्मात्रम्, इति फलतो न कोऽपि विशेषः॥

### तत्त्वज्ञानस्योपहितविषयत्वाद् विवरणभामतीप्रस्थानयोः-फलतोऽविशेषः

तत्रावरणशक्तिमात्रमविद्यायाः, न विक्षेपशक्तिः, परिणामिता वाऽविद्यायाः इति तदुपहितमात्रं ब्रह्म। तत्र फलतस्त्वविशेषः—उपहितवृत्त्याऽज्ञाननिवृत्तिमात्रे संविन्मात्रस्य स्वप्रकाशतयाऽवस्था विवरणमत इव भामतीसिद्धान्तेऽपि। विवरणमतं त्वावरण-विक्षेपशक्तिद्वयवदज्ञानाश्रयविषयो ब्रह्मेति। अतोऽज्ञानसमानाश्रयविषयकत्वं विवरणमते, भामतीप्रस्थाने त्वविद्यायाः समानविषयकत्वमात्रं तत्त्वज्ञानस्येति प्रस्थानभेदाशयः, इति विशेषमात्रमादाय प्रस्थानभेद उभयोः॥

### भामती-विवरणप्रस्थानभेदेनाज्ञाननिवर्तकतत्त्वज्ञान-स्वरूपनिष्कर्षः

एतेन—ब्रह्मजिज्ञासाघटकज्ञाधात्वर्थोऽपि—व्याख्यातः। तत्र ज्ञानं भामतीमतरीत्याऽज्ञानोपहितस्वरूपविषयकम्; फलतोऽखण्डचैतन्यविषयकत्वादखण्डाकारवृत्तेः। न चैतन्मते निर्विशेषे ब्रह्मपदस्य लक्षणा, किन्तु शक्तिरेव; तत्र संकेतात्। न चैतावता तस्य सविशेषत्वम्। सविशेषत्वं हि ज्ञायमानावस्थायां वा, अज्ञातावस्थायां वा। आद्ये—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः॥"

इति वचनाद् वृत्त्युपहिताज्ञाननिवृत्तित्वोपलक्षितत्वम्, इति न तस्य सविशेषत्वम्; विशेषाणां साज्ञानानां तदा निवृत्तत्वात्। द्वितीये-त्विष्टापत्तिः॥

अयमत्र निष्कर्षः—अज्ञातावस्थं ब्रह्म सविशेषमुपास्यम्, ज्ञाता-वस्थं तु यावज्ज्ञानं ज्ञानेनोपहितमपि न तदतिरिक्तविशेषविशिष्टमिति नोपास्यम्। ज्ञानस्यापि दग्धेन्धनाग्निवत् स्वयमेव निवृत्तौ तु स्वयंप्रकाशं संविन्मात्रं पर्यवस्यति। न च तत् शुद्धं ज्ञेयम्; उप-हितस्यैव भामतीमते विषयत्वात्। व्यक्तं चैतद् लघुचन्द्रिकादिषु, इति भामतीमतरीत्या ब्रह्मशब्दवृत्त्यनुपपत्तिवादः, ब्रह्मणि यस्य कस्यापि शब्दस्य वृत्त्यनुपपत्तिवादो वा निरालम्बः॥

विवरणदृष्ट्या तु सविशेष-निर्विशेषोभयपरत्वम्; तत्र ब्रह्मशब्दस्य विष्णुपुराणोक्तदृष्ट्या शक्यत्वमपि, तस्यान्यपरत्वे तु लक्षणा। तदेवं विवरणदृष्ट्या, भामतीदृष्ट्या चोभयथाऽपि शुद्धविषयकत्वे, उपहितविषय-कत्वे च न ब्रह्मज्ञानस्य तत्त्वज्ञानत्वं बाधितम्। उपहितविषयकत्वेऽप्यु-हितमुपाधिविशिष्टरूपेण मिथ्यात्वेऽपि स्वरूपमात्रेण सत्यमेव॥

### उपहितान्याविषयकत्वे सत्युपहितविषयत्वं ज्ञानाज्ञानयो-र्निवर्त्य-निवर्तकयोः समानविषयकत्वम्, तस्यान्यतो व्यावृत्तस्येति निष्कर्षः

तत्र भामतीप्रस्थाने ज्ञानाज्ञानयोः समानविषयकत्वमुपहितान्या-विषयकत्वे सत्युपहितविषयकत्वम्। तच्च वृत्त्युपहितत्वेऽपि समानम्, वृत्तेर्ह्यविषयायास्तदुपहितान्याविषयकत्वेन ह्यज्ञाननिवर्तकत्वम्। उप-हितविषयकत्वं हि वृत्त्युपधानमात्रेण। न चोपधानदशायां शुद्धत्वं नाम। न चोपहितविषयत्वे वृत्तिविषयत्वमपि विषयः; उपहितान्याविषयकत्वेन वृत्त्युपधानमात्रेण तस्य विषयत्वव्यपदेशात्॥

एतेन—स्वविषयत्वेन ब्रह्मणो ज्ञानविषयत्वायोग इति—परास्तम्, वृत्त्युपधानातिरिक्तविषयत्वस्य तत्रानङ्गीकारात्। सविशेषस्य ब्रह्मणोऽज्ञान-स्थाने वृत्तिरुपाधिरित्येतावताऽनावरणप्रयोजकवृत्तिमात्रोपधानं ह्युपहि-तज्ञानं नाम, न तु वृत्त्युपहितस्य ज्ञानान्तरम्, येन विषयत्वमपि विषयो वा न वेत्यादिशङ्का समुत्तिष्ठेत्॥

एतेन—वृत्तिविषयताप्रयोजक-कतिपयाकारोपहितग्रहणमेव वक्तव्यम्। स चाकारोऽविद्या वा, सर्वज्ञत्वादिगुणो वेति—परास्तम्॥

यत्तु—पञ्चममिथ्यात्वप्रकरणेऽबाधितसम्बन्धि यद् वृत्तिविषयत्वोपहितं रूपं तज्ज्ञानस्य प्रमात्वमिति लघुचन्द्रिकायामुक्तम्, तदिदं वृत्त्युपहितस्वरूपस्यैवाऽबाधितस्वयंप्रकाशशुद्धस्वरूपत्वे पर्यवसानं वृत्त्युपरममात्रेणोपहितस्यैवाबाधितस्वरूपत्वमित्यभिप्रायेणैव। तद्धि पर्यवसानतः शुद्धम्, न तु वृत्त्युपहितावस्थायामपीति न कोऽपि विरोधः॥

### अज्ञाननिवर्तकज्ञानस्य भामतीमतेऽपि वृत्तिविषयत्वस्यापि भानं स्वीकर्तव्यमिति भूषणस्य शङ्का-तत्परिहारौ

एतेन—शुद्धस्य ज्ञानविषयत्वं न भवतीति वदतामयमाशयः—यत् ब्रह्मणः स्वप्रकाशत्वात् ज्ञानमन्तरेण तत एव ज्ञानकार्यनिर्वाहे व्यर्थस्तन्मात्रविषयकज्ञानस्वीकारः। यदि च तावन्मात्रेण न ज्ञानकार्यसिद्धिः, तर्हि स्वप्रकाशत्वस्वीकारो व्यर्थः। अतः स्वयमप्रकाशमानकिञ्चिदाकारविशिष्टत्वेनैव स्वप्रकाशस्य ज्ञानविषयत्वमेपितव्यम्। वृत्तिविषयत्वोपहितब्रह्मज्ञानमिति वक्तुश्चायमाशयो युक्तः—यद् वृत्त्या घटादौ गृह्यमाणे वृत्तेरपि "घटमहं जानामी" ति विषयेण सह भानस्याऽऽनुभविकत्वात्, तद्रीत्या ब्रह्मज्ञानेऽपि वृत्तिभानं नापलप्यम्; एवं च शुद्धब्रह्मज्ञानवादिना वृत्त्युपहितब्रह्मज्ञानमेव स्वीकार्यम्, इति कथं शुद्धग्रहणमिति ? परन्तु वृत्तेः साक्षिभास्यत्वात्, ब्रह्मणश्च वृत्तिग्राह्यत्वादद्वैतिमते वृत्तिविशिष्टं ब्रह्म केन वेद्यं स्यात् ? वृत्तिः साक्षी च मिलित्वा विशिष्टं वेदयत इति वा स्यात्, वस्तुतः शुद्धब्रह्मविषयज्ञानाभावपक्षे वृत्त्यैव ब्रह्म किञ्चिद्धर्मविशिष्टत्वेनैव वेद्यत इत्येव स्वीकर्तव्यम्, इति नायं पक्षो विवरणकारसंमतत्वेनोक्तनिर्विशेषज्ञानपक्षाद् विशिष्ट इति—परास्तम्॥

सत्यं शुद्धं स्वप्रकाशमिति तद्भानार्थं न वृत्तेरपेक्षा, किन्तु तदावरणनिवृत्त्यर्थमस्त्येव तदपेक्षा, तदुक्तम्—"अविद्यानिवृत्तिपरत्वाच्छास्त्रस्ये"ति। सा च वृत्त्युपधानमात्रेण निर्वहति। न च तत्र वृत्तिकार्यमन्यत्; आवरणाभिभवमात्रार्थत्वाद् ब्रह्माकारवृत्तेः। घटादिस्थले तु नैवम्, किन्त्वावरणाभिभवप्रयुक्ताज्ञानाविषयत्वविशिष्टचिदुपरागार्थम्, तादृशचिदभेदाभिव्यक्त्यर्थं वा वृत्तिः। ततो नात्र स्वप्रकाशस्य वृत्तिविषयत्वम्, किन्तु पूर्वोक्तरीत्या वृत्त्युपधानमात्रम्, न तु वृत्तिविषयत्वोपहितब्रह्मज्ञानं नाम किमपि ज्ञानान्तरमत्र। विवरणमते तु ब्रह्मविषयकं वृत्तिज्ञानमिति यद् मन्यते, तत्राज्ञानतद्विषयत्वयोरेकब्रह्माश्रयत्वात्, समानाश्रयविषयकत्वेनैव ज्ञानाज्ञानयो-

र्निवर्त्य-निवर्तकभावात् , वृत्तेर्ब्रह्माश्रयत्वमपि स्वीकर्तव्यमिति वृत्ति-विषयत्वं तत्र स्वीक्रियते, न तु तत्रापि वृत्तिविषयत्वोपहितं ब्रह्मज्ञानं नाम किमपि, इति ब्रह्मविषयत्वमात्रेण ब्रह्माकारवृत्तिर्ब्रह्मज्ञानमित्येव तत्रापि सिद्धान्तः ॥

अन्तःकरणवृत्तेश्चैतन्यगतावरणनिवर्तकत्वमात्रम् , न प्रकाश-
कत्वम् , घटादौ तु भासकत्वमपि । अत एवैकत्रो-
पाधित्वम्, अन्यत्र विशेषणत्वम् ,

उभयत्र वृत्तेरज्ञाननिवृत्तिमात्रं फलम् , न स्वयंप्रकाशकत्वम् , ब्रह्मवि-षकत्वञ्च, इति समानविषयकत्वमात्रेण तत्राज्ञानस्य निवृत्तिः, इति न वृत्ते र्ब्रह्माश्रयत्वम् , किन्त्वन्तःकरणाश्रयत्वमात्रम् ; तस्या एवाज्ञानोपहितस्व-रूपमात्रविषयकत्वेन निवर्तकत्वम् । कथं तर्हि शुद्धत्वमिति शङ्कावारणमभि-प्रेत्यैव पञ्चपादिका वदति "आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः, अपृथक्त्वेऽपि चैतन्यात् पृथगिवाभासन्ते" इति । अतो वृत्तिज्ञान-दशायां न वृत्तिवैशिष्ट्यम् , किन्तु तदुपधानमात्रमिति विशेषं मत्वैव प्रस्था-नभेदः । न च घटादिस्थल इव वृत्तेः प्रस्थानभेदेऽपि भानम् , भानत्वं तु वृत्तेर्ज्ञानत्वापरपर्यायचैतन्यावच्छेदकत्वेनौपचारिकमेव, न तु वस्तुतः, इति प्रस्थानद्वयेऽपि समानम् । उभयत्र वृत्तिः विनश्यदवस्थैवाज्ञानं निवर्तयति, भानं तु चैतन्यस्योपहितस्य, शुद्धस्य वा स्वत एव । घटादिस्थलेऽपि वृत्तिकार्यं तदवच्छिन्नचैतन्यगताज्ञाननिवृत्तिमात्रम् , न तु घटादेरिव भासकत्वमिति हि सिद्धान्तः ॥

तत्र घटादिस्थले वृत्तेरपि भानं भासमानचैतन्यावच्छेदकत्वेन घटा-देरिव साक्षिभास्यत्वेन, यतस्तत्र तदवच्छेददशायामेव भानव्यपदेशः । न चैवं ब्रह्मज्ञाने, इति वृत्तेः साक्षिभास्यत्वम् , ब्रह्मणो वृत्तिग्राह्यत्वमिति विशेषकल्पनाऽद्वैतसिद्धान्ते ॥

"अद्वैतमते वृत्तिविशिष्टं ब्रह्म केन वेद्यं स्यात् ? वृत्तिः साक्षी च मिलित्वा विशिष्टं वेदयत इति वा स्यात् । वस्तुतः शुद्धब्रह्मविषयज्ञाना-भावपक्षे तद्भानं वृत्त्यैव स्वीकर्तव्यमिति, नायं पक्षो विवरणपक्षादविशिष्ट इति" वचनं तु भूषणस्याद्वैतसिद्धान्तविरुद्धम् ॥

### जहदजहल्लक्षणायां न वाच्यार्थविरुद्धरूपान्तरस्य प्रतीतिः, इति लक्ष्यस्य तीरादेरनदीत्ववत्, निर्विशेषस्यासत्यत्वाज्ञानत्वादिविरुद्धार्थपरत्वापत्तिः

यस्तु—अद्वैतसिद्धौ नदीशब्दस्य तीरे लक्षणास्वीकारेऽनदीत्ववद् "सत्यं ज्ञानमि"त्यादौ निर्विशेषलक्षणास्वीकारेऽसत्यत्वापत्तिमाशङ्क्य नद्यादौ नदीत्ववत् सत्यत्वादेरबाध्यरूपस्य ब्रह्मणि प्रतीतेरिति विशेषोऽभिहितः, तद् नदीपद इव सत्यादिपदे न जहल्लक्षणा, किन्तु जहदजहल्लक्षणेत्यभिप्रायेण, परन्तु न जहल्लक्षणायामिव जहदजहल्लक्षणायां स्वरूपान्तरस्य प्रतीतिः। तत्र चाबाध्यत्वं बाध्यविलक्षणत्वमेव। तच्च निर्विशेषस्यैव रूपान्तरम्, न तु तीरमिव नद्या विलक्षणरूपम्। तथाच सत्यादिवाक्यैः सत्यत्वादिविशिष्टबोधे तात्पर्यानुपपत्त्या स्वरूपमात्रपरत्वमेव युक्तम्, इति न सविशेषपर्यवसानम्॥

अत एव "अनृतं जडं परिच्छिन्नमि"ति वाक्येनापि निर्विशेषबोधापत्तिरिति–परास्तम्; अनृत-जड-परिच्छिन्नादिपदानामपि निर्विशेषपरत्वं यदि जहल्लक्षणया तात्पर्यानुसारेण, तर्हि नानुपपत्तिः, विद्यते तु "सत्यं ज्ञानमित्येव श्रुतौ। ऊरीकृतं हि "तत्त्वमसी"त्यादौ विरुद्धार्थत्यागेन स्वरूपमात्रपरत्वम्, अनृत-जड-वस्तुपरिच्छिन्ना अपि ब्रह्माधिष्ठानकत्वात् कारणात्मना ब्रह्मस्वरूपा एव॥

### सत्यादिपदेषु जहल्लक्षणां परित्यज्य जहदजहल्लक्षणास्वीकारप्रयोजनम्

अत एव तेषामुत्पत्तिरपि सदात्मना निरस्यतेऽजातवादे माण्डूक्यकारिकायाम्। अत एव खलु जगज्जन्मादिकारणत्वम्, जायमानं जगदपि वा तटस्थविधया ब्रह्मलक्षणम्, जहल्लक्षणया तु जडादिपदेन ब्रह्मलक्षणेत्यादिकमेव न दुष्टं तीरस्यानदीत्ववत्। अतः सत्यादिवाक्येषु सत्यादिपदानां जहदजहल्लक्षणा, न जहल्लक्षणेति बोधन एव सिद्धिकाराणां तात्पर्यम्॥

### सविशेषस्य कल्पितत्वेन ब्रह्मणो निर्विशेषत्वं धर्म एव

तत्र भावाद्वैतवादे मिथ्यात्वस्य सत्यत्वेऽभावरूपत्वं ब्रह्मणोऽभावत्वोपहितरूपेण स्वीक्रियते; मिथ्यात्वस्यापि मिथ्यात्वं तु संविन्मात्रेण भावत्वाभावत्वसर्वधर्मशून्यत्वेन। न चैवं सधर्मकत्वाधर्मकत्ववादयोर-

विरोधः। तत्र यदि धर्माणां कल्पितत्वेन, निर्विशेषत्वस्य पारमार्थिकत्वेन तयोरप्यविरोधः, तर्हि काममिष्यतां सविशेषत्वमपि निर्विशेषत्वमिव ॥

### निर्विशेषत्वमेकविज्ञाननिबन्धनसर्वविज्ञानोपपादकं ब्रह्मव्यतिरेकेण विशेषाभावरूपम्, न तु विशेषाभावत्वम्

निर्विशेषवादो हि ब्रह्मव्यतिरेकेण तत्सजातीय-विजातीय-स्वगतगुणादिसर्वाभावेन = तदनन्यत्वेन, यत एवैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः, इति 'तदनन्यत्वाधिकरणे' भाष्य-भामत्यादौ व्यक्तम्। ब्रह्मणो गुणाभेदोऽपि तद्व्यतिरेकेण गुणाभाव एव। तत्राभेदवचनानां ब्रह्मव्यतिरेकेणाभावेन भेदनिषेधमात्रे, न भेदनिषेधेऽपि तात्पर्यम्। तत्र यथा नलवेषधारिणि पुरुषे तद्धारकपुरुषस्वरूपम्, वेषालङ्कारादिकं च न बाध्यते; व्यावहारिकत्वाद् वेषधारकस्य पुरुषस्य, आहार्यारोपविषयस्य नलस्य च, नैवं जीव-ब्रह्मणोः; ब्रह्मणो जीवभावस्याज्ञाननिबन्धनस्य तत्त्वज्ञाने सत्यत्यन्तं बाध्यत्वेन विशेषात्। सर्वथा तूपहितस्यैव शास्त्रवेद्यत्वेऽपि फलतोऽविशेषेऽपि शुद्धोपहितज्ञानयोः, जिज्ञास्ययोश्च विशेषो दुरपह्नवः॥

### अन्तःकरणवृत्त्युपधानेऽपि तस्या अप्याऽऽविद्यत्वेऽपि तस्या अपि तथैव बाधाद् न ब्रह्मणो निर्विशेषत्व-स्वयंज्योतिष्ट्वादिविरोधः

तत्रोपहितज्ञानमोक्षकारणतायां पूर्वोक्तरीत्या तज्ज्ञानमन्तःकरणवृत्तिमात्रम्, न तु ब्रह्मस्वभावोऽनुभवः "सत्यं ज्ञानमि"त्यादौ ज्ञानपदनिर्दिष्टः, अबाधितोऽजन्यश्च, किन्तु प्रमाणजन्योऽन्तःकरणवृत्तिभेदः, यस्य कृत्यं पूर्वोक्तरीत्याऽज्ञाननिवर्तकत्वमात्रम्, न तु प्रकाशकत्वमपि; उपाधिनिवृत्तौ स्वत एव तत् प्रकाशते। 'सर्वोपाधिविरहितं हि स्वयं ज्योतिरि'ति गीयते। तत्र ब्रह्मसाक्षात्कारदशायां तदाकारवृत्त्युपधानदशायामप्यज्ञाननिवृत्त्या वृत्तेरपि स्वरूपसत्त्वेऽपि तस्या अप्यविषयत्वात् स्वयंज्योतिष्ट्वं नापैति। "सर्वोपाधिविरहितं हि स्वयं ज्योतिरि"ति भामत्याशयस्तु प्रकाशप्रतिबन्धकाज्ञान-तत्प्रयुक्तोपाधिविरहाभिप्रायेण, न त्वप्रकाशविरोध्युपाधिराहित्याभिप्रायेणापि; वृत्तिकालेऽपि यद्यपि वृत्तेरन्तःकरणधर्मत्वाद् न सर्वात्मना सोपादानान्तःकरणोपाधिबाधा, तथापि विनश्यदवस्था विद्या तदा न कार्यकारिणीति स्वयंज्योतिष्ट्वं ब्रह्मणोऽबाधितम्। अतस्तस्य स्वयंप्रकाशत्वं वृत्तिकाले न विरुद्धम्। तत्र यदि विनश्यदवस्थापि विद्याऽविद्यै-

वेति, किमेतावता ? किं तस्या अप्यावरकत्वं स्यादिति मन्यते, तर्हि तस्या आवरणनिवर्तिकाया आवरकत्वं व्याहतम् । अविद्याया अपि वृत्तेरविद्या-निवर्तकत्वं तु "अविद्यया मृत्युं तीर्त्वा" इति श्रुत्याऽऽरूढमपीति ब्रह्मसिद्धौ व्यक्तम् ॥

वृत्तिव्याप्यत्व-फलव्याप्यत्वयोः स्वरूपविवेकः, वृत्तेरुपाधि-रूपाया अपि साक्षात्कारत्वमज्ञाननिवर्तकत्वमात्रेण

वृत्त्यवच्छिन्नचैतन्यं साक्षात्कारः, वृत्तिप्रतिबिम्बितं चैतन्यं साक्षात्कार इति व्यवस्था हि भास्य-भासकयोर्वस्तुनोर्भेदापेक्षा; यथा घटादि-साक्षात्कारेण भासकेन भास्यं घटादि ततो भिन्नम्, यत्र साक्षात् वृत्ते र्भास्यगताज्ञाननिरासायोग्यत्वम् । न हि घटादिविषयमज्ञानं संभवति; अज्ञानकार्यस्य तस्य तदाश्रयत्वायोगात् ॥

साक्षात्कारत्वं हि वृत्तेरसत्त्वापादकाभानापादकोभयविधाज्ञाननिव-र्तकत्वेन । तत्र ज्ञानं घटावच्छिन्नचैतन्योपाधिरित्यन्यदेतत् । सति चैवं प्रकृते ब्रह्मावरकसर्वाविद्यानिवर्तकत्वेन साक्षात्कारत्वं वृत्तेरेव, न तदव-च्छिन्नचैतन्यस्य, तत्प्रतिबिम्बितचैतन्यस्य वा; वृत्तिस्तूपाधिरज्ञाननिव-र्तनेन स्वयमपि यदा निवर्तते, तदैव सर्वोपाधिविरहितं स्वयंज्योतिः; ताव-त्पर्यन्तं घटोपाधौ, वृत्तिमात्रोपाधौ वा पूर्वोक्तरीत्या वृत्त्यपेक्षप्रकाशमेव ब्रह्मेति तु निष्कर्षः ॥

परिमलादिसंमतोपाधिलक्षणसमन्वयः,
तत्र भूषणोक्तिनिरासश्च

तत्रोपाधिलक्षणं यावत्कार्यमवस्थाय व्यावर्तकत्वम्, उपलक्षणत्वं तु कादाचित्कतया भेदधीहेतुत्वेनेति कल्पतरु-परिमलयोर्व्यक्तम्, भूषणं तु परिमलप्रकरणमिदं न स्वीकरोमीति वदति । कारणं तु तत्र परिमलप्रकरण-मनुचितमित्येव ॥

जीवाश्रयाज्ञानवादोऽविद्याया अनाद्युपाधित्वमात्रेण, इति
नात्रान्योन्याश्रयादि

अत्र भामतीमते—जगत्कारणमविद्योपहितम्, अविद्योपाधिप्रयुक्ता हङ्कारविशिष्टश्चोभावपि जीवस्वरूपमेव, जीवस्याविद्याश्रयत्वमविद्योपहि-तत्वमात्रम्, न तु जीवस्य सतोऽविद्याश्रयत्वम्, तेन नान्योन्याश्रयः । तत्र प्रथम आत्मशब्देनोच्यते, न जीवशब्देन मुख्यतया, तत्र गौणस्तु जीव-

पदप्रयोगः। अत एव जीवाश्रयाज्ञानवादस्तत्र तत्र। अविद्याविषयत्वमात्रमात्मनः; य एव ब्रह्मशब्दार्थोऽपि; तस्यैव जगदुपादानत्वादिति ब्रह्मसिद्धिः॥

भामती तु—परमात्मनः शुद्धस्वभावाज्जीवानामभेद ऐकान्तिकेऽप्यनिर्वचनीयानाद्यज्ञानोपधानात् तात्कालिको जीवानां भेदबुद्धिव्यपदेशः, भेदात्, परमात्मा तु शुद्धविज्ञानानन्दस्वभावः, इमे जीवा अविद्याशोक दुःखाद्युपद्रवभाज इति वर्णयति। अविद्योपधानं च यद्यपि विद्यास्वभावे परमात्मनि न साक्षादस्ति, किन्तु तत्प्रतिबिम्बकल्पजीवद्वारेण परस्मिन्॥

न चैवमन्योन्याश्रयः—जीवविभागाश्रयाऽविद्या, अविद्याश्रयश्च जीवविभागः—इति; अनादित्वात्। तथाचाविद्यावच्छिन्नजीवोऽप्यनादिः, अवच्छेदिकाऽविद्याऽप्यनादिरिति॥

### वस्तुतस्तु भामतीमते जीवाश्रयाज्ञानवादे
### नान्योन्याश्रयशङ्कोत्थानमपि

अत्र जीवस्य प्रतिबिम्बकल्पत्वोक्तिरवच्छेदवादमवधारयति। स चावच्छेदकस्याविद्याया विशेषणत्वे जीवः, उपाधित्वे परमात्मेति तत्र विशेषणत्वमवच्छेदकस्य तदौपाधिकसुख-दुखादि-भानप्रयोजकत्वम्, उपाधित्वे तु नैवमिति जीव-परमात्मस्वभावविवेक इति ब्रह्मसिद्धिसिद्धान्तस्यैव विवेचनमात्रम्, वस्तुतस्तु जीवविभागस्याप्यनादित्वात् तत्राप्यन्योन्याश्रयपरिहारः सुस्थः। तथा चाविद्याया जीवाश्रयत्वेऽन्योन्याश्रयापादनं न जीवाश्रयतापक्षे प्रसरत्यपि॥

### भामतीरीत्या 'तत्त्वमसि' वाक्यार्थः, अविद्योपाधिस्थाने
### वृत्त्युपधानमेव ब्रह्मसाक्षात्कारपदार्थः।

तत्र "तत्त्वमसी"त्यत्र त्वम्पदेनाविद्याविशिष्टो विवक्ष्यते, तत्पदेन त्वविद्योपहितः। तत्राविद्योपहितोपादानत्वम्, साक्षित्वं वा नाविद्याया उपाधेः। सति चैवमुपहित-विशिष्टयोरभेदस्यासंभवाद् जहदजहल्लक्षणयोभयोरभेदबोधनेऽपेक्षिते वृत्त्युपहितस्वरूपमात्रे महावाक्यतात्पर्यमूरीकर्तव्यम्। तथाच शुद्धत्वम्पदार्थतया साक्षात्कार एषितव्यः॥

### ब्रह्मण्याविद्यकानां धर्माणामपि भानम्

तत्र च वृत्त्युपधानेऽप्यविद्यानुपाधानात् निरुपाधि ब्रह्मेति कल्पतरौ लेखनम्, तस्य च वास्तवनिरूपकतत्त्वसाक्षात्कारोदयः इति विवरणम्, जीव एव तत्तदविद्याद्युपाधिरहितः शुद्धब्रह्मादिस्वभावं ब्रह्मेति गीयत

इति व्यवस्था चाविद्योपाधिराहित्येऽपि वृत्त्युपधनमात्रेण ब्रह्मसाक्षात्कारो मोक्षहेतुरिति सिद्धान्तेऽव्याहता भामतीमते। तत्र वृत्तेरपि स्वरूपतोऽविद्याजन्यत्वेऽपि तद्विरोधित्वादविद्यानुपधानमिति पूर्वोक्तमनुसन्धेयम्॥

न चात्र जीवे, परमात्मनि वा प्रतीयमानाः धर्मा वस्तुतोऽभिन्नाः; धर्माणां कल्पितत्वेन तदभेदायागात्, कल्पितं भेदमादायैव धर्म-धर्मिभावाच्च, इति न धर्माणामप्युपहितसाक्षात्कारे भानम्, वृत्त्युपधानकालेऽविद्योपाधिभावेन तदुपाधिकधर्माणमपि भानस्य व्याहतत्वात्। उपहितसाक्षात्कारे ह्युपाधिनिवृत्त्या वस्तुगत्याऽविद्याद्युपाधिराहित्यम्, न तु वृत्तिस्तत्रोपहितस्वरूपातिरिक्तं निरुपाधिकत्वादिकमपि गोचरयति॥

अत एव भामत्यां पूर्वोक्तरीत्याऽज्ञाननिवर्तकत्वमात्रेण साक्षात्कारव्यपदेश्याया वृत्तेरेवोपाधित्वम्, न वृत्त्युपहितविषयत्वमिति वर्णितम्, इति न तत्र ज्ञानान्तरमपि, इति वृत्त्युपहितब्रह्मविषयकं वृत्त्यन्तरमादाय वृत्तेरपि वृत्तिविषयत्वस्याप्यापादनं न प्रसरति। सर्वथा तु भामतीमते नोपहितविषयकत्वम्, विवरणमतेन निरुपाधिकविषयत्वं चोपपद्यते॥

तत्र भामतीमते जीव-ब्रह्मणोरैक्यं ब्रह्मेतरजीवस्वरूपाभावात् विवरणमत इवानावृतसंविद्रूपत्वमेव; तच्च सर्वाविद्याद्युपाधिविरहे, वृत्तिरूपोपाधेरपि विरहे वेत्यन्यदेतत्॥

'अहमि'ति ज्ञानं न मोक्षसाधनात्मसाक्षात्कारः,

अतो न संसारि-मुक्ताविवेकः

तत्र चा'हमि'ति प्रत्यक्षे सोपाधिकस्यैव, न निरुपाधिकस्य भानम्। अतो ना'हमि'ति प्रत्यक्षेऽखण्डाकारवृत्त्युपहितं प्रत्यगभिन्नं ब्रह्मस्वरूपम्, अनावृतस्वरूपं प्रकाशचैतन्यं वा परमात्मस्वरूपं प्रकाशते। व्यक्तं चैतदध्यासभाष्योपक्रमे भामत्याम्। अतः संसारावस्थायां जीवस्योपाधिविशिष्टतया भानम्, इति मुक्तौ संविन्मात्रस्वप्रकाशता न विरुध्यते। अतः संसारदशायामनावृतसंविन्मात्राप्रकाशात् अज्ञानोपहितब्रह्मण्यहंकाराद्युपाध्यध्यासेन संसारिजीवस्वरूपनिर्वाहः॥

मुक्तौ ना'हमि'त्यात्मभानम्; वृत्त्याऽहङ्कारस्य बाधात्

सत्य-ज्ञानादिपदानामसत्यव्यावृत्त्युपलक्षितरूपेण भानदशायां यथा नासत्यतादात्म्यमपि, एवमुपाधिविरहितावस्थस्वप्रकाशे संविद्घनानावृतायां मुक्तावेव ना'हमा'द्यात्मना भानम्, अन्यदा त्वावृतत्वादहमादिभ्रम

उपपद्यते। 'इदं रजतमि'ति भ्रमोऽपि शुक्तित्वाज्ञानदशायामेव, न तु तज्ज्ञाने। तत्र शुक्तित्वं यदि रजतव्यावृत्तिस्वरूपम्, तदा रजतभेदरूपेण ज्ञानदशायां न रजतात्मना प्रतीतिः, अन्यथा तु शुक्तित्वाज्ञानदशायामेव भ्रमः, तत्साक्षात्कारदशायां न भ्रमोदय इत्येव मर्यादा ॥

अहमध्यासे संविन्मात्रमविद्याविषयोऽधिष्ठानम्, साक्षात्कारस्तु वृत्त्युपहितसंविन्मात्रमिति विवेकः

न चायं न्यायोऽहमाद्यध्यासे प्रसरति; उपहितात्मनोऽधिष्ठानस्य भावरूपस्यैवाधिष्ठानत्वात्। न हि शुक्तित्वमिव ब्रह्मेतरव्यावृत्तिरूपम्, तेन रूपेणाज्ञानविषयो वा; अनादावज्ञानोपधानेऽहंकारादिवस्तुन एवाध्यासात् पूर्वमभावेन तद्व्यावृत्तिरूपत्वस्य दुर्वचनात्। शुक्तित्वमिव तत्काल इतरत् वस्त्वपि व्यावहारिकं वर्तत इति युक्तं तस्येतरव्यावृत्तिरूपत्वम्। अतः शुक्तित्ववैलक्षण्यात् संविद्रूपमेवाज्ञानोपहिततयाऽधिष्ठानमिति वस्तुस्थितिः ॥

"सत्यं ज्ञानमनन्तं ब्रह्मे"त्यत्रानृतादिव्यावृत्त्युपलक्षितस्वरूपमेवानृताधिष्ठानम्, न तु भेदाज्ञानम्। न हि शुक्तित्वं प्रत्यक्षम्, यतः शुक्तौ रजतभ्रमो भवति। सर्वथा तु संविन्मात्ररूपेण ज्ञानमेव भ्रमकारणम्, संसारदशायाम'हमि'ति ज्ञानं तु न मुख्यात्मज्ञानमिति भामत्यां व्यक्तम्। निरुपाधिकत्वं च ब्रह्मणोऽनावृतसंविद्रूपत्वत्वम्, न ब्रह्मव्यतिरिक्तं रूपम् ॥

साक्षिस्वरूपाखण्डाकारवृत्तिविषययोर्भेदः, ततोऽहमर्थाधिष्ठान-संविद्रूपयोर्विवेकश्च

तत्र संसारदशायामप्यहमर्थस्य सर्वदा निश्चितरूपेण ज्ञानं हि तस्याज्ञानविरोध्यन्तःकरणोपहितसाक्षिरूपतया, न तु निरुपाधिकतया। स्वयंप्रकाशत्वमपि तस्य साक्षिरूपतयैव, न तु निरुपाधिकसंविद्रूपतया। वृत्तिज्ञानस्याविद्यानिवर्तकत्वं ह्यन्तःकरणातिरिक्तघटाद्यवच्छिन्नचैतन्यगताज्ञाननिवर्तकत्वेन; वृत्तिरिवान्तःकरणमपि, वृत्त्युपादानमज्ञानविरोध्येव, इति न सर्वत्र वृत्तिज्ञानमेवाज्ञाननिवर्तकम्, न चान्तःकरणोपहितसाक्षिचैतन्यमप्यहमर्थः स्वरूपज्ञानं नाम ॥

निरुपाधिकोपहितस्वरूपयोः, तत्साक्षात्कारयोश्च विवेकः षड्जादिस्वरदृष्टान्तेन

तत्र महावाक्यार्थज्ञानाभ्यासवशात् षडजादिस्वरभेदसाक्षात्कारवत् ब्रह्मसाक्षात्कारः। तत्र दृष्टान्ते भेदस्य साक्षात्कारस्तदज्ञाननिवृत्त्या, दार्ष्टा-

न्तिके तु निर्भेदस्वरूपमात्रस्य साक्षात्कारः, इति सत्यपि वैषम्ये न स्वर-दृष्टान्तविरोधः; दृष्टान्त-दार्ष्टान्तिकयोः सर्वसाम्यस्य बाधितत्वात्। न चाखण्डाकारसाक्षात्कारः, तन्निवृत्त्यनन्तरं स्वयंज्योतिर्निरुपाधिकब्रह्म-स्वरूपं वाऽनावृतमुपाधिरहिताकारेण भासते, किन्तु स्वयंज्योतिर्मात्र-रूपेण, इति नात्र प्रतियोगिग्रहणापेक्षा। न चाभावज्ञानापेक्षितप्रतियोगि-ज्ञानमभावज्ञानकालिकम्, किन्तु कदाचन तत्र प्रतियोगिग्रहणमात्रम-पेक्ष्यते। न हि घटाभावप्रत्यक्षं घटविषयकमपि तत्रैव, इति निरुपाधिक-ग्रहणमपि नोपहितग्रहणम् ॥

भामतीमते परमात्मस्वरूपविवेकः

एतेन—परमात्मशब्दोऽपि—व्याख्यातः। स हि यौगिकत्वाद् नाराय-णपर इति परे, अद्वैतिनस्तु स निर्विशेषस्वरूपपरः, जीवत्वेश्वरत्वोपलक्षित-संविन्मात्रपरः, क्षराक्षरातीतः, माया-तत्कार्यान्तःकरणाद्युपाधिरहितश्च, न तु चिदचिच्छरीरकः ॥

अद्वैतवादे, अन्यत्र च पुरुषोत्तमपदार्थः

पुरुषेभ्य उत्कृष्टं स्वरूपं हि पुरुषोत्तमो नाम। "उत्तमः पुरुषः" इति कर्मधारयोऽपि पुरुषेषूत्तम इत्यर्थेऽपि लगति। "उत्तमः पुरुषस्त्वन्यः" इति पुरुषोत्तममन्यं भगवान् मन्यते। न च पुरुषोत्तमशब्दः कर्मधारयः। उत्तमपुरुष इति खलु तदा स्यात्, न तु पुरुषोत्तम इति। कर्मधारयतुल्यार्थ-त्वं त्वन्यस्य, पुरुषोत्तमत्वं तु निर्विशेषस्य; उत्तमपुरुषत्वं तु सविशेषस्य ॥

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।"

इत्युपक्रान्तं जीव-ब्रह्मैक्यमेवात्रोपसंहरति—"इति गुह्यतमं शास्त्रम्" इति शास्त्रोपसंहारं मनसि निधाय। तत्र पुरुषत्रयानुगतं पुरुषत्वं क्षरा-क्षरशरीरतयाऽऽत्मतादात्म्येन, अन्यस्य तु जीव-परमात्मोभयसाधारणात्म-स्वरूपे शरीरतादात्म्येन सविशेषरूपेण, स्वस्य तु वस्तुगत्या निर्विशेष-रूपेण। तस्यैव तत्र तत्रा'हमा'दिपदेनोपादानम् 'शास्त्रदृष्ट्या तूपदेश' न्यायेन। शरीर आत्मत्वोपदेशः स्थूलारुन्धतीन्यायेन ॥

पुरुषत्वं कूटस्थपदवाच्यायाः मायाया एव, तत्र पुरुषोपाधि-
त्वेनैव, न तु तच्छरीरत्वेन

तच्च कूटस्थस्य मायाया एव परमात्मोपाधित्वाद् भौतिकशरीरादावि-वोपपन्नम्। शरीरत्वं ह्यद्वैत उपाधित्वमेव, नान्यत्। व्यक्तं चैतदद्वैत-

तत्त्वपरिशुद्धौ, इति कूटस्थपदबोध्येऽव्यक्तेऽपि पुरुषपदप्रयोगो न विरुद्धः। अव्यक्तपदं हि सूक्ष्मावस्थापन्नायामचित्येव मुख्यम्, न तु स्थूलावस्थापन्नायां चिति व्यक्तायाम्, इत्यव्यक्तस्यापि ब्रह्मणि लयोऽद्वैतमत एव स्वरसः, न श्रीभाष्यमते ॥

### आत्यन्तिकप्रलयो मुक्तस्य ब्रह्मभाव एवेति विष्णुपुराणादिव्यवस्था

यथाकथञ्चित् समयानुगुणं स्वमतवर्णनं तु प्राचीनाचार्यसिद्धान्त-विरुद्धं न किञ्चित्करम्। प्रकृतेरपि लये त्वात्यन्तिकः प्रलयोऽद्वैतमते संभवत्येव। यद्यपि नित्ये, नैमित्तिके, प्राकृते वा प्रलये न संभवति, इत्यात्यन्तिकप्रलयपरत्वादस्य सन्दर्भस्याद्वैतमत एव तस्य स्वारस्यम् ॥

आत्यन्तिकप्रलयो ह्यविद्याया अपि लयावस्था, अनावृतसंविद्रूपावस्था वा मुक्तिरेव। न च तत्रापि प्रकृतिरनुवर्तत इत्येवास्य सन्दर्भस्य तात्पर्यम्। तस्य तस्य परमात्मनिष्ठत्वं नाम—"अवस्थितेरिति काशकृत्स्नः" इति न्यायात्, तदात्मनाऽवस्थानम्, तद्व्यतिरेकेणाभाव एव ॥

### शुद्धचिदचित्सन्बन्धादेरनादित्वादविद्योपधानेनेश्वरस्यापि संविन्मात्रतयाऽवस्थानमेव तदतीतत्वनिबन्धनं पुरुषोत्तमत्वम्

अनादिरविद्या, प्रकृतिरिव तत्सम्बन्धोऽपि परमात्मनोऽनादिरिति संप्रतिपन्नम्। स च श्रीभाष्य ईश्वरप्रकृत्यपेक्षया, अद्वैतमते तु शुद्धचैतन्यापेक्षयेत्यभिप्रेत्यैव—

"जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥"

इति पूर्वाचार्याः। तत्र श्रीभाष्यानुयायिनां शुद्धचिदनङ्गीकारः, तदाश्रयविषयाविद्याऽनङ्गीकारश्च बहुतरश्रुति-स्मृतिविरुद्ध इत्यद्वैततत्त्व-शुद्धिभूमिकासमुद्धृताद्वैतपरश्रुतिदर्शने विशदं भविष्यति, श्रीभाष्य-सिद्धान्तविरुद्धत्वात् योगवासिष्ठमिवोक्तश्रुतयोऽप्यप्रमाणमिति वर्णनं तु, सत्यम्, भूषणादीनां कुलधर्मः, परेषां तु तदधर्म इति त्वन्यदेतत् ॥

पुरुषोत्तमशब्दान्तर्गतः पुरुषस्तूपहितानुपहितसाधारणं संवित्स्व-रूपम्। तद्धि क्षराक्षरोपाधिकमाऽऽब्रह्मसाक्षात्कारम्। ब्रह्मसाक्षात्कारे तु संविन्मात्रम्। न चात्रार्थास्वारस्यलेशोऽपि। तत्र क्षरपदार्थो हि "यतो वा

इमानि भूतानि जायन्ते" इत्यत्राम्नातानि "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति सृष्टिप्रकरणप्रस्तुताकाशादीनि; ब्रह्मवल्लीविवरणार्थत्वाद् भृगुवल्ल्याः, न तु तद्विशिष्टं चैतन्यम्। जीवोत्पत्तिपराः श्रुतयो न तत्स्वरूपोत्पत्तिपराः; तस्य नित्यत्वात्, किन्तूपाध्यपेक्षयैवेति सम्प्रतिपन्नम्। उपाधिस्तु शरीरं वा, संकोच-विकासावस्थधर्मभूतज्ञानं वेति त्वन्यदेतत्। अक्षरपदं तु "ये चाप्यक्षरमव्यक्तमि"ति निर्विशेषचैतन्यपरम्; परविद्यासमानार्थत्वात्, न तु शुद्धप्रत्यगात्मपरमिति व्यक्तमन्यत्र॥

### वासुदेवपदार्थोऽपि मुख्यः संविन्मात्रमेव, न तु वसुदेवात्मजः

यत्तु—"वासुदेवपदार्थः सर्वव्यापकं संविन्मात्रं मुख्यम्, न तु वसुदेवात्मज इति शतभूषणी—वदति, तदिदं मनुष्यावतारस्य तस्य मनुष्यवदेव व्यवहरतः, तच्छरीरकतया वा जीवत्वाभिनयात्, यथेन्द्रस्य तच्छरीरकत्वेन, स्वस्वरूपमात्रसंविन्मात्रदृष्ट्या तु परमात्मत्वमित्यभिप्रायेण। अत एव "वृष्णीनां वासुदेवोऽस्मी" ति स्वस्य विभूतिकोटौ निवेशः। सविशेषब्रह्मावताररूपत्वात्तु तस्य स्वतस्तत्समानयोगक्षेमत्वम्, सर्वज्ञत्वं वा; अन्यद्वा न शतभूषणी वारयति॥

विष्णुपुराणगतवासुदेवपदार्थस्तु परामूर्तरूपो निर्विशेषं चैतन्यमेव, न तु सविशेषम्, शुद्धप्रत्यगात्मस्वरूपं वेति वक्तव्यम्। गीतायां तत्र तत्र 'मां'शब्दप्रयोगोऽपि भगवतः श्रीकृष्णस्यैवेन्द्रस्येव शास्त्रदृष्ट्या। अत एवानुगीतायां समाध्यवस्थायामेव स्वेनार्जुनस्य गीतोपदेश इत्यर्जुनं प्रति साक्रोशं वचनम्। को वाऽद्वैती सर्वजीवस्वरूपमपि विभुं सर्वगतं "नित्यः सर्वगतः स्थाणुः" इति स्पष्टं गीतायामुक्तं प्रमाणं मन्वानोऽनुपहितावस्थं सर्वत्र वसन्तं पश्यन् श्रीकृष्णमपि वैकुण्ठमात्रे चतुर्भुजत्वादिरूपेण विद्यमानं तन्मूलस्वरूपमिव सर्वत्र केनचन रूपेण, शक्तिविशेषेण, नित्यविकसितधर्मभूतज्ञानद्वारा च सर्वत्र न वसतीति, मुक्तावस्थायामणुरूपमेव स्वरूपत इति जीवमात्मानं स्वीकुर्वाणो हि जीवं श्रीकृष्णं वैकुण्ठवासिनं वा स्वयं न सर्वत्र वसतीति च न वक्तुमर्हति? भगवान् विष्णुरपि स्वयं श्रीभाष्यमते न स्वतो विभुर्भवितुमर्हति। स्वात्मस्वरूपेण तत्र तदीयोऽप्यात्मा यदि विभुः, तर्हि तस्यापि नित्य-

विकसितधर्मभूतज्ञानाङ्गीकारो व्यर्थः। विश्वरूपाध्याये हि "किरीटिनं गदिनं चक्रहस्तमि" ति विराट्रूपावयव एव सोऽर्जुनेन दृष्टः, इति व्यर्थमाक्रमणं भूषणस्य। को वा विप्रतिपद्यते तस्य परभावेन, संविदात्मना वा पुरुषोत्तमत्वे ? मानुषेण तु भावेन स पुरुष एव। न हि ये न पुरुषोत्तमाः, ते सर्वे पुरुषाधमाः, स्वपूर्वाचार्याः स्वयं वेति भूषणं वदति, इति वितथोऽयमाक्रोशः—यदि न श्रीकृष्णो वासुदेवात्मजत्वेन गीताभिमतो न पुरुषोत्तमः, तर्हि किमयं पुरुषाधम इत्यादिव्यवहारेण ॥

'नारायणोहम्' 'अहं ब्रह्माऽस्मी'त्यनुभवः श्रीकृष्णस्यापि
संविन्मात्रदृष्ट्या शास्त्रीयया

एतेन—नारायणोऽहमिति श्रीकृष्णोक्तिरपि—व्याख्याता। 'शास्त्रदृष्ट्या तूपदेश'न्यायेन तस्यापि वाक्यस्य योजनीयत्वात्। तत्र—"उत्तमः पुरुषस्त्वन्यः" इत्यात्रान्यपदं सविशेषपरम्। स चेश्वरपदबोध्यः श्रीकृष्णदृष्ट्या यदि नारायण एव, तर्हि स्वयं श्रीकृष्ण एव स्वस्य नारायणत्वं निषेधति, इति नारायणोऽहमिति वचनं भूषणं स्वयं व्याहन्ति—केवलं शिवद्रोहे तात्पर्येणात्मानमपि विस्मृत्य ॥

भगवत्पादानां सदाशिवावताराणाम्,
योगवासिष्ठादीनां च नाप्रामाण्यम्

भगवत्पादा हि नारायणपदप्रयोगेण त्रिमूर्त्यतीतं तुरीयं जगज्जन्मादित्रितयकारणं सविशेषमविद्योपहितं रूपमेवाऽभिप्रयन्ति। ते हि न केवलं वैष्णवाग्रेसराः, किन्तु पञ्चायतनाग्रेसराः, स्वयं साक्षात् सदाशिवावतारा आत्मानमेव द्विषन्तीति कल्पनं कथं भूषणं स्यात् ?

योगवासिष्ठवचनं नावश्यमादरणीयमिति वदत् भूषणं वाल्मीकिमप्यप्रमाणं मन्यते। तथापि योगवासिष्ठवचनस्यापि स्वमतानुसारं विवरणं भूषणस्य घटस्य पटीकरणसामर्थ्यमेव। प्रतर्दनाधिकरणमद्वैतमत एवावानुगुणमिति व्यक्तमन्यत्रेत्यलम्। अथ प्रकृतमेवानुस्त्रियते ॥

वाचकस्यैव लक्षकत्वमिति न नियमः,
अर्थवादे व्यभिचारात्

तत्र वाचकस्यैव लक्षकत्वनियमोऽर्थवादवाक्ये व्यभिचरति। तत्रार्थवादे यदि पदसमुदायं प्रति वाच्यस्य कस्यचिदर्थस्याभावेन शक्यसम्बन्धरूपलक्षणाया दुर्निरूपत्वेऽपि बोध्यसम्बन्धरूपा लक्षणा,

तर्हि किमायातम् ? अवाचकस्य लक्षकत्वमिति नियमस्तु त्यक्त एव। तत्र पदसमुदायबोध्यत्वं विना शक्यमर्थं यदि, भवितुमर्हति तर्हि स एव मार्गः सत्यादिपदेष्वपि कथं दण्डेन वार्यते ?

तत्र बोध्यत्वं यदि स्वघटकपदशक्त्यधीनप्रयोज्यबोधविषयत्वम्, तर्हि लक्ष्यार्थबोधस्य स्वप्रयोज्यत्वं स्वघटकपदशक्त्यनधीनस्य कथम् ? वाक्यस्य शक्तत्वं तु नैतावतापि। सति चैवं सत्यादिपदानामप्यवाचकानां कथमलक्षकत्वम् ? लोकप्रसिद्धसत्यादिपदार्थस्य, सत्यपदवाच्यस्य कस्यचन सर्वत्र सत्त्वात् तदेव वाचकत्वं पुरस्कृत्य सत्यादिपदानां ब्रह्मस्वरूपलक्षकत्वे का वा बाधा ?

### अबाध्यत्वरूपं सत्त्वं संविन्मात्रस्यैव मुख्यम् न सविशेषस्य

श्रीभाष्यमतेऽपि सत्यपदमबोध्यमर्थमभिधत्ते, इति सम्प्रतिपन्नम्। विप्रतिपत्तिस्त्वबाध्यत्वं संविन्मात्रस्य वा, सविशेषस्य वेति। तत्र श्रुतीनां तात्पर्यस्यापच्छेदादिनयेन संविन्मात्र इति निर्णीतत्वाद् न कुत्राप्यवाचकस्य पदस्य लक्षकत्वमद्वैतमते। इदमेवाभिप्रेत्याद्वैतसिद्धौ तात्पर्यवशादन्विताभिधानवादे पदे, अभिहितान्वयवादे पदार्थे च स्वरूपसती शक्तिर्लक्षणाख्याऽखण्डार्थानुभाविकेति वर्णितम्। अर्थवादेऽपि तात्पर्यवशात् पदार्थगता स्वरूपसती शक्तिः पदैकवाक्यतया, वाक्यैकवाक्यतया तु वाक्यार्थगता शक्तिरेव हेतुरभिहितान्वयवाद इति व्यक्तमन्यत्र। सर्वथा त्ववाचकस्यालक्षकत्वनियमो व्याहतः। अद्वैतमतेऽपि किमप्यवाचकं पदं न निर्विशेषलक्षकमिति चर्वितचरम्, इति वाचकत्वस्यैव साधुत्वप्रयोजकत्वेऽपि नासाधुत्वमद्वैतमते पदानाम्, अवाचकत्वेऽपि वा पूर्वोक्तरीत्या तल्लक्षणान्तरानुसारेण॥

### शब्दानां साधुत्वमिथ्यात्वादिचिन्ताऽकिञ्चित्करी

तत्र शब्दानां साधुत्वमिथ्यात्वस्वीकारे साध्वसाधुविभागो न स्यादिति शतदूषणी, शतभूषणी तु शब्दानामिव तत्साधुत्वस्य मिथ्याभूतस्यापि यावद्बाधमर्थक्रियाकारित्वाद् न हानिरिति। भूषणं लिखति–शब्दाः सत्याः तद्गतं साधुत्वमात्रं मिथ्येति कृत्वा शतभूषणी प्रवर्तत इति। यद्येवम्—न तर्ह्यद्वैतमतस्यायमाक्षेपः; ब्रह्मव्यतिरिक्तसर्वमिथ्यात्ववादे शब्दमात्रसत्यत्वादिकमादायाक्षेपो निरालम्बः, अनुक्तोपालम्भनं वा॥

### मिथ्यात्वेऽपि लौकिक-वैदिकशब्दानां व्यावहारिक-प्रामाण्यमबाधम्

तत्र न केवलं लौकिकाः शब्दाः। किन्तु साङ्गश्रुति-स्मृति-पुराणेतिहासादयोऽपि व्यावहारिका एव प्रमाणम्, न सत्या अद्वैतराद्धन्ते। तत्र ब्रह्मशब्दस्य किञ्चिदवाचकत्वेऽसाधुत्वम्, असाधुत्वे चाप्रामाण्यमिति शतदूषण्युक्तिस्तु निरालम्बेत्यनुपदमेवोपपादितम्। ब्रह्मशब्दसत्ताकाल एव ब्रह्मशब्दस्य श्रीभाष्याभिमतं वाचकत्वं तु निराबाधम्। लक्षकत्वं परमद्वैतमते विशेषः, इति न व्यवहारदशायामप्यप्रामाण्यमद्वैतसिद्धान्ते॥

यत्तु—आत्मनिश्चयपर्यन्तं व्यावहारिकं प्रामाण्यम्—

"देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः।
लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात्॥"

इति पूर्वाचार्यवचनसिद्धम्, तदपि सन्मात्रब्रह्मेतरविषयक-साङ्गेतिहास-पुराण-वेदसाधारणप्रामाण्यमभिप्रेत्यैव॥

### भाविबाधनिश्चयेऽपि यावद्बाधं प्रामाण्यं सर्वेषां ज्ञानानाम्

तत्र देहेऽहंप्रत्ययोऽपि प्रमाणं यावदात्मतत्त्वसाक्षात्कारम्, न तु शास्त्रतः परोक्षतया विवेकमात्रेण तदप्रमाणम्, अन्यथा तावतैव देहधर्मतत्तद्वर्णाश्रमावस्थादिनिबन्धनकर्माधिकारनिवृत्त्या बद्धनामपि विवेकिनां कर्माधिकारो लुप्येत, येन कर्मविचारानन्तरब्रह्मविचारादिकथा, यावज्जीवं विद्योपयोगतया कर्मानुष्ठानकथा चास्तमियात्। इदमेवाभिप्रेत्योक्तं भाष्ये—"पश्वादिभिश्चाविशेषात्" इत्यादिना व्युत्पन्नानां विदुषामपि देहात्माभिमानोऽनुवर्तत इति यावद्बाधमर्थक्रियाकारित्वेन प्रामाण्यमेव सर्वेषां प्रमाणानाम्॥

अयमेव न्यायः प्रत्यक्षादिप्रमाणेष्वपि। यथाच 'तत्त्वमस्यादि'-वाक्यार्थश्रवणमात्रेण न सर्वेषामात्मतत्त्वसाक्षात्कारः; अत एव मननादिविधयः, तथोपपादितं तत्र तत्र; इत्यात्मतत्त्वसाक्षात्कारपर्यन्तं घटादिज्ञानस्य यावत् "नेदं रजतम्" 'इयं शुक्तिरिति वा शुक्तितत्त्वज्ञानपर्यन्तम् 'इदं रजतमि'ति ज्ञानस्य तद्वति तत्प्रकारकत्वमात्रेण प्रामाण्यमिति व्यवस्था, 'पीतः शङ्खः' इति ज्ञाने तु नानिर्वचनीयख्यातिः, किन्त्वन्यथाख्यातिः, इति न तद्वति तत्प्रकारकज्ञानत्वरूपं प्रामाण्यमिति तु विशेषः।

इदमेवाभिप्रेत्य भामती—देहादिष्वात्माभिमानस्य मिथ्यात्वेऽपि वास्तवलोकयात्राऽव्याहता यथा, तथैव प्रामाण्यं यावदात्मसाक्षात्कारो भवतीति ॥

ब्रह्मज्ञानं सदा प्रमाणम् , अन्यत्र तु यावद्बाधं प्रामाण्यम्

अनेनेदवगम्यते—यत् परोक्षविवेकग्रहो नध्यासबाधनक्षमः, इति यावदात्मतत्त्वसाक्षात्कारं व्यावहारिकं सर्वस्य ज्ञानस्य स्वीकर्तव्यम् । इयान् विशेषः—व्यावहारिकं प्रामाण्यं तेषाम् , येषां विषयो यावदात्मतत्त्वसाक्षात्कारं न बाध्यते, तत्त्वमस्यादिवाक्यजन्यस्य तु विषयाबाधात् तात्त्विकं प्रामाण्यमिति ॥

व्यावहारिकप्रमाणादपि तात्त्विकप्रामाण्यमिति तु भामती मुक्तकण्ठं वदति—"अतात्त्विकप्रमाणभावेभ्योऽपि व्यावहारिकप्रमाणेभ्यः तत्त्वप्रमोत्पत्तिदर्शनात्" इत्यादिनाऽध्यासभाष्ये व्यावहारिकप्रमाणानां यावद्बाधं व्यावहारिकांशे व्यावहारिकप्रामाण्यम् , बाधानन्तरं तु न व्यावहारिकाः, न वा तत्प्रामाण्यचर्चा ॥

"इदं रजतमि" त्यत्रापि रजतबाधानन्तरं नाप्रामाण्यम् ; तदानीं ज्ञानस्य, रजतस्य वाऽभावात् । अप्रामाण्यव्यवहारस्तु ज्ञान-विषययोर्बाधितत्वमात्रमभिप्रेत्य । न च प्रमाणत्वाप्रमाणत्वे एकत्र ज्ञाने समावेशमर्हतः । न ह्येकमेव ज्ञानमाविद्यकवृत्त्यवच्छिन्नान्तःकरणावच्छिन्नम् , केवलान्तःकरणावच्छिन्नतन्नवृत्तिद्वयावच्छिन्नं चैकम् , येन तयोरेकत्र कालभेदेनापि समावेशः स्यात् । अतो विषयबाधमात्रेणाप्रामाण्यम् ॥

व्यवहारदशायामपि सदंशे प्रामाण्यमेव, विकल्पांश एवाप्रामाण्यम् , इदं च साङ्गवेदस्मृति-पुराणादीनामपि

न च ब्रह्मज्ञानेऽपि व्यावहारिकं प्रामाण्यम् , ततो विषयाबाधश्चाधिष्ठानज्ञानेन, इति न तत्राप्रमात्वव्यपदेशसम्भावनाऽपि। अत एव ब्रह्मज्ञानस्य प्रमात्वमात्रम् । इदमेवाभिप्रेत्य सन्मात्रप्रामाण्यवादः, विकल्पाप्रामाण्यवादो वा, उक्ताचार्यवचने प्रमाणत्वेन कल्पित इत्युक्तिरपि। यावद्बाधं प्रमाणव्यपदेशमात्रम् , बाधे सति तु न तत्प्रमाणमित्येव गमयति, न तु तदेवाप्रमाणमिति अयं च न्यायः साङ्गवेदप्रामाण्येऽप्यविशिष्टः। तत्र सर्पभ्रान्तेर्भीतिप्रतीतिलोकयात्रानिर्वाहकत्वं व्यावहारिकमप्युपपद्यते । व्यावहारित्वं मिथ्यात्वं चेत्यनर्थान्तरम् , इति देहेऽहमात्मताभिमानः, ममताभिमानो वा देहबाधे बाधात् मिथ्यैव । न च लोकयात्रा यथार्थादेव, किन्तु यथार्थता-

दात्म्यमात्रात्। यथार्था तु न लोकयात्रा; "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्" इति श्रुतेः। अतो यथार्थार्थक्रियाकारित्वं न व्याहतम्॥

### सविशेष-निर्विशेषयोरुभयोरपि प्रामाण्यम् , अप्रामाण्यम् वा स्यात् , प्रामाण्यं वा

तत्र निर्विशेषमेव तत्त्वम् , यस्य साक्षात्कारात् समूलस्य संसारस्य निवृत्तिः, इति निर्विशेषमेव लक्षणया वेदान्तप्रतिपाद्यम्; लक्षकाणामपि तत्त्वमादिपदानां यत्किञ्चिदर्थवाचकत्वं हि संप्रतिपन्नम्। सगुणे यत् प्रमाणम् , तदेव निर्विशेषेऽपि प्रमाणम्। तत्रैकस्य समूलत्वेऽपरमपि समूलम्; अन्यथा तु वेदान्तानामयथार्थवादत्वादुभयमपि निर्मूलं स्यात्। न चैतत् भूषणादीनामिष्टम्॥

### निर्विशेषज्ञानमेव समानविषयकत्वादज्ञाननिवर्तकम्

तत्र निर्विशेषब्रह्मविषयकमज्ञानं जगदुपादानम् , तद्विषयो निर्विशेषं ब्रह्म च, इति निर्विशेषमात्रसाक्षात्कार एव समूलाज्ञाननिवर्तको भवितुमर्हति:, यथा शुक्त्यज्ञानकार्यं रजतं शुक्तित्वज्ञानेन निवर्तते; समानविषययोरेव ज्ञानाज्ञानयोर्निवर्त्य-निवर्तकभावात्। समानविषयत्वं चेतरविषयत्वानिरूपिताऽऽत्मविषयकत्वेनेति व्यक्तमन्यत्र। सप्रकारज्ञानं तु नाधिष्ठानमात्रविषयकम् , इति नाधिष्ठानमात्रविषयाज्ञाननिवर्तकतामर्हति॥

### ब्रह्मपदस्य संकेतेन निर्विशेषबोधकत्वं विशिष्टवाचकानामपि तात्पर्यवशात् विशेष्यमात्रबोधकत्वात् न 'तत्त्वमस्यादि'वाक्याप्रामाण्यम्

तत्र विशिष्टवाचकानां पदानां तात्पर्यवशात् विशेष्यमात्रविषयत्वं मणावुक्तम्। तत्र प्रतिबध्य-प्रतिबन्धकभावो यदि निवर्त्य-निवर्तकभावः, तर्हि शुक्तिकादिस्थल इवाज्ञातांशमात्रविषयकत्वेन ज्ञानस्याज्ञाननिवर्तकत्वम् , इति निर्विकल्पस्याप्यज्ञानबाधकत्वमप्रत्यूहम् , इति निर्विशेषब्रह्मज्ञानेन जगद्बाधो निर्दुष्टः। सामानाधिकरण्यं ह्यभेदेऽपि भवतीति पूर्वमुक्तम्॥

ब्रह्मशब्दस्य संकेतोऽपि निर्विशेष इति विष्णुपुराणानुसारेण विवेचितम्। तस्य शुद्धप्रत्यगात्मपरत्वे तु सविशेषं ब्रह्मापि न ब्रह्मशब्दमुख्यार्थः स्यात्। तत्र "वैदिको ब्रह्मशब्दो वेदोपबृंहकविष्णुपुराणेन निर्णेतुं शक्यते" इति लिखद् भूषणं विष्णुपुराणैकवाक्यता, तेनोपबृंह-

णं वा विशिष्टाद्वैतस्यैवेति वदन्न कथं न जिह्वेति? लोकदृष्ट्याऽपभ्रंशा अपि वैदिकाः शब्दा वैदिकैः सर्वैर्नापभ्रंशा अभिप्रेयन्ते। ऊहेषु परं लौकिकेष्वपभ्रंशत्वमकार्यकारि। अपौरुषेयोऽपि वैदिकः शब्दो निगम-निरुक्त-व्याकरणादिना पुराणेतिहासाभ्यामप्यर्थविशेषपरतया व्यवस्था-मर्हति॥

### निर्विशेषस्यावाच्यस्यापि लक्ष्यत्वोपपत्तिः

सर्वथा तु—अवाच्यस्य, अमेयस्य च न लक्ष्यत्वमिति नियमो वा मन्यताम्, यत्किञ्चिदर्थवाचक एव लक्षको भवितुमर्हतीति नियमो वा, न मुख्यार्थशून्येन ब्रह्म न लक्षयितुं शक्यते। सर्वथाऽपि न ब्रह्म-शब्दवृत्त्यनुपपत्तिः। तत्र सौषुप्तानन्दोहरणादीनामाशयः पूर्वमेव विश-दीकृत इत्यलं चर्वितचर्वणेन॥

तत्र सौषुप्तानन्दानुभवोदाहृणं जागरिकाणामप्युपलक्षणम्। प्रत्यक्षं चेदं सर्वेषाम् 'सुखमहमस्वाप्सम्' इति सौषुप्तानन्दानुसन्धानम्। ब्रह्माप्या-नन्दस्वरूपमेव, इति सत्य-ज्ञानादिवाक्ये निर्विशेषानन्दोपस्थितिरविरुद्धा॥

### सुषुप्ति-मुक्त्योर्विशेषः

अज्ञातांशं प्रमापयितुं वेदान्ताः प्रवृत्ताः। यद्यपि सौषुप्तानन्द एव ब्रह्मानन्दः; तथापि सुषुप्तावविद्यावृत्त्याऽनुभूतः, अविद्यानिवर्तकत्वं तु प्रमाणजन्यस्यैव ज्ञानस्य। अतो सुषुप्त्यैव गतार्थत्वात् न वेदान्तवैयर्थ्यम्॥

तत्र ब्रह्मस्वरूपं लक्षणयैव बोध्यते, सत्य-ज्ञानादिवाक्यैः, तत्त्वमस्यादि-वाक्यैश्च। तत्र ब्रह्मशब्दमात्रस्य निर्विशेषे संकेतः पराशरेण क्रियते, इति तन्मात्राभिप्रायेण साक्षात् निर्विशेषे शक्तिमुपपादयितुं पराशरवचनो-पन्यासः, तेन च ब्रह्मशब्दमात्रस्य मुख्योऽर्थो निर्विशेष एव, सगुणस्तु ब्रह्मशब्दस्य यत्र कुत्रापि प्रयुज्यमानस्येति तात्पर्यमवसीयते। न चैतावता सर्वेषां सत्यादिपदानामपि न तत्र संकेतव्यवस्था शतभूषण्या मन्यते। अतो "यतो वाचो निवर्तन्त" इति ब्रह्मशब्दातिरिक्तविषयम्, पराशरवचनं तु निर्विशेषमात्रपरं मुख्यमिति व्यवस्थाऽनुसन्धेया॥

### ब्रह्मणः पारमार्थिकगुणवत्त्वायोगः

अत्र पराशरवचने "प्रत्यस्तमितभेदमि" त्यनेन निरस्तसमस्तदोषत्व-मुच्यते। तत्र सामान्यतो भेदपदप्रयोगाद् विशेषमात्रं विवक्ष्यत इति निर्वि-

शेषं न केवलं निरस्तदोषमात्रम्, किन्तु धर्ममात्रशून्यमित्यवगम्यते, इति ब्रह्मणः पारमार्थिकानवधिकातिशय-कल्याणगुणवत्त्वे न किमपि प्रमाणम् ॥

सति चैवं 'बृहतेर्धातोरर्थानुगमात्' इति गुणद्वारा ब्रह्मपदार्थं गौणं ब्रह्म निर्ब्रूते। सोऽपि नित्य-शुद्ध-मुक्तस्वभाव एव; उपाधिकल्पितगुणवत्त्वात् ब्रह्मपदार्थस्येत्येव भगवत्पादानामाशयः। निर्विशेषब्रह्मतोऽतिरिक्तं न परमार्थतः सविशेषं ब्रह्म; उपाधिमात्रत्वात् विशेषाणां कल्पितानाम्, तस्य तु निर्विशेषतो भेदः, न स्वरूपमात्रेणेति "बृहतेर्धातोरर्थानुगमात्" "बृहन्तोऽस्मिन् गुणा" इत्यादिवचनं न विरुध्यते ॥

प्रत्यस्तमितभेदमेव मुख्यपदार्थः सविशेषं तु गौणम्,
शुकादयस्तु ततोऽपि गौणाः, 'तत्त्वमस्यापि' वाक्ये
तु निर्विशेषपरत्वमेव

तथाच प्रत्यस्तमितभेदं निर्विशेषं ब्रह्मशब्दार्थः, श्रीभाष्यसिद्धान्ताभिमतो नारायणस्तु सविशेषोऽपि कथञ्चनोत्तमपुरुषत्वात् पुरुषोत्तमो भवतु नाम, अद्वैतसिद्धान्ते पदद्वयमपि निर्विशेषपरमिति व्यक्तीकृतमधस्तात्। तदेवं "प्रत्यस्तमितभेदमि" ति वचनात् निर्विशेषे ब्रह्मशब्दो मुख्यः, गुणयोगेन सविशेषे गौणः, गौणत्वेऽपि सविशेषादन्यत्र शुकादौ "ब्रह्मन् ब्रह्मण्यनिर्देश्ये" इत्यादौ ब्रह्मशब्दस्ततोऽपि गौण इति वस्तुस्थितिः। अत एव पराशरः—

"वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि।
तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने॥
यस्मिन् प्रयुज्यमाने वै गुणयोगः सुपुष्कलः।
तत्रैव मुख्यवृत्तोऽसावन्यत्र ह्युपचारतः॥"

इति। तत्र "प्रत्यस्तमितभेदमि"ति वचनविषयो ब्रह्म ब्रह्मशब्दस्य मुख्यार्थः, शार्ङ्गी तु ततो गौणः, शुकादितो मुख्यः, शुकादयस्तु सर्वथा गौणा एवेति व्यवस्था। तत्रान्यपदार्थो यदि न निर्विशेषं ब्रह्म, तावताऽपि लक्षणया निर्विशेषत्वं स्वीकृतमेव। ब्रह्मशब्दार्थत्वमेव निर्विशेषस्य नास्तीति वर्णनं तु पराशरवचनविरुद्धम्। अधिकं वेदान्तरक्षामण्यादौ। सर्वथा तु पुरुषोत्तमस्य निरस्तनिखिलदोषत्व-निरवधिकगुणवत्त्वाङ्गीकारेऽपि सविशेषत्वात्तस्य न किञ्चिदपि हीनम् ॥

न चैतावता निर्विशेषस्य प्रत्याख्यानं संभवति। स एव हि पुरुषोत्तमः, यद् निर्विशेषं परं ब्रह्मेति तु हृदयम्। सर्वथा तु "तत्त्वमसी"त्यत्र निर्विशेषपरत्वस्यैव तात्पर्यतोऽवधारणात् तस्य निर्विशेषैकपरत्वं न व्याहतम् ॥,

तत्र हि विशेषणानां त्यागो वस्तुगत्याऽज्ञाननिवृत्तिमूलकनिवृत्त्या। मिथ्यात्वञ्च विशदं तत्तत्प्रकरण एवाद्वितीयत्वाद्युपन्यासेन भविष्यति ॥

तत्र सविशेषत्वं ब्रह्मण आविद्यकविशेषवत्त्वेन, न तु ब्रह्मसमसत्ताकविशेषवत्त्वेन; अविद्यापरिणामानामविद्यासमसत्ताकत्वेऽपि तेषां विवर्तविधयैव ब्रह्मकार्यत्वात्, तन्निवर्तकज्ञानविषयाधिष्ठानव्यतिरेकेणाभावात् ॥

ब्रह्मविवर्तोपादानत्वायोगशङ्का

तत्र श्रीभाष्यमते—ब्रह्म न परिणामिकारणम्, न वा विवर्तोपादानम्, तथाप्युपादानत्वं न मुख्यम्, किन्तु गौणमेवेति शतभूषणी। भूषणं तु वदति—विवर्तलक्षणमनुभवदूरमसंभावितमद्वैतिनां मते, इति ब्रह्मविवर्तोपादानत्वं वाङ्मात्रम्, अविद्योपादानत्वं तु भामती नेच्छति—इति, परन्तु चिदचिद्विशिष्टस्यैवोपादानतां तदपीच्छति ॥

ब्रह्मपरिणामित्वानुपपत्तिः, अतो ब्रह्मोपादानत्वं विवर्तविधयैव विवरणमते युक्तम्, भामतीमते तु सुतरां तदेव

तत्रापीदमेव पृच्छ्यते—यदि केवलं ब्रह्म नोपादानम्, यदि च प्रकृतिरपि, तर्हि विशिष्टं कथमुपादानमिति? अत्र श्रीभाष्यमते ब्रह्मणि निर्विकारत्वश्रुतिर्विशिष्टब्रह्मण एव मुख्यब्रह्मशब्दार्थत्वे, उपादानत्वे च कथमुपपद्यते? न हि परिणामि निर्विकारं दृष्टचरम्। विकारो हि विशेषणीभूतसूक्ष्मचिदचितोरेव साक्षात्, इति यदि साक्षात् विकारनिषेधपरा निर्विकारश्रुतिः, तर्हि विशिष्टोपादानता कथामात्रम्। व्यक्तं च वादावल्याम्—किं बहुना? शतदूषण्यामपि मायोपधिकमेवोपादानत्वं ब्रह्मणः, साक्षात् तु प्रकृतेरेव तच्छरीरस्येति व्यवस्थापितम् ॥

इदमत्र विविच्यतां भूषणेन—किमिदं श्रीभाष्यसम्प्रदायविरोधि, न वेति। कथं च निर्विकारत्वश्रुतिर्विशिष्टकार्यकारणभावपक्षे। यदि कर्ममूलहेयदोषराहित्याभिप्राया सा, तर्हि कर्ममूलहेयदोषवत्ता शरीरित्वप्रयुक्ता, ब्रह्मणः शरीरसम्बन्धस्य कर्मकृतत्वाभावात् कथञ्चन न संभवेदपि, मृदादेरिव परिणामित्वप्रयुक्तविकारित्वापत्तेः कथमनेन परिहारः?

### श्रीभाष्यमते ब्रह्मणो निर्विकारत्वश्रुतिविरोधः
### अद्वैतमते तु न तद्विरोधः

यदि परिणामित्वं न विकारप्रयोजकम्, तर्हि किं वाऽपराद्धं भास्करेण ? यस्य निरसनमपि श्रीभाष्यस्य प्रधानं लक्ष्यम् ॥

अभ्युपगतं हि श्रीभाष्यानुयायिभिरपि सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मणो विशेषणीभूतचिदचिद्द्वारा स्थूलभावाभ्युपगमेन क्षीरादिवत् स्वरूपपरिणामो नास्ति, अन्यथा—"उपसंहारदर्शनादिति चेन्न क्षीरवद्धी"त्यत्र क्षीर-जलादेर्दधि-हिमादिभावे सहकार्यपेक्षाविरहेण देवानां स्वभोग्यसृष्टौ लोकसिद्धसहकार्यपेक्षाविरहेण वा सहकार्यपेक्षमेवोपादानत्वमिति नियमाभावात्, सत्यसंकल्पस्य सर्वशक्तेर्ब्रह्मणो नासाधारणसहकारिविरहादनारम्भकत्वशङ्कोदेतुमर्हति, इति सिद्धान्त इव दध्यादिवत् कथं न स्वरूपपरिणामः ? कथं च न निर्विकारत्वश्रुतिविरोधः ? अद्वैतपक्षे तु स्वरूपतोऽप्यधिष्ठानमानत्वेन विवर्तोपादानमात्रत्वात् अधिष्ठानत्वस्य तदात्मना भानमात्रप्रयोजकत्वेन तदात्मना भावाप्रयोजकत्वाच्च न निर्विकारत्वश्रुतिविरोधः। यथाच विशिष्टोपादानत्वेऽपि विशेष्यमात्रस्य निमित्तत्वात् कारणवाक्ये विशिष्टस्यैव विवक्षणायोगः, तथा पूर्वमुपपादितम्। अतः—"अथातो ब्रह्मजिज्ञासे"त्यत्र जिज्ञास्यं न प्रकृतिमात्रम्, न वा ब्रह्ममात्रम्, किन्तु सूक्ष्मचिदचिद्विशिष्टं ब्रह्मैवेति न युक्तम् ॥

### "यत् साक्षादपरोक्षादि"त्यस्याद्वैतसंमत एवार्थो युक्तः

यत्तु—"अत्र ब्रह्मशब्दस्य शक्तिः स्वीक्रियमाणा प्रकृत्यादौ न युक्ता; अनेकशक्तिकल्पनापत्तेः, "यत् साक्षादपरोक्षाद् ब्रह्मे"ति विचारविषय एव मुख्यत्वश्रवणाच्चे"ति शतदूषणी, तदिदं यदि विशिष्टब्रह्माभिप्रायम्, तर्हि "यत् साक्षादि"तिश्रुतौ साक्षादिति मुख्यत्वम्, अपरोक्षत्वं स्वप्रकाशत्वरूपं च नोपपद्यते। अतस्तस्य घटादेरिवान्यानपेक्षप्रकाशत्वरूपं स्वप्रकाशत्वमात्रं नास्य वाक्यस्यार्थः ॥

अत्राद्वैतसिद्धान्तसंमतोऽर्थः—ब्रह्म संविन्मात्रं साक्षादपरोक्षमावृतावस्थायाम्, अनावृतावस्थायां स्वयं प्रकाशम्, न तत्प्रकाशार्थं ज्ञानान्तरमपेक्ष्यते, वेदान्तप्रमाणानि तु "अविद्यानिवृत्तिपरत्वाच्छास्त्रस्ये"ति भाष्यात् ब्रह्मावरकावरणाभिभवमात्रार्थानि। न च तस्य वृत्ति-

वेद्यत्वम्, न वा सर्वस्यान्यस्यैव वृत्त्यभिव्यक्तचैतन्यभास्यत्वम्। तद्धया-वरणनिवृत्तौ सर्वोपाधिविरहे स्वयं ज्योतिर्मात्रम्—इति ॥

### ब्रह्मणो वृत्तिमात्रभास्यत्वम्, अन्यस्य तु तदभिव्यक्त चैतन्यभास्यत्वम्

तत्र सर्वस्यान्यस्य न वृत्तिमात्रभास्यत्वम्; वृत्तेरावरणाभिभव-मात्रार्थत्वात्, ब्रह्मभिन्नस्याविद्या-तत्कार्यादेर्जडवर्गस्यावरणाभावेन तद-भिभवार्थत्वायोगाच्च, किन्तु वृत्त्यभिव्यक्तचैतन्यभास्यत्वम्। तत्र वृत्तेरन्तःकरणपरिणामभूताया अविद्यानिवर्तिकाया अपि ज्ञानत्वमना-वृतचैतन्यावच्छेदकतयैव, न केवलायाः, इति नियमेन प्रकाशमान-चैतन्यावच्छेदेन प्रत्यक्षत्वात्, तस्यापि प्रत्यक्षत्वं तदतिरिक्तचैतन्यो-परागेणैव, इति वृत्त्यन्तरानपेक्षायामपि घटादीनामिव तदतिरिक्तचिद्-भास्यत्वाद् न स्वयंज्योतिष्ट्वम् ॥

अत एव वृत्तिः साक्षिभास्या नाम, इति वृत्तेरपि प्रत्यक्षत्वं साक्ष्य-पेक्षम्, न तु साक्षात्। ब्रह्म तु साक्षादपरोक्षमिति तु निष्कर्षः। इदं हि वाक्यं स्वयंप्रकाशब्रह्मस्वरूपनिरूपणपरम्, नान्यप्रत्यक्षत्वनिरूपण-परम् ॥

तत्र वृत्त्यतिरिक्तं सर्वं तदभिव्यक्तचैतन्यभास्यम्, वृत्तिः साक्षिभास्या केवलं वृत्तिकर्मतया भास्यं न किमपीति भूषणम्, तत्र ब्रह्म स्वप्रकाशमपि वृत्तिव्याप्यमेव। तत्र वृत्तिस्तदावरणाभिभवमात्रेणोपक्षीणा। चैतन्यमात्रं साक्षादपरोक्षमित्यर्थे न काऽपि बाधा ॥

### "यत्साक्षादि"तिश्रुतेः श्रीभाष्याभिमतार्थायोगः

यत्तु—अद्वैतमतेऽनुपपत्तिपरिहारार्थं "यत् साक्षाच्च, अपरोक्षच्चे"ति विवरणमेव युक्तमिति शतदूषण्याशय इति भूषणस्य शतभूषण्या, अद्वैतसिद्धान्तस्य वा दूषणम्, अत्रेदं विचारणीयम्—कथं वा तत् शत-दूषण्याः स्वसिद्धान्तस्य भूषणमिति ?

तत्र श्रीभाष्यमते तदतिरिक्ता जीवाः धर्मभूतज्ञानं च सर्वं स्व-प्रकाशम्, अपरोक्षं च। किं बहुना ? घटादिकमपि तन्मतेऽपरोक्षमेव, इति ब्रह्ममात्रापरोक्षत्वं साक्षात्पदानपेक्षं कथमपि न लगति, तत्र स्वरूपज्ञानानि जीवस्वरूपेण चैतन्यसम्बन्धानपेक्षं स्वयम्प्रकाशधर्मभूत-ज्ञानानि च प्रमाणप्रतिपन्नानि वा, न वेत्यन्यदेतत् ॥

एतेन—साक्षात् ब्रह्मेति योजनान्तरमपि—परास्तम् ; तत्र यदि साक्षात्प्रतिपाद्यत्वं तदर्थः, तर्हि चिदचिद्विशिष्टं ब्रह्म न मुख्यार्थः स्यात्, इति "अथातो ब्रह्मजिज्ञासे"त्यत्र श्रुत्यर्थमनुसृत्य ब्रह्मशब्दार्थविवक्षायां न चिदचिद्विशिष्टब्रह्मपरत्वमुपपद्येत, इति श्रीभाष्यमत उक्तश्रुतिवैरस्यमप्यर्थसिद्धम् ॥

तत्र प्रत्यक्षत्वं यदि प्रत्यक्षविषयत्वार्हत्वम् , तर्हि जीव-धर्मभूतज्ञान-घटादिसाधारणम् , चिदचिद्विशिष्टस्य स्वस्यैव प्रकाशमानत्वरूपं स्वप्रकाशत्वं बाधितम् ; अचिद्विशिष्टस्य स्वप्रकाशत्वायोगात् , तत्र विशेषणतया भासमानस्य जीवस्यापि प्रत्यक्षत्वे कथं ब्रह्ममात्रप्रत्यक्षता ? घटादिषु कथं नातिव्याप्तम् ? यदि स्वप्रकाशब्रह्मविशेषणतया तस्यापि स्वप्रकाशत्वम् , तर्हि श्रीभाष्यमते किं नाम स्वप्रकाशत्वम् ? किं वा प्रयोजनमपरोक्षत्ववर्णनस्य; विशिष्टस्वरूपातिरिक्तचिदन्तराभावात् , अचित इव विशेषणत्वेनैव स्वप्रकाशत्वनिर्वाहे किमिति स्वतन्त्रस्वप्रकाशधर्मभूतज्ञानाङ्गीकारः ? अतो नेयं श्रुतिर्ब्रह्मणो मुख्यार्थत्वनिरूपणपरा ॥

### "तस्मिन्नेव ब्रह्मशब्दः"; इति वचनमद्वैतानुगुणमेव

यथा च—

"तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ।"

इत्यस्य निर्विशेषपरत्वं मुख्यम् , सविशेषपरत्वममुख्यत्वम् , शुक्रादौ गौणत्वमिति विवेके तात्पर्यम् , तथा व्यक्तीकृतमनुपदम् ॥

### विवर्तवादे मुक्तेरपि मुक्तिः स्यादिति शङ्कापरिहार-तदाक्षेप-तत्परिहाराः

एतेन—विवर्तवादाङ्गीकारे मुक्तेरेव मुक्तिः स्यादिति शतदूषणी—परास्ता । तत्र शतदूषण्याशयं भूषणमेवं विवृणोति—इदं हि शुद्धस्य ब्रह्मशब्दवाच्यत्वे दूषणमुपबृंहयती तिविवेचनविरोधो दर्शितः । तत्र शुद्धस्याधिष्ठानत्वात् बृहत्त्वमस्ति; सर्वप्रपञ्चविवर्तकारणत्वात् , बृंहत्त्वमप्यस्तीति पुनः शङ्कायाम्—शुद्धे कथमिदं धर्मद्वयम् , यदि धर्मस्वरूपानतिरिक्ततया तयोः स्वीकारात् , तर्हि मुक्तिकालेऽप्यधिष्ठानत्व-विवर्तकत्वयोरवश्यकत्वात् मुक्तेरपि मुक्तिः स्यादिति शतदूषणीदीयमानं दूषणम् ॥

शतभूषणी तु वदति —विवर्तवादाङ्गीकारे विशिष्टाद्वैतसमंतमुक्तिमुक्तावप्यद्वैततसंमतमुक्तेर्न; मुक्ति मुक्तेर्ब्रह्मानातिरेकात्—इति, तदसङ्गतम् ;

अद्वैतसिद्धान्ते विवर्तवादाङ्गीकारमात्रेण कथं शास्त्रसिद्धास्मत्संमतमुक्ति-मुक्तिरिति ॥

अयमत्र शतभूषण्याशयः—ब्रह्मणोऽधिष्ठानत्वमज्ञानोपहितावस्था-याम्, मुक्तिस्त्वनावृतावस्थायाम्। तदुक्तम्—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः" इति। तत्र मुक्तावस्थायां ब्रह्मणो नाधिष्ठानत्वम्, विवर्तमानत्वं वा, येन मुक्तेरपि मुक्तिः स्याद-द्वैतसिद्धान्ते। श्रीभाष्यमते—सविशेषब्रह्मसाधर्म्यस्यैव मुक्तित्वात् तदा च ब्रह्मणोऽज्ञानोपहितत्वानपायात्, अनावृतसंविदात्मताया एव मुक्ति-त्वात् तस्याश्चाद्वैतिभिः गौणमुक्तित्वस्य स्वीकारात् तस्य परममुक्तित्वस्य शास्त्रासमंतत्वात्, महातात्पर्याविषयगौणमुक्तेर्मुक्तित्वयोगोऽप्यद्वैताभि-मतमुख्यमुक्तेर्न मुक्तिरापतति। न हि तदा ब्रह्मण उपादानत्वम्, विवर्त-कारणत्वम् मुक्तिरूपत्वं चेति; तयोर्विरुद्धयोः सामानाधिकरण्यं बाधितम्, विवर्तकारणत्वस्य सविशेषमुक्तिरूपत्वे सत्यपि निर्विशेषानावृतसंविन्मात्र-मुक्तितायां न तयोर्यौगपद्यम्, इति सर्वमिदमनुक्तोपालम्भनम्, अप-सिद्धान्तनिरासो वा ॥

### निर्विशेषब्रह्मजिज्ञासायामेव सन्दिग्धार्थनिर्णायकत्वम्

तत्र—"अथातो ब्रह्मजिज्ञासे"त्यत्र यथा शास्त्रेण निर्विशेषं ब्रह्म प्रका-शितम्, साम्प्रतं सन्दिग्धं च ब्रह्मजिज्ञासाविषयः, यथा सविशेषं न ब्रह्म शास्त्रप्रतिपाद्यतया सन्दिग्धमिति तन्निर्णयार्था जिज्ञासा, तथाऽध्ययन-काले सामान्यतोऽखण्डाकारवृत्त्युपहिततया ज्ञातमपि ब्रह्म तत्तदाशंका निरासेन निर्णेतुं जिज्ञासा—सामान्यतोऽवगतं वृत्त्युपहितमेव वेदान्त-प्रतिपाद्यं वा उतान्यदिति। अत एव—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यः"इति वाक्यमत्र विषयः। अत एव भाष्यम्—"तत् पुनर्ब्रह्म प्रसिद्धम् वा स्यात्, अथाप्रसिद्धमित्यादि—तद्विशेषं प्रति विप्रतिपत्ते-रित्यन्तम् ॥

### अद्वैतमते एव ब्रह्मजिज्ञासोपपत्तिः

तथा चात्रोपहितब्रह्मणोऽनुपहितरूपेण मुक्तिस्वरूपम्, इति विषय-प्रयोजनयोरैक्यसिद्धिः फलम्। अत एव "अवगतिपर्यन्तं च ज्ञानं सन्वा-च्याया इच्छायाः कर्मे"ति भाष्यम् ॥

तथा च साक्षात्कारात्मकवृत्त्युपहितं ब्रह्म, प्रत्यगभिन्नं वा भिन्नं वेति विचारोऽत्र प्रकृतः। तच्च वृत्त्युपहितं ब्रह्म न संसारिस्वरूपम्; तस्यापि प्रत्यक्त्वादिवृत्त्युपहितत्वादिति शङ्कानिवर्तनेन वेदान्तजन्याखण्डाकारवृत्त्युपहितमेव जिज्ञास्यमिति जिज्ञासासूत्रतात्पर्यम् ॥

तच्च वृत्तिमात्रोपहितं ब्रह्म जिज्ञास्यमिति जिज्ञासाफलमपेक्ष्य, येन तस्य सिद्धत्वाद् विचारवैफल्यम्, न सविशेषब्रह्मजिज्ञासायामप्ययमेव न्यायः। तस्या वेदान्ताध्ययनमात्रेण, किं बहुना? देवतामीमांसयैव सिद्धत्वात् सामान्यतः शास्त्रसिद्धत्वमूरीकृत्य विशेषजिज्ञासैव धर्मजिज्ञासायाम्, ब्रह्मजिज्ञासायां च। सर्वमिदमभिप्रेत्यैव "तत्पुनर्ब्रह्म प्रसिद्धं वा स्यादि"त्यादिशङ्का ब्रह्मजिज्ञासायाम्, "स पुनर्धर्मः प्रसिद्धो वा, अप्रसिद्धो वेति धर्मजिज्ञासायां च। तथा च ब्रह्मपदार्थं निर्णेष्यमाणमभिप्रेत्यैव ब्रह्मपदमत्र, न तु निर्णीतं निरूपयितुमिति वृत्तिमात्रोपहितब्रह्मणो ब्रह्मपदार्थतायां न कोऽपि दोषः ॥

यद्यपि विचारकाले सर्वस्य प्रपञ्चस्यापि सत्त्वेन सर्वप्रपञ्चोपहितत्वादिकमपि वर्तते; तथापि तस्य तद्रूपस्य च प्रत्यक्षत एव ज्ञातत्वाद् न विचारसाफल्यम्। अत एव जन्मादिसूत्रे तस्याप्यनुवादेन वेदान्तानां निर्विशेषपरत्वव्युत्पादानं तटस्थलक्षणविधया। सर्वमिदं व्यक्तीकृतमधस्तात्। अविद्योपहितमेव वृत्त्युपहिततया शास्त्रमहातात्पर्यविषय इति तु निष्कर्षः। अविद्योपहितं हि कारणावस्थं "सन्मूलाः सौम्येमाः सदायतनाः" इत्यादिनाऽनुमानसिद्धं न शास्त्रमुख्यतात्पर्यविषय इति श्रुत्याशयः। साक्षात्कारस्य वृत्त्यवच्छिन्नचैतन्यरूपत्वादिकथा घटादिसाक्षात्काराभिप्रायेण, ब्रह्मसाक्षात्कारस्तु तदाकारवृत्तिमात्रस्याज्ञाननिवर्तकत्वमात्रेणेति पूर्वमुक्तम् ॥

तत्त्वसाक्षात्कारानन्तरमपि बाधितानुवृत्तिः, अनुवर्तमानाया अपि तत्त्वज्ञाननिवर्त्यत्वं च

जीवन्मुक्तौ कतिपयानां प्रारब्धभोगानामविनाश इति त्वन्यदेतत्। न च तेषां मिथ्यात्वानुपपत्तिः, तेऽपि ह्याशरीरपातमभ्यस्यमानाधिष्ठानसाक्षात्कारनाश्या एव। सत्यप्येवमुपास्यं सविशेषमपि यथायथं यथासंभवं चाद्वैतसिद्धान्ते जिज्ञास्यमिति पूर्वमुक्तम्। तत्र ब्रह्मपदार्थः प्रत्यग्ब्रह्मैक्यं जीवत्वेश्वरत्वोपलक्षितामनावृतं सविन्मात्रं वृत्तिमात्रोपहितम् ॥

### "तत्त्वमसी"त्यत्रैकेन पदेन नाज्ञाननिवर्तकज्ञाननिर्वाह इति सर्वपदसार्थक्यम्

न च पदार्थोपस्थितिमात्रमेवंरूपम्। तत्र प्रथमपदार्थोपस्थितिर्नात्मसाक्षात्कारः "आत्मा वा अरे द्रष्टव्यः" इति श्रुतितात्पर्यविषयः। द्वितीयस्तु नाज्ञाननिवर्तकज्ञानविषयोऽपि। न च'अहमि'ति ज्ञानमुक्तविधब्रह्मस्वरूपमवगाहते। व्यक्तीकृतश्चाधस्तादहमर्थस्वप्रकाशतानिमित्तम्, तस्य मुख्यात्मताशून्यत्वञ्च। न च'अहं'ज्ञानमेव साम्प्रतमनुवर्तमानं मोक्षसाधनम्, मुख्यात्मविषयकं चेति व्यक्तं भामत्यामध्यासभाष्ये॥

### अखण्डाकारवृत्त्यैव प्रपञ्चमिथ्यात्वम्, ततः पूर्वं तु भाविबाधनिश्चयेनैव मिथ्यात्वम्

जगन्मिथ्यात्वं हि पूर्वोक्तात्मतत्त्वसाक्षात्कारेण, न त्वन्यथा, इति तस्मिन् सति जगन्मिथ्यात्वस्य सिद्धिः। विशिष्टाद्वैतमते वेदनोपासनाध्यान-साक्षात्कार-मोक्षसाधनविधेनाभेकरस्यं सविशेषवादे, तत्फलमोक्षस्वरूपे चेति न विप्रतिपन्नम्, तत् सर्वं तु परममुक्तिसोपानमात्रम्, न परममुक्तिः, तत्साधनं वा, यदि विशिष्टाद्वैतसिद्धान्तः शास्त्रीयो ब्रह्ममीमांसाविषयः॥

### अखण्डाकारवृत्त्या प्रारब्धशेषव्यतिरिक्तस्यैव निवृत्तिः, तस्य त्वाऽऽदेहपातमभ्यस्यमानया तयैव निवृत्तिः

न चाखण्डाकारा वृत्तिरपि जातमात्रा समूलमज्ञानं कषति। सत्यमखण्डाकारवृत्तिमात्रं प्रमाणमेव; तथापि पुरुषदोषेण तत्राप्रामाण्यशङ्का संभवन्ती परिहर्तव्येत्येव निदिध्यासनान्तविधिः; तस्या असकृदावृत्त्युपदेशश्च। दोषस्तु यद्यपि पुरुषदोषः कथंचन साक्षात्कारमात्रेण जातेनापि निवर्तयितुं शक्यते; तथापि साक्षात्कारेण मोक्षे जननीये प्रतिबन्धकः प्रारब्धकर्मशेषो भवितुमर्हति, येनात्यन्तिकी निवृत्तिरज्ञानस्य न भवति। तदुक्तं सूत्र एव—"भोगेन त्वितरे क्षपयित्वा ततः सम्पद्यते" इति। संमतं चैतत् सति प्रारब्धकर्मशेषे नोपासनाऽपि मोक्षदायिनीति। प्रतिबन्धकं ह्यदृष्टं कार्यविघटकमिति सर्वतन्त्रसिद्धान्तः। तत्र मिथ्याभूतत्वेऽपि प्रारब्धकर्मशेषस्य देहपातान्त एव ज्ञाननाश्यत्वात् तावत्पर्यन्तमनुवर्तमानत्वम्, प्रतिबन्धकत्वं च न हीयते। मिथ्यात्वं भाविबाधापेक्षयैव घटादीनामज्ञानदशायाम्। न चात्राज्ञानविरहः; प्रारब्ध-

शेषस्यैव सर्वात्मनाऽज्ञाननिवृत्तिप्रतिबन्धकत्वेनाज्ञानलेशस्य तत्रानुवृत्ति-कल्पनात् ॥

ब्रह्मशब्दस्योपहिते शक्तस्य लक्षणया निर्विशेषपरत्वम्

तत्र यद्यप्यद्वैतमते शुद्धब्रह्मणो लक्ष्यत्वमेव परमसिद्धान्तः, अवान्तर-सिद्धान्तस्तु सविशेषविषयोऽपि। अतः सविशेषपरत्वं नैकान्ततोऽप-सिद्धान्तः। सर्वथा तु पदविशेषाणां लोकसिद्धम्, व्यवहारसिद्धं चार्थं गृहीत्वा लक्षणया निर्विशेषबोधो न दोषाय ॥

तत्र शक्तिरविद्योपहिते सर्वज्ञत्वादिविशिष्टे वाऽन्यत्र कुत्रापि भवति, निर्विशेषपरत्वं तु तात्पर्यवशात् लक्षणयेत्युक्तौ का नाम बाधा? "यतो वाचः" इति निर्विशेषाभिप्राया श्रुतिः। अत एव लक्षणावृत्तिपरेतीष्ट-सिद्ध्यादयः। "आनर्थक्यप्रतिहतानां विपरीतं बलाबलमि"तिन्यायात् सविशेषवाक्यबहुत्वमात्रं न स्वल्पत्वमात्रेण निर्विशेषश्रुतिबाधनायेष्टे। शतमप्यन्धा न पश्यन्ति, एकस्तु यदि पश्यति, किं तत्र चक्षुष्मत एकस्य दर्शनमप्रमाणम्?

तत्राद्वैतमते सविशेषं शक्त्या, निर्विशेषं लक्षणया ब्रह्मादिशब्दार्थः। ब्रह्मशब्दः साङ्केतिकरूढ्या निर्विशेषे मुख्यः; गुणयोगात्, भूरिप्रयोगाच्च सविशेषे गौणः, इति कामं भवतु। एकस्तु मुख्यः, अपरस्तु गौण इत्येता-वन्मात्रे तात्पर्यम्। विष्णुपुराणवचनमपरैर्निर्विशेषपरतयाऽनादृतमिति कं वा निबन्धमादाय भूषणं वदति?

विष्णुपुराणस्याद्वैताऽऽनुगुण्यमप्यस्ति

विष्णुपुराणव्याख्याद्वैतसम्प्रदायानुसारिणी तमर्थमनुमनुते। विश्व-स्यत इदं कल्पनं भूषणस्य स्वमतिमात्रविजृम्भितम्, यदि तदीयमेव वचो-ऽत्र प्रमाणम्, किमित्यद्वैतिनां विवरणमेकमुपक्षिप्य नात्र निदर्शयति? न चान्येनादृतमद्वैतानुगुणमपि त्याज्यम्। प्रकृत्यादीनां लक्ष्यार्थत्वं तु श्रुति-प्रकरणादिविरुद्धम्। वस्तुतस्तु प्रकृतिमात्रकारणतापक्षस्य श्रीभाष्य-सिद्धान्ते मुख्यस्य बहुभिरस्वीकारात्, अन्यथा ब्रह्मनिर्विकारत्वश्रुति-विरोधात्, शक्त्या, लक्षणया वा कथं प्रकृत्यादिपरत्वमेव न ब्रह्मशब्दस्य, यदि श्रुतिस्वारस्यात्, तर्हि समानमद्वैतमतेऽपि। यथा च ब्रह्मादिपदस्य सविशेषपरत्वे श्रुतिव्याकोपः, तथा तत्र तत्र व्यक्तम्, इति निर्विशेष-पराणामपि सविशेषपरत्वम्, सविशेषपराणां मुख्यसविशेषमात्रपरत्व-मित्यादीनि तात्पर्यविरुद्धार्थपरत्वापत्त्या नोपपद्यन्ते ॥

### भृगुवल्ल्या अद्वैतसिद्धान्तेनैवोपसंहारः

भृगुवल्ल्याम्—"अधीहि भगवो ब्रह्मे"ति परिप्रश्नः कारणं ब्रह्मेति "तस्माद्वा एतस्मादि"त्यादिवाक्यैः, अनुमानादिभिश्च "सन्मूलाः सोम्येमाः प्रजाः"इत्यादिवचनानुगृहीतैरवगतम् , परन्तु "ब्रह्म पुच्छं प्रतिष्ठे"ति तत् प्रतिपादितं स्वरूपमात्रमुपदेशमात्रगम्यनिर्विशेषविषय एव। अत एव—"आनन्दो ब्रह्मेति व्यजानात्" इत्यनन्तरं "सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठितेता"इति "ब्रह्म पुच्छं प्रतिष्ठा" इति वाक्य-घटकप्रतिष्ठापदार्थेनोपसंहारः। व्यक्तं चैतत् तैत्तरीयवार्तिके—"ब्रह्म पुच्छं प्रतिष्ठे"तिवाक्यार्थस्यैवात्रोपसंहार इति ॥

अत एव—"आनन्दो ब्रह्मेति व्यजानात्" इति पुंलिङ्गमानन्द-पदम्। अतो जायते नानन्दमयः परमात्मा, किन्तु तत्प्रकृतिरानन्दस्वरूपमे-वेति। अतो लक्ष्यार्थजिज्ञासैवात्र। वाच्यार्थविषयत्वे तु न केवलम्"आनन्दो-ब्रह्मेति व्यजानात्" इत्युपसंहारविरोधः, किन्तु जगत्कारणस्य सविशेषस्य ब्रह्मवल्ल्यैव ज्ञातत्वात् , आनन्दमयपर्याये परमात्मपरतायाः संदिग्ध-त्वात् , कार्येण कारणानुमानविधया ब्रह्मस्वरूपस्य ब्रह्मवल्ल्यां निरूपणे-ऽन्नमयादिष्विवानन्दमयेऽपि तत्कारणं वक्तव्यम्। तस्य चानुक्तत्वाद् ब्रह्मस्वरूपं किमिति हि परिप्रश्नः। तत्रान्नमयादीनामिवानन्दमयस्यापि तत्कारणब्रह्मोपलक्षणतायामेव तात्पर्यम् , परन्तु तस्य कारणता यावदा-नन्दात्मनाऽपि तटस्थविधया ज्ञायते, आनन्दस्वरूपे तु ब्रह्मविद्यायाः समा-प्तिरिति खलु प्रकरणशुद्धिः ॥

### वाच्यद्वारा लक्ष्यब्रह्मस्वरूपोपदेश एव भृगुवल्ल्याः स्वारस्यम्

अत्र हि "अधीहि भगवो ब्रह्मे"ति ब्रह्मस्वरूपस्यैव परिप्रश्नः, न तु कस्मिन् व्यक्तिविशेषे ब्रह्मशब्दस्य शक्तिरिति। स्वरूपमात्रप्रश्ने हि प्रधाने ब्रह्मशब्दस्य तत्र प्रवृत्तिरपि यया कयाऽपि विधया निर्णीता भविष्यति। तत्र च कारणत्वमुखेन ब्रह्मस्वरूपमन्नादिद्वारा लक्षयन् प्रथमं विशिष्टे शक्तिमवधारयति, पश्चात्तु कारणस्यापि सर्वाधिष्ठानत्वे-नोपसंहरणात् तत्र लक्षणामप्यवधारयति। तेनावगम्यते वाच्यद्वारा लक्ष्यार्थं ब्रह्मणो निरूपयितुमेव ब्रह्मवल्लीति ॥

तत्र—"आनन्दाध्येव खल्विमानि भूतानि जायन्ते"इत्यानन्दस्यापि कारणत्वोपन्यासस्तु सदाद्यात्मनाऽधिष्ठानत्वेनावगतमेव ब्रह्मानन्दात्मक-मपीति सूचयितुम् ॥

### आनन्दात्मनाऽपि ज्ञातेऽखण्डे ब्रह्मण्येव वल्लीद्वयस्यापि तात्पर्यम्

तथाच यावदानन्दात्मना ज्ञानं सत्य-ज्ञानरूपस्य कारणत्वम्, आनन्दात्मनाऽपि सत्य-ज्ञानादिरूपस्य ज्ञाने त्वखण्डे परमे व्योमनि विद्यायाः प्रतिष्ठेति निर्विशेषपर्यवसानमेव भृगुवल्ल्याः प्रतीयते; अन्यथा "सत्यं ज्ञानमि"ति ब्रह्मवल्ल्यां कारणोपक्रमः, तत्रानन्दरूपानुपन्यासः, कारणतामुखेनात्रैवाऽऽनन्दात्मनोपसंहारश्च नोपपद्यते ॥

### आनन्दब्रह्मतायामेव वल्लीद्वयतात्पर्यम्, नानन्दमयब्रह्मतायाम्

तत्र "परमे व्योमन् प्रतिष्ठिते"त्युपसंहारोऽपि ब्रह्मवल्ली-भृगुवल्ल्योरेकवाक्यतयाऽपि भृगुवल्लीप्रतिपादितं तत्त्वमेव ब्रह्मतत्त्वमिति प्रतीयते। न चानन्दमयः, आनन्दश्चैकः। स हि मयडन्तपदनिर्दिष्ट आनन्दप्रचुरोऽकामहतश्रोत्रियसमानो न मुख्यब्रह्मतामर्हति। अतोऽन्नमयादिवदानन्दमयोऽपि न ब्रह्म, किन्त्वानन्दस्वरूपमेव। अन्यथाऽन्नमयादिमात्रस्याब्रह्मत्वे, आनन्दमयस्य ब्रह्मत्वे च भृगुवल्ल्यामपि पञ्चमपर्यायमात्रे कथं नानन्दमयपदस्यैव प्रयोगः? किमिति कार्यपरमयट्परित्यागेनाऽऽनन्दमात्रस्य पुंलिङ्गस्य निर्देशः? "यदेष आकाश आनन्दो न स्यादि"त्याकाशपदेन सहानन्दपदप्रयोगोऽसङ्गं निर्विशेषं च पुच्छं ब्रह्मैव निर्विशेषमभिप्रैति, नानन्दमयम् ॥

"अत एव आनन्दवाक्योपसंहार एव "परमे व्योमन्नि"त्याकाशपर्यायस्य व्योमपदस्य प्रयोगः। अतः पुच्छब्रह्मण्येव वल्लीद्वयतात्पर्यम् ॥

### "स यश्चायं पुरुषे" इत्यस्याद्वैत एव स्वारस्यम्

अत एव "स यश्चायं पुरुषे। यश्चासावादित्ये"इति जीव-ब्रह्मैक्योपसंहारोऽत्र। स च निर्विशेषपरतायामेव सङ्गच्छते—पुरुषोऽयं जीवः आदित्यान्तर्वर्ती सविशेषं ब्रह्म चैकमिति 'तत्त्वमसि'वाक्यार्थ एवात्रापि। आदित्यपुरुषस्य यद्यपि सविशेषत्वं मुख्योऽर्थस्तत्त्वमसीत्यत्र तत्पदस्येव; तथापि "स एकः" इत्युभयोरेकत्वावधारणं निर्विशेषपरतां विना नोपपद्यते ॥

पञ्चकोशवादस्यैवौपनिषदत्वम्, न कोशचतुष्टयवादस्य

तत्र तैत्तिरीयोपनिषदि पञ्च कोशा एव विवक्षिता इत्यत्र पञ्चकोशोपनिषत्, अन्याश्चोपनिषदोऽद्वैततत्त्वशुद्ध्यादिगता अद्वैतमात्रपक्षपातिन्यः प्रमाणम्। ततश्च "आनन्दमयमात्मानमुपसंक्रम्येत्यपि" तुरीयात्मस्वरूपविज्ञानोपायः सौषुप्तात्मानुसन्धानमित्येव गमयति, इति तैत्तिरीयश्रुतेरपि जीव-ब्रह्मैक्यवाद एव तात्पर्यम्॥

"स यश्चायं पुरुषे" इत्यस्य स्वरूपैक्यपरत्वमेव

"स यश्चायं पुरुषे। यश्चासावादित्ये" इतीन्द्रादीनामेव युगपदनेकशरीरग्रहणाभिप्रायमिति भूषणं लिखति। तत्र ह्येकस्यानेकभावः, अत्र तु द्वयोरेकीभाव इति कथं साम्यम्? तत्रेन्द्रादीनां युगपदनेकशरीरपरिग्रहो न यजमानादिशरीरकत्वेन, किन्तु स्वतन्त्रशरीरान्तरपरिग्रहेण। न च परमात्मनोऽप्यनेकशरीरपरिग्रहः। तत्रेन्द्रैक्यं यदि शरीरभेदमात्रेण, तर्हि जीवात्मनाम्, जीवात्मपरमात्मनोश्चैक्यमपि शरीरभेदमात्रेण, न तु स्वरूपभेदेन, इति स्वरूपैक्यसिद्धान्त एव प्रभातम्॥

ब्रह्मशब्दमुख्यतात्पर्यविषयो निर्विशेषमेव तत्त्वम्

ततश्च "ब्रह्मविदाप्नोति परम्" इत्यत्रोपक्रमे निर्विशेषब्रह्मण एव विवक्षा। न ह्यन्यथा ब्रह्मैव भवतीति सङ्गच्छते। आस्तां नाम निरुक्ताद्यनुसारेण तस्य सविशेषपरत्वमपि, विष्णुपुराणानुसारेण निर्विशेष एव मुख्यत्वम्, यदभिप्रेत्य कार्याधिकरणे परमेव ब्रह्म ब्रह्मशब्दस्य मुख्यमालम्बनमिति भाषितम्॥

"ब्रह्मविदाप्नोति" इत्यत्र वेदनं साक्षात्कार एव

आदित आन्तं विष्णुपुराणमद्वैतवादमेवोपबृंहयतीत्यद्वैततत्त्वशुद्धौ व्यक्तम्। तात्पर्यवशात्तु गौणार्थस्य, मुख्यार्थस्य वा ग्रहणम्। ब्रह्मभावस्तु ब्रह्मज्ञानमात्रेण नान्यत्राद्वैतसिद्धान्तात्। स च निर्विशेषब्रह्मतायामेव। आस्तां नाम वेदनं कुत्रचनोपासनारूपम्। यत्र तु वेदनस्य वेद्यैकपरमार्थताबोधनं लक्ष्यम्, शुक्तिवेदनस्थल इव, तत्र न वेद्यस्वरूपाधिगमादतिरिक्तं प्रयोजनान्तरं किमपि। न चैवमुपासनं नाम, ब्रह्मज्ञानं तु तद्विपरीतम्, अतः साक्षात्कार एवात्र वेदनपदार्थः॥

### "परमाप्नोती"त्यत्र परपदाशयोऽपि मुख्याद्वैतसिद्धान्तसिद्ध एव

एतेन—"परमाप्नोती"त्यपि—व्याख्यातम्। परत्वं ह्युपाध्यतीतत्वं निरुपाधिके ब्रह्मण्येव मुख्यम्। परविद्यायां ह्य"क्षरात्परतः परः" इति मुख्यं परत्वं निर्विशेषस्यैव बोध्यते। तत्र "अक्षरात् परतः परः" इत्यत्रैकस्मादक्षरात् परतोऽपि परः परमात्मेत्युपदिश्यते। कोऽयमत्र प्रथमोऽक्षरपदार्थः, कश्च परतः पदार्थः, कश्च द्वितीयपरपदार्थः श्रीभाष्यमते? यदि ह्यक्षरपदं प्रधानपरम्, ततः परो जीवात्मा, ततः परश्च परमात्मा, तर्हि शरीरवाचकानां पदानां शरीरिपर्यन्तत्वात्, सूक्ष्माचिच्चितोरेकरूपेणैव परमात्मपरत्वात्, परमात्मनो जीवशरीरकत्वस्याप्यविशेषात् सूक्ष्मचिदचिद्विशिष्टादन्यः, ततोऽतीत एव परमात्मेति विशदमवगम्यते, इति "ब्रह्मविदाप्नोति" इत्यत्र को नामापरो निर्विशेषादुपाध्यतीतात् सुवचः, इति परपदस्वारस्यमद्वैत एव॥

### 'आप्नोति' पदार्थगौणत्वमुभयत्र समानम्

'आप्नोति'पदार्थस्त्वप्राप्तत्वभ्रमनिवृत्त्यभिप्रायः इति सत्यम्, गौणः इदं तु श्रीभाष्यमतेऽपि परमात्मनाऽपृथक्सिद्धस्य जीवस्य 'ग्रामं गच्छती'त्यादावत्यन्तभेदसापेक्षायाः प्राप्तेरसंभवात् समानम्। न च 'प्राप्नोति'पदमनुभवपरम्; ब्रह्मवित्पदेनैव तस्य लब्धत्वात्, न चापृथक्सिद्धयोरेकत्र प्राप्तिव्यवहारो लोके दृश्यते। अप्राप्तत्वभ्रमनिवृत्तौ प्राप्तिव्यवहारो लोकेऽपि दृश्यते—'कण्ठचामीकर'न्यायेनेति परं विशेषः॥

अतः 'प्राप्नोति'पदार्थं वेदनं सिद्धवत्कृत्य विकल्प-तद्दूषणानि निरालम्बानि। तत्राप्राप्यत्वभ्रमनिवृत्तिमात्रेण प्राप्तत्वव्यवहार इवात्र 'प्राप्नोति'पदं निवृत्ताज्ञानवत्परं वा भवतु। तथाचात्र'प्नोति'पदार्थोऽज्ञाननिवृत्तिरेव। सा च साक्षात्कारजन्मेति न दोषलेशोऽपि; प्राप्तस्यैवाप्राप्तत्वभ्रमनिवृत्तेरेवात्र विवक्षणात् ब्रह्मभावस्य पूर्वसिद्धत्वमविरुद्धम्, श्रीभाष्यमतेऽपि पूर्वसिद्धस्यैव शरीर-शरीरिभावस्य शुद्धप्रत्यगात्मपरमात्मनोः प्राप्तिवर्णनं समानम्॥

### श्रीभाष्यमते ब्रह्मभावस्य दुरुपपादत्वमद्वैतसिद्धान्त इव

वस्तुतस्तु—ब्रह्मवित् किं स्थूलचिदचिद्विशिष्टं ब्रह्म, स्थूलचिदचिद्विशिष्टो जीवो वा। आद्ये तस्य सूक्ष्मचिदचिद्विशिष्टब्रह्मभावो न

तत्कर्तृकोपासनाफलम्। यदि स्थूलाचिद्विशिष्टो जीवः, तर्हि स्थूला-चिद्विशिष्टस्य जीवस्य सूक्ष्माचिद्विशिष्टचिद्भावः फलतोऽपि पर्यवस्यति। तत्र च प्राप्यत्वं ब्रह्मविदो जीवस्यैव स्वरूपस्य, न तु सूक्ष्मचिदचिद्विशिष्ट-ब्रह्मणः, इति न केवलं परपदास्वारस्यम्, किन्तु तस्य प्राप्यत्वोपन्यासो-ऽप्यस्वरसः। अद्वैतमते तु जीवस्यौपाधिकस्य स्वस्वरूपापत्तिमात्रमपि सुस्थम्। तदेवं ब्रह्मशब्दस्य निर्विशेषे शक्तिस्वीकारेण, लक्षणया वा ब्रह्मशब्दवृत्तिरुपपादिता॥

### ब्रह्मशब्दसंकेतस्य श्रीभाष्यमते नान्वयोऽद्वैत इव

भूषणं तु—संज्ञितमिति पदम्—अविद्यमानेन केनचिद्विशेषेण विशि-ष्टतया ज्ञाप्यते, इति—वदति, तत्राविद्यमानेन विशेषेण वैशिष्ट्यम्, यदि तस्य कल्पितत्वाभिप्रायेण, तर्हि वस्तुगत्या निर्विशेषमेव पर्यवस्यति। न चान्यथोक्तविष्णुपुराणवचनस्य शुद्धप्रत्यगात्मपरतया योजनसंभव इति व्यक्तीकरिष्यते यथाऽवसरम्॥

### भगवद्वासुदेवपदयोस्सार्वज्ञ्ये न विप्रतिपत्तिः

यत्तु—

"शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते
मैत्रेय! भगवच्छब्दो महाकारणकारणे॥
एवमेष महाशब्दो वासुदेवस्य नान्यगः"

इति विष्णुपुराणम्, तत्र—

"परं ब्रह्म परं धाम पवित्रं परमं भवान्।"

इति परब्रह्मस्वरूपतया श्रीकृष्णस्तुत्यनन्तरं विभूतिमात्रप्रश्ने वासुदे-वस्यापि विभूतिकोटौ प्रवेशः कथम्, कथं च भगवच्छब्दबोध्यत्वं श्रीकृष्ण-स्येति शङ्कानिवर्तनाय। तेन च सत्यं वासुदेवोऽपि विभूतिरेव वृष्णि-वंशजत्वेन, तस्य तु तेन रूपेण न भगवच्छब्दवाच्यत्वम्; तथापि श्रीकृष्णोऽयं महाविभूतिः=सर्वासु विभूतिषूत्तम इति विभूतित्वेऽपि भग-वच्छब्देन तस्य व्यवहारः, इति भगवच्छब्दोऽन्यपरोऽपि तस्यापि संज्ञेत्येव भावः॥

### श्रीकृष्णस्य महाविभूतित्वोपपत्तिः

अत एव शब्द्यते इति पदम्। महाविभूतित्वञ्च तस्य परेण भावेन पराशरेण ज्ञातेन, न तु साधारणज्ञानेन मानुषतन्वाश्रितत्वप्रयुक्तमानुष-

भावेन। तत्र 'शुद्धे महाविभूत्याख्ये परे ब्रह्मणि' इति शुद्ध-पर-ब्रह्मपद-प्रयोगेण प्रतीयते—श्रीकृष्णस्य परभावोऽपि निर्विशेषं स्वरूपमेव। तत्र च भगवच्छब्दः सविशेषपरो यद्यपि न घटते; तथापि तत्रापि ब्रह्मशब्दस्येव भगवच्छब्दस्यापि सङ्केतमात्रमित्येव फलति। तस्य सर्वकारणकारणत्वं च प्रकृतेरप्यधिष्ठानत्वे, यत्—"अक्षरात् परतः परः" इति श्रुतिसिद्धम्, इति नेदमपि प्रकरणमद्वैतमतेऽस्वरसम्, प्रत्युत तत्रैव स्वरसम्, तेन च "प्रत्यस्तमितभेदमि"त्यनेनाप्येकवाक्यता॥

ब्रह्मणोऽवाच्यत्व-लक्ष्यत्वादि धर्मस्य
कल्पितत्वान्नाद्वैतहानिः

एतेन—

"अवाच्यमिति वाच्यं चेत् ब्रह्मवाच्यत्वमृच्छति।"

इत्यपि-परास्तम्। इदमत्रालोचनीयम्-ब्रह्मणोऽवाच्यत्व-लक्ष्यत्वादिकं यदि धर्मः, तावता कथमद्वैतहानिरिति। तत्र "आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते"इति पञ्चपादिकोक्तेः, किं बहुना सत्यकामत्व-जगत्कारणत्वादिविविधगुणानामपि कल्पितानां तत्र स्वीकाराच्च कथं वाऽद्वैतहानिः? तदुक्तम्—

"अद्वमा भवतः केयं साधकत्वप्रकल्पने।
किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम्॥"

इति। यदि तेषां ब्रह्मविषमसत्ताकत्वेन मिथ्यात्वात् वस्तुगत्याऽद्वैतस्य न विरोधः, तर्हि प्रकृतेऽपि स एव न्यायोऽनुसन्धीयताम्॥

ब्रह्मणोऽवाच्यत्वनिषेधेऽपि वाच्यत्वावाच्यत्वयोरविरोधो
'मिथ्यात्व'मिथ्यात्व'न्यायेन

तत्र वाच्यत्वनिषेधेनावाच्यत्वं ब्रह्मणो वाच्यत्वमिथ्यात्वरूपम्। ततश्च वाच्यत्वावाच्यत्वयोः प्रपञ्च-तदभावयोरिव सामानाधिकरण्याद् न तयोर्विरोध इत्यवाच्यशब्दवाच्यत्वेन वाच्यत्वस्य को विरोधः? वाच्यत्वस्येवावाच्यत्वस्यापि वाच्यत्वमिथ्यात्वरूपत्वात्। तत्र यदि वाच्यत्वाभावरूपस्यावाच्यत्वस्यावाच्यशब्दवाच्यत्वे विरोधो मन्यते—अवाच्यशब्दवाच्यत्वे वाच्यत्वाभावोऽर्थसिद्धो भवतीति, तर्हि मिथ्यात्वमिथ्यात्वेन तद्विरुद्धसत्यत्वापादनवत्, अवाच्यत्वनिषेधे तद्विरुद्धवाच्यत्वपर्यवसानमिति यद्याशयः, तर्हि मिथ्यात्वमिथ्यात्वन्यायोऽत्र प्रसरति। यदि त्व-

वाच्यत्व-वाच्यत्वयोरविरोध एव, तर्हि, अवाच्यमिति वाच्यं चेत्तर्हि ब्रह्मवाच्यत्वमृच्छतीत्यनेन को वा व्याघात आपाद्यते ?

शतभूषणी हि कल्पितत्वात् वाच्यत्वस्य वाच्यत्वावाच्यत्वयोर्विरोधो नास्तीत्यभिप्रैति—निर्विशेषस्यापि वाच्यत्वकल्पमभिप्रेत्य तत्रैवावाच्यत्वम्, वाच्यत्वं च तन्मिथ्यात्वे न व्याहतम्, एकस्य मिथ्यात्वात्। अवाच्यत्वस्य मिथ्यात्वे तु 'मिथ्यात्वमिथ्यात्व'न्याय इति तु निष्कर्षः॥

### ब्रह्मणोऽवाच्यत्ववाच्यत्वयोर्व्यावहारिकत्वोपपत्तिः

यत्तु—भूषणं पृच्छति—कथमवाच्यत्वस्य व्यावहारिकत्वमिति ? तत्रोत्तरं मिथ्यात्वव्यावहारिकत्ववत् वाच्यत्वस्यापि प्रपञ्चान्तर्गततया प्रपञ्चवत् मिथ्यात्वात्, निर्विशेषवाक्यप्रामाण्याच्चेति। वाच्यत्वं मिथ्याभूतमङ्गीकृत्य वाच्यत्वनिषेधात्, ब्रह्म, वाच्यम्, वस्तुत्वात्, इत्यनुमाने ब्रह्मेतरस्यैव दृष्टान्तत्वाद् मिथ्याभूतवाच्यत्वेन सिद्धसाधनम्, अर्थान्तरं च। ब्रह्मणो लक्ष्यत्वमात्रपक्षे त्ववाच्यपदार्थो लक्ष्यमेव। तत्रापि लक्ष्यपदवाच्यत्वम्, अवाच्यपदवाच्यत्वमिव व्यावहारिकम्॥

### वस्तुत्वहेतुकब्रह्मवाच्यत्वानुमानायोगः

ब्रह्म, वाच्यम्, वस्तुत्वादित्यत्र वस्तुत्वं यदि सत्त्वेन प्रतीयमानत्वमात्रम्, तच्च तादात्म्यमात्रमेकसत्तावादेन, तर्हि हेत्वसिद्धिः। यद्यर्थक्रियाकारित्वम्, एवमपि निर्विशेषेऽनावृतेऽर्थक्रियाकारित्वस्याप्यभावात् स एव दोषः। सविशेषोपहितब्रह्मपक्षतायां तु सिद्धसाधनम्। न हि कल्पितं सर्वं प्रातिभासिकम्, किन्तु व्यवहारदशायां बाधितं शुक्तिरूप्यादिकमेव तथा, न तथा ब्रह्मावाच्यत्ववाच्यत्वादि, इति व्यावहारिकत्वमेव सर्वस्य साक्षात् ब्रह्मण्यध्यस्तस्य, मूलाज्ञानप्रयुक्तस्य। निर्विशेषब्रह्मणो वाच्यत्वावाच्यकत्वकल्पभेदावादाय वाच्यत्वावाच्यत्वव्यपदेशः, इति पुनः पुनरवाच्यत्वे भूषणं पृच्छति—कथं "प्रत्यस्तमितभेदं यत्" इत्यनेन वाचकत्वमिति ? तत्र ब्रह्मशब्दवाचकत्वपक्षो वा, तल्लक्षकत्वपक्षो वा योऽपि कोऽपि भवतु, निर्विशेषे ब्रह्मणि ब्रह्मशब्दस्यान्यस्य वा न वृत्त्यनुपपत्तिरद्वैतमते॥

निष्कर्षस्त्ववाच्यस्य, अमेयस्य च न लक्ष्यत्वमिति पक्षं भूषणमपि नोरीकरोति, तत्र शतभूषणीमेवानुसरति, अवाचकस्य लक्षकत्वमित्यपि

ब्रह्मशब्दस्य लक्ष्यनिर्विशेषातिरिक्तवाचकत्वस्य भूषणेनापि स्वीकाराद् ब्रह्मशब्दस्य निर्विशेषवाचकत्वमेव, न लक्षकत्वमिति शतभूषणीव्यवस्थानात्, अर्थवादेष्ववाचकत्वेऽपि लक्षकत्वस्य भूषणेनापि स्वीकारात्, ब्रह्मशब्दः, भगवच्छब्दो वा निर्विशेष एव मुख्यः, सविशेषे तु गौणः, इति प्रकृतनिबन्धेऽपि विशदीकरणात्, तत्त्वमस्यादिमहावाक्याखण्डार्थतायामेव तैत्तिरीयोपनिषदोऽपि स्वारस्यात्, अन्यान्याक्षेपाणां निबन्धमध्ये सम्यग् निरसनात्, भामती-विवरणसिद्धान्तयोरन्यथान्यथाग्रहणेनाद्वैतसिद्धान्तनिरासस्यातिफल्गुत्वाच्च ब्रह्मशब्दवृत्त्यनुपपत्तिर्न विकल्पसहा। अधिकमवेद्यत्वपरीक्षायां परीक्षिष्यत इत्यलमेतावतैव ॥

॥ इति ब्रह्मशब्दवृत्त्युपपत्तिः ॥

———

# ब्रह्मजिज्ञासोपपत्तिः

### ब्रह्मजिज्ञासोपपत्तौ शतदूषणी-
### शतभूषण्याद्याशयः

"अथातो ब्रह्मजिज्ञासे" त्यत्रेच्छाविषयो ज्ञानं प्रमाणजन्य-ब्रह्माज्ञाननिवर्तकाखण्डाकारवृत्तिः, न तु ब्रह्मरूपं स्वप्रकाशं ज्ञानमेव, ततो न स्वप्रकाशस्य ब्रह्मरूपज्ञानस्य मीमांसा युक्तेति शतदूषण्याद्याशयः। तत्र यद्यपि ब्रह्मस्वप्रकाशत्वविचारस्य प्रकृते विषयेण न सङ्गतिः; तथापि यद्धि न वृत्तिकर्म, न तज्जिज्ञास्यमित्यद्वैतमते स्वप्रकाशस्य ज्ञानविषयत्वानङ्गीकारात्, स्वमते तु जिज्ञास्यत्वसंभवाद् निर्विशेषब्रह्मजिज्ञासा प्रथमसूत्रार्थ इति तु तदीयो निष्कर्षः ॥

तत्र स्वप्रकाशत्वस्याज्ञानाविरोधित्वेन तदाश्रित-तद्विषयकाज्ञाननिवर्तिका वृत्तिः प्रमाणजन्या जिज्ञासार्थमपेक्ष्यत इति निरूपणमुखेन निर्विशेषस्य घटादिवदनुभाव्यत्वं नास्ति, वृत्तिव्याप्यत्वरूपं स्वज्ञाननिवृत्तिद्वाराऽनावृतसंविन्मात्रतासिद्धये वृत्तिसम्बन्धमात्रं स्वीक्रियते, इति स्वप्रकाशत्वानुमानस्येष्टसिद्ध्यभिमतस्य न काऽपि हानिरिति शतभूषण्यां विवेचितमिष्टसिद्ध्यनुमानस्य निर्दुष्टत्वसमर्थनेन ॥

### स्वप्रकाशत्वात् ब्रह्मजिज्ञास्यत्वायोग इति भूषणमतम्, तत्रापि स्वप्रकाशत्वात् तदीयस्यापि ब्रह्मणो जिज्ञास्यत्वायोगसाम्यं च

तत्र भूषणं लिखति—इष्टसिद्ध्यनुमानमसाधकम्, तत्स्वीकारे तु जिज्ञास्यत्वायोग इति। इदमत्रालोचनीयम्—कथमिष्टसिद्ध्यनुमानस्यासाधकत्वे जिज्ञास्यत्वायोगः, जिज्ञास्यत्वस्य स्वप्रकाशत्वस्य च को वा विरोधः? तत्र श्रीभाष्यमतेऽपि ब्रह्मस्वरूपम्, (तत्सविशेषम्, निर्विशेषं वेत्यन्यदेतत्।) स्वप्रकाशमेव, तथापि जिज्ञास्यमिति स्वीक्रियत इति कथं तत्र जिज्ञास्यत्वम् ॥

### स्वप्रकाशत्वेऽपि प्रमाणजन्यवृत्तिद्वारा ब्रह्मजिज्ञासा मतद्वयेऽपि समाना

यदि स्वप्रकाशस्यापि ब्रह्मणोऽनुभाव्यत्वात्, तर्हि किमनुभाव्यत्वमेव स्वप्रकाशत्वम्, उतान्यत्। आद्ये घटादिभ्यः को विशेषः? कथं च

स्वप्रकाशत्वम् ? यदि स्वयं ज्ञानरूपम् , तेन रूपेण स्वयम्प्रकाशम् ; तथापि धर्मभूतज्ञानविषयत्वात् स्वयम्प्रकाशत्वस्य वेदान्तप्रमाणजन्यधर्मभूतज्ञान-विषयत्वस्य च न विरोधः, तर्ह्यद्वैतमतेऽपि ज्ञानरूपस्यैव निर्विशेषस्यान्तः-करणधर्मभूतवृत्तिव्याप्यत्वमज्ञाननिवृत्तिप्रयोजकमादाय वेदान्तप्रमाणज-नितवृत्तीच्छया ब्रह्मजिज्ञासोपपत्तिरविकला ॥

### इष्टसिद्धिकाराणां स्वप्रकाशत्वानुमानसंग्रहः

अत्रालोच्यते—कथं वेष्टसिद्धिकाराणां स्वप्रकाशत्वानुमानमसाधक-मिति ? तदनुमानं हि—अनुभूतिः, स्वप्रकाशा, अनुभूतित्वात् ; अनुभा-व्यत्वे घटादिवदननुभूतिप्रसङ्गः इति ॥

### अत्र भूषणविकल्पितान्यनुक्तोपालम्भनानि

भूषणं त्वनुवदतीष्टसिद्ध्यनुमानम्—ब्रह्म, अननुभाव्यम् , अनुभूति-त्वादिति । विमृशति च किमिदमननुभाव्यत्वमिति—स्वाविषयत्वं वा, वृत्त्यविषयत्वं वा, सामान्यतोऽनुभवाविषयत्वं वा—इति । नाद्यः; सिद्धसाध-नात् । स्वयंप्रकाशत्वमपि हि न स्वविषयकत्वम् , नापि वृत्त्यविषयत्वम् ; वृत्तेः सविषयकत्वानङ्गीकारादस्मन्मतेन सिद्धसाधनात् , भवन्मते चरम-वृत्तिविषयत्वस्य स्वीकृतत्वेनापसिद्धान्तात् , न तृतीयः; ब्रह्मणोऽपि प्रत्यक्षानुमानशब्दानुभवविषयत्वेन साध्यस्य बाधात् , वृत्त्यवच्छिन्नेति-साध्यकोटौ निवेशे तस्यास्माभिरनङ्गीकारेण काञ्चनमयवह्नेरिवाप्रसिद्धध-र्मघटितस्य साधकत्वायोगात्—इत्यादि ॥

### स्वातिरिक्तचिदनपेक्षप्रकाशत्वं स्वप्रकाशत्वमद्वैताभिमतम्

तत्र यदि साध्यमननुभाव्यत्वं स्वातिरिक्तचिदनपेक्षप्रकाशत्वम् , तत्तु घटादौ, किं बहुना ? पूर्वोक्तरीत्या वृत्तेरपि नास्ति, किन्तु ब्रह्मस्वरूपमात्र-स्यानावृतस्यापि । तत्र ब्रह्मणोप्यावरणाभिभवार्थं वृत्त्यपेक्षायामपि स्वयं-प्रकाशस्य तस्य स्वातिरिक्तचिदपेक्षप्रकाशत्वस्याभावादननुभाव्यत्वमविक-लम् ; श्रीभाष्यमते तु स्वप्रकाशं ब्रह्म स्वप्रकाशार्थं न धर्मभूतं ज्ञानमपेक्षते, इति साध्यासिद्धिः, दीपादौ, सूर्यादौ वा स्वयंप्रकाशेऽपि स्वप्रकाशार्थं नातिरिक्तापेक्षा लोके, ब्रह्मदृष्ट्या तु दीपादीनां सूर्यादीनां वा परप्रकाश्य-त्वमेव, न स्वप्रकाशत्वमित्यन्यदेतत् । तथाच ब्रह्मणो वृत्तिव्याप्यत्वेऽपि फलव्याप्यत्वाभावादननुभाव्यत्वम् ॥

### भूषणानूदितवृत्त्यविषयत्वस्यानुभाव्यत्वरूपत्वायोगः

वृत्तिव्याप्यत्वं हि वृत्तिप्रयुक्तावरणाभाववत्त्वम्, न तु तद्विषयत्वमिति परमत इवाद्वैतमतेऽपि साक्षाद् वृत्तिविषयत्वस्य वृत्तिप्रयुक्तप्रकाशत्वरूपस्यानङ्गीकाराद् वृत्त्यविषयत्वकल्पोऽपि सूपपादः। स्वाविषयत्वं त्वनुभाव्यघटादिसाधारणं नाननुभाव्यत्वविकल्पमपि सहते ॥

### सामान्यतोऽनुभवाविषयत्वमननुभाव्यत्वमिति विकल्पनिरासः

एतेन—तृतीयकल्पोऽपि—व्याख्यातः। सोऽपि घटादिसाधारणफलरूपानुभवाविषयत्वं चेत्, तर्हि न ब्रह्मसाधारणम्। तत्र वेदान्ताद्यनुभवविषयत्वमपि ब्रह्मण आवरणाभिभवमात्रेण यदि, तर्हि न बाधितम्; अन्यत्तु नोरीक्रियते ॥

### संविन्मात्रस्य न सकर्तृकत्वादिनियमः, वृत्तेस्तु स नियमोऽद्वैतमतेऽपि

तत्रानुभवस्य सकर्तृकत्व-सविषयकत्वनियमस्तु श्रीभाष्यमते धर्मभूतज्ञानाभिप्रायः, अद्वैतमते वृत्त्यवच्छिन्नचैतन्याभिप्रायः। स्वरूपचैतन्यमात्रस्य स्वप्रकाशस्य न सकर्तृकत्वम्, न वा सविषयकत्वम् ॥

### अहमर्थः संविदात्मवैलक्षण्येन तद्दृष्टान्तेनात्मनो नानुभाव्यत्वम्

आत्मनानात्वं तु वैशेषिकाणाम्, अन्येषां चाहमर्थात्मतामभिप्रेत्य, तत्त्वद्वैतमतेऽप्यहमर्थनानात्वस्य स्वीकारादविरुद्धम्। परन्तु न स मुख्य आत्मा, किन्तु मिथ्यात्मा, गौणात्मा वा। तदुक्तम्—

> "गौण-मिथ्यात्मनोऽसत्त्वे पुत्र-देहादिबाधनात्।
> सद्ब्रह्माहमित्येवं बोधे कार्यं कथं भवेत् ॥"

इति। उक्तं च गीताभाष्ये—'अहम्' 'त्वम्' 'इमे' इति भेदव्यपदेशः शरीरभेदमात्रेण, न स्वरूपेणेति। तथाचानुभूतिस्वप्रकाशत्वस्यान्यथानुवादेनाननुभाव्यत्वसाधनमपि न दुष्टम् ॥

स्वप्रकाशत्वानुभाव्यत्वयोर्व्याहतिः, तयोरनैक्यात्,
वृत्त्यपेक्षा त्वावरणाभिभवमात्रार्थम्

वस्तुतस्तु—स्वप्रकाशत्वं नाननुभाव्यत्वम्, किन्तु पूर्वोक्तत्वमेव; अन्यथाऽनुभवशब्दस्य वृत्ति-तदवच्छिन्नान्यतरपरत्वे ब्रह्मणोऽपि वृत्तिव्याप्यत्वरूपानुभाव्यत्वस्य सत्त्वात् ब्रह्मणि बाधः ॥

यत्तूच्यते—अनुभूतेरप्यनुभाव्यत्वे बाधकाभावः—इति, तत्र किं वानुभाव्यत्वम्—यदि वृत्तिविषयत्वमात्रमुक्तरूपम्, तर्हि नानिष्टम्। यदि फलव्याप्यत्वम्, तर्हि बाधितम्। न हि स्वप्रकाशस्य प्रकाशार्थं प्रकाशान्तरापेक्षा,इति नानुभाव्यत्वसंभवः। स्वातिरिक्तचिदनपेक्षप्रकाशत्वस्यैव पूर्वोक्तस्य स्वप्रकाशत्वाद् नाद्वैतमते स्वप्रकाशत्वेऽपि स्वभानार्थमनुभवान्तरापेक्षा, वृत्त्याऽऽवरणनिवृत्तिमात्रेण स्वभानोपपत्तेः ॥

घटादीनां फलव्याप्यत्वमनुभाव्यत्वम्, न तथा ब्रह्मणः

तत्र वृत्त्यवच्छिन्नचैतन्यभास्यत्वं घटादेश्चैतन्यावच्छेदकस्य, न तु चैतन्यस्य, तस्य वृत्त्यवच्छेदमात्रेणावरणनिवृत्त्या स्वयमेव प्रकाशाद् घटादेरिव वृत्त्यवच्छिन्नचैतन्यान्तराभास्यत्वम् ॥

यत्तु—परिभाषादौ विषयावच्छिन्नचैतन्य-वृत्त्यवच्छिन्नचैतन्यत्वादिकं प्रत्यक्षलक्षणम्, तद् जन्यप्रत्यक्षापेक्षम्, न तु नित्यचैतन्यमात्राभिप्रायम्। व्यक्तं चैतत् तत्रैव। चैतन्यं तु "यत् साक्षादपरोक्षाद् ब्रह्मे"ति। तथाच व्यवहारदशायामपि सदादिरूपेणाविद्याकल्पितभेदेन भानमपि ब्रह्मणो वृत्तिमात्रेणाज्ञाननिवृत्त्यैव, इति न कदापि फलव्याप्यत्वम्—येनानुभूतित्वम्, अनुभाव्यत्वं च न विरुद्धं स्यात् ॥

वृत्तेः, सुखादेश्च स्वप्रकाशत्वं स्वत एव। अतो नानवस्था
नानुभाव्यत्व-स्वप्रकाशत्वयोरविरोधश्च

एतेन—उपहितजिज्ञासाऽपि—व्याख्याता; तत्रापि वृत्त्यवच्छेदमात्रेणावरणनिवृत्तेरेवाभिप्रेतत्वात्। उपहितमिथ्यात्वं तूपाधिमिथ्यात्वनिबन्धनमौपाधिकम्। तत्र वृत्तेश्चिद्भास्यत्वलक्षणं विषयत्वं वृत्त्यन्तरापेक्षां विनाऽपीत्यन्यदेतत् ॥

वृत्त्युपयोगो हि घटादिस्थले तदवच्छिन्नचैतन्यस्यावृतस्याऽऽवरणनिवृत्त्यर्थमेव। वृत्त्युपधाने तु वृत्त्याऽऽवरणनिवृत्तौ का वाऽपेक्षा तदाकारवृ-

त्यन्तरस्याऽऽवरणनिवर्तकस्य ? परिभाषादौ वृत्तेः स्वप्रकाशत्ववर्णनमप्येतदभिप्रायमेव ॥

अयमेव न्यायः—साक्षिभास्यानां सुखादीनां भानेऽपि; सुखातिरिक्तवृत्त्यनपेक्षया सुखादेरेवावरणनिवर्तकत्वेन तदाकारवृत्त्यन्तरानपेक्षणात् । व्यक्तं चैतत् न्यायरत्नावल्यां प्रत्यक्षपरोक्षधात्वर्थविवेचनावसरे । तथाचोपहितमिथ्यात्वमुपाधिमिथ्यात्वेनैव, न तु वृत्तिविषयत्वेन, तदधिष्ठानचिद्भास्यत्वेन वा । चिन्मात्रस्य घटादिवदननुभाव्यत्वं न मिथ्यात्वं प्रसञ्जयेदिति भिया, किन्तु तदसंभवेन, तदयोगेन वा पूर्वोक्तरीत्या, इति न निर्मूलं ब्रह्मणोऽननुभाव्यत्वम् ॥

वृत्तिव्याप्यत्वेऽपि ब्रह्मणो न मिथ्यात्वम्, तज्जननार्थं
वृत्तेरपेक्षेति न जिज्ञासाऽनुपपत्तिः, न चैतावताऽनुभाव्य-
त्वम्, श्रीभाष्यमत एव तु प्रत्युत तदनुपपत्तिः

अतो जगत्, मिथ्या, दृश्यत्वादित्यनुमानं न ब्रह्मापि कवलीकरोति; अन्यथा ब्रह्मणोऽपि तदतिरिक्तचिद्भास्यत्वे तस्यापि तदतिरिक्तचिद्भास्यत्वेऽनवस्थाऽऽपद्येत । सर्वथा त्वावरणाभिभवार्थं वृत्तेरपेक्षणात्, प्रमाणजन्यवृत्तेरेवाज्ञाननिवर्तकत्वात्, वेदान्तवाक्यानामेव तत्प्रमाणत्वाच्चोक्तविधावगतिपर्यन्तज्ञानेच्छारूपा ब्रह्मजिज्ञासा, तत्साध्यावगतिप्रयोजनोपपद्यते, इति जिज्ञासोपपत्तिरद्वैतसिद्धान्ते स्वीक्रियते, श्रीभाष्यमते तु यत्रानुभाव्यत्वमनुभूतिस्वरूपस्यैव सविशेषस्य, तत्र धर्मजिज्ञासायां धर्मस्येव ब्रह्मजिज्ञासायामपि ब्रह्मण एव जिज्ञास्यत्वात्, जिज्ञासापदघटकज्ञाधात्वर्थेनोपासनादिशब्दवाच्यवेदनस्य विवक्षितुमशक्यत्वात्, देवतामीमांसया ब्रह्मणो जिज्ञासाया वृत्तत्वात्, 'उपासीते'त्यादावुपास्त्यर्थस्याविप्रतिपन्नत्वात्, जिज्ञासापदार्थो विलक्षणः स्वीकर्त्तव्यः । न चैवं सति जिज्ञासोपपद्यते, इति "अथातो ब्रह्मजिज्ञासे"ति पृथग् ब्रह्मजिज्ञासाऽनुपपन्ना ॥

न च वृत्त्यवच्छिन्नचैतन्यविषयत्वं ब्रह्मणः, किन्तु वृत्तिमात्रविषयत्वम्; अन्यथाऽनवस्थानादित्यनुपदमेवोक्तम् । सत्यमवच्छेदकभेदेन विषयावच्छिन्नम्, अन्तःकरणावच्छिन्नम्, वृत्त्यवच्छिन्नं च चैतन्यमिति जीवेश्वरादिभेदवत् चैतन्यभेद औपाधिको वर्तते । न चैतावता वृत्त्यवच्छिन्नं चैतन्यं ब्रह्मचैतन्यस्य स्वप्रकाशस्य भासकं भवितुमर्हति, येन तद्भास्यत्वेन ब्रह्मणोऽनुभाव्यत्वं स्यात् ॥

विषय-विषयिभावनियमो न संविन्मात्रविषयः, येन वैषम्य-
मप्यनुभाव्यस्य स्यात्

विषय-विषयिभावो हि चैतन्यावच्छेदकविषयवृत्त्युपाधिकस्तदवच्छि-न्नयोश्चैतन्ययोः, न तु निर्विशेषे चैतन्ये, वृत्त्याऽऽवरणाभिभवमात्रेण स्वप्रकाशचैतन्यं निरुपाधिकं न विषयः, विषयी वा। इदमेवात्राभिप्रेत्योक्तम्-वृत्तिज्ञानविषयः सकर्तृकत्व-सविषयकत्वनियमः, न तु संविन्मात्राभिप्राय इति, इति नानुभाव्यत्वं निर्विशेषस्य संविन्मात्रस्यानावृतस्य, आवृतं तु तत्तदवच्छिन्नचैतन्यगतावरणनिवृत्त्यर्थं वृत्तिमात्रमपेक्षते, तावताऽपि तु नानुभाव्यत्वगन्धोऽपि ॥

सर्वत्र वृत्तेः सविषयकत्वं तत्तद्विषयगतावरणनिवर्तकत्वमात्रम् , भानं तु सर्वत्र चैतन्यस्य स्वतः। उपहितचैतन्ये तूपाधिमात्रस्यानावृतेन स्वयम्प्र-काशेन चैतन्येन भानमिति हि वस्तुस्थितिः। यथा चाननुभाव्यत्वेऽपि वृत्तिविषयत्वं सुभणितम् , तथा पूर्वमुपपादितम् ॥

घटादीनां जडानामावरणाभावादनावृतचैतन्यभास्यत्वम् ,
नैवं संविन्मात्रस्य

तदयं निष्कर्षः—घटादीनां जडोपाधीनामज्ञानाभावात् वृत्तेर्न घटादि-गतावरणाभिभवमात्रार्थत्वम् , किन्तु तदवच्छिन्नचैतन्यस्यैवावृतत्वात् वृत्त्या तदावरणे निवृत्ते वृत्तिप्रतिबिम्बितेन, तदुपहितेन वा चैतन्येनैव भानमित्यनुभाव्यत्वम् , इति न तत्र वृत्तिविषयकत्वमात्रेणालम् , इति चिद्भास्यत्वस्याधिकस्य स्वीकारः, नैवं स्वप्रकाशसंविन्मात्रे, इति घटादि-वैलक्षण्यमनुभाव्यत्वाननुभाव्यत्वाभ्याम् , इति न दृश्यत्वेन घटादेरिव ब्रह्मणोऽपि मिथ्यात्वापातः, न वा जिज्ञास्यत्वानुपपत्तिः ॥

अखण्डस्य संविन्मात्रस्यानाद्यविद्याकल्पितसदादिभेदेन
कारणत्वादिर्यावदविद्यानिवृत्ति

तत्र यद्यपि 'सन् घटः' 'घटो भाती' त्यादिप्रतीतावधिष्ठानं सच्चिदा-त्मना ज्ञातम् , आनन्दात्मनाऽज्ञातं च घटादितादात्म्येन भासते, तत्राखण्डे ब्रह्मण्यनाद्यविद्या-तत्प्रयुक्तजीवेशभेदादिकमिव सच्चिदात्मना भेदोऽप्य-नादिरनाद्यविद्याकल्पितः, अन्यथा नाज्ञानम् , न जीवः, नेश्वरः, न वाऽज्ञा-नचिद्भेदः, नापि वाऽज्ञानस्य चिता सम्बन्धः कोऽपि स्यादिति जगत्का-रणताऽपि ब्रह्मणो भज्येत ॥

श्रीभाष्यमतेऽपि प्रकृति-सूक्ष्मचिदादीनामनादित्वम्, जीवस्य स्वरूपज्ञानस्य कर्मणाऽन्येन वाऽऽवरणमित्यादिकं ब्रह्मकारणतानिर्वाहार्थमङ्गीकर्तव्यम्, इति सत्त्व-चित्त्वादीनामखण्डे ब्रह्मणि कल्पितत्वं न बाधितम्, सत्त्व-चित्त्वादिपदार्थास्त्वानन्दत्व-नित्यत्व-तद्भेदादयो यावन्तोऽनादित्वेन स्वीकर्तव्याः सर्वेऽपि ते गृह्यन्ते, येनानादिकारणत्वमपि ब्रह्मणो निर्विशेषस्यानाद्येवाऽविद्याप्रयुक्तम्॥

यावदखण्डात्मना भानं संसारः, ततस्तु मुक्तिः

तत्रानन्दत्वम्, तद्भेदो वा यद्यप्यविद्याप्रयुक्तः; तथापि कस्यचन ज्ञानम्, कस्यचनाज्ञानम्, सर्वेषामखण्डरूपेणाज्ञानं वा इत्यानन्दत्वांशमात्रस्य कथञ्चन ज्ञानेऽपि रूपान्तरेणाज्ञानात्, सर्वेषामखण्डरूपेणाज्ञानाद्वा संसारोपपत्तिः॥

सत्यमनृत-जड-परिच्छिन्नानानन्दत्वव्यावृत्तिरेव वेदान्तानां लक्ष्यम्, परन्तु तयाऽखण्डरूपेण साक्षात्कारपर्यन्तं न संसाराद्विमोकः। न हि, परोक्षतया ज्ञानमात्रं पर्याप्तम्; अन्यथा, वेदान्ते परोक्षतया सविशेषज्ञानादेव कथं न मुक्तिः? यदि तु तदुपासनासाध्यभगवदनुग्रहसापेक्षा सा, तर्हि प्रकृतेऽप्यखण्डाकारवृत्तिसाध्याज्ञाननिवृत्त्यपेक्षा सेति समानम्॥

तत्र प्रागेव सत्त्व-चित्त्वादीनां यद्यपि धर्मतया ज्ञानम्; तथाप्यनाद्यविद्यावशादधिष्ठानारोप्यभावेन ब्रह्मण्यध्यस्ततयैव तज्ज्ञानमित्यसज्जडादिभावेन प्रतीतिः, इति तद्व्यावृत्ततावोधनार्थं सत्य-ज्ञानादिवाक्यम्; तदुक्तम्—

"समारोपस्य रूपेण विषयो रूपवान् भवेत्।"

इति। तत्र सत्यं संसारदशायामपि दुःखादावप्यानन्दबुद्धिरानन्दांशतादात्म्येनाऽस्ति; तथापि, तत्र वृत्तिप्रतिफलितानन्दतादात्म्यमेव, न स्वरूपानन्दतादात्म्यम्; स्वरूपानन्दस्याज्ञातत्वात्। स्वरूपानन्दो हि ह्यपरिच्छिन्नः, यो ब्रह्मस्वरूपः। अत एवापरिच्छिन्नानन्दस्वरूपज्ञानिन एव सर्वतोऽभयप्राप्तिरिति "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्" इति श्रुतिः॥

### अखण्डरूपेण ब्रह्मणो भाने वेदान्ताः प्रमाणम्

अत्र—"आनन्दं ब्रह्मणः" इति भेदनिर्देशोऽज्ञानप्रयुक्तानन्दभेदस्यानादेरनुवादमात्रम्। 'राहोः शिरः' 'पुरुषस्य चैतन्यमि'ति वाऽभेदे षष्ठीति तु प्रकारान्तरम्। तत्र ज्ञेयस्वरूपं त्वानन्दरूपं ब्रह्मैव, न तु तयोर्भेद इति बोधनार्थमेव भृगुवल्ली—"आनन्दो ब्रह्मेति व्यजानात्" इति। अपरिच्छिन्नानन्दस्वरूपत्वं सच्चिदानन्दात्मनाऽविभक्तमखण्डं स्वरूपम्। तच्च पूर्वमज्ञातम्, पश्चाद् ज्ञायमानम्, साक्षात्क्रियमाणं वा मुक्तिस्वरूपम्। अतोऽखण्डाकारसाक्षात्कारार्थं जिज्ञासा॥

तत्राखण्डम्, अपरिच्छिन्नं वा ब्रह्मस्वरूपमज्ञानवशात् परिच्छिन्नम्, सखण्डमिव च प्रतीयते, जिज्ञासानन्तरं त्वखण्डतया भातीति वस्तुस्थितिः॥

### संसारदशायां सदादिभेदोऽनाद्यविद्याकल्पितः, मुक्तौ तु स्वरूपतोऽखण्डम्, न तत् संसारदशायामपि वृत्त्युपहितरूपेण भाति

तत्र निर्विशेषज्ञानाद् मुक्तिरित्यनेन स्वरूपतो निर्विशेषज्ञानमखण्डाकारवृत्त्यपर्यायमेव विवक्ष्यते, न तु निर्विशेषत्वप्रकारकं सविकल्पकज्ञानम्। यथा चानाद्यज्ञानप्रयुक्तोऽनादिः सच्चिदानन्दभेदः संसारदशायाम्, तथोपपादितम्, इति न यावदखण्डाकारवृत्त्याऽऽनन्दादिभेदाभावः। अत एव तत्र सामान्य-विशेषभावोऽपि ब्रह्मात्मना सामान्यम्, अनाद्यविद्याकल्पितसदादिभेदात्मना विशेषः॥

### अद्वैतमते ब्रह्मणो जिज्ञासोपपत्तिप्रकारः

यत्तु—भाष्ये यदि नात्मास्तित्वप्रसिद्धिः, सर्वो लोको नाहमस्मीति प्रतीयादिति, तदिदं संविद्रूपेण, साक्षितया वा संसारदशायामप्युपहितरूपेणात्मभानमभिप्रेत्य, न तु स एवात्मेति; अन्यथा कथमुत्तरे भाष्ये—"तद्विशेषं प्रति विप्रतिपत्ते"रिति। तत्र नित्य-शुद्ध-बुद्धस्वभावपदविवरणावसरे "बुद्धेत्यपराधीनप्रकाशानन्दात्मानं दर्शयति; आनन्द-प्रकाशयोरभेदादि"ति भामती त्वखण्डात्माभिप्राया, यस्य ज्ञानार्थं जिज्ञासेति वदन्ती, अखण्डरूपेण निर्विशेषापरपर्यायेण जिज्ञासैव ब्रह्मजिज्ञासेति ब्रह्मजिज्ञासामुपपादयन्ती च मुक्तकण्ठं ब्रह्मजिज्ञासानुपपत्तिं परिहरति॥

### सत्य-ज्ञानादीनामसत्यादिव्यावृत्तिरूपत्वेऽपि नाद्वैतहानिः, शून्यवादापत्तिर्वा

तत्र सत्य-ज्ञानादीनामसत्यव्यावृत्तिरूपत्वेऽप्यभावस्य भावरूपत्व-ध्रौव्यात् तन्निवृत्तित्वोपलक्षितब्रह्मस्वरूपत्वमेवासत्यादिव्यावृत्तीनाम्। इदं व्यावृत्तेः सत्यत्वपक्षे। व्यावृत्तेरपि मिथ्यात्वे तु ब्रह्मणो भावधर्म-शून्यत्वमिवाभावाख्यधर्मशून्यत्वमपि। सर्वथा त्वभावात्मता न शून्यता, भावाभावादिचतुष्कोटिविनिर्मुक्तस्वरूपत्वान् शून्यत्वस्य। व्यक्तीकरिष्यते चेदमुपरिष्टाद् निबन्ध एव पञ्चमप्रकाराविद्यानिवृत्तेः शून्यत्वापत्तिशङ्का-परिहारसन्दर्भे॥

### स्वरूपज्ञानस्य नाज्ञाननिवर्तकत्वम्, प्रमाणजन्यत्वं वा

तत्राज्ञाननिवर्तकं ज्ञानं प्रमाणजन्यं वृत्तिरूपम्। तच्चाज्ञाननिवर्तकत्वं वृत्तेः साक्षाद्वा, परम्परया वेत्यन्यदेतत्। ब्रह्म स्वरूपज्ञानमित्यत्र "सत्यं ज्ञानमि"त्यादिश्रुतिरेव प्रमाणम्। संप्रतिपन्नं चैतद् मतद्वयेऽपि। 'अहमि' ति स्फुरणं तु स्वरूपस्यैवान्तःकरणोपधानात्; साक्षितया त्वन्तःकरणवृत्तेरि-वान्तःकरणस्याप्यज्ञानविरोधित्वात्। वृत्तिरपि देशविशेषावच्छिन्नान्तः-करणभागविशेषो द्रव्यविशेषः, यथा श्रीभाष्यमते धर्मभूतं ज्ञानम्। तत्र धर्मभूतत्वं कस्येति त्वन्यदेतत्। विपरीतस्फुरणहेतुत्वं तु न स्वरूपज्ञानस्य; विपरीतज्ञानस्य सार्वत्रिकत्वापत्तेः। भगवत्स्वरूपस्य, शुद्धप्रत्यगात्मस्व-रूपस्य वा प्रमाणजन्यत्वेन जिज्ञासावैयर्थ्यापत्तिरुभयत्र समाना॥

### 'अहमि'ति स्फुरणं नाज्ञाननिवर्तकम्

तच्चाज्ञानं स्वरूपविषयकम्। तत्र'अहमि'ति स्फुरणमेव स्वयं विपरीत-दर्शनम्; अनात्मन्यात्माध्यासरूपत्वाद् 'गौरोऽहमि'त्यादिवत्। न हि स्वरूपज्ञानम्, 'अहं' ज्ञानं चेत्यनर्थान्तरम्, येन अहमि'ति स्फुरणमा-पद्येत। व्यक्तीभविष्यति चेदमहमर्थस्यानात्मत्वविचारावसरे॥

### स्वरूपज्ञानमहमर्थस्याधिष्ठानम्

अहमर्थाधिष्ठानं हि स्वरूपज्ञानम्, यदेव ब्रह्म, तदेव चाज्ञान-विषयः, अज्ञानाश्रयश्च। तच्च ब्रह्माज्ञानं ब्रह्मज्ञानैकनिवर्त्यम्; ज्ञाना-ज्ञानयोः समानविषयकत्वेनैव परस्परविरोधित्वात्। घटाद्यधिष्ठानचैत-न्यमेव घटावच्छिन्नस्वरूपेणाज्ञानविषयः, घटादिकं त्वज्ञानविषयता-वच्छेदकमात्रम्॥

घटादिज्ञानेन नाज्ञाननिवृत्तिः, न वा तन्मात्रेण मुक्तिः, स्वरूप-
ज्ञानस्याज्ञाननिवर्तकत्वायोगश्च

तत्र 'घटोऽयमि'ति प्रत्यक्षं तत्समये तात्कालिकमज्ञानविषयत्वमात्रं निवर्तयति, नाज्ञानम् ; असमानविषयकत्वात् ॥

घटादिज्ञानेषुष्वज्ञानविषयत्वानाम् , मूलाऽपि ज्ञानावस्था
विशेषाणां वा निवृत्तिः

घटाद्यवच्छिन्नचैतन्याश्रितानि यावन्ति ज्ञानानि, ततो निवर्त्यानि तावन्तीति सिद्धान्तलेशसंग्रहे व्यक्तम् । अतो न घटज्ञानेन तदज्ञान-निवृत्त्यभावो विरुद्ध्यते । लोके घटमात्राज्ञानानुभवस्तु तदधिष्ठान-चैतन्यस्य तदाप्यावृतत्वात् समानविषयकत्वाभावेन मूलाज्ञानस्य निवृत्त्या चैतन्यस्य यथावदननुभवेन च तदवच्छेदकत्वाननुभवाधीनः ॥

अत एव—

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥"

इति । सत्यपि रूपपञ्चके घटादीनां नाम-रूपात्मनैव व्यक्ता प्रतीतिः ॥

अथवा यावन्ति ज्ञानानि, तावन्त्यज्ञानान्यवस्थाऽज्ञानरूपाणि घटादि-विषयाण्येव भवन्तु, अज्ञानकार्यस्याज्ञानविषयत्वायोगवर्णनं तु मूला-विद्याभिप्रायम् ; तत्कार्यत्वाद् घटादीनाम् । न चावस्थाऽज्ञानकार्याणि घटादीनि, इति न घटादिमात्राऽज्ञानप्रतीतिविरोधः । सिद्धान्वलेशसंग्रह-स्याप्ययमेवाशयः । अत्रापि ज्ञानाज्ञानयोः समानविषयकत्वेन परस्पर-विरोधन्यायो न विरुध्यते । ब्रह्माज्ञानं ब्रह्मैकोपाधिः, तन्मात्रविषयं वा तन्मात्रोपाधिवृत्तिज्ञानमात्रनिवर्त्यम् , तन्मात्रसम्बन्धिवृत्तिज्ञानमात्रनाश्यं वेति नोक्तनियमभङ्गः; अन्यथा तु तन्नियमविरोधः स्यात् ! सर्वथा तु स्वरूपज्ञानं नाज्ञाननिवर्तकम् । संमतमिदं श्रीभाष्यमतेऽपि ॥

स्वरूपविषयकं ह्यज्ञानं न स्वरूपज्ञाननिवर्त्यं तन्मतेऽपि; भगवत्संक-ल्पमात्रनिवर्त्यत्वात् तदज्ञानस्य । तदेकत्वाज्ञानमप्यत एव व्याख्यातम् , न हि स्वरूपज्ञानमेव तदेकत्वाद्यज्ञाननिवर्तकम ; अन्यथा तदेकत्वानुकूल-त्वादिबोधकवेदान्तवैयर्थ्यापत्तेः । अयमेव न्यायो भगवतो ज्ञानरूपस्य निखिलहेयप्रत्यनीकत्वादावपि । यदि तत्र ज्ञानेन, भगवत्संकल्पेन वा तन्निवृत्तिः, तर्हि स्वरूपाज्ञानानिवर्तकत्व एव पर्यवसानम् । ततश्चाज्ञान-निवर्तनार्थत्वादखण्डाकारवृत्तेः तदुपलक्षितब्रह्मविचारोऽज्ञाननिवर्तनार्थो

ब्रह्मजिज्ञासा। "आनन्दो विषयानुभवः, नित्यत्वं चे"त्यादिपञ्चपादिकाभावस्तु पूर्वमेव विशदीकृतः॥

आनन्दत्वादीनां धर्मत्वं कल्पितम्, अतो
नित्यत्वादिज्ञानमपि न ब्रह्मज्ञानम्

तत्रानन्दः सच्चिदानन्दरूपेणानाद्यविद्याकल्पितभेद आनन्दस्वरूपमेव, तच्चानन्दविशिष्टमेव, न धर्ममात्रम्। अतो नानन्दो नित्यत्वमिति पदप्रयोगायोगः। तत्र नित्यत्वं यदि कल्पितम्, तर्हि नित्यत्वविशिष्टं भवति, तेन च तस्य तथा व्यवहारोऽपि, परमार्थतस्तु तत् सद्रूपम्॥

अयमेव न्यायश्चिदानन्दयोरपि। आनन्दाद्यंशानां कल्पितत्वेनैव हि— "अस्ति भाति प्रियमि"ति रूपभेदोऽनादिसिद्धो ब्रह्मणः; सच्चिदात्मना भासमानस्यैव घटादेः तत्तदाकारवृत्तिप्रतिफलितानन्दांशस्यापि तादात्म्येनैव प्रियमिति व्यपदेशः। अतो नानन्दांशज्ञानानुपपत्तिः। घटादिवृत्तिप्रतिफलितचैतन्यस्य सच्चिद्रूपमिव तत्तद्वृत्तिकालमात्र आनन्दस्वरूपमपि भिन्नतया कल्पितं भाति। तत एव दुःखमपि कस्यचन प्रियं भवति॥

तत्र घटादावानन्दांशस्य भानं तदाकारवृत्त्या, यदाकारा वृत्तिः, तदाश्रिताज्ञानस्य तत्र निवृत्तिः। अत एव रूपाकारवृत्तिदशायां परिमाणाकारवृत्त्यभावः, एकदेशस्थत्वेऽपि रूप-परिमाणयोः रूपस्यैव प्रत्यक्षत्वम्, न परिमाणस्य॥

'घटः प्रियः' इत्याद्यनुभवो नाखण्डानन्दानुभवः

अयमेव न्यायः—सुखाकारवृत्तिदशायामन्यांशाभाने। एवं लोकतस्तत्तदाकारवृत्तिदशायां तत्तन्मात्रस्य कल्पितभेदस्य भानेऽपि सर्वोपाधिविरहिताऽखण्डाकारवृत्तिः शास्त्रत एव भवति, लोके तु घटादितादात्म्येनैवानन्दः प्रतीयते ब्रह्मरूपत्वेऽपि तस्य, न तु निर्विशेषब्रह्मस्वरूपतया। अत एव सच्चिदानन्दस्वरूपमेकमेव ब्रह्मेति बोधनार्थं शास्त्रापेक्षा॥

तत्र"आनन्दो ब्रह्मे"ति श्रुतिः सच्चिदात्मैव ब्रह्मानन्दात्मा, न तु सच्चिदानन्दात्मना भेदः पारमार्थिक इत्यखण्डब्रह्मानुभवः। न चैवं लोके 'घटः सन्' इत्यादिबोधेऽप्यानन्दानुभवः,इति "आनन्दो ब्रह्मे"ति प्रत्ययस्य विशेषः॥

मानुषाद्यानन्दानुभवोऽपि ब्रह्मानन्दानुभव एव परन्तु नाखण्डानुभवः; आनन्दांशेनापि ज्ञानस्यैवाखण्डानुभवत्वात्

तत्र मानुषाद्यानन्दापेक्षा शतगुणितोत्तरतयोपदिश्यमान आनन्दः कल्पितभेदानन्दविषयः, "आनन्दो ब्रह्मे"ति त्वखण्डानन्दविषयः, अपरि-

च्छिन्नत्वात्तस्य। अतो 'नात्राकामहतश्रोत्रियादीनाम्, सविशेषब्रह्मण इवापरिच्छिन्नानन्दरूपत्वम्; ब्रह्मणः परिच्छेदो ह्यानन्दस्य कल्पितभेदस्य स्वरूपतोऽभिन्नस्यापि मानुषादिसविशेषान्तस्याकामहतस्य च, न ब्रह्मस्वरूपमात्रस्याभिन्नस्यैकस्य वा। अज्ञातानन्दात्मना ब्रह्माधिष्ठानम्। तेनाप्यंशेन ज्ञानमेव तत्त्वज्ञानम्, इति ततोऽज्ञाने निवृत्ते तत्प्रयुक्तानां भेदानामपि निवृत्तौ—अखण्डरूपं ब्रह्मावतिष्ठते। ब्रह्मपदेन सत्यत्व-ज्ञानत्वरूपेण सामान्यरूपेण ज्ञातस्योपस्थापनम्—'इयं शुक्तिरि'त्यत्रेदम्पदेन शुक्तेः, अज्ञातांशज्ञानमात्रेण पूर्णात्मना ब्रह्मज्ञानम्। पूर्णं च सत्य-ज्ञानानन्दमनन्तमखण्डं ब्रह्म, इति नानन्दस्वरूपवत् सत्यत्व-ज्ञानत्वेऽपि ज्ञापनीये॥

### ब्रह्मोपादानत्वे प्रक्रियाभेदाः, अद्वैत एव स्वारस्यं च

जगदुपादानत्वं हि सदात्मना ज्ञातस्यानन्दात्मनाऽज्ञातस्यैव ब्रह्मणः। तच्चोपादानत्वं सदादिज्ञातांशेन विवर्तमानत्वमेव, यथा शुक्तित्वेनाज्ञातशुक्ते रजतोपादानत्वम्, न परिणामित्वम्; इति न भास्करमतप्रवेशोऽद्वैतसिद्धान्ते। श्रीभाष्यमते ब्रह्मणो निर्विकारत्वोपपत्तये न स्वत उपादानत्वं तस्य निमित्तमात्रत्वेऽपि, किन्तु प्रकृतेरेव, ब्रह्मणस्तूपचारत एवोपादानत्वमिति सिद्धान्ताद् न ब्रह्मोपादनात्वकथाऽपि, इति तदुपादानत्वश्रुतिविरोधः। विशिष्टोपादानता तु पूर्वमेव निरस्ता॥

### अन्तर्यामित्वस्यैवोपादानत्वमिति कल्पायोगः

तत्त्वसुधा तु परकालमठीयकृतिस्तृतीयं पन्थानमास्थाय ब्रह्म साक्षात् परिणामि परिणामित्वं च तस्यान्तर्यामित्वावस्थैवेति लिखति। तत्र यदि परिणामित्वमेवान्तर्यामित्वम्, तर्हि सूक्ष्मचिदचितावपि ब्रह्मपरिणामावापद्येयाताम्। अन्तर्यामित्वं हि न कार्यमात्रदृष्ट्या, किन्त्वकार्यसूक्ष्मचिदचिद्दृष्ट्यापि, इति न सूक्ष्मचिदचिदन्तर्यामित्वं वाध्यते॥

### अन्तर्यामित्वमेव परिणामित्वमिति तत्त्वसुधामतनिरासः

वस्तुतस्तु—एवं वदन्त्यपि तत्त्वसुधा (पृ॰ ९७) पृष्टान्ते श्रुतब्रह्मोपादानतानिर्वाहाय ब्रह्मशरीरत्वेन प्रमितयोश्चिदचितोरवस्थान्तरभावो दृष्टान्तानुसारात् कल्प्यते। न च तावन्मात्रेण यागस्यापूर्वेणेव ब्रह्मणः

कारणत्वमौपचारिकम्, अपूर्वस्येवाजन्यत्वेऽप्यमूर्तस्याऽऽरुण्यादेः क्रयसाधनपरिच्छेदद्वारा निर्वाहादित्यपि—लिखति ॥

इदमेवात्र पृच्छ्यते—अन्तर्यामित्वमेव ब्रह्मणः साक्षात् परिणामित्वमिति पूर्वं प्रतिपाद्य, कथमत्र ब्रह्मशरीरयोरेव परिणामित्वमुच्यते ? किं शरीरत्वेन प्रमितयोरपि परिणामिनोरन्तर्यामित्वमेव परिणामित्वम् ? येन परिणामवादमिवालम्ब्य प्रकृत्यधिकरणादीनां ब्रह्मसाक्षात्परिणामित्व एवाशयः स्यात्, इति पूर्वापरविरोधादप्ययं तृतीयः पन्थाः परित्यागमर्हति ॥

भूषणं तु प्रायेण तत्त्वसुधाया आक्षेपान् सर्वानप्युपक्षिपति, इत्यन्यत्र सर्वत्र भूषणपरीक्षयैव गतार्थत्वात्, अपूर्वं तत्त्वं तत्त्वसुधोपक्षिप्तमेव तत्र तत्र परीक्ष्यते। अन्यत्तु नूतनं भूषणपरामृष्टं तत्र तत्र यथावसरमुपक्षेप्स्यते। यागापूर्वारुण्यादिदृष्टान्तोपन्यासस्तु ग्रन्थविस्तरमात्रम्, न प्रकृते सङ्गतम्; साक्षाद् ब्रह्मपरिणामित्वपक्षानुपपादकत्वात्, प्रत्युत तद्विरोधाच्च। तत्राऽऽरुण्यमिव सूक्ष्मचिदचितौ द्वारे नामूर्ते, इति न तयोर्द्वारापेक्षा, न वा परिणामित्वं तत्त्वसुधादृष्ट्या ॥

### तत्त्वसुधायाः स्वसिद्धान्तात् भास्करमतस्य विशेषोपक्षेपनिरासः

एतेन—भास्करमतात् स्वसिद्धान्तस्योपाधिपरिणामित्व-स्वयम्ब्रह्मपरिणामित्वाभ्यां विशेषोऽपि तदुपक्षिप्तो—व्याख्यातः; भास्करमते ब्रह्मण एव भोग्यशक्तिस्वीकारेण स्वशक्तिद्वारैव परिणामित्वात्। तत्र सूक्ष्मचिदचितौ शरीरे, उपाधी वा परिणमेते इति हि श्रीभाष्यस्य मतम्, न तु भास्करस्य। अत एव तन्मतनिरसमपि विकारित्वापत्त्या सर्वत्र। तत्र यद्युपाधिपरिणामद्वारैव ब्रह्मपरिणामो भास्करमते, तर्हि भास्करमतनिरसनं तत्त्वसुधायाः श्रीभाष्यनिरसनमेव। अतः साक्षाद् ब्रह्मपरिणामवादक्लिशङ्कुरिव—तत्त्वसुधायाः ॥

### अद्वैतमते सच्चिदानन्दैकरूपत्वानमात्रमज्ञानविशेषनिबन्धनम्

तत्र विवर्तमानत्वं सदात्मना भानमेव सति प्रत्यक्षत्वयोग्ये, तथापि सर्वदा घटादीनामप्रत्यक्षमज्ञानस्याभानापादकत्वेन, एवमेवास्तीति सर्वदा ज्ञानाभावोऽपि तस्यासत्त्वापादकत्वेन; आनन्दात्मनाऽप्रतीतिरनानन्दता-

पादकत्वेन, इति न सर्वदा सर्वात्मना प्रतीत्यापत्तिः। सत्तानुवृत्तिर्हि घटादौ सत्तादात्म्यमात्रम्। तत्र सतोऽधिष्ठानमात्रस्य स्वरूपतो भानम्।

### सन् घटः इत्यादौ सखण्डस्यैव ब्रह्मणो भानम्; नाखण्डस्य

अत एव—

"सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते।
प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते॥"

इति,

"न सोऽस्ति प्रत्ययो लोके यत्र सत्ता न भासते।"

इति च। 'घटः प्रियः' इत्यादौ तु घटावच्छिन्नचैतन्यगतानन्दांशभानम्, न ब्रह्मरूपानन्दस्य घटाकारवृत्तिदशायां भानम्। अधिष्ठानतत्त्वसाक्षात्कारस्त्वानन्दो ब्रह्मेति ज्ञानमेव। अतो ब्रह्मणोऽज्ञानदशायां सत्तानुवृत्तिर्न दुर्घटा॥

### "आनन्दो ब्रह्मे"ति ज्ञानमेवाखण्डज्ञानम्, तत्रैवाऽऽनन्दवल्ल्यादीनां तात्पर्यं च

सच्चिदानन्दरूपत्वं हि ब्रह्मणः श्रौतम्, न तु पुरुषमतिविजृम्भितम्। न चानन्दधर्मित्वं ब्रह्मणः। तद्धि यदि तत्प्राचुर्यमात्रम्, तर्हि प्रजापत्यानन्दशतगुणितत्वेन परिच्छिन्नत्वम्, वाङ्मनसगोचरत्वं च। आनन्दस्वरूपमेव ब्रह्म। तच्च सच्चिदानन्दात्मना ज्ञायमानमनावृतसंविन्मात्रं, निर्विशेषतायां पर्यवस्यति। निर्विशेषमेव ब्रह्मानाद्यविद्याकल्पितेन केनचन रूपेणोपादानमविद्याकल्पितसच्चिदादिभेदमात्रेण—'घटोऽस्ति' 'भाति' 'प्रियः' इत्यादिप्रतीतिषु भाति, न त्वानन्दो ब्रह्मेति। अत एव कारणत्वमुखेन प्रतिष्ठारूपब्रह्मण उपदेशः—"आनन्दो ब्रह्मे"ति॥

तत्र यद्यपि "आनन्दो ब्रह्मेति व्यजानात्" "तत्त्वमसी"त्यनयोरुभयोरपि सामानाधिकरण्यम्; तथापि—"आनन्दो ब्रह्मेति व्यजानात्", इत्याद्यधिष्ठानसाक्षात्कारस्वरूपमात्रविवेचनपरम्—"इयं शुक्तिरिव" इति तस्याज्ञाननिवर्तकज्ञानरूपत्वेनाज्ञाननिवर्तकत्वम्, तत्त्वज्ञानस्यात्र साक्षात्काररूपस्य फलस्य निर्देशः, "तत्त्वमसी" त्यत्र तु निर्विशेषस्वरूपोपदेशः॥

तत्र "व्यजानादि"ति साक्षात्काराभिप्रायम्। तच्च मननाद्यधीनमपि, न तु श्रवणमात्रेण। अत एव—"तपसा ब्रह्म विजिज्ञासस्वे"ति आनन्दो-

ब्रह्मेति व्यजानात्" इति साक्षात्कारपर्यन्तं स्वयं विचारे नियोगः। तथा च ब्रह्मवल्ली श्रवणार्था, आनन्दवल्ली मननरूपा जिज्ञासा, सा चानन्दात्मना ज्ञाने प्रतिष्ठितेति व्यवस्था, इति श्रुतिः स्वयं पुनः पुनः "विजिज्ञासस्वे"ति मननात्मकविचरे प्रेरयति, प्रेरणया चानन्दात्मताज्ञाने प्रतिष्ठापयन्ती च निर्विशेषमेव जिज्ञास्यं विशदयति, इति मुखभेदेन "आनन्दो ब्रह्मेति व्यजानात्" "तत्त्वमसी"ति चोपदेशप्रकारभेदः, "तत्त्वमसी"ति श्रवणाभ्यासम्, भृगुवल्ली तु मननाध्यासं च नियुङ्क्ते ॥

परमार्थतस्तु भृगुवल्ली तत्पदार्थशोधनद्वाराऽज्ञाननिवृत्तिं तत्प्रयुक्तसर्वभेदनिवृत्तिं च बोधयन्ती जीव-ब्रह्माभेदमर्थतो गमयति। "तत्त्वमसी" ति तु शब्दत इति विशेषः। अत एव "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इति संविदात्मनोरुभयोरभेदः, कार्यान्नमयशरीराद्युपाधिभेदमात्रप्रयुक्तो जीवभावः, सोऽप्यानन्दमयान्त औपाधिकः—ब्रह्माधिष्ठानक एवेति "ब्रह्म पुच्छं प्रतिष्ठे"ति कार्योपाधिरूपेण जीवात्मानम्, "अन्नं ब्रह्मेति व्यजानादि"त्यादिना कारणोपाधित्वेन तत्पदार्थं च विविच्य, तत्र कारणत्वं विवर्तमानत्वेन, अधिष्ठानत्वेन वा यावत्तत्त्वसाक्षात्कारम्, ततस्तूपदेशसमाप्तिरिति वल्लीद्वयार्थनिष्कर्षः। "विज्ञानमानन्दं ब्रह्मे"ति तु "तत्त्वमसी"तिवाक्यसमानार्थकम्, तथापि कल्पितानन्दत्वादिपरित्यागेनाभेदोपदेशः। अत एव—'आनन्दमि'ति नपुंसकम् ॥

### विज्ञानानन्दादीनां कुत्रचन धर्म-धर्मिभावविवक्षा तु प्रथमप्रतीतिदशायाम्, मुख्यप्रतीतिस्त्वखण्डार्थस्यैव

यत्तु—भामत्याम्—विज्ञानानन्दयोरपि स्फुटतरः प्रवृत्तिनिमित्तभेदः—इत्युक्तम्, तदपि प्रथमप्रतीतिमादाय, यदाऽत्यन्ताभेदो बाधितः "तत्त्वमसी"त्यादौ सर्वज्ञत्व-किञ्चिज्ज्ञत्वादिप्रवृत्तिनिमित्तवत्, तात्पर्यानुपपत्त्या मुख्यार्थविवक्षायां तु प्रवृत्तिनिमित्तभेदस्य मुख्यार्थप्रतीतिविरोधिनः "तत्त्वमसी"त्यादाविवाविवक्षैव, इति न काऽपि बाधा। अत एव धर्मधर्मिभावाविवक्षयाऽभिन्नस्वरूपमात्रबोधः सर्वत्र महावाक्येषु, इति तद्वाक्यजन्यज्ञानस्याज्ञाननिवर्तकता ॥

### वृत्तेरेव सर्वाज्ञाननिवर्तकत्वम्, न स्वरूपचैतन्यस्य

तत्र लोके वृत्ति-चैतन्यांशद्वयं घटादिभानार्थमपेक्ष्यते, ब्रह्मणि तु न तदुभयापेक्षा संभवतीति पूर्वमुक्तम्। अत एव घटादिकं वेद्यम्,

निर्विशेषसंविन्मात्रमवेद्यमित्युत्तरत्र विशदम्। अतो जिज्ञासाफलं वृत्तिरेव, यैवाज्ञाननिवर्तने समर्था, न तु स्वरूपप्रकाशमात्रम्; तस्याज्ञानाविरोधित्वादिति व्यक्तमन्यत्र॥

### यावत्प्रमाणजन्यज्ञानं संशयाद्युपपत्त्या जिज्ञासोपपत्तिः

एतेन—अनादेः प्रकाशस्य निरपेक्षे हेतुत्वे जिज्ञासानादित्वप्रसङ्गात्, सापेक्षत्वे यथादर्शनं स्वविषयापेक्षणादिति—परास्तम्; स्वरूपप्रकाशमात्रस्याज्ञानाविरोधिनोऽनादेरज्ञाततयैव सिद्धेर्विना जिज्ञासामज्ञानानिवृत्तेः। अनावृतस्य स्वरूपप्रकाशस्य जिज्ञासाफलस्यावरणनिवृत्त्यपेक्षस्यानादित्वाभावाच्च न जिज्ञासा स्वरूपप्रकाशमात्रफला, न वाऽनादिः, किन्त्वनावरणफला सादिः। तत्र तयोस्तत्त्वाज्ञानमनादिः, वेदान्तप्रमाणजनितं प्राथमिकं परोक्षज्ञानं च हेतुः। ज्ञानाज्ञानाभ्यां खलु संशयः, इति न संशयानुपपत्तिः। व्यक्तं चेदं भामत्यामध्यासभाष्योपक्रमे॥

### भामतीमते जिज्ञासाफलं वृत्त्युपहितं ब्रह्म

तत्र भामतीप्रस्थाने जिज्ञासाफलं तज्जनिताखण्डाकारवृत्त्युपहितं ब्रह्म मुख्यो विषयः। अज्ञानोपहितं तु सविशेषं ब्रह्माऽवान्तरो विषयः। जिज्ञासाकालेऽविद्यमानमेव रूपं जिज्ञासाया मुख्यो विषयः। अत एव वृत्त्युपहितं जिज्ञास्यम्, नाज्ञानोपहितम्; तस्य देवतामीमांसयैव जिज्ञासितत्वाद् ब्रह्ममीमांसायाः तज्जिज्ञासा तु कर्मणां यज्ञादिमुखेन, 'अश्ववत्' सूत्रेण वाऽधिकारोपयोगमात्राभिप्रायेण, शम-दमादेरिव वा जिज्ञासाकालेऽप्यनुवृत्त्येति पूर्वमुक्तम्॥

### भामतीमते न वृत्त्यन्तरापेक्षा

अतो नाज्ञानोपहितमत्र जिज्ञास्यम्, किन्तु वृत्त्युपहितम्, इति विषयप्रयोजनयोरैक्यम्। अत एवाम्नायते—"ब्रह्मविद् ब्रह्मैव भवति" इति। तत्र वृत्त्युपहितत्वमात्रमज्ञाननिवर्तनमात्रार्थत्वं वृत्तेः, न तु वृत्त्युपहितब्रह्मविषयकवृत्तिज्ञानान्तरम्, वृत्त्युपधानमात्रेणाज्ञाननिवृत्तौ का वाऽपेक्षा ज्ञानान्तरस्य?

### अखण्डाकारवृत्तेर्न चैतन्यावच्छेदकत्वमपि घटादिस्थल इव

न च घटादिस्थल इवात्र चैतन्यावच्छेदकता, तदवच्छिन्नं चैतन्यमेव प्रत्यक्षमित्यादिः संभवतीति पूर्वमुक्तम्, इति नात्र वृत्तेरज्ञाननिवृत्तिमात्रे-

णोपक्षीणायाश्चैतन्यावच्छेदकत्वेन ज्ञानत्वमपि । अत्र वृत्तिः सत्तामात्रेण साक्षात् कार्यकारिणी, न तु स्ववेद्यं किमपि चैतन्यमपेक्षते विषयभानार्थम् । अतो विवरणमताद्विशेष इति व्यक्तमधस्तात् ; स्वप्रकाशत्वाद् ब्रह्मणः ॥

अत्र विवरणमतनिष्कर्षः, भामतीमताद्विशेषश्च

तत्र विवरणमते वृत्तिर्नोपधानमुखेन ब्रह्म विषयीकरोति, किन्तु साक्षात्, भामतीमते तु तदुपधानमात्रम्, न तु वृत्तिविषयत्वमपि ब्रह्मण इति विशेषात् । अखण्डार्थबोधस्तूभयत्र समानः ॥

इयान् विशेषः—अखण्डार्थस्य बोधः स्वतो भामतीमते, विवरणमते तु तद्बोधो वृत्त्या, इति मतभेदेन वृत्तिव्याप्यत्वं भिन्नमेव—एकत्रोपधान-मात्रेणाज्ञाननिवर्तनमात्रेण, अन्यत्र तद्विषयीकरणेनाज्ञाननिवर्तकत्वेन च, इति फलतोऽवैलक्षण्यमकिञ्चित्करम् ॥

तत्राबाधितार्थविषयकत्वं प्रामाण्यं विवरणमते, भामतीमते त्वबाधि-तविषयोपधानमात्रम् । तत्र वृत्तेरज्ञाननिवर्तनमात्रेण साक्षात्कारः । अत एव भामतीमते शुद्धाविषयत्ववादः कल्पतरुकारादीनाम्, सिद्धिकारादीनां च जडत्वनिरुक्तौ ॥

अत एवोपहितत्वरूपेण मिथ्यात्वमुपाधिमात्रमिथ्यात्वेन । तत्र तत्र वृत्तेः शुद्धविषयकत्वाविषयकत्वाभ्यां प्रस्थानद्वयविवेकः । तत्रोपहितस्य मिथ्यात्वमुपाधिविशिष्टरूपेणौपाधिकेन, न तूपाध्युपहितरूपेण; तत्रो-पाधिमात्रस्य मिथ्यात्वेनोपहिते मिथ्यात्वस्यानन्वयित्वात् । अत-स्तत्रोपाधेर्वृत्तेरेव प्रामाण्यमज्ञाननिवर्तकत्वेन साक्षात्कारत्वेनेति चर्वित-चर्वणम् । विवरणमतेऽपि वृत्तेरेवाज्ञाननिवर्तकत्वेन प्रमात्वं वक्तव्यम्, परन्तु ब्रह्मविषयकतया, न तूपाधिमात्रेणेति विशेषः ॥

वृत्तेरुपयोगप्रकारः

तत्र सर्वत्रान्तःकरणवृत्तेरावरणभङ्गः फलमित्येकान्तः । स च यदाकारा वृत्तिः, तद्गताऽऽवरणस्य वा, तदवच्छिन्नचैतन्यगतावरणस्य वेत्यन्यदेतत् । प्रातिभासिके तु नान्तःकरणवृत्तिः, किन्त्वविद्यावृत्तिरेव । अत एव प्रमा-णजन्या वृत्तिरेवाज्ञानविरोधिनीति ब्रह्मसिद्ध्यादिः । अतः प्रातिभासिक आवरणाभावेऽपि न क्षतिः; तथापि तत्र वृत्तिस्वीकारस्तस्यापि ज्ञानं किञ्चन वर्तत इति बोधनार्थम् । तस्य साक्षिभास्यता, न वृत्तिभास्यत्वमिति

पक्षे तु न तत्राविद्यावृत्तिरपि । ब्रह्माकारवृत्तिस्तु केवलाऽऽवरणाभिभवार्थैव ॥

### अज्ञानस्यावरणशक्तित्रयविवेकः

तत्रावरणमसत्त्वापादकम्, अभानापादकम्, अनानन्दतापादकञ्च त्रिविधिम्। तत्र परोक्षज्ञानमनुमित्याद्यसत्त्वापादकावरणमात्रनिवर्तकम्, अपरोक्षं त्वसत्त्वापादकाभानापादकावरणद्वयं निवर्तयति, इति सर्वत्र वृत्तेरावरणभञ्जकत्वनियमो न व्याहतः। विशदीकृतं चैतत् सिद्धान्तलेशसंग्रहे विस्तरेण तत्तद्वृत्तीनामुपयोगविचारपूर्वकम् ॥

### वृत्तेरनेकधोपयोगो यथायथम्

तत्र वृत्तिः—आवरणाभिभवार्था, चिदुपरागार्था, अभेदाभिव्यक्त्यर्था चेति त्रेधा तत्प्रयोजनप्रकारः। सर्वत्रावरणाभिभवार्थत्वं समानम्, केवलावरणाभिभवार्थत्वपक्षस्त्वखण्डाकारवृत्तिमात्रमुपलक्ष्य, चिदुपरागः, चिदभेदाभिव्यक्तिर्वाऽऽनावृतचिदुपरागादिनैव, न त्वावृतचिदुपरागादिनेति प्रक्रियाऽद्वैतिनां प्राथमिकशिक्षाविषयाः ॥

तत्र घटादिज्ञाने घटाकारा वृत्तिर्न घटादेरावरणाभिभवार्था; घटस्याज्ञानकार्यस्य जडस्य चानावरणकृत्याभावात्, आवरणस्यैवायोगात्, इति तदाकारवृत्तिः प्रथमं तदवच्छिन्नचैतन्यावच्छेदकतामेकदेशस्थत्वेन प्राप्य घटावच्छिन्नचैतन्यगतमावरणं निवर्तयति, भग्नावरणं च चैतन्यं घटं भासयति। अत एव फलव्याप्यम्, अनुभाव्यं वा घटादीति व्यपदेशोऽद्वैतिषु। अतः सा घटाकाराऽपि तदवच्छिन्नचैतन्यावच्छेदकत्वेनैव घटावच्छिन्नचैतन्यगतमेवावरणं निवर्तयति, न घटगतमावरणम्। न हि चैतन्यमात्रमज्ञानविरोधि; अन्यथा स्वावच्छिन्नचैतन्याध्यस्तस्य घटादेः सर्वदा भानं स्यात्, अन्यथा चैतन्यस्याज्ञानाविषयस्यानधिष्ठानत्वात्, ब्रह्मकारणतावादोऽनुपपन्नः, इष्टापत्तौ तु श्रुतिविरोधः ॥

### 'सन् घटः' इत्यत्र ब्रह्मभानेऽपि न तावतैव मुक्तिः

यद्यपि 'सन् घटः' इत्यादिप्रत्यक्षे सद्रूपं ब्रह्मैव घटाद्यवच्छिन्नं पूर्वमावृतमनावृतात्मना तत्प्रत्यक्षकाले भाति। "सर्वप्रत्ययवेद्येऽस्मिन्" इति मण्डनोक्तेः; तथापि न तद् वृत्तिमात्रोपहितम्, न वाऽज्ञानविषयसमानविषयकं ज्ञानम्; उपहितान्याविषयकत्वे सत्युपहितविषयकत्वस्यैव ज्ञानस्याज्ञाननिवर्तकत्वात्। अतो न घटज्ञानमात्राद् मोक्षापत्तिः ॥

प्रपञ्चहेतुर्ह्यज्ञानं संविन्मात्रोपाधिभूतम् । घटावच्छिन्नचैतन्योपाधिस्तु घटः, सोऽपि तत्र विशेषणम् ; मूलाज्ञानकार्यत्वात् । घटज्ञानकालेऽप्यज्ञानमिवानुवर्तते । न तद् ज्ञानं सर्वप्रपञ्चाधिष्ठानं प्रपञ्चहेतुः, इति न दोषः । यद्यपि तद्विशिष्टविषयकमज्ञानम् , परन्तु पूर्वोक्तरीत्या तद् घटाद्यवच्छिन्नचैतन्याश्रितघटमात्रोपादानाज्ञानावस्थाविशेष एव, न तु मूलाज्ञानम् । तत्तु प्रतिघटादिज्ञानं भिन्नमेव, तत्तद् घटादिज्ञाननाश्यं च ॥

अत एव 'घटं जानामी'त्यादौ घटाकारवृत्त्या तदवच्छिन्नचैतन्याश्रयेऽज्ञाने निवृत्ते चैतन्यमात्रेण घटादिभानम् , न वृत्तिमात्रेण । न चैवं शुद्धब्रह्मणः; वृत्त्युपधानमात्रेणाज्ञाननिवृत्त्या वृत्त्यवच्छिन्नचैतन्यविषयत्वस्य शुद्धेऽभावात् । अत एव न ब्रह्मणोऽनुभाव्यत्वम् , फलव्याप्यत्वं वेत्यसकृदावेदितं शतभूषण्यामेव ॥

### भूषणस्य घटादिवद् ब्रह्मणोऽपि मिथ्यात्वापत्तिशङ्काऽप्रसरः, न वाऽज्ञाननिवृत्त्ययोगः

भूषणं तु मात्रयापि तदनुसन्धातुं न यतते, इति न घटादिवद् ब्रह्मणो मिथ्यात्वम् । वृत्त्यवच्छिन्नचैतन्यरूपविशिष्टस्यापि शुद्धस्येव वृत्तिविषयत्वमपि बाधितम् । न हि तत्र विशिष्टचैतन्याकारवृत्त्यन्तरं केनापि स्वीक्रियते, तदावश्यकता वा; वृत्त्यवच्छिन्नचैतन्यस्यावरणाभावात् , तदभिभवार्थाया वृत्तेस्तत्रानपेक्षणात् । वृत्तेः सविषयकत्वं तु चैतन्यगतावरणाभिभवमात्रम् , न तु प्रकाशकत्वमिति चर्वितचर्वणम् ।

एतेन—वृत्तेश्चैतन्यसम्बन्धानन्तरमेवाज्ञाननिवृत्तिर्वर्णनीयेति वृत्तेश्चैतन्यसम्बन्धहेतुत्वमेव, नाज्ञाननिवर्तकत्वमिति—परास्तम् ; संविन्मात्रस्याज्ञानानिवर्तकत्वात् , प्रमाणजन्यवृत्तेरेवाज्ञाननिवर्तकत्वाच्च, इत्यावरणाभिभवार्था सर्वत्र वृत्तिः ॥

### भूषणस्याद्वैतसंरक्षणार्थं स्वाभिमतप्रक्रियासमर्थनादिकमप्रासङ्गिकम् , न चाऽद्वैतमते प्रपञ्चस्य ब्रह्मणो वा शशशृङ्गायमाणत्वम्

स्मृतिप्रामाण्येऽप्यपुरोऽवस्थितार्थविषयाकारासत्त्वापादकाज्ञाननिवर्तकत्वेन वृत्तेरावरणाभिभवार्थत्वमविरुद्धम् , इति पुनश्चैतन्यस्य प्रकाशकत्वमात्रम् , तदप्यनावृतस्येत्यद्वैतसिद्धान्तमपरिगणय्य वृत्तेर्नाज्ञाननिवर्तकत्वम् , तत्प्रतिफलितचैतन्यस्यैवाज्ञानानिवर्तकत्वम् , उपहितज्ञानमप्यु-

पहितत्वेन रूपेणैव ज्ञानमित्यादि कथनम् , प्रकारान्तरेणाद्वैतमतसंरक्ष-णार्थः प्रयासश्च भूषणस्य वितथः ॥

अद्वैतिनस्तु स्वपूर्वाचार्यप्रवर्तितसम्प्रदायानुसारेण स्वसिद्धान्तं समर्थ-यितुं शक्ताः परश्शतं वर्तन्ते । तत्र निर्विशेषं ब्रह्माऽविद्याकल्पितानान्दांशे-नावृतं तदात्मना ज्ञातमनावृतसंविन्मात्रमेव परमार्थः । तच्चाज्ञानतिरोहितं संसारदशायामौपाधिकाहमर्थव्यतिरिक्तम् , निवृत्ते त्वज्ञाने स्वानतिरिक्तत्व ऐक्यम् , यावदज्ञानं तत्प्रयुक्तं जगदपि वर्तते व्यावहारिकमिति ह्यद्वैतरा-द्धान्तः, न त्वज्ञानावस्थायामपि सर्वं शशशृङ्गकल्पमिति ॥

### बौद्धमताद्वैतयोर्विशेषोपक्षेपः, तन्निरासः, अद्वैतवादस्य माध्यमिकमताद्विशेषश्च

तत्र भामतीमते शास्त्रजन्यं वृत्त्यात्मकं ज्ञानमज्ञाननिवृत्तिमात्रेण सत्यमुपक्षीणम् , शुद्धं ब्रह्म त्वनावृतं स्वयं प्रकाशमानं तत्स्वरूपमनुवर्तते । तत्र माध्यमिके मतेऽविद्यानिवृत्त्या मिथ्यात्वमात्रपर्यवसानेऽप्यज्ञाननिवृ-त्तिर्न शास्त्रजन्याधिष्ठानज्ञानाधीना, अधिष्ठानावशेषा वा प्रतिपाद्यते । न च तदीयं शून्यं चतुष्कोटिविनिर्मुक्तम् , किन्तु प्रथमकोटिसदात्मब्रह्मस्वरूपम् । आवृतं हि भावरूपं ब्रह्म निवृत्त आवरणे स्वयं प्रकाशते, नान्यतः प्रकाश-मपेक्ष्यते, नैवं माध्यमिकमते, इति ततो विशेषः, इति शास्त्रबोध्यत्वेऽपि न शून्यात्मतायां पर्यवसानम् ॥

### अद्वैतवादस्य सौगतसाम्यापादनशङ्का-तत्परिहारौ

तदेवमद्वैतवादस्य शून्यवादेन साम्यापादनं भूषणस्यासाम्प्रतम् । तत्त्वसुधाऽपि प्रकृते भूषणमेवानुकुरुते, परं तु कानिचन बौद्धवचनान्यपि निर्दिश्याद्वैतमतस्य न केवलं माध्यमिकैः, किन्तु योगाचारैरपि साम्यमिति लिखति । तत्र प्रथमम्—

"बुद्धि-जन्मनि पुंसश्च विकृतिर्यद्यनित्यता ।
अथाविकृतिरेवासौ प्रमातेति न युज्यते ॥"

इति नागार्जुनकारिकामाश्रित्य बौद्धाद्वैतयोः प्रमातृनिरोध ऐकमत्य-मिति तत्त्वसुधा वदति ॥

तत्राद्वैतमते प्रमातृत्वं निषिध्यते, चिदाचिद्ग्रन्थिरूपस्याहमर्थ-स्याचिदंशमात्रनिषेधो वा मन्यते, न तु प्रमातुरेव । व्यक्तीकृतं चैतद-धस्तात् । "अहमर्थविनाशश्चेदि"ति श्रीभाष्याक्षेपसमालोचनावसर-

उत्तरत्र च विशदी भविष्यति। अतो नात्र बौद्धाद्वैतयोः साम्यम्। निष्कर्षस्तु—द्विविधाः सौगताः—आत्मनैरात्म्यवादिनः, विषयनैरात्म्यवादिनश्च। तत्राहमर्थस्य शुद्धक्षणिकविज्ञानस्य विपाकपरिणामोऽहमर्थ आलयविज्ञानं नाम। यस्य मोक्षसाधनयोगाद्यनुष्ठानेन स्वरूपनाशे शुद्धविज्ञानात्मता भवति। तत्र शुद्धमपि विज्ञानं क्षणिकमेव। न च तद्वासनापरपर्यायक्षणिकवासनसन्तानस्याश्रयविषयः, अद्वैते तु ब्रह्ममूलाविद्यादेरक्षणिकस्य। न च विषयास्तद्वासनापरिणामाः, किन्तु साकारप्रवृत्तिविज्ञानानां क्षणिकानां हेतुमात्रम्। न हि विज्ञानव्यतिरेकेण बाह्यार्थोऽपि ज्ञानाकारातिरेकी तत्र स्वीक्रियते, इत्यद्वैतिनामविद्याख्यसांवृतसत्यत्वम्, सौगतानां सांवृतसत्यत्वं च नैकम्॥

वस्तुतस्तु–बौद्धमतं तदागममात्रमूलम्, न तु वेदमूलकम्; वेदमूलकत्वं तु तैः खण्ड्यते—वेदापौरुषेयत्वनिरासेन। अद्वैतिनस्तु वेदापौरुषेयत्वमूरीकृत्य तन्मूलमेव प्रामाण्यं सर्वेषामिति स्वीकुर्वन्ति। अतो वेदसमानमेव प्रामाण्यं पञ्चरात्रस्येति वदन्त एव बौद्धसोदराः, नाद्वैतिनः॥

### बौद्धानामिव नाद्वैतवादे परलोकनिरासः

अयमेव न्यायः

"तदत्र परलोकोऽयं नान्यः कश्चन विद्यते॥"

इत्यादिवचनेष्वपि। तत्र बौद्धाः तत्तद्भूतविज्ञानसंततेराश्रयस्य जीवत्वमूरीकृत्य परलोकं निषेधन्ति। भगवत्पादास्तु जीवमीश्वरप्रतिबिम्बं मन्वाना यावज्जीवभावमैहिकामुष्मिकलोकसत्यत्वम् तत्र तत्र तत्तत्कर्मानुगुणभोक्तृत्वं च स्वीकुर्वन्ति, न तु भूतविज्ञानसन्ततिमात्रं जीव इति मन्यन्ते। अतोऽक्षणिकतत्तदन्तःकरणाद्युपाधिको जीव औपाधिको यावदुपाधिनाशमक्षणिक एवाद्वैतमते, नैवं बौद्धमत इति विशेषः। बौद्धाः यदि निर्गुणवादं निन्दन्ति सगुणवादमिव तत्त्वसुधोक्तरीत्या, तर्हि न बौद्धदृष्ट्या बौद्धसाम्यम्। न चाद्वैतदृष्ट्या; तैरपि सौगतमतनिरासात्। तत्त्वसुधादृष्टिस्त्वकिञ्चित्करी। शान्तरक्षितोऽप्यद्वैतमतं भाट्टमतमिति केवलं निरस्यति, न तु समर्थयति कुत्रापि॥

"द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना।
लोके संवृतिसत्यत्वं सत्यं च परमार्थतः॥"

इति तु नोक्तसाम्यमभिप्रैतीत्यनुपदमेवोक्तम्॥

"तस्माद्यन्नास्ति तन्नास्ति यत्त्वस्ति परमार्थतः ।
तत्सत्यमन्यन्मिथ्येति न सत्यद्वयकल्पना ।।"

इति श्लोकवार्तिकस्य नाद्वैतं विषयः; लोके सत्यद्वयस्याद्वैतिभिरनङ्गीकारात्, "सन् घटः इत्यादौ सत्तादात्म्यस्यैव स्वीकारात्, असत्यस्याप्यर्थक्रियाकारित्वात्, न चार्थक्रियाकारित्वं सत्त्वमद्वैतमते ।।

तत्रासत्यात् सत्यसिद्धिनिराकरणमेकमेव पर्याप्तम्, सौगतानां सावृतसत्त्वमन्यदिति । अर्थक्रियाकारित्वं हि सत्वं क्षणिकत्वप्रयोजकं बौद्धाः स्वीकुर्वन्ति, न त्वद्वैतिनः, यतोऽसत्यस्याप्यर्थक्रियाकारित्वम्, इति भट्टपाददृष्ट्या न साम्यं तयोः । अजातवादस्तु बौद्धानां स्वभावतः, अद्वैतिनां तु सद्भावेन, सत्तादात्म्येन वा, इति ततोऽपि न तयोः साम्यम् ।।

एतेन—निरालम्बवादान्तर्गतः—

"युक्त्याऽनुपेतामसतीं प्रकल्प्य यद्वासनामथानराक्रियेयम् ।
आस्थानिवृत्त्यर्थमवादि बौद्धैर्ग्राह्यं मतास्तत्र कथञ्चिदन्ये ।।"

इति श्लोकवार्तिकमपि—व्याख्यातम् । अत्रान्य इत्यनेन नाद्वैतिनां ग्रहणम् । असतीं वासनां प्रकल्प्यर्थनिराक्रियायास्तैरकरणात् । तत्र साकारा क्षणिकवासना, साकारं क्षणिकं प्रवृत्तिविज्ञानं प्रयोजयति । तत्र शुद्धविज्ञानविपाकपरिणामालयविज्ञानाश्रिताः क्षणिकाः वासनाः, तत्सन्ततिर्वा नाद्वैतिनामविद्या । न चाविद्यया ज्ञानाकारातिरिक्तविषय निरासनम्, किन्तु ज्ञानव्यतिरिक्तस्य स्वतन्त्रस्यार्थस्य प्रयुक्तिरेव, इति न तस्याद्वैतमते समन्वयः । अर्थनिराक्रिया हि सौगते नये प्रतीतिदशायामेवार्थस्य निषेधः, अद्वैतमते तु यावत्प्रतीति तेषां सत्यत्वम् ज्ञानाकारत्वाभावश्च । तत्र बुद्धानां वार्तिकस्य दृष्ट्या विवरणं यथेच्छं तु श्लोकवार्तिकस्य न समादरमर्हति । अद्वैतिनामविद्या सदसद्विलक्षणाऽनिर्वचनीया, नासतीति तु विगदव्याख्यानम् ।।

"स्वाभाविकामविद्याञ्च नोच्छेत्तुं कश्चिदर्हति ।
विलक्षणोपपाते हि नश्यते स्वाभाविकी क्वचित् ।।"

इति वार्तिकोक्ताऽविद्या स्वाभाविक्यन्या, बौद्धानां वासवा त्वन्या । एवं बौद्धमते वासनामात्रस्य साकारस्य प्रवृत्तिविज्ञानता त्वर्थनिराक्रिया वासनामात्रनिबन्धनत्वात् । अद्वैतमते त्वविद्याऽर्थस्य साधिका, न तु निरासिका । अविद्यापरिणामो हि प्रपञ्चः यावद्बाधं ज्ञानव्यतिरेकेण ज्ञान-

वदेव स्वतन्त्रं भासते। अपरो विशेषस्तु—सौगतमते केवलं वासना साकारप्रवृत्तिविज्ञानहेतुः, अद्वैतमते तु पूर्वपूर्वसंस्कारसहकृतवासनातिरिक्ताऽविद्यैव तत्तद्विषयात्मना परिणमत इति। अत एव विवर्तः प्रपञ्चः; ब्रह्मणोऽप्यधिष्ठानविधयोपादानत्वात्। न चैवमर्थो वासनामात्रस्य विवर्तः। अपरिणामिनो ब्रह्मणः खलु विवर्तः। अतः—

"विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः।
अनादिवासनोद्भूतो न सारूप्यमपेक्ष्यते॥"

इति श्लोकेऽप्ययमेव न्यायः। अत्र "न सारूप्यमपेक्ष्यते" इत्यनेनैव न विलक्षणत्वाधिकरणसिद्धान्तो निर्दिश्यते। सुरेश्वरादीनां बौद्धमतनिरसनदीक्षाणामपि तदर्थस्य यथेच्छं विवरणेन बौद्धपक्षपातित्ववर्णनं तु साहसमेव तत्त्वसुधायाः इति तत्त्वसुधेयं बौद्धाद्वैतसाम्यमवलम्ब्य लिखन्ती न समादरमर्हति। अधिकं यथावसरं भूमिकायाम्॥

उपहितपरत्वं शास्त्रस्य, उपाधिश्च वृत्तिमात्रमिति गतम्। तत्रोपहिताकारा वृत्तिर्नोपाधिविशिष्टाकारा, येन मिथ्यात्वम्। शास्त्रवेद्यत्वं तूपाध्युपधानमात्रेण, न तद्विशेषणतया। अतो न वृत्तेः, तद्विशिष्टताया वा शास्त्रवेद्यत्वम्। न च तावता शून्यवादो नाम। तत्त्वसुधा तु क्रियासमभिहारेण निर्गुणस्य शास्त्रवेद्यत्वं नास्तीति वर्णनेन भूषणमेवानुकरोति। एवं बहूनां वाक्यानां स्वमतानुगुणं विवरणेऽपि। नात्र पृथक् लेखिनी व्याप्रियते। समर्थितं तु निर्विशेषस्यापि वेद्यत्वम्, शास्त्रवेद्यत्वं वा सयुक्ति शतभूषण्याम्, येन न फलव्याप्यत्वम्, अतो न ज्ञेयत्वम्। तत्तु तदज्ञाननिवृत्तिमात्रेणोपचारात्। न च भेदमिथ्यात्वज्ञानमात्रं शास्त्रकृत्यं. शून्यव्यतिरिक्तवस्तुानभिधाय पर्याप्तम्॥

ब्रह्म सद्रूपं न सत्ताविशिष्टत्वेन, किन्तु बाध्यत्वाभावमात्रेण। न च माध्यमिकमतेऽबाध्यं किमपि वस्तु परिगण्यतेऽधिष्ठानं नामेति गतम्। अबाध्यत्वोपलक्षितस्वरूपमात्रं ब्रह्म, न धर्मिशून्यं तत्त्वमपि भावाभावविलक्षणमिति माध्यमिककारिकायां व्यक्तम्, इति नाभावरूपता तस्य॥

अत एव चतुष्कोटिविनिर्मुक्तता तस्य। विशदीकृतं च भामत्यां "क्षणिकत्वाच्चे" ति सूत्रविवरणान्ते "शून्यवादस्तु सर्वप्रमाणविरुद्धः" इति। "न

ह्ययं सर्वप्रमाणसिद्धो लोकव्यवहारोऽन्यत् तत्त्वमनधिगम्य शक्यतेऽपह्नोतुमिति" च ॥

तत्र माध्यमिकप्रयुक्तमसत्पदमात्रं श्रौतमपि, इति श्रुतिरपि माध्यमिकमतपक्षपातिनी स्यात्; अन्यथा श्रीभाष्यसिद्धान्तोऽपि माध्यमिकमतादविशिष्टः स्यात्। अर्थान्तरं त्वसत्पदस्योभयत्र समानम्। न च माध्यमिकसमये शून्यमसदपि; चतुष्कोटिविनिर्मुक्तत्वात् शून्यस्य। तत्तु न तत्त्वमपीति भामती विविनक्ति ॥

माध्यमिकासत्त्वं तु न श्रीभाष्यमतेऽपि सूक्ष्मावस्थारूपधर्मात्मकम्। सर्वात्मनाऽभावो ह्यर्थानां निरालम्बनवादे; न शून्यवादे यथाकथञ्चिदनभिव्यक्तनाम-रूपावस्थतया कारणात्मतया वाऽसत्त्वमद्वैतसिद्धान्तेऽपि। तत्र कल्पिताकारभेदशून्यत्वं ब्रह्मणो ज्ञापयितुं कथं 'ब्रह्मजिज्ञासे'ति। शून्यपदप्रयोगमात्रेण शून्यवादपर्यवसानमेव शतभूषण्या इति लेखस्तु भूषणस्यार्जवशून्य एव। न चात्र शून्यपदप्रयोगात् भूषणमपि शून्यवादपक्षपातीति भूषणमङ्गीकरिष्यति। आस्तामियं कथा ॥

भामती-विवरणमतयोर्जिज्ञास्यविवेकः

तत्र शुद्धम्, अज्ञानोपहितं वा न प्राधान्येन जिज्ञास्यम्, किन्तु वृत्त्युपहितमेवानावृतमिति व्यक्तं तत्र तत्र ॥

तत्राधिष्ठानज्ञानमज्ञानस्य निवर्तकम्, न तु भ्रमोऽप्यधिष्ठानम्, भूरन्ध्रं हि रज्ज्वाः, दर्वीकरस्य वा कालभेदेन तत्तदुपादानतूलाज्ञानभेदात्, तत्तत्तूलाज्ञानविषयभूरन्ध्रज्ञानमात्रनिवर्त्यत्वाच्च न भ्रमेण भ्रमान्तरनिवृत्तावुदाहरणतामर्हति। अतो नाशुद्धं मुख्यं शास्त्रप्रतिपाद्यम्, गौणं तु प्रतिपाद्यत्वं तस्यावान्तरतात्पर्यविषयत्वेन ॥

तत्राज्ञानोपहितत्वेनाशुद्धत्वमपि, परन्तु न तद् वस्तुगतया; अज्ञानस्यापि मिथ्यात्वेन तत्सम्बन्धप्रयुक्तदोषस्यासम्भवात्। न ह्यधिष्ठानमध्यस्तधर्मेण धर्मवत्। अध्यस्तधर्मशून्यत्वं त्वज्ञाननिवृत्तिप्रयुक्तं स्यादिति नानिष्टम् ॥

अत एव—भामती—तत्त्वज्ञानानन्तरं दोषासंस्पर्शितापरत्वमेवाभिप्रैति, नित्यशुद्धत्वं तु वस्तुगत्याऽशुद्धिलेशस्याप्यभावेन। स च वृत्त्युपहिते, वृत्तिविषये वा ब्रह्मण्यबाधः। तत्राशुद्धेर्भ्रमत्वनिर्णयोऽपि तत्त्वज्ञानानन्तरमेव, तदनन्तरमशुद्धिभ्रमस्याप्यशुद्धिर्नाज्ञाननिबन्धना भवितुमर्हति। न च विना-

ऽज्ञानं भ्रमो नाम, येनाऽशुद्धिभ्रमोऽप्यशुद्धिः स्यात्। व्यवहारदशायां तदापत्तिस्तु नानिष्टा; मिथ्यात्वमिथ्यात्ववत्॥

### ब्रह्मणो जीवस्य वा व्यावहारिकप्रपञ्चेन न भ्रान्तत्वम्

भ्रमो ह्यन्तःकरणोपहितस्य जीवस्यैव, न वा शुद्धब्रह्मणः, न चान्तःकरणमात्रं जीवः, उपहितत्वं च प्रस्थानभेदेन प्रतिबिम्बत्वम्, विशेषणविधयाऽन्तःकरणावच्छिन्नत्वं वा॥

तत्र प्रतिबिम्बस्य, उपहितस्य वा बिम्बेन, अवच्छेद्येनौपाधिक एव भेदः, उपाधिविरहे त्वैक्यमिति वेदान्तपरिभाषा। बिम्ब-प्रतिबिम्बैक्यवादोऽप्येतदाशयः। अतो यावत्प्रतिबिम्बता, तावदौपाधिकभेदभिन्नस्य जीवस्य भ्रमो न व्याहन्यते। शुद्धस्य तु ब्रह्मणो न भ्रान्तत्वम्; भ्रान्तिप्रयोजकाविद्योपाधिकदोषवत एव भ्रान्तत्वात्॥

तत्र बिम्ब-प्रतिबिम्बवाद उपाधेः प्रतिबिम्बपक्षपातित्वादुपाधिदोष उपाधेः प्रतिबिम्बस्यैव, न तु बिम्बस्य। अयमेव न्यायोऽवच्छेदवादेऽपि। तत्र ह्युपाधिविशिष्टो जीव एवोपाधिधर्मतामर्हति, न तूपाध्युपहितः, सत्तामात्रेण कार्यानन्वयित्वेन व्यावर्तकत्वादुपाधेः॥

तत्र दोषाश्रयत्वमुपाधिविशिष्टस्य, नोपहितस्य। उपहितं चैतन्यमज्ञानोपधानमात्रे कार्यकारि, न तु तदाश्रयतयाऽनादिस्तदाश्रयो जीवो नाम, न वा ब्रह्मेति न ब्रह्मणोऽप्यज्ञानाश्रयत्वं भामतीमते, विवरणमते तु सत्यमज्ञानाश्रयः तद्विषयश्च ब्रह्म, तथापि तस्य बिम्बत्वेन नोक्तदोष इति गतमधुनैव॥

तत्र विवरणमते ब्रह्माश्रयाऽविद्या ब्रह्मावरणेन जगदाकारेण परिणामिन्यपि। काच-कामलादिकं तु करणनिष्ठतया हेतुः तत्तत्पुरुषनिष्ठतया वा। अतोऽविद्याश्रयत्वं ब्रह्मणो न भ्रान्तत्वप्रयोजकम्, केवलं प्रपञ्चमात्रस्योपपादकम्। न च तत्र दोषाश्रयातिरिक्तो भ्रान्त्याश्रयोऽपि॥

शुक्तिरूप्यादिज्ञानवतो भ्रान्तत्वं न तूलाविद्याश्रयत्वप्रयुक्तम्, किन्तु तदितरकाच-कामलादिदोषप्रयुक्ताभानवत्वम्। न च ब्रह्म तथा। अत एव जीवस्यापि न व्यवहारदशायां भ्रान्तत्वव्यपदेशः। न च पुरुषः साक्षात् काचादिदोषवान्, येन तदाश्रयत्वप्रयुक्तं तस्य भ्रान्तत्वं स्यात्। तत्र शुक्तिरजतादिभ्रमे पुरुषस्य भ्रान्तत्वव्यपदेशो भ्रान्त्यात्मकपुरुषाश्रिततूलाविद्या-

परिणामाविद्यकवृत्तिमत्त्वेन। न च ब्रह्म, जीवो वा व्यवहारदशायामविद्या-परिणामाविद्यकवृत्त्याश्रयः, येन तया भ्रान्तत्वं स्यात्। केवलमविद्याश्रय-त्वम्, तद्विषयत्वं च ब्रह्मण उपादानतामात्रं प्रयोजयति ॥

एतेन—ईश्वरसर्वज्ञत्वमपि—व्याख्यातम्; तस्यापि मायातिरिक्तदो-षजन्यमायापरिणामवृत्त्यनाश्रितत्वेन भ्रान्तत्वायोगात्, भामती तूपहितचै-तन्यतादात्म्यमेव सर्वज्ञत्वम्, न तु सर्वविषयकवृत्त्याश्रयत्वमपीति वदति। अत एव जीवस्य, ईश्वरस्य वा मूलाविद्यापरिणामघटाद्याकारवृत्त्याश्रयचैत-न्यरूपस्य ज्ञानस्य व्यावहारिकं प्रामाण्यम् ॥

व्यवहारकालाबाधितत्वं व्यवहारकालबाध्यत्वेनानिश्चीयमानत्वम्, न तु बाधितत्वेन ज्ञायमानत्वम्, इति न लोकानुभवविरोधः। शुक्तिरूप्यज्ञान-स्यापि यावद्बाधमुक्तविधयाऽबाधितविषयकत्वात्, तद्वति तत्प्रकारक-त्वाच्च प्रमात्वमिष्टमेव। यावद्बाधं ज्ञानानां प्रवृत्तिप्रयोजकत्वलक्षणं स्वतः प्रामाण्यं स्वीक्रियते। तत्रानिर्वचनीयख्यातिरद्वैतगोष्ठ्यां विश्रान्ता, सर्वज्ञा-नयाथार्थ्यवादः श्रीभाष्यानुयायिगोष्ठ्याम्। तत्रानिर्वचनीयख्यातिः शुक्तिर-जतादिस्थले प्रत्यक्षसिद्धा, सर्वज्ञानयाथार्थ्यवादस्तु न केवलं लोकानुभव-विरुद्धः; किन्तु मातृ-मदिरा-मतङ्गादिषु भार्यादिभ्रमोऽपि प्रमा स्यादिति जयतीर्थन्यायसुधा। आस्तामियं परस्याक्रमणकथा ॥

### अद्वैतसिद्धान्तस्य नूतनस्य कल्पनेन भूषणस्यालङ्कृत्य शिरश्छेदार्थं प्रयत्नोऽकार्यकारी

शतदूषणीपरीक्षाऽद्वैतसिद्धान्तं तत्प्रक्रियां वाऽवष्टभ्य न प्रवृत्ता, इति तदीयदूषणोपन्यासस्य निरालम्बनत्वं शतभूषण्यामुक्तम्, भूषणं तु स्वयं नूतनमद्वैतसिद्धान्तं मित्रवदभिनीय शिक्षयति। अद्वैतप्रक्रियाश्च सर्वाः पूर्वापरसन्दर्भविरुद्धमन्यथाऽन्यथाऽनुवदति—तन्निरसनप्रकारं स्वयमेव कल्पयित्वा ॥

इदमेव चित्रं भामती-भाष्यादिकमेव यथेच्छं व्याख्यायाऽद्वैतसिद्धान्त-विरुद्धमेव भाष्य-भामत्यादिकमित्यपि वदति। अस्तु नामेयं प्रणाली भूष-णस्य, यथाश्रुताद्वैतसिद्धान्तेन जिज्ञासानुपपत्तिसाधनं तु न भूषणं कर्तुं पारयतीति भूषणं स्वयमेव मुक्तकण्ठं तत्र तत्र व्यञ्जयति ॥

### ईश्वरभ्रान्तत्वापत्तिपरिहारः, भ्रमस्वरूपविवेकश्च

एतेन—ईश्वरभ्रान्तत्वोक्तिरपि–परास्ता; भ्रान्तत्वं हि दोषजन्यस्वाश्रि-ततूलाज्ञानकार्यविषय-तदाकाराविद्यकवृत्तिमत्त्वम्। अन्यथाख्यातिमते दोष-

जन्यतदभाववद्विशेष्यकज्ञानत्वम् तत्र मिथ्याभूतस्य बाधितत्वज्ञानं प्रमैव, न भ्रमः; 'इयं शुक्तिरि' ति वा, 'नेदं रजतमि' ति वा ज्ञानं प्रमैव; अबाधितार्थविषयकत्वात्। इदमेवाभिप्रेत्योक्तम् मिथ्याभूतं मिथ्यात्वेनावगाहमानं प्रमैवेति ॥

तत्र यथा शुद्धं ब्रह्म तत्त्वम्, तथा प्रपञ्चमिथ्यात्वमपि। अन्यद् मिथ्याज्ञानमित्यस्याप्ययमेवाशयः—सर्वस्यान्यस्य मिथ्यात्वमपि तत्त्वमेव। "द्वैतिनोऽतथ्यदर्शिनः" इत्यस्य द्वैतिनोऽतथ्यं सत्यं मन्यन्त इत्याशयः, वस्तुगत्या न तथ्यदर्शिनः, परं तु व्यवहारदशायां न तथा पश्यन्ति, परन्तु पूर्वोक्तरीत्या न ते तदा भ्रान्ताः; तज्ज्ञानस्य भ्रान्तिलक्षणालक्षितत्वात्—

"भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः।"

इति तु योगिनोऽन्येषां प्रपञ्चज्ञानं भ्रान्तं मन्यन्ते, इति न तु जगद्भ्रमो योगिनामपि। अतो मिथ्याविषयं बाधितार्थविषयकं ज्ञानं पूर्वं प्रमात्वेनानुसंहितं बाधानन्तरं भ्रम इति निश्चीयते, न तु बाधज्ञानदशायामेव भ्रान्तिरिति ॥

ईश्वरसर्वज्ञत्वव्यवस्था तस्याभ्रान्तत्वं च

तथाच योगिनो न भ्रान्ताः, न वा द्वैतिनोऽतथ्यदर्शिन इति वदन् पराशरो न भ्रान्तः। ईश्वरसर्वज्ञत्वं तु तदुपाधिमायापरिणामतत्तदाकारमायिकवृत्तिमत्त्वेन, तद्विवर्तसर्वतादात्म्येन वा। न च तावता भ्रान्तत्वम्; तज्ज्ञानस्य करणगतदोषाजन्यत्वात्, अन्यथा श्रीभाष्यमतेऽपि सर्वं जानन् ईश्वरः कथमभ्रान्तः? यदि भ्रान्तिज्ञानमेवाप्रसिद्धमिति, तर्हि तद्द्वैशिष्ट्याद्द्वैतिनोऽप्यभ्रान्ता ईश्वरवत्, इति संशय-विपर्यज्ञानविभागोऽस्तमियात्। "द्वैतिनोऽतथ्यदर्शिनः" इत्यप्यसम्भवं स्यात्। अत ईश्वरभ्रान्तत्ववादो न युज्यते ॥

ईश्वरभ्रान्तत्वानुमानम्

इदमेवात्र पृच्छ्यते—कथमीश्वरभ्रान्तत्वमन्यैः साध्यत इति? यदि तत्र ईश्वरो भ्रान्तः, अविद्यापरिणामविषयकज्ञानवत्त्वात् शुक्तिरजतभ्रान्तिमत्पुरुषवत् इत्यनुमानम् ॥

ईश्वरस्य शुक्तिरजतादिज्ञानमपि न भ्रमः दोषाजन्यत्वात्,
सोपाधिकत्वाच्च तद्भ्रमानुमानस्य

तत्रेदं विविच्यताम्—किं शुक्तिरजतोपादानं तूलाविद्यैवात्राविद्यापदार्थः, उत मूलाविद्या; तत्राद्येऽविद्या स्वाश्रिता, अन्याश्रिता वा। तत्राद्ये बाधः; ईश्वरानाश्रितत्वात्, तदपरिणामत्वाच्च जगतः। द्वितीये साध्याप्रसिद्धिः;

अविद्याशब्देनोभयविधाविद्याया ग्रहणे तु काच-कामलाद्यागन्तुकदोषजन्य-ज्ञानवत्त्वमुपाधिः; दृष्टान्ते साध्यावैकल्यात् , पक्षे साधनवैकल्याच्च । आगन्तुकश्च दोषः स्वप्नेऽपि मनोधर्म एव, येनाधिष्ठानं प्रमातृचैतन्यं प्रकाशते; तदुपाधिकत्वेनैव प्रमातृत्वात् ॥

अविद्याया आगन्तुकदोषत्वानुमानस्यापि सोपाधिकत्वम्

अविद्या, नागन्तुकदोषः; अनादित्वात् , इत्यनुमानदोषानात्मकाविद्या-परिणामविषयकाज्ञानत्वं वोपाधिः । अत्र दोषानात्मकेत्यविद्याविशेषाणां शुक्तिरूप्यादौ दोषविधयाऽविद्यायाः परिणामित्वं वारयितुम् , तेन चाविद्यातिरिक्तदोषजन्यज्ञानवत्पुरुषत्वं भ्रान्तत्वं पर्यवस्यति, इति फलतः दोषजन्यत्वमेव ज्ञानस्य भ्रान्तित्वे प्रयोजकम् । अविद्यापि दोष इति पक्षे साधनव्याप्तिवारणार्थं दोषानात्मकेत्यविद्याया विशेषणम् । फलतस्त्वविद्यातिरिक्तदोषजन्यज्ञानत्वमेव भ्रमत्वे प्रयोजकम् ,अविद्यायास्तु दोषविधया ब्रह्मावरणेन ब्रह्मविवर्तोपादानताप्रयोजकत्वेऽपि न तत्परिणामविषयकज्ञानस्य भ्रमत्वं दोषविधया साधयति ॥

न च दोषाधीनज्ञानत्वमत्रोपाधिर्भवति; अविद्याया अपि दोषत्वेनाविद्यापरिणामविषयकज्ञानस्यापि दोषजन्यत्वेन पक्षे साधनव्यापकत्वेन तस्याप्यनुपाधित्वात् , दोषानात्मकेति विशेषणे तु काच-कामलादिजन्यं ज्ञानं प्रति दोषविधया नाविद्याया दोषत्वमिति सूचयितुम , इति भ्रमान्यस्यानुपाधित्वं सूचयितुमेव दोषानात्मकेत्यविद्याविशेषणम् ॥

एतेन—दोषभिन्नस्यैव कस्यचिदनिर्वचनीयोपादानत्वस्य लोके दर्शनानुगुणं कल्प्यमानमुपादानमविद्याख्यदोष एव न भवेदिति—परास्तम् । इदमेवात्र पृच्छ्यते—किमनेनायातम्—किमविद्या न प्रपञ्चोपादानमिति वा, अथवा दोषविधया भ्रमे काचादिवद् न कारणमिति वा । आद्ये प्रकृत्यपरपर्यायाया मायादिपदवाच्यायाश्चाविद्यायाः परिणामिकारणत्वस्य बहुदर्शनसंमतत्वेन, श्रुतिविरोधेन तदुपादानत्वापह्नवायोगः । द्वितीये तु स्वागतम् । यतोऽविद्यापरिणामविषयज्ञानस्य दोषाजन्यत्वेन भ्रमत्वाभावात्, तादृशज्ञानवत्त्वस्य भ्रान्तत्वाप्रयोजकत्वात् , व्याघाताच्च । अत एवोक्तानुमानस्य विरोधोऽपि, तेनैव हेतुना प्रमावत्त्वस्य साधनात् । नचात्राप्रयोजकत्वम् , व्याघातो वा ॥

एतेन—दोषानात्मकाविद्याजन्यस्यैव मिथ्यात्वदर्शनाद् दोषात्मकाविद्यापरिणामस्य मिथ्यात्वानापत्तिः, ईश्वरसमवेतस्य सर्वविषयकज्ञानस्य

तत्त्वज्ञानत्वापत्तिः, मिथ्याविषयकज्ञानस्यैव बाध्यत्वदर्शनात् प्रपञ्चज्ञानस्य, प्रपञ्चस्य च मिथ्यात्वायोगश्चेति—परास्तम् ॥

तत्र दोषानात्मकत्वं तूलाविद्याया एव परिणामिकारणस्यैव, तत्परिणामत्वञ्च प्रातिभासिकत्वस्यैव प्रयोजकम्, इति यदि दोषानात्मकाविद्यापरिणामत्वेन प्रातिभासिकत्वानापत्तिरुच्यते, तर्हि नानिष्टम् ॥

### ईश्वरज्ञानस्य सर्वस्य भ्रमत्वापत्ति-परिहारौ

यत्तु—ईश्वरसमवेतस्य सर्वविषयकस्य ज्ञानस्य तत्त्वज्ञानत्वापादनम्, तदिदं यदि पारमार्थिकं तत्त्वमभिप्रेत्य, तर्हि बाधितम्; निर्विशेषब्रह्मेतरस्य सर्वस्य मूलाविद्यापरिणामस्य लौकिकपारमार्थिकताया एव स्वीकारेणेश्वरसमवेतस्य सर्वविषयकस्य न तत्त्वज्ञानत्वापत्तिः, न वा प्रपञ्चः पारमार्थिकं तत्त्वमापद्येत ॥

तत्र मिथ्यात्वं व्यवहारदशायामेव बाधेन प्रातिभासिकत्वेन, आब्रह्मसाक्षात्कारमबाधात् व्यावहारिकसत्यत्वेन च। तत्र च प्रपञ्चस्य प्रातिभासिकत्वानापत्तिरिष्टापत्तिः, व्यावहारिकत्वानुपपत्तिस्तु दुरुपपादा; अविद्यान्तसर्वप्रपञ्चस्याधिष्ठानसाक्षात्कारबाध्यत्वेनाविद्या-तत्परिणामादीनामपि बाध्यत्वात्, अतो नेश्वरस्याऽद्वैतमते भ्रान्तत्वापत्तिः ॥

### ईश्वरस्यापि ज्ञानं यावद्बाधं प्रमा निर्विशेषं तु सर्वदा शुद्धम्, अत एव परविद्या।

स हि न भ्रान्तः, न चैकान्ततः कालत्रयेऽपि प्रमावान्। यावत्सत्त्वं हि सर्वज्ञत्वम्, तच्च मायोपाधिकत्वेन मायाबाधपर्यन्तमेव,। अतो यावत्सत्त्वं सर्वेऽपि विशेषा अप्यौपाधिका उपाधिवदेव लौकिकपारमार्थिकाः, व्यावहारिकसत्या वा। तस्य शुद्धत्वं तु जीवानामिवाविद्योपाधिगतदोषाभाक्त्वमात्रम्, न तु निर्विशेषत्वम्, अनावृतसंविन्मात्रत्वं वा ॥

निर्विशेषं संविन्मात्रं तु सर्वविशेषराहित्यात् विशेषाणां चोपासनोपयोगित्वेऽपि श्रुत्युक्तमिथ्यात्वादेकान्ततः शुद्धम्। अत एव—परविद्यायां "यत्तदद्रेश्यमि"ति ब्रह्मव्यतिरिक्तसर्वदृश्यशून्यत्वेन निर्विशेषत्वमेवाध्यारोपापवादन्यायेन श्रुत्या श्राव्यते। न चात्र दृश्यविशेषाभावमात्रं पदार्थः; संकोचे प्रमाणाभावात्। ब्रह्मणः सविशेषत्वं हि जगत्कारणत्वप्रयुक्तं तत्तत्सर्वतादात्म्येन सदेवेति। अत एव सत्तादात्म्यं प्रस्तुत्याद्वितीयत्वोपसं-

हारः। अत्राद्वितीयत्वं प्रस्तुत्य जगत्कारणोपन्यास इति क्रमभेदमात्रम्, प्रतिपाद्यं तूभयत्रैकमेव ॥

अदृश्यत्वादिगुणकादिसूत्रस्वारस्यमद्वैत एव

एतेन—"अदृश्यत्वादिगुणको धर्मोक्तेः" इति सूत्रम्—व्याख्यातम्। इदं हि सूत्रं परविद्यायाः प्रधानपरत्वं निरसितुमिति सम्प्रतिपन्नम्। तत्रा'दृश्यत्वादिगुणकः' इति पूर्वपक्षयुक्तिप्रदर्शनार्था, 'धर्मोक्ते'; रिति-सिद्धान्तोपष्टम्भकन्यायप्रदर्शनार्थः। अत्र सर्वज्ञत्वादिकं चेतनधर्मः "यः सर्वज्ञः" इत्यादिवाक्यगम्यो वर्तते, इति भूतयोनिस्वरूपमात्रे नैर्भर्यम्; तत्रैव संशयात्। भूतयोनिश्चायं विवर्तोपादानविधया, न परिणामविध-येति तस्य प्रधानपरत्वशङ्काया नोत्थितिरिति सिद्धान्तरहस्यम् ॥

तत्र "अदृश्यत्वादिगुणकः" इति सिद्धान्तमभिप्रेत्य, येनादृश्यत्वा-दयोऽभावा एव गुणाः स्युः; तत्र भूतयोनित्वपदार्थो विवर्तोपादानत्वम-ज्ञानोपहितस्य निर्विशेषस्यैव ॥

अत्र—"अदृश्यत्वादिगुणकः" इति तद्गुणसंविज्ञानबहुव्रीहिः अतद्गुणसंविज्ञानबहुव्रीहिर्वा। उभयथाऽपि प्रकृतपूर्वोत्तरपक्षोपष्टम्भक-मक्षरपदबोध्यत्वं भूतयोनित्वं सर्वज्ञत्वादिकं नाऽदृश्यत्वादिस्वरूपमितर-निषेधमुखेनोपदिश्यमानम्। ततश्चादृश्यत्वादिस्वरूपमक्षरं परविद्यास-माख्यामहिम्ना परं ब्रह्म, यदेवाध्यारोपविधया जगत्कारणत्वादिमुखेनात्र प्रतिपाद्यत इति निष्कर्षः ॥

अदृश्यत्वादिगुणकत्वमध्यारोपापवादविषयैव। अतो
निर्विशेषवाद एव भूतयोन्यादिपदानां तात्पर्यम्

तत्राध्यारोपापवादोभयपरिग्रहः "अदृश्य" शब्देनाधिष्ठानस्य निर्वि-शेषस्य, आदिपदोपात्तगुणपदेनाध्यारोपस्य च संग्रहात् ॥

अतद्गुणसंविज्ञानपक्षे तु प्रकृतविषयवाक्यदृष्ट्याऽऽध्यारोपमात्रस्य विवक्षेति नेदं सूत्रमध्यारोपापवादाभिप्रायं नेति वक्तुं शक्यम्। व्यक्तं च भामत्यामत्र विवर्तवाद एव भूतयोनिशब्दार्थ इति। तत्र च न सारू-प्यनियम इत्यादिकं विविक्तम्। अधिकं तत एवावगन्तव्यम्, इदमेवा-भिप्रेत्य—

"विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः।
अनादिवासनोद्भूतो न सारूप्यमपेक्ष्यते ॥"

इति ॥

नचात्र तत्त्वसुधोक्तरीत्या बौद्धसाम्यसम्भावनाऽपि। न हि तत्र ब्रह्म, न वा तद्विवर्तः प्रपञ्चः। न चानादिवासनाः ब्रह्माश्रिताः ॥

### धर्मजिज्ञासायामिव ब्रह्मजिज्ञासायामपरोक्ष-ज्ञानमात्रं फलम्

"अथातो ब्रह्मजिज्ञासे"त्यत्र ब्रह्मावगत्याख्यप्रमाणजन्याज्ञाननिवर्तकाखण्डाकारवृत्तीच्छेति वाच्यार्थः, प्रमाणजन्यनिर्णयात्मकत्वं च विचारापेक्षप्रमाणजन्यतायामेव भवति, इति 'धर्मजिज्ञासे'त्यादाविव विचारोऽप्यत्र लक्ष्यते ॥

तत्र धर्मजिज्ञासायां धर्मसाक्षात्कारो निर्णयात्मको न भवति। धर्मज्ञानमात्रं फलं च न भवतीति विशेषः सर्वविदितः। अतस्तत्र ज्ञानमात्रं न फलम्। तदेव ब्रह्मस्वरूपमपि। तदुक्तम्—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।"

इति। तथाच धर्मजिज्ञासायामिव न परोक्षनिर्णयमात्रं जिज्ञासाफलम्। अत एव भाष्यम्—"अवगतिपर्यन्तं च ज्ञानं सन्वाच्याया इच्छायाः कर्मे"ति ॥

भगवत्पादा हि—"अविद्यानिवृत्तिपरत्वाच्छास्त्रस्ये"ति वदन्तः प्रमाणजन्यवृत्तेरेवाशेषसंसारबीजनिबर्हणार्थत्वेन पुरुषार्थत्वं मन्यन्ते, न तु पुरुषव्यापारसाध्यो विचारः, निर्णयमात्रं वा फलमिति। व्यक्तञ्चैतद् भामत्यादौ। तत्र च धर्मजिज्ञासायां परोक्षो निर्णयः पुरुषव्यापारद्वारा गौणं मुख्यं च फलद्वयम्। अत्र तु मुख्यं साक्षात्कारमात्रं फलम् ॥

### ब्रह्मजिज्ञासाया दर्शनमेव फलमित्यत्र श्रुतिः प्रमाणम्

अत एव—"आत्मा वा अरे द्रष्टव्यः" इति दर्शनस्य फलत्वाम्नानम्। न चाद्वैतसिद्धान्तेऽज्ञाननिवृत्त्यात्मकसाक्षात्कारातिरिक्तं किमपि प्राप्तव्यमस्ति, इति तस्यैव फलत्वाद् न विचारः, तदधीनो निर्णयो वा फलम्, किन्तु ततोऽप्यपरमपरोक्षरूपावगतिरूपं ब्रह्मज्ञानमिष्यमाणमिति भाष्य-भा-

मती-सिद्धान्तसिद्धाञ्जनकाराणां व्यवस्था। ब्रह्मप्राप्तिस्तु फलमत्र निवृत्ति-मात्रेणार्थसिद्धा, ब्रह्मप्राप्तिरपि नित्यप्राप्तस्यैव तस्याप्राप्तत्वभ्रमनिवृत्तिरेव। साऽपि ब्रह्माश्रिताशेषदोनिबर्हणापरोक्षज्ञानमुख्यफलत्वेन व्यवस्थापिता भवति, इत्यवगतिपर्यन्तसाक्षात्कारफलत्वे, तत्प्राप्तेरेव मुख्यफलत्वे च ब्रह्मप्रपित्सेत्येव सूत्रणमापद्येतेति भूषणं न क्षोदक्षमम्। तथा सूत्रणे हि न ब्रह्मप्राप्तिः, साधनं च निर्दिष्टं स्यात्, जिज्ञासापदेन तूभयं साधितं भवतीति सिद्धान्तसिद्धाञ्जनव्यवस्था भामत्यादिसर्वसाम्प्रदायिकानुसारिण्येव भाष्यादिसर्वाद्वैतनिबन्धसम्मतेत्यलमिदानीमियतैव ॥

॥ इति जिज्ञासोपपत्तिः ॥

---